# २

वैशंपायन उवाच ।
प्रभातायां तु शर्वर्यां तेषामक्लिष्टकर्मणाम् ।
वनं यियासतां विप्रास्तस्थुर्भिक्षाभुजोऽग्रतः ।
तानुवाच ततो राजा कुन्तीपुत्रो युधिष्ठिरः ॥ १
वयं हि हृतसर्वस्वा हृतराज्या हृतश्रियः ।
फलमूलामिषाहारा वनं यास्याम दुःखिताः ॥ २
वनं च दोषबहुलं बहुव्यालसरीसृपम् ।
परिक्लेशश्च वो मन्ये ध्रुवं तत्र भविष्यति ॥ ३
ब्राह्मणानां परिक्लेशो दैवतान्यपि सादयेत् ।
किं पुनर्मामितो विप्रा निवर्तध्वं यथेष्टतः ॥ ४
ब्राह्मणा ऊचुः ।
गतिर्या भवतां राजंस्तां वयं गन्तुमुद्यताः ।
नार्हथास्मान्परित्यक्तुं भक्तान्सद्धर्मदर्शिनः ॥ ५
अनुकम्पां हि भक्तेषु दैवतान्यपि कुर्वते ।
विशेषतो ब्राह्मणेषु सदाचारावलम्बिषु ॥ ६
युधिष्ठिर उवाच ।
ममापि परमा भक्तिर्ब्राह्मणेषु सदा द्विजाः ।
सहायविपरिभ्रंशस्त्वयं सादयतीव माम् ॥ ७
आहरेयुर्हि मे येऽपि फलमूलमृगांस्तथा ।
त इमे शोकजैर्दुःखैर्भ्रातरो मे विमोहिताः ॥ ८
द्रौपद्या विप्रकर्षेण राज्यापहरणेन च ।
दुःखान्वितानिमान्क्लेशैर्नाहं योक्तुमिहोत्सहे ॥ ९
ब्राह्मणा ऊचुः ।
अस्मत्पोषणजा चिन्ता मा भूत्ते हृदि पार्थिव ।
स्वयमाहृत्य वन्यानि अनुयास्यामहे वयम् ॥ १०
अनुध्यानेन जप्येन विधास्यामः शिवं तव ।
कथाभिश्चानुकूलाभिः सह रंस्यामहे वने ॥ ११
युधिष्ठिर उवाच ।
एवमेतन्न संदेहो रमेयं ब्राह्मणैः सह ।
न्यूनभावात्तु पश्यामि प्रत्यादेशमिवात्मनः ॥ १२

---

$T_2$ $G_{3.4}$ वटवृक्षनिवास° — *Adhy no* ( figures, words or both ) Dn $D_{1.2}$ S ( $M_2$ broken ) 1 ( as in text ) — *Śloka no* Dn 47 ( $Dn_1$ 44 ) $D_1$ 49

## 2

☞ This adhy is missing in $K_{1.4}$ (cf v l 3 1 1), the MSS are mostly ignored here

**1** $^{f}$) $Ś_1$ $K_3$ $B_1$ $Dc_2$ $D_{1-3}$ धर्म° (for कुन्ती )

**2** $^{c}$) $T_2$ $G_{3.4}$ शला° (for मिषा°) — $^{d}$) $K_2$ B Dn $D_{2.4-6}$ गच्छाम (for यास्याम)

**3** $^{b}$) $S_1$ °समावृत, $D_1$ समाकुल — $^{c}$) $T_2$ $G_{3.4}$ °क्लेश च — $^{d}$) Dc $D_4$ ध्रुवस्तत्र

**4** $^{a}$) $B_1$ S तु ($B_1$ च) सक्लेशो (for परि ) — $^{b}$) $B_1$ शातयेत्, $B_4$ सदहेत् — $^{c}$) $Ś_1$ मामथो; $B_1$ $Dn_3$ मामतो, $D_{1-3}$ मादृशान् (for मामितो)

**5** $^{a}$) $D_{1-3}$ transp गति° and या — $^{c}$) $Ś_1$ $K_2$ Dn $D_{1-3}$ नार्हसि; Dc तत्तथा (for नार्हथ) — $^{d}$) $K_3$ $D_5$ सद्धर्मचारिण°, Dc धर्मात्मदर्शिन°; $D_5$ धर्मार्थ° $D_{1.2}$ भक्त्यास्मान्वनचारिण°

**6** $^{a}$) S (except $G_1$ $M_2$) स्नेहकर्माणि भ° — $^{b}$) $K_2$ B Dn $D_{4.6}$ देवता ह्यपि कु°

**8** $^{a}$) $K_2$ B $Dc_2$ Dn $D_{4-6}$ इमे ($B_2$ इद) येपि, S हि ये सर्वे (for हि मे येऽपि) — $^{b}$) $B_2$ $D_4$ $M_1$ फलमूल, $D_6$ फल (for फलमूल ) Dc फलमूलतृण तथा, $G_1$ (corrupt) फलं मूलमधुस्तथा

**9** $^{c}$) $K_2$ B Dn $D_{4-6}$ दु:खार्दितान् $D_3$ इह (for इमान्) $B_2$ चैव (for क्लेशैर्) — $^{d}$) S तान्योक्तुम् (for योक्तुमिह)

**10** $Ś_1$ $K_3$ विप्रा ऊचु° — $^{c}$) $K_2$ B Dn $D_{4.6}$ चान्नानि ($B_1$ °न्ना), $K_3$ वन्यं तु, Dc $D_5$ वन्यास्त्वां (for वन्यानि) $Ś_1$ स्वयमाहृतवन्या स्म — $^{d}$) $Ś_1$ ह्यनुयास्याम त्वा, $K_2$ B Dn $D_{4.6}$ उपयोक्ष्यामहे, $K_3$ T $G_{2.3}$ $M_2$ ह्यनुयास्यामहे, Dc यातु यास्या°, $D_{1-3}$ त्वानु°, $G_{1.4}$ $M_1$ [अ]प्यनु°

**11** $^{a}$) $K_{2.3}$ $D_{1-3.6}$ जाप्येन — $^{b}$) $D_5$ विदधाम°. — $^{c}$) Dc om च $Ś_1$ $K_3$ $D_5$ $G_1$ चा($G_1$ अ)नुरूपाभि°, $K_2$ $B_{2.3}$ Dn $D_4$ चाभिरम्याभि.. — $^{d}$) $D_{1.3}$ सर्वे (for सह) N (except $Ś_1$) $T_1$ (*sup lin* as in text) वय (for वने)

**12** $^{a}$) Dc $D_5$ $G_1$ एव (for एतन्) — $^{b}$) $Ś_1$ $K_4$ B Dc Dn $D_{4-6}$ रमेह (Dc °य) सतत द्विजै°, $K_3$ रमेहं सह ब्राह्मणै°, $D_{1-3}$ न चोक्तमनृत द्विजै° — $^{c}$) $K_3$ नून कथ नु यास्यामि

मनसो दुःखमूलं तु स्नेह इत्युपलभ्यते ।
स्नेहात्तु सज्जते जन्तुर्दुःखयोगमुपैति च ॥ २६
स्नेहमूलानि दुःखानि स्नेहजानि भयानि च ।
शोकहर्षौ तथायासः सर्वं स्नेहात्प्रवर्तते ॥ २७
स्नेहात्करणरागश्च प्रजज्ञे वैषयस्तथा ।
अश्रेयस्कावुभावेतौ पूर्वस्तत्र गुरुः स्मृतः ॥ २८
कोटराग्निर्यथाशेषं समूलं पादपं दहेत् ।
धर्मार्थिनं तथाल्पोऽपि रागदोषो विनाशयेत् ॥ २९
विप्रयोगे न तु त्यागी दोषदर्शी समागमात् ।
विरागं भजते जन्तुर्निर्वैरो निष्परिग्रहः ॥ ३०
तस्मात्स्नेहं स्वपक्षेभ्यो मित्रेभ्यो धनसंचयात् ।
स्वशरीरसमुत्थं तु ज्ञानेन विनिवर्तयेत् ॥ ३१
ज्ञानान्वितेषु मुख्येषु शास्त्रज्ञेषु कृतात्मसु ।
न तेषु सज्जते स्नेहः पद्मपत्रेष्विवोदकम् ॥ ३२

रागाभिभूतः पुरुषः कामेन परिकृष्यते ।
इच्छा संजायते तस्य ततस्तृष्णा प्रवर्तते ॥ ३३
तृष्णा हि सर्वपापिष्ठा नित्योद्वेगकरी नृणाम् ।
अधर्मबहुला चैव घोरा पापानुबन्धिनी ॥ ३४
या दुस्त्यजा दुर्मतिभिर्या न जीर्यति जीर्यतः ।
योऽसौ प्राणान्तिको रोगस्तां तृष्णां त्यजतः सुखम् ॥
अनाद्यन्ता तु सा तृष्णा अन्तर्देहगता नृणाम् ।
विनाशयति संभूता अयोनिज इवानलः ॥ ३६
यथैधः स्वसमुत्थेन वह्निना नाशमृच्छति ।
तथाकृतात्मा लोभेन सहजेन विनश्यति ॥ ३७
राजतः सलिलादग्नेश्चोरतः स्वजनादपि ।
भयमर्थवतां नित्यं मृत्योः प्राणभृतामिव ॥ ३८
यथा ह्यामिषमाकाशे पक्षिभिः श्वापदैर्भुवि ।
भक्ष्यते सलिले मत्स्यैस्तथा सर्वेण वित्तवान् ॥ ३९

---

(except $T_2$ $G_3$) [ए]व (for हि)

**25** $^{b}$) $K_3$ $G_2$ अमसा (for अम्बुना) — $^{c}$) N ($K_{1.4}$ missing) ह्यस्य (for दुःखे)

**26** $^{a}$) $B_1$ $T_2$ $G_{2-4}$ $M_2$ हि (for तु) — $^{b}$) $G_1$ अभिधीयते (for उपलभ्यते) — $^{c}$) $S_1$ $B_4$ $D_c$ $D_1$ $G_2$ $M_1$ च (for तु) — $^{d}$) $S_1$ दुःखमोहम्, $K_3$ दुःखे सुखम्, $B_4$ दुःखमूलम्

**27** $^{c}$) S शोको हर्ष — $^{d}$) $T_1$ $G_2$ $M_1$ स्नेहात्सर्वं (by transp)

**28** $^{a}$) $K_3$ B D (except $D_{1-3.5}$) भावोनुरागश्च, S कारुण्यरागौ च ($G_1$ °ण्यभावाश्च) — $^{b}$) $K_2$ $B_{1-3}$ $D_c$ $D_n$ $D_{2.4-6}$ विषये, $K_3$ $D_3$ विषयस् (for वैषयस्) $B_4$ मित्रेषु च धनेषु च, S प्रजास्वीर्ष्या($T_2$ $G_3$ स्त्रिष्टो)वयस्तथा ($M_2$ स्पृहा)

**29** $^{c}$) $K_2$ B (except $B_1$) D (except $D_{1-3.5}$) धर्मार्थौ तु (for र्थिनं) — $^{d}$) $S_1$ $K_3$ $D_5$ रागद्वेषौ, $D_{c1}$ $D_{n3}$ (before corr) $T_1$ $G_{2-4}$ रागद्वेषो $B_1$ रागो द्वेषश्च नाशयेत्

**30** $^{b}$) $K_3$ समागतात्, $D_{n1}$ समागमे — $^{c}$) $S_1$ $K_3$ विकार; $M_2$ वैराग्य (for विराग) — $^{d}$) N ($K_{1.4}$ missing) निरवग्रह

**31** $^{a}$) N ($K_{1.4}$ missing) न लिप्सेत ($D_5$ सुपकेभ्य) (for स्वपक्षेभ्य·) — $^{b}$) $B_2$ मित्रेषु च धनेषु च, $G_2$ धनधान्य च सच — $^{c}$) N (except $K_3$, $K_{1.4}$ missing) च (for तु)

2

—$^{d}$) $T_1$ $G_2$ $M_1$ परिवर्ज (for विनिवर्त)

**32** $^{a}$) $S_1$ $K_3$ $D_{1-3.5}$ सिद्धेषु, $K_2$ B $D_c$ $D_n$ $D_{4.6}$ युक्तेषु (for मुख्येषु) — $^{b}$) $D_c$ सूक्तेषु च (for शास्त्र°)

**33** $^{b}$) $D_3$ क्लिश्यते; $T_1$ $M_2$ तुष्यते, $G_2$ °शुष्यते, $M_1$ °तप्यते — $B_2$ om $33^{cd}$ — $^{c}$) $S_1$ $K_3$ $B_{1.4}$ $D_c$ $D_{1-3.5}$ चास्य, $B_3$ ह्यस्य (for तस्य) — $^{d}$) $K_2$ $B_3$ $D_n$ $D_{4.6}$ विवर्धते, $D_c$ $D_5$ प्रजायते (for प्रव°)

**34** $^{a}$) T $G_{3.4}$ [अ]पि (for हि) — $^{b}$) T $G_{3.4}$ नित्योद्योग° N ($K_{1.4}$ missing) स्मृता (for नृणाम्), cf $36^{b}$ — $^{d}$) $D_{1-3}$ घोररूपा तु

**35** = Ādi 840*, lines 5–6

**36** $^{b}$) To avoid hiatus, $S_1$ $D_c$ $D_{1-3}$ ह्य° (for अ°) — $^{c}$) $K_2$ B D (except $D_{1-3}$) भूतानि (for संभूता) — $^{d}$) $S_1$ $K_3$ $D_3$ अयोरज, $B_2$ आपो (m अयो)वज्र (m also as in text), $D_{1.2}$ लौह रज, $T_2$ $G_3$ अयो घोर, $G_1$ अयोरूज, $G_4$ अयोराज, $M_1$ अयोजलम् (for अयोनिज) *Nīlp* अयोनिजमिवानल

**37** $^{a}$) T $G_3$ यथा च, $G_{1.4}$ यथाय·, $G_2$ यथैव, $M_1$ यथाय, $M_2$ यथाग[ ] (for यथैध) $D_c$ सुसमिद्धेन (for स्वसमु) — $^{b}$) $B_4$ अर्हति, $D_{3.4.5}$ अर्छ (for ऋच्छ°) — $^{c}$) $T_2$ (by corr) $G_3$ तथा तु स्वात्मलोभेन

**38** $^{b}$) $Ś_1$ $K_3$ B (except $B_2$) $D_{c2}$ $D_{n2}$ $D_{2-5}$ चौरत· — After $38^{ab}$, $G_2$ ins

9* अर्थिभ्य कालतस्तस्मान्नित्यमर्थवतां भयम्।

कथं द्रक्ष्यामि वः सर्वान्स्वयमाहृतभोजनान् ।
मद्भक्त्या क्लिश्यतोऽनर्हान्धिक्पापान्धृतराष्ट्रजान् ॥ १३

वैशंपायन उवाच ।

इत्युक्त्वा स नृपः शोचन्निषसाद महीतले ।
तमध्यात्मरतिर्विद्वाञ्शौनको नाम वै द्विजः ।
योगे सांख्ये च कुशलो राजानमिदमब्रवीत् ॥ १४
शोकस्थानसहस्राणि भयस्थानशतानि च ।
दिवसे दिवसे मूढमाविशन्ति न पण्डितम् ॥ १५
न हि ज्ञानविरुद्धेषु बहुदोषेषु कर्मसु ।
श्रेयोघातिषु सज्जन्ते बुद्धिमन्तो भवद्विधाः ॥ १६
अष्टाङ्गां बुद्धिमाहुर्यां सर्वाश्रेयोविघातिनीम् ।
श्रुतिस्मृतिसमायुक्तां सा राजंस्त्वय्यवस्थिता ॥ १७
अर्थकृच्छ्रेषु दुर्गेषु व्यापत्सु स्वजनस्य च ।
शारीरमानसैर्दुःखैर्न सीदन्ति भवद्विधाः ॥ १८
श्रूयतां चाभिधास्यामि जनकेन यथा पुरा ।
आत्मव्यवस्थानकरा गीताः श्लोका महात्मना ॥ १९
मनोदेहसमुत्थाभ्यां दुःखाभ्यामर्दितं जगत् ।
तयोर्व्याससमासाभ्यां शमोपायमिमं शृणु ॥ २०
व्याधेरनिष्टसंस्पर्शाच्छ्रमादिष्टविवर्जनात् ।
दुःखं चतुर्भिः शारीरं कारणैः संप्रवर्तते ॥ २१
तदाशुप्रतिकाराच्च सततं चाविचिन्तनात् ।
आधिव्याधिप्रशमनं क्रियायोगद्वयेन तु ॥ २२
मतिमन्तो ह्यतो वैद्याः शमं प्रागेव कुर्वते ।
मानसस्य प्रियाख्यानैः संभोगोपनयैर्नृणाम् ॥ २३
मानसेन हि दुःखेन शरीरमुपतप्यते ।
अयःपिण्डेन तप्तेन कुम्भसंस्थमिवोदकम् ॥ २४
मानसं शमयेत्तस्माज्ज्ञानेनाग्निमिवाम्बुना ।
प्रशान्ते मानसे दुःखे शारीरमुपशाम्यति ॥ २५

---

**13** b) $K_2$ B D स्वयमाहृत्यभोजिन॰, $K_3$ ब्राह्मणान्कृत-भोजिन, $T_1$ स्वयमाहृत्य भोजनान् — c) Dc S (except $M_2$) मद्भक्तान् — d) S द्विषतो (for धिक्पापान्)

**14** a) S नृपति॰ (for स नृप॰) — b) Dc $D_{1, 2, 5}$ निपपात (for निष॰) — c) $Ś_1$ $K_3$ $B_{3, 4}$ Dc $D_{1-3}$ ॰गतिर्, $K_2$ $B_{1, 2}$ $_{3}m$ Dn $D_{4-6}$ ॰रतो (for ॰रतिर्) $T_1$ तमध्यात्मा मुनिर्विद्वान् — d) $K_3$ $B_4$ $Dc_2$ $D_5$ ॰को द्विजसत्तम — e) $Ś_1$ $K_3$ सांख्ये योगे (by transp)

**15** =B 12 330 2 — Before 15, $B_4$ Dc $D_5$ $G_{1, 2}$ $M_2$ ins शौनक उ॰ — b) $S_1$ $D_{1-3}$ $G_1$ हर्ष॰ (for भय॰) — c) $Ś_1$ $K_3$ मूढान् — d) $K_3$ पण्डितान्

**16** a) $T_1$ $G_2$ $M_{1, 2}$ च, $T_2$ $G_{3, 4}$ चेत् (for हि) — b) $Ś_1$ $K_3$ $D_{1-3, 5}$ $G_2$ $M_2$ बह्वपायेषु, $B_4$ Dc बहुपापेषु — c) $Ś_1$ $B_1$ $D_{1-3}$ मूल॰ (for श्रेयो॰) — d) $T_2$ $G_3$ बहुश्रुता॰ (for भव॰) — After 16, $D_2$ ins 7*

**17** a) S हि (for यां) — b) $K_2$ $B_{1-3}$ Dn $D_{4-6}$ $G_2$ सर्वाश्रेयोभि॰, $B_4$ Dc ॰विपाटनीं, $T_1$ $G_4$ सर्वश्रेयोविघातिनीं, $T_2$ $G_{1, 3}$ सर्वश्रेयोविधायिनीं — c) Dc $T_2$ $G_{2-4}$ ॰समायुक्ता, $T_1$ $G_1$ M मतिस्मृतिसमायुक्ता ($M_1$ ॰क्तां) — d) $Dc_2$ Dn $D_6$ transp सा and राजन् — $D_5$ $G_2$ ins after 17 $D_2$, after 16

7* शुश्रूषा श्रवणं चैव ग्रहणं धारणं तथा ।
ऊहापोहोऽपि विज्ञानं तत्त्वज्ञानं च धीगुणाः ।

**18** a) S दुःखे॰ (for दुर्गे॰) — b) T $G_{2-4}$ ह्या॰ (for व्या॰) $B_4$ T G $M_1$ स्व($G_2$ वि)जनेषु, $M_2$ व्यसनेषु (for स्वजनस्य) S (except $G_4$ $M_2$) [अ]पि (for च) — c) $B_1$ शारीरैर् (for शारीर॰) S शारीरे मानसे चैव ($G_1$ ॰सेष्वेव) — d) S (except $M_2$) न सीदत्यसुखे बुधाः

**19** a) =(var) 3 1 21a $D_1$ 2 S om च — c) $Ś_1$ ॰परा॰, $K_3$ धर्म॰ — d) $Ś_1$ $B_{1, 4}$ Dc $D_{1-3, 5}$ श्लोका गीता॰ (by transp), $K_3$ गाथा गीता॰

**20** a) $K_3$m ॰मोह॰ (for ॰देह॰) — c) $D_{1, 2}$ तयोश्चैव विनाशाय

**21** a) S (except $G_4$) ॰संयोगाच्च — After 21ab, $K_3$ reads 23c–24b — c) $G_2$ $M_1$ एतच्च (for दुःखं) $T_1$ एतच्छरीरं कौन्तेय — After 20, $D_{1, 2}$ ins

8* व्याधयोऽत्र शरीरेऽस्मिन्वातपित्तकफोद्भवाः ।
अजीर्णप्रभवाः सर्वे दुःखाः पापोद्भवास्तथा ।

**22** a) $K_2$ Dn $D_{4, 6}$ तदा तत्॰, B (except $B_4$) सदा तत्॰ (for तदाशु॰) — b) $Ś_1$ $K_3$ $B_{2, 4}$ Dc $D_{1-3}$ च वि($B_2$ परि)वर्जनात् (for चावि॰) — d) $D_5$ ॰स्त्वमेव, T G ॰बलेन, $M_1$ ॰फलेन (for ॰द्वयेन) $Ś_1$ $B_4$ Dc $Dn_1$ $D_1$ $T_1$ $G_1$ च (for तु)

**23** ab) S (except $M_2$) व्यथोपेता॰ (for ह्यतो वैद्या॰), and प्रायेण (for प्रागेव) — $K_3$ reads 23cd (with 24ab) after 21ab — c) Dc $D_{1-3}$ प्रियाख्यान॰ S (except $M_2$) मानसाख्य॰ ॰ख्यानात् — d) $Dc_1$ $T_2$ $G_{1, 3}$ संभोगाप॰

**24** For sequence in $K_3$ cf v l. 21 — a) S

मनसो दुःखमूलं तु स्नेह इत्युपलभ्यते ।
स्नेहात्तु सज्जते जन्तुर्दुःखयोगमुपैति च ॥ २६
स्नेहमूलानि दुःखानि स्नेहजानि भयानि च ।
शोकहर्षौ तथायासः सर्वं स्नेहात्प्रवर्तते ॥ २७
स्नेहात्करणरागश्च प्रजज्ञे वैषयस्तथा ।
अश्रेयस्कावुभावेतौ पूर्वस्तत्र गुरुः स्मृतः ॥ २८
कोटराग्निर्यथाशेषं समूलं पादपं दहेत् ।
धर्मार्थिनं तथाल्पोऽपि रागदोषो विनाशयेत् ॥ २९
विप्रयोगे न तु त्यागी दोषदर्शी समागमात् ।
विरागं भजते जन्तुर्निर्वैरो निष्परिग्रहः ॥ ३०
तस्मात्स्नेहं स्वपक्षेभ्यो मित्रेभ्यो धनसंचयात् ।
स्वशरीरसमुत्थं तु ज्ञानेन विनिवर्तयेत् ॥ ३१
ज्ञानान्वितेषु मुख्येषु शास्त्रज्ञेषु कृतात्मसु ।
न तेषु सज्जते स्नेहः पद्मपत्रेष्विवोदकम् ॥ ३२
रागाभिभूतः पुरुषः कामेन परिकृष्यते ।
इच्छा संजायते तस्य ततस्तृष्णा प्रवर्तते ॥ ३३
तृष्णा हि सर्वपापिष्ठा नित्योद्वेगकरी नृणाम् ।
अधर्मबहुला चैव घोरा पापानुबन्धिनी ॥ ३४
या दुस्त्यजा दुर्मतिभिर्या न जीर्यति जीर्यतः ।
योऽसौ प्राणान्तिको रोगस्तां तृष्णां त्यजतः सुखम् ॥ ३५
अनाद्यन्ता तु सा तृष्णा अन्तर्देहगता नृणाम् ।
विनाशयति संभूता अयोनिज इवानलः ॥ ३६
यथैधः स्वसमुत्थेन वह्निना नाशमृच्छति ।
तथाकृतात्मा लोभेन सहजेन विनश्यति ॥ ३७
राजतः सलिलादग्नेश्चोरतः स्वजनादपि ।
भयमर्थवतां नित्यं मृत्योः प्राणभृतामिव ॥ ३८
यथा ह्यामिषमाकाशे पक्षिभिः श्वापदैर्भुवि ।
भक्ष्यते सलिले मत्स्यैस्तथा सर्वेण वित्तवान् ॥ ३९

---

(except $T_2$ $G_3$) [ए]व (for हि)

**25** $^{b}$) $K_3$ $G_2$ अभसा (for अम्बुना) — $^{c}$) N ($K_{1-4}$ missing) ह्यस्य (for दुःखे)

**26** $^{a}$) $B_1$ $T_2$ $G_{2-4}$ $M_2$ हि (for तु) — $^{b}$) $G_1$ अभिधीयते (for उपलभ्यते) — $^{c}$) Ś$_1$ $B_4$ Dc $D_1$ $G_2$ $M_1$ च (for तु) — $^{d}$) Ś$_1$ दुःखमोहम्, $K_3$ दुःखे सुखम्, $B_4$ दुःखमूलम्

**27** $^{c}$) S शोको हर्ष° — $^{d}$) $T_1$ $G_2$ $M_1$ स्नेहात्सर्वं (by transp)

**28** $^{a}$) $K_2$ B D (except $D_{1-3, 5}$) भावोनुरागश्च, S कारुण्यरागौ च ($G_1$ °ण्यभावाच) — $^{b}$) $K_2$ $B_{1-3}$ Dc Dn $D_{2, 4-6}$ विषये, $K_3$ $D_3$ विषयस् (for वैषयस्) $B_4$ मित्रेषु च धनेषु च, S प्रजास्वीर्ष्यो($T_2$ $G_3$ स्विष्टो)दयस्तथा ($M_2$ स्पृहा)

**29** $^{c}$) $K_3$ B (except $B_1$) D (except $D_{1-3, 5}$) धर्मार्थी तु (for °र्थिनं) — $^{d}$) Ś$_1$ $K_3$ $D_5$ रागद्वेषौ, Dc$_1$ Dn$_2$ (before corr) $T_1$ $G_{2-4}$ रागद्वेषो $B_1$ रागो द्वेषश्च नाशयेत्

**30** $^{b}$) $K_3$ समागतान्, Dn$_1$ समागमे — $^{c}$) Ś$_1$ $K_3$ विकार, $M_2$ वैराग्य (for विराग) — $^{d}$) N ($K_{1-4}$ missing) निरवग्रह

**31** $^{a}$) N ($K_{1-4}$ missing) न लिप्सेत ($D_5$ सुपकेभ्य°) (for स्वपक्षेभ्य°) — $^{b}$) $B_2$ मित्रेषु च धनेषु च, $G_2$ धनधान्य च सच° — $^{c}$) N (except $K_3$, $K_{1-4}$ missing) च (for तु) — $^{d}$) $T_1$ $G_2$ $M_1$ परिवर्ज° (for विनिवर्त°)

**32** $^{a}$) Ś$_1$ $K_3$ $D_{1-3, 5}$ सिद्धेषु, $K_2$ B Dc Dn $D_{4, 6}$ शुभेषु (for मुख्येषु) — $^{b}$) Dc सूक्तेषु च (for शास्त्र°)

**33** $^{b}$) $D_5$ °क्लिश्यते; $T_1$ $M_2$ लुप्यते, $G_3$ °क्षुभ्यते, $M_1$ तप्यते — $B_3$ om $33^{cd}$ — $^{c}$) Ś$_1$ $K_3$ $B_{1, 4}$ Dc $D_{1-3, 5}$ चास्य, $B_3$ ह्यस्य (for तस्य) — $^{d}$) $K_2$ $B_3$ Dn $D_{4, 6}$ विवर्धते, Dc $D_5$ प्रजायते (for प्रव°)

**34** $^{a}$) T $G_{3, 4}$ [अ]पि (for हि) — $^{b}$) T $G_{3, 4}$ नित्योद्योग° N ($K_{1-4}$ missing) स्मृता (for नृणाम्), cf $36^{b}$ — $^{d}$) $D_{1-3}$ घोररूपा तु

**35** = Ādi 840*, lines 5-6

**36** $^{b}$) To avoid hiatus, Ś$_1$ Dc $D_{1-3}$ ह्य° (for अ°) — $^{c}$) $K_2$ B D (except $D_{1-3}$) भूतानि (for संभूता) — $^{d}$) Ś$_1$ $K_3$ $D_3$ अयोरज, $B_2$ आपो (m अयो)वज्र (m also as in text), $D_{1, 2}$ लौह रज, $T_2$ $G_3$ अयो घोर, $G_1$ अयो रुज, $G_4$ अयोराज, $M_1$ अयोजलम् (for अयोनिज) Nīlp अयोनिजमिवानल

**37** $^{a}$) T $G_3$ यथा च, $G_{1, 4}$ यथाय, $G_2$ यथैव, $M_1$ यथाय, $M_2$ यथाग[] (for यथैध) Dc सुसमिद्धेन (for स्वसमु°) — $^{b}$) $B_4$ अर्हति; $D_{3, 4, 5}$ अर्छ° (for ऋच्छ°) — $^{c}$) $T_2$ (by corr) $G_3$ तथा तु स्वात्मलोभेन

**38** $^{b}$) Ś$_1$ $K_3$ B (except $B_1$) Dc$_2$ Dn$_2$ $D_{2-5}$ चौरत° — After $38^{ab}$, $G_2$ ins

9* अर्थिभ्य कालतस्तस्मान्नित्यमर्थवतां भयम् ।

अर्थ एव हि केषांचिदनर्थो भविता नृणाम् ।
अर्थश्रेयसि चासक्तो न श्रेयो विन्दते नरः ।
तस्मादर्थागमाः सर्वे मनोमोहविवर्धनाः ॥ ४०
कार्पण्यं दर्पमानौ च भयमुद्वेग एव च ।
अर्थजानि विदुः प्राज्ञा दुःखान्येतानि देहिनाम् ॥ ४१
अर्थस्योपार्जने दुःखं पालने च क्षये तथा ।
नाशे दुःखं व्यये दुःखं घ्नन्ति चैवार्थकारणात् ॥ ४२
अर्था दुःखं परित्यक्तुं पालिताश्चापि तेऽसुखाः ।
दुःखेन चाधिगम्यन्ते तेषां नाशं न चिन्तयेत् ॥ ४३
असंतोषपरा मूढाः संतोषं यान्ति पण्डिताः ।
अन्तो नास्ति पिपासायाः संतोषः परमं सुखम् ।
तस्मात्संतोषमेवेह धनं पश्यन्ति पण्डिताः ॥ ४४
अनित्यं यौवनं रूपं जीवितं द्रव्यसंचयः ।
ऐश्वर्यं प्रियसंवासो गृध्येदेषु न पण्डितः ॥ ४५
त्यजेत संचयांस्तस्मात्तज्जं क्लेशं सहेत कः ।
न हि संचयवान्कश्चिद् दृश्यते निरुपद्रवः ॥ ४६
अतश्च धर्मिभिः पुंभिरनीहार्थः प्रशस्यते ।
प्रक्षालनाद्धि पङ्कस्य दूरादस्पर्शनं वरम् ॥ ४७
युधिष्ठिरैवमर्थेषु न स्पृहां कर्तुमर्हसि ।
धर्मेण यदि ते कार्यं विमुक्तेच्छो भवार्थतः ॥ ४८

युधिष्ठिर उवाच ।

नार्थोपभोगलिप्सार्थमियमर्थेप्सुता मम ।

---

— $^{c}$) T2 G1 3 4 °वतो (for °वता)

**39** $^{c}$) Dc भुज्य° (for भक्ष्य°) — $^{d}$) N (except Ś1, K1 4 missing) सर्वत्र (for सर्वेण)

**40** $^{b}$) K2 B (except B1) D (except D1–3) अनर्थं Ś1 D1–3 जायते, K2 B2–4 Dc Dn D4–6 भजते; K3 भवते (for भविता) B1 लोकेनर्थाय कल्पते — $^{c}$) S (except T1 M2) अर्थे (for अर्थ°) — $^{d}$) S1 K3 B4 पर (for नर) — $^{f}$) S1 मनोदोष°, S (except G3) मदमोह° D1 2 °निबधना°

**41** $^{c}$) S1 K3 B4 D1–3 5 हि केषाचित् (for विदु° प्राज्ञा) — $^{d}$) K3 एव हि (for एतानि)

**42** $^{a}$) K2 B (except B4) Dn D4 6 अर्थस्योत्पादने चैव — $^{b}$) Ś1 K3 B1 4 Dc D3 5 [अ]थ (for च) D1 2 रक्षणे (for च क्षये) K3 B2 3 Dn D4 6 तथा क्षये (by transp) G2 आर्जिताना तु रक्षणे — $^{c}$) S1 D1 2 सगाच्चैव, K2 B Dc Dn D4 6 सहति (B4 °ते) च, K3 त्यागश्चैव, D3 सयोगाच्च, D5 सगे चैव (for नाशे दु°ख) N (K1 4 missing) महद् (for व्यये) — $^{d}$) S1 K3 D1–3 चाप्यर्थं, B1 चाप्यन्य°, B3 Dc चैवात्म°

**43** = (var) B 12 330 18 — $^{a}$) S1 K3 D1–3 T2 G3 4 दु°खा° (for दु°ख) T3 G3 4 °त्यक्ता° (for °त्यक्तु) — $^{b}$) N (K1 4 missing) चैव (for चापि) K2 B (except B1) D (except D1–3 5) शत्रव° (for तेऽसुखा°) — $^{d}$) K3 B (except B4) Dn D4 6 तस्मान्नाश, T1 नाश तेषा (by transp)

**44** 44$^{cdef}$ = (var) B 12 330 21 — $^{a}$) Ś1 °रता (for °परा) — S1 om (hapl) 44$^{cdef}$ — $^{c}$) S विवित्साया° (for पिपासा°) — $^{f}$) K3 Dn पर, D4–6 वर (for धन)

**45** = (var) B 12 330 14 — $^{a}$) T1 M1 परमं (for यौवन) — $^{b}$) S1 K3 Dc D3 T1 M1 द्रव्यसचया°, K2 B (except B4) Dn D4–6 रत्न(B2 धन)सचय°, T2 G3 4 द्रव्यमेव च — B1 om 45$^{cd}$ — $^{c}$) S आरोग्य (for ऐश्वर्यं) — $^{d}$) Ś1 lacuna, K2 3 B3 4 Dn D4 6 तत्र (for एषु)

**46** K2 om 46 — $^{a}$) D1 2 त्यजेद्धि, D3 °च (for °त) D1 2 5 T2 G3 4 सचय — $^{b}$) T1 सहेतुक°, G2 सहेतुक (for सहेत क°) Ś1 तज्ज° क्लेशान्सहेत्तत°; K3 तत्क्लेशान्न सहेत च, B D तज्जान् (D1–3 तज्ज°, D5 ऋजु°, D6 जातान्) क्लेशान्सहेत च (Dc1 D5 व°, D2 क°), M1 तज्ज° क्लेश° सहेतुक° — $^{c}$) Dc सचयकृत् — $^{d}$) B1 जायते S1 निरुपप्लव°

**47** $^{a}$) T2 G3 4 पुन° (for अत°) K2 B (except B4) Dn D4 6 धार्मिकै° (for धर्मिभि°) G2 सद्भि° (for पुंभि°) — $^{b}$) K3 D1–3 G2 M1 अनीहार्थे — After 47$^{ab}$, K2 B (except B1) D (except D3) ins

10* धर्मार्थं यस्य वित्तेहा वर तस्य निरीहता ।

[Dc धर्मार्था, D5 °र्थ D1–3 यस्य चित्ते भवेदीहा (for the prior half) B4 Dc D1–3 5 तस्यानीहा गरीयसी]

— D2 om 47$^{c}$–48$^{b}$ — $^{cd}$) Cited twice *verbatim* in the Sāmkarabhāṣya on Brahmasūtra 3 2 22 T2 G3 तु (for हि) K2 B2 3 Dn D4 S (except T1) श्रेयो (for दूराद्) B2 3 Dn D4 न स्पर्शन, S (except T1) ह्रस्प° K3 B1–3 Dn D4 S नृणा (T पर) (for वरम्)

**48** D2 om 48$^{ab}$ (cf v l 47) — $^{a}$) D1–3 त्वम् (for एवम्) K2 B2 3 Dn D4 5 सर्वेषु (for अर्थेषु) — After 48, B4 T2 G3 4 ins an addl colophon

भरणार्थं तु विप्राणां ब्रह्मन्काङ्क्षे न लोभतः ॥ ४९
कथं ह्यस्मद्विधो ब्रह्मन्वर्तमानो गृहाश्रमे ।
भरणं पालनं चापि न कुर्यादनुयायिनाम् ॥ ५०
संविभागो हि भूतानां सर्वेषामेव शिष्यते ।
तथैवापचमानेभ्यः प्रदेयं गृहमेधिना ॥ ५१
तृणानि भूमिरुदकं वाक्चतुर्थी च सूनृता ।
सतामेतानि गेहेषु नोच्छिद्यन्ते कदाचन ॥ ५२
देयमार्तस्य शयनं स्थितश्रान्तस्य चासनम् ।
तृषितस्य च पानीयं क्षुधितस्य च भोजनम् ॥ ५३
चक्षुर्दद्यान्मनो दद्याद्वाचं दद्याच्च सूनृताम् ।
प्रत्युद्गम्याभिगमनं कुर्यान्न्यायेन चार्चनम् ॥ ५४
अग्निहोत्रमनड्वांश्च ज्ञातयोऽतिथिबान्धवाः ।
पुत्रदारभृताश्चैव निर्दहेयुरपूजिताः ॥ ५५
नात्मार्थं पाचयेदन्नं न वृथा घातयेत्पशून् ।
न च तत्स्वयमश्नीयाद्विधिवद्यन्न निर्वपेत् ॥ ५६
श्वभ्यश्च श्वपचेभ्यश्च वयोभ्यश्चावपेद्भुवि ।
वैश्वदेवं हि नामैतत्सायंप्रातर्विधीयते ॥ ५७
विघसाशी भवेत्तस्मान्नित्यं चामृतभोजनः ।
विघसं भृत्यशेषं तु यज्ञशेषं तथामृतम् ॥ ५८
एतां यो वर्तते वृत्तिं वर्तमानो गृहाश्रमे ।
तस्य धर्मं परं प्राहुः कथं वा विप्र मन्यसे ॥ ५९

शौनक उवाच ।

अहो बत महत्कष्टं विपरीतमिदं जगत् ।
येनापत्रपते साधुरसाधुस्तेन तुष्यति ॥ ६०
शिश्नोदरकृतेऽप्राज्ञः करोति विघसं बहु ।
मोहरागसमाक्रान्त इन्द्रियार्थवशानुगः ॥ ६१

---

(*adhy no* $T_2$ $G_4$ 2 )

**49** $M_1$ om $49^{ab}$ — $^a$) $K_3$ B (except $B_1$) नात्मोप°, Dc आत्मोप° (see below), $D_{1-3}$ न ब्रह्मन्; S ($M_1$ om) नात्मस्पोषणलिप्सार्थं ❀ Cn आत्मोपभोगेति पाठो निर्मूल ।❀ — $^b$) Dc नेयम् (for इयम्) — $^d$) $B_2$ विधानत° (for न लो°)

**50** $^a$) $K_3$ $B_2$ S (except $T_2$ $G_3$) om हि S विप्र (for ब्रह्मन्)

**51** $^b$) $K_3$ $B_{2\ 3}$ Dn $D_{4-6}$ $G_{1\ 2\ 3}$ (m as in text) इष्यते, $B_1$ सिध्यति, $B_4$ Dc $D_3$ शस्यते, $D_3$ इष्य , $G_3$ जाय (for शिष्य ) — $^c$) $K_3$ तथैवापच(*sup lin* °स्तु) मानेषु, B तथैव या($B_4$ प)चमानेभ्य , $Dc_2$ (*sup lin*) $T_1$ $G_1$ तथैवायाच°, $T_2$ $G_{3\ 4}$ तथैवापि च मान्येभ्य

**52** =5 36 32 (q v), =(var) Manu 3 101

**53** $^b$) $Ś_1$ तथा, $K_3$ $T_1$ $G_{2\ 4}$ $M_1$ स्थिति ($T_1$ $M_1$ °ति°), $G_1$ पथि, $M_3$ परि (for स्थित )

**54** $54^{ab}$=B 13 7 $6^{ab}$ — $^b$) N (except $S_1$ $B_2$, $K_{1\ 4}$ missing) सुभाषिता (for च सूनृताम्); cf 12* (line 1) — After $54^{ab}$ N ($K_{1\ 4}$ missing) ins

11* उत्थाय चासन दद्यादेष धर्म सनातन ।

— $^c$) N ($K_{1\ 4}$ missing) प्रत्युत्थाया($B_4$ ना)भि° — $^d$) $B_2$ अर्घ्यान्न्यायेन $K_3$ $Dn_3$ चार्चना, $Dn_1$ चार्चनात्

**55** $^b$) $S_1$ Dc $D_{1-3}$ जामयो (for ज्ञातयो) — $^c$) $Ś_1$ $K_3$ $D_{1\ 2}$ पुत्र($D_1$ त्रा)दारा भृताश्चैव; $K_2$ B Dn $D_{4-6}$ $T_2$ $G_{1\ 3}$ पुत्रा ($G_1$ त्र) दाराश्च भृत्याश्च

**56** $^a$) $D_{1\ 3}$ नात्मार्थे T $G_{1\ 3\ 4}$ M तु पचेद् (for पाचयेद्) $K_3$ $B_{2\ 3}$ Dn $D_{4\ 6}$ आत्मार्थं पाचयेन्नान्न, $G_2$ आत्मार्थं न पचेदन्न — $^b$) $T_1$ $G_{1\ 2}$ $M_1$ पशु — $^c$) $T_1$ $G_{1\ 2}$ M एक°, $T_2$ $G_{3\ 4}$ एव (for तत्) — $^d$) $T_1$ $G_{1\ 2}$ $M_1$ °वर्ज न, $T_2$ $G_{3\ 4}$ वर्षैव (for यद्यन्न)

**57** $^c$) S (except $T_2$ $G_3$) इदं (for एतत्) — $^d$) $K_3$ $B_{2\ 3}$ Dn $D_{4-6}$ च दीयते, $K_3$ $B_4$ Dc प्रदी , $B_1$ प्रवर्तते (for विधी )

**58** =(var) Manu 3 285 — $^a$) $K_3$ $B_4$ $D_{1-3}$ नित्य (for तस्मान्) — $^c$) $K_3$ B (except $B_2$) D (except $D_{1-3\ 5}$) $T_2$ $G_3$ विघसो $Ś_1$ $K_2$ $B_{1\ 3}$ Dn $D_{4-6}$ $T_2$ $G_{1\ 3}$ भुक्तशेष ($B_1$ °षस), $B_4$ भृत्यशेषस — $^d$) $Ś_1$ यज्ञशिष्ट, $B_4$ यज्ञशेषस — After 58, N ($K_{1\ 4}$ missing, $K_3$ om lines 1–2) ins

12* चक्षुर्दद्यान्मनो दद्याद्वाचं दद्याच्च सूनृताम् ।
अनुव्रजेदुपासीत स यज्ञः पञ्चदक्षिणः ।
यो दद्यादपरिक्लिष्टमन्नमध्वनि वर्तते ।
श्रान्तायादृष्टपूर्वाय तस्य पुण्यफल महत् ।

[ =B 13 7 6–7 — (L 1) =$54^{ab}$ $D_{1\ 2}$ देवान्पितॄन्मनुष्यांश्च भिक्षूनतिथिपचमान् — (L 2) Dc पञ्चयज्ञ सदक्षिण, (for the posterior half) — (L 3) $D_{1\ 3}$ तिष्ठ° (for वर्त°) ]

**59** $^a$) $K_3$ $B_{1-3}$ Dn $D_{3\ 4\ 6}$ एव यो, $T_2$ $G_{3\ 4}$ य एता (for एतां यो)

**61** $^a$) $B_4$ $M_3$ [अ]थाज्ञ°, $D_5$ स्वज्ञ°, $T_1$ G ($G_3$

ह्रियते बुध्यमानोऽपि नरो हारिभिरिन्द्रियैः ।
विमूढसंज्ञो दुष्टाश्वैरुद्भ्रान्तैरिव सारथिः ॥ ६२
षडिन्द्रियाणि विषयं समागच्छन्ति वै यदा ।
तदा प्रादुर्भवत्येषां पूर्वसंकल्पजं मनः ॥ ६३
मनो यस्येन्द्रियग्रामविषयं प्रति चोदितम् ।
तस्यौत्सुक्यं संभवति प्रवृत्तिश्चोपजायते ॥ ६४
ततः संकल्पवीर्येण कामेन विषयेषुभिः ।
विद्धः पतति लोभाग्नौ ज्योतिर्लोभात्पतंगवत् ॥ ६५
ततो विहारैराहारैर्मोहितश्च विशां पते ।
महामोहसुखे मग्नो नात्मानमवबुध्यते ॥ ६६
एवं पतति संसारे तासु तास्विह योनिषु ।
अविद्याकर्मतृष्णाभिर्भ्राम्यमाणोऽथ चक्रवत् ॥ ६७
ब्रह्मादिषु तृणान्तेषु भूतेषु परिवर्तते ।
जले भुवि तथाकाशे जायमानः पुनः पुनः ॥ ६८

अबुधानां गतिस्त्वेषा बुधानामपि मे शृणु ।
ये धर्मे श्रेयसि रता विमोक्षरतयो जनाः ॥ ६९
यदिदं वेदवचनं कुरु कर्म त्यजेति च ।
तस्माद्धर्मानिमान्सर्वान्नाभिमानात्समाचरेत् ॥ ७०
इज्याध्ययनदानानि तपः सत्यं क्षमा दमः ।
अलोभ इति मार्गोऽयं धर्मस्याष्टविधः स्मृतः ॥ ७१
तत्र पूर्वश्चतुर्वर्गः पितृयानपथे स्थितः ।
कर्तव्यमिति यत्कार्यं नाभिमानात्समाचरेत् ॥ ७२
उत्तरो देवयानस्तु सद्भिराचरितः सदा ।
अष्टाङ्गेनैव मार्गेण विशुद्धात्मा समाचरेत् ॥ ७३
सम्यक्संकल्पसंबन्धात्सम्यक्चेन्द्रियनिग्रहात् ।
सम्यग्व्रतविशेषाच्च सम्यक्च गुरुसेवनात् ॥ ७४
सम्यगाहारयोगाच्च सम्यक्चाध्ययनागमात् ।
सम्यक्कर्मोपसंन्यासात्सम्यक्चित्तनिरोधनात् ।

---

before corr ) $M_1$ चाज्ञ° (for ऽप्राज्ञ°) — $^{b}$) S (except $M_2$) विघस ($T_2$ $G_{3\,4}$ °घात) कुरुते बहु — $^{c}$) $K_2$ B D (except $D_{1-3}$) °वशाक्रात ($B_1$ °समापन्न°) — $^{d}$) $B_1$ $D_2$ इन्द्रियाणां व°

**62** $^{a}$) $D_1$ ज्ञान°, $D_2$ ज्ञाय°; $D_3$ जान° (for बुध्य°) — $^{b}$) Dc S (except $M_2$) मनो- (for नरो) — $^{d}$) T $G_{3\,4}$ उन्द्भांत इव

**63** $^{bc}$) $T_1$ $G_{1\,2}$ $M_1$ transp यदा and तदा — $^{d}$) $S_1$ $K_2$ $D_6$ $G_1$ $M_2$ पूर्वं (for पूर्व-)

**64** $^{ab}$) $Ś_1$ °स्यैव, $K_3$ °स्येह (for °ग्राम ) $Ś_1$ $K_3$ धावति (for चोदितम्) $K_2$ B D मनो यस्येंद्रियस्येह विषयान्या($B_1$ $D_{1-3}$ °य या)ति सेवितु ($B_{2\,3\,4}$ Dc बोधितु, $D_{1-3}$ नोदितं) — $^{d}$) Dc चैव जायते, $D_5$ चैव विद्यते, $G_1$ चापि जायते (for चोप°)

**65** $^{a}$) $K_2$ B D (except $D_{1-3}$) °बीजेन (for वीर्येण) — $^{c}$) $K_3$ शोका° (for लोभा°)

**66** $G_4$ om (hapl ) 66–67 — $^{a}$) S (except $M_2$, $G_4$ om ) ततो दारैर्विहारैश्च — $^{b}$) $Ś_1$ $B_1$ $K_3$ $D_{1\,2}$ लोभितश्च, $D_3$ क्षोभित° $Ś_1$ महेच्छया, $K_2$ B Dn $D_{4-6}$ यथेप्सया, $K_3$ $D_{1-3}$ महेप्सया, Dc यथेच्छया — $^{c}$) $B_2$ $D_{1\,3}$ °मोहे ($D_3$ °मोह-) सुखे, $Dn_3$ $D_6$ °मोहे सुखे

**69** $^{c}$) $K_3$ $D_3$ $M_2$ धर्म- (for धर्मे) — $^{d}$) $D_{1-3}$ $G_2$ °मतयो (for °रतयो) $B_2$ $T_1$ नरा° (for जना°)

**70** $70^{ab}$ = B 12 241 $1^{ab}$, =(var) 242 $3^{ab}$ — $^{a}$) N ($K_{1\,4}$ missing) तदिद $K_3$ $Dc_1$ $Dn_2$ $D_1$ देव° (for वेद°) In $D_3$, the portion from जेति (in $70^{b}$) up to थि in $15^{c}$ of the next adhy is lost on a missing fol (6) — $^{c}$) $T_1$ $G_{1\,2}$ transp धर्मान् and सर्वान् — $70^{d}$ = $72^{d}$

**71** $D_3$ missing (cf v l 70) $T_1$ $G_1$ om (hapl ) 71–72 — $^{b}$) $K_3$ $D_{1\,2}$ दया (for दम°) — $^{d}$) $Ś_1$ मत° (for स्मृत°)

**72** $D_3$ missing (cf v l 70) $T_1$ $G_1$ om 72 (cf v l 71) — $^{a}$) $K_2$ B (except $B_3$) D (except $D_{1-3}$) अत्र, $M_1$ तत° (for तत्र) $G_{2\,4}$ $M_1$ चतुर्मार्गं, $M_2$ चतुर्भाग° — $^{b}$) $S_1$ $D_{1\,2}$ °यानपदे, $B_{2\,3}$ Dn $D_4$ $G_4$ $M_2$ °याणपथे $M_1$ हित°, $M_2$ स्मृत° $K_3$ तत्सर्वमविशेषत° — $^{c}$) $Ś_1$ $K_3$ Dc $D_{1\,2}$ तत् (for यत्) — $^{d}$) = $70^{d}$ $S_1$ $K_3$ $B_4$ $D_{1\,2}$ न मत्सरात् (for समाचरेत्)

**73** $D_3$ missing (cf v l 70) $M_1$ om (hapl ) 73 — $^{ab}$) $K_3$ (corrupt) उत्तरश्च चतुर्विंशो नामहात्मसुति सदा, S ($M_1$ om ) उत्तर °यान तु चरित सदा ($T_2$ $G_{2-4}$ तथा)

**74** $D_3$ missing (cf v.l 70) — $^{a}$) S °योगाच्च (for °सबन्धात्) — $^{b}$) $B_{1\,4}$ Dc S om च — $^{c}$) $T_2$ सत्य- (for सम्यग्) $B_4$ Dc व्रतनिषेवाच्च, $G_3$ प्रीतिविशेषाच्च — $B_1$ om (hapl ) $74^{d}$–$75^{a}$ — $^{d}$) $D_{1\,2}$ सम्यग्गुरुनिषेवणात्, S (except $G_2$ $M_2$) सम्यग्गुरुषु सेवया

**75** $D_3$ missing (cf v l 70) $B_1$ om $75^{a}$ (cf v.l. 74) — $^{b}$) $B_4$ $Dc_1$ $D_{1\,2}$ $T_1$ $M_1$ om च $G_1$ चाध्या°,

एवं कर्माणि कुर्वन्ति संसारविजिगीषवः ॥ ७५
रागद्वेषविनिर्मुक्ता ऐश्वर्यं देवता गताः ।
रुद्राः साध्यास्तथादित्या वसवोऽथाश्विनावपि ।
योगैश्वर्येण संयुक्ता धारयन्ति प्रजा इमाः ॥ ७६
तथा त्वमपि कौन्तेय शममास्थाय पुष्कलम् ।
तपसा सिद्धिमन्विच्छ योगसिद्धिं च भारत ॥ ७७
पितृमातृमयी सिद्धिः प्राप्ता कर्ममयी च ते ।
तपसा सिद्धिमन्विच्छ द्विजानां भरणाय वै ॥ ७८
सिद्धा हि यद्यदिच्छन्ति कुर्वते तदनुग्रहात् ।
तस्मात्तपः समास्थाय कुरुष्वात्ममनोरथम् ॥ ७९

इति श्रीमहाभारते आरण्यकपर्वणि द्वितीयोऽध्यायः ॥ २ ॥

# ३

वैशंपायन उवाच ।
शौनकेनैवमुक्तस्तु कुन्तीपुत्रो युधिष्ठिरः ।
पुरोहितमुपागम्य भ्रातृमध्येऽब्रवीदिदम् ॥ १
प्रस्थितं मानुयान्तीमे ब्राह्मणा वेदपारगाः ।
न चास्मि पालने शक्तो बहुदुःखसमन्वितः ॥ २
परित्यक्तुं न शक्नोमि दानशक्तिश्च नास्ति मे ।
कथमत्र मया कार्यं भगवांस्तद्ब्रवीतु मे ॥ ३
मुहूर्तमिव स ध्यात्वा धर्मेणान्विष्य तां गतिम् ।
युधिष्ठिरमुवाचेदं धौम्यो धर्मभृतां वरः ॥ ४
पुरा सृष्टानि भूतानि पीड्यन्ते क्षुधया भृशम् ।

---

G4 स्वाध्या° (for साध्य°) — c) Ś1 K3 Dc D1 2 5 सम्यक् (for एवं)

**76** D3 missing (cf v l 70) — b) S (except M2) ऐश्वर्यवशमागता — c) Ś1 K3 B4 Dc D2 5 रु(Dc2 ई)द्रादित्यास्तथा साध्या — d) = 1 1 32d Dc D2 [S]-ष्टा° (for ऽथा°) K3 B1–3 Dn D4–6 तथाश्विनौ (for [अ]श्विनावपि) T1 अश्विनौ वसवस्तथा — f) B4 Dc इमा प्रजा (by transp)

**77** D3 missing (cf v l 70) — b) S (except M2) तप आ° (for शममा°) — K3 om 77c–78b, D1 om 77cd — 77c = 78c

**78** D3 missing (cf v l 70) Ś1 K3 om 78ab (for K3 cf v l 77) D1 transp 78ab and 78cd — c) = 77c Ś1 यतस्त्व राजम्छांतानां

**79** D3 missing (cf v l 70) — b) K3 S अनुग्रह

Colophon K1 4 D3 missing — *Major* (or *Sub*) *parvan* Ś1 Dn3 n3 T1 G2 4 M आरण्य — *Adhy name* Ś1 Dn1 D1 5 शौनकवाक्य, K3 B4 Dc Dn2 n3 D2 4 6 पाडवाना (Dc2 पांडव) प्रव्रजन, K3 सौनक्य (sic), T2 G3 4 शौनकसंवाद°, G2 M2 युधिष्ठिरशौनकसवाद — *Adhy no* (figures, words or both) Dn3 D1 T1 G1 M 2 (as in text), T2 G2–4 3 — *Śloka no* Dn 84 (Dn1 83)

## 3

☞ This adhy is missing in K1 4 (cf v l 3 1 1), the MSS are mostly ignored here

**1** In D3, the portion from 1 up to धि in 15c is lost on a missing fol. (cf v l 3 2 70) — d) Ś1 Dc D1 2 5 भ्रातृभिः सहितोब्रवीत्; T2 G3 °मध्ये वचोब्रवीत्

**2** D3 missing (cf v l 1) Before 2, B4 D2 5 read युधिष्ठिर उ° — a) S (except M2) प्रस्थितानुयातारो (T1 °त्रो) — c) K3 B Dn D4 6 T2 G3 पोषणे (for पालने)

**3** D3 missing (cf v l 1) — a) Ś1 K3 B4 Dc D1 2 5 परिमोक्तुं. K3 B (except B4) D (except D1 2 5, D3 missing) G1 2 M1 न शक्नोस्मि, T1 न युक्तोस्मि — B3 om (hapl) 3cd — d) S1 तु; M2 प्र (for तद्) G3 ब्रवीहि, K3 B1 3 Dn D4 6 तद्ब्रूहि भगवन्मम

**4** D3 missing (cf v l 1) Before 4, all MSS except Ś1 K3 D1 (K1 4 D3 missing) ins वैश° उ (resp वैश°) — a) S1 अपि स, K3 अथ स; S मनसा (for इव स) — b) S अन्वी(G1 उद्वी)क्ष्य (for अन्विष्य)

**5** D3 missing (cf. v l 1) Before 5, N (except S1

ततोऽनुकम्पया तेषां सविता स्वपिता इव ॥ ५
गत्वोत्तरायणं तेजोरसानुद्धृत्य रश्मिभिः ।
दक्षिणायनमावृत्तो महीं निविशते रविः ॥ ६
क्षेत्रभूते ततस्तस्मिन्नोषधीरोषधीपतिः ।
दिवस्तेजः समुद्धृत्य जनयामास वारिणा ॥ ७
निषिक्तश्चन्द्रतेजोभिः सूयते भूगतो रविः ।
ओषध्यः षड्रसा मेध्यास्तदन्नं प्राणिनां भुवि ॥ ८
एवं भानुमयं ह्यन्नं भूतानां प्राणधारणम् ।
पितैष सर्वभूतानां तस्मात्तं शरणं व्रज ॥ ९
राजानो हि महात्मानो योनिकर्मविशोधिताः ।
उद्धरन्ति प्रजाः सर्वास्तप आस्थाय पुष्कलम् ॥ १०
भीमेन कार्तवीर्येण वैन्येन नहुषेण च ।
तपोयोगसमाधिस्थैरुद्धृता ह्यापदः प्रजाः ॥ ११
तथा त्वमपि धर्मात्मन्कर्मणा च विशोधितः ।
तप आस्थाय धर्मेण द्विजातीन्भर भारत ॥ १२
एवमुक्तस्तु धौम्येन तत्कालसदृशं वचः ।
धर्मराजो विशुद्धात्मा तप आतिष्ठदुत्तमम् ॥ १३
पुष्पोपहारैर्बलिभिरर्चयित्वा दिवाकरम् ।
योगमास्थाय धर्मात्मा वायुभक्षो जितेन्द्रियः ।
गाङ्गेयं वार्युपस्पृश्य प्राणायामेन तस्थिवान् ॥ १४

जनमेजय उवाच ।

कथं कुरूणामृषभः स तु राजा युधिष्ठिरः ।

---

K3 D1, K1 4 D3 missing) ins धौम्य उ° — d) S1 K3 B4 Dc D2 5 °पितेव हि (B4 D5 इ), K3 B1-3 Dn D4 6 °पिता यथा (for °पिता इव) — For 5d, D1 reads सवितार पितामह°, and cont

13* सान्त्वयित्वा ततो देव॰ प्राणिकार्ये युयोज च ।

**6** D3 missing (cf v l 1) — a) S1 K3 D1 5 देवो, T2 G3 4 तेषा (for तेजो°) — b) T G2-4 लोकान्, G1 M लोकाद् (for रसान्) — d) D5 तु प्रावृषद्, M2 प्रविशते (for निवि°) S महीं वर्षति वारिणा (T1 M1 °मि°)

**7** D3 missing (cf v l 1) B2 om 7ab — a) T2 G3 4 क्षेम° (for क्षेत्र°) — b) A few MSS औषधी° (in both places) — c) S (except M2) रवेस् (for दिवस्)

**8** D3 missing (cf v l 1) — a) K3 D2 निषक्तश्च, T1 निक्षित, G2 M1 निषिक्त — b) K3 श्रूयते (for सू°) D5 [अ]त्र गतो; T2 G M1 जगतो (for भूगतो) K2 B Dc Dn D3 4 5 स्वयोनौ निर्गते (B1 3 4 Dc D2 °तो) रवि° — c) S1 K3 B4 D1 5 ओषधी

**9** D3 missing (cf v l 1) — b) T2 G3 प्रजाना (for भूता°) — c) K3 पितैव, B4 Dc D2 5 पितेव, S (except M1) नाथोऽय (for पितैष)

**10** D3 missing (cf v l 1) — b) Cf 12b D1 शुभे कर्मणि सस्थिता — c) G4 धारयति (for उद्ध°)

**11** D3 missing (cf v l 1) — a) B1-3 धौम्येन (B3m हैमेन), T1 G1 2 4 भैमेन, T2 G3 M1 भौमेन, M3 गयेन — b) A few MSS वैण्येन — d) K3 चापदि, D1 ह्यापदि

**12** D3 missing (cf v l 1) — a) Ś1 धर्मांश, S कौंतेय (for धर्मात्मन्) — d) T1 G1 2 M1 कौरव (for भारत)

**13** D3 missing (cf v l 1) K2 B Dc Dn D2 4 6 read 13-14 after 33, Dc D2 read 13 in its proper place *also* Before 13, all MSS ins वैश° उ° — After 13ab (transposed), K2 B2 4 Dn D4 6 ins

14* विप्रत्यागसमाधिस्थ सयतात्मा दृढव्रत ।,

while G2 ins

15* ततस्त्वध्यापयामास मन्त्र सर्वार्थसाधकम् ।
अष्टाक्षर पर मन्त्रमार्तस्य सतत प्रियम् ।

**14** D3 missing (cf v l 1) For the sequence of K2 B D (except D1 5, D3 missing), cf v l 13 — After 14ab (transposed), K2 B Dc Dn D2 4 6 ins

16* सोऽवगाह्य जल राजा देवस्याभिमुखोऽभवत् ।

— e) B4 Dc D2 स (for [उ]प°) — After 14, K2 B D (except D1, D3 missing) ins a passage given in App I (No 1), while S reads adhy 4 !

**15** M2 om 15-33 D3 missing up to धि in 15c (cf v l 1) — After the ref, S (except M2) ins a variant of 14abcd

17* पुष्पोपहारैर्बलिभिर्बहुशश्च यथाविधि ।
सर्वात्मभूत सपूज्य यतप्राणो जितेन्द्रिय ।

— a) S (M2 om) स्तवेन (M1 तेपेन) केन विप्रर्षे (T2 G3 °प्रेष) — b) G4 स्तुत्वा (for स तु) — d) Ś1 K3 D1 3 °विक्रम, K2 B Dc Dn D3 4-6 °दर्शन (for °विक्रमम्) — After 15 S (except M2) ins

18* मयि स्नेहोऽस्ति चेद्ब्रह्मन्यद्यनुग्रहभागहम् ।
भगवन्नास्ति चेद्ब्रह्म तच्च मे ब्रूहि साम्प्रतम् ।

विप्रार्थमाराधितवान्सूर्यमद्भुतविक्रमम् ॥ १५

**वैशंपायन उवाच ।**

शृणुष्वावहितो राजञ्शुचिर्भूत्वा समाहितः ।
क्षणं च कुरु राजेन्द्र सर्वं वक्ष्याम्यशेषतः ॥ १६
धौम्येन तु यथा प्रोक्तं पार्थाय सुमहात्मने ।
नाम्नामष्टशतं पुण्यं तच्छृणुष्व महामते ॥ १७
सूर्योऽर्यमा भगस्त्वष्टा पूषार्कः सविता रविः ।
गभस्तिमानजः कालो मृत्युर्धाता प्रभाकरः ॥ १८
पृथिव्यापश्च तेजश्च खं वायुश्च परायणम् ।
सोमो बृहस्पतिः शुक्रो बुधोऽङ्गारक एव च ॥ १९
इन्द्रो विवस्वान्दीप्तांशुः शुचिः शौरिः शनैश्चरः ।
ब्रह्मा विष्णुश्च रुद्रश्च स्कन्दो वैश्रवणो यमः ॥ २०
वैद्युतो जाठरश्चाग्निरैन्धनस्तेजसां पतिः ।
धर्मध्वजो वेदकर्ता वेदाङ्गो वेदवाहनः ॥ २१
कृतं त्रेता द्वापरश्च कलिः सर्वामराश्रयः ।
कला काष्ठा मुहूर्ताश्च पक्षा मासा ऋतुस्तथा ॥ २२
संवत्सरकरोऽश्वत्थः कालचक्रो विभावसुः ।
पुरुषः शाश्वतो योगी व्यक्ताव्यक्तः सनातनः ॥ २३
लोकाध्यक्षः प्रजाध्यक्षो विश्वकर्मा तमोनुदः ।
वरुणः सागरोंऽशुश्च जीमूतो जीवनोऽरिहा ॥ २४
भूताश्रयो भूतपतिः सर्वभूतनिषेवितः ।
मणिः सुवर्णो भूतादिः कामदः सर्वतोमुखः ॥ २५
जयो विशालो वरदः शीघ्रगः प्राणधारणः ।
धन्वन्तरिर्धूमकेतुरादिदेवोऽदितेः सुतः ॥ २६
द्वादशात्मारविन्दाक्षः पिता माता पितामहः ।
स्वर्गद्वारं प्रजाद्वारं मोक्षद्वारं त्रिविष्टपम् ॥ २७

---

**16** $M_2$ om 16 (cf v l 15) — [d]) $K_2$ $B_2$ Dn $D_{1, 4-6}$ सप्र (for सर्वं) S ($M_2$ om) गुह्य वक्ष्यामि ते हित

**17** $M_2$ om 17 (cf v l 15) — [a]) N ($K_{1, 4}$ missing) °पूर्वं (for प्रोक्त) — [c]) $G_2$ अष्टोत्तर (for अष्टशत) N ($K_{1, 4}$ missing) नामाष्टशतमाख्यात — [d]) $B_4$ $D_1$ $G_{1, 4}$ महाद्युते $G_2$ शत तच्छृणु भूपते

**18** $M_2$ om 18 (cf v l 15) — Before 18, $K_2$ B (except $B_1$) D (except $D_{1, 3}$) $T_2$ $G_3$ ins धौम्य उ (resp धौम्य°); $K_3$ सूर्याय नम

**20** $M_2$ om 20 (cf v l 15) — [a]) Dc $D_2$ विश्वात्मा (for दीप्तांशु°) — [d]) Dc $Dn_1$ $n_2$ (before corr) $n_3$ वै वरुणो (for वैश्र°)

**21** $M_2$ om 21 (cf v l 15) — [b]) $Ś_1$ $B_2$ निधि° (for पति°)

**22** $M_2$ om 22 (cf v.l 15) — [a]) $B_2$ Dc $D_{1, 2}$ $G_{2, 4}$ द्वापर च — [b]) $K_2$ B D (except $D_{1, 3}$) सर्वमलाश्रय — [d]) $S_1$ पक्षो मास ऋतुश्च य°, $K_2$ Dc $D_2$ क्षणा यामा लवा° क्षपा°, $K_3$ पक्षमासा ऋतेशय°, $B_{1, 2}$ Dn $D_{4-6}$ क्षपा याम° ($Dn_3$ $D_6$ °मा)स्तथा क्षण ($D_6$ णा°), $B_3$ क्षपा यामा नवा° क्षणा°, $B_4$ पक्षा मासा क्षपा° क्षणा°, $D_1$ पक्षा मासास्त्वहर्निशौ; $D_3$ पक्षा मासत्वहर्निश (sic)

**23** $M_2$ om 23 (cf v l 15) — [b]) $S_1$ $D_{1-3}$ काल° चक्र. — $23^d$ = (var) 1 1 $20^d$

**24** $M_2$ om 24 (cf v l 15) — [a]) $K_3$ $B_{1, 2}$ D (except $D_{1, 3, 6}$) $G_1$ काला° (for लोका) $S_1$ $K_3$ $D_1$ $G_3$ सुरा (for प्रजा°) — [c]) $S_1$ $K_2$ $B_2$ Dn $D_{4-6}$ [ऽ]शश्च, $D_1$ [ऽ]मश्च (for ऽशुश्च)

**25** $M_2$ om 25 (cf v l 15) — [a]) $Ś_1$ $K_3$ $B_3$ भूताशयो — [b]) $K_2$ B Dn $D_{4, 6}$ °लोकनमस्कृत° ($B_4$ भूतहिते रत); Dc $D_2$ °भूतपतिर्विभु°; $D_5$ भूतनिषेवक — After $25^{ab}$, N ($K_{1, 4}$ missing) ins

19* त्वष्टा सवर्तको वह्नि° सर्वस्यादिरलोलुप ।
अनन्त कपिलो भानु°

[$Ś_1$ $K_3$ $B_{3, 4}$ $D_5$ °करोचल°, $D_{1, 3}$ करोमल° (for °रलोलुप°) ]

— 19* is followed by $25^d$, $26^a$, 20*, $25^c$ and $26^b$ (with v l), etc — [c]) N ($K_{1, 4}$ missing) मन° ($D_{1, 2}$ मनु°, $D_5$ कल्प°) सुपर्णो — [d]) $B_3$ (m as in text) °द° कामगो विभु°

**26** $M_2$ om 26 (cf v l 15) — [a]) $S_1$ $K_3$ $B_3$m $D_{1, 2}$ विषादो, $M_1$ °धाता (for °शालो) — After $26^c$, N ($K_{1, 4}$ missing) ins

20* सर्वधातुनिषेवित ।

[$K_2$ $B_2$ Dn $D_{4, 6}$ °निषेविता, $B_4$ सर्वभूत° ]

— [b]) $K_2$ $B_2$ धारक

**27** $M_2$ om 27 (cf v l 15) — [b]) $D_5$ मही नभ° (for पिता°) — [d]) B (except $B_2$) $Dc_1$ $D_4$ त्रिपिष्टपं

देहकर्ता प्रशान्तात्मा विश्वात्मा विश्वतोमुखः ।
चराचरात्मा सूक्ष्मात्मा मैत्रेण वपुषान्वितः ॥ २८
एतद्वै कीर्तनीयस्य सूर्यस्यैव महात्मनः ।
नाम्नामष्टशतं पुण्यं शक्रेणोक्तं महात्मना ॥ २९
शक्राच्च नारदः प्राप्तो धौम्यश्च तदनन्तरम् ।
धौम्याद्युधिष्ठिरः प्राप्य सर्वान्कामानवाप्तवान् ॥ ३०
सुरपितृगणयक्षसेवितं
ह्यसुरनिशाचरसिद्धवन्दितम् ।
वरकनकहुताशनप्रभं
त्वमपि मनस्यभिधेहि भास्करम् ॥ ३१
सूर्योदये यस्तु समाहितः पठे-
त्स पुत्रलाभं धनरत्नसंचयान् ।
लभेत जातिस्मरतां सदा नरः
स्मृतिं च मेधां च स विन्दते पराम् ॥ ३२
इमं स्तवं देववरस्य यो नरः
प्रकीर्तयेच्छुचिसुमनाः समाहितः ।
स मुच्यते शोकदवाग्निसागरा-
ल्लभेत कामान्मनसा यथेप्सितान् ॥ ३३

इति श्रीमहाभारते आरण्यकपर्वणि तृतीयोऽध्यायः ॥ ३ ॥

---

**28** M2 om 28 (cf v l 15) — a) Ś1 (m as in text) B D (except D1 3) मैत्रेय करुणान्वित°, T1 मैत्रेण वपुरन्वित

**29** M2 om 29 (cf v l 15) — b) N (K1 4 missing) सूर्यस्यामिततेजस — c) K3 D1 3 5 प्रोक्त (for पुण्यं) S1 अष्टोत्तर शत नाम्नां, K2 B Dc Dn D2 4 6 नामाष्टशतक चेद — d) K2 B Dc Dn D2 4 6 प्रोक्तमेतत्स्वयंभुवा, K3 D1 3 5 शक्रेण सुमहात्मना

**30** K3 M2 om 30 (for M2 cf v l 15) K2 B (except B2) D (except D1 3 5) read 30 in the course of passage No 2 of App I — a) S1 D1 प्राप, D2 3 प्राप्य (for प्राप्तो) — b) N (K1 4 missing) तु (for च) — c) D1 4 5 प्राप (for प्राप्य) — d) Dc D2 5 अवाप्नुयात्

**31** M2 om 31 (cf v l 15) — a) K2 B (except B4) D (except D1 3) G3 (by transp) सुरगणपितृयक्ष, G2 सुरपितृगणसिद्धवदित (cf 31b) — b) D1–3 om हि S1 K3 B4 दितिजनिशा°, T G3 4 M1 निशिचरगणसिद्ध°, G1 2 निशिचरचारण(G1 °चरगण)यक्षसेवित (cf a) — d) Ś1 K3 D1 3 त्वमपि नमस्व हिताय भा°, K2 B Dc Dn D2 4–6 प्रणिपतितोसि हिताय भा°

**32** M2 om 32 (cf v l 15) — a) K2 B D (except D1) सु- (for तु) — b) K2 B D (except D1–3) °दारान्, K3 °कामान् (for °लाभ) — c) K2 B D (except D1–3) transp सदा and नर° — d) K2 B1 2 Dn D4–6 धृति (for स्मृति) S1 B1 2m 3 D (except D5) पुमान् (for पराम्)

**33** M2 om 33 (cf v l 15) — a) S (M2 om) कीर्तयेत् (for यो नर) — b) Hypermetric ! S (M2 om) शृणोति वा य° (for प्रकीर्तयेच्छुचि) Ś1 K3 B3 4 Dc D1–3 शुद्धमना° (for शुचिसुमना°) — c) K2 B Dn D4–6 वि-, Dc प्र- (for स) — d) S (except G4, M2 om) मनसो — After 33, K2 B Dc Dn D2 4 6 read 13–14

Colophon om in S1 K2 3 B1–3 Dn D5 T1 M2 K1 4 missing — *Major* (or *Sub-*)*parvan* G2 3 आरण्य — *Adhy name* B4 Dc1 सूर्यनामाष्टशतक (Dc1 °ष्टशत), Dc2 D2 सूर्यनामाष्टक शत (D2 °ष्टकशत), Dn1 सूर्याराधन ; D1 धौम्योक्त सूर्यध्यान, D3 धौम्यकृतस्तव, T2 G3 सूर्यनामाष्टोत्तर, G2 सूर्यप्रसाद°, to it B4 Dc D2 3 add समाप्त — *Adhy no* (figures, words or both) D1 G1 2 M1 3 (as in text), T2 G3 4 — *Śloka no* D1 35

## 4

☞ This adhy is missing in K1 4 (cf v l 3 1 1), the MSS are mostly ignored here S reads the stanzas comprising this adhy after 3 3 14, while K2 B D (except D1 3 5) read them after a passage given in App I (No 1), which these MSS ins after 3 3 14 Thus the sequence in K2 B D (except D1 3 5) is 3 3 1–12, 15–29 31–33, 13–14 (with insertions), App I (No 1), 3 4 1–3 App I (No 2), 3 4 4–10

# ४

वैशंपायन उवाच ।

ततो दिवाकरः प्रीतो दर्शयामास पाण्डवम् ।
दीप्यमानः स्ववपुषा ज्वलन्निव हुताशनः ॥ १
यत्तेऽभिलषितं राजन्सर्वमेतदवाप्स्यसि ।
अहमन्नं प्रदास्यामि सप्त पञ्च च ते समाः ॥ २
फलमूलामिषं शाकं संस्कृतं यन्महानसे ।
चतुर्विधं तदन्नाद्यमक्षय्यं ते भविष्यति ।
धनं च विविधं तुभ्यमित्युक्त्वान्तरधीयत ॥ ३
लब्ध्वा वरं तु कौन्तेयो जलादुत्तीर्य धर्मवित् ।
जग्राह पादौ धौम्यस्य भ्रातॄंश्चास्वजताच्युतः ॥ ४
द्रौपद्या सह संगम्य पश्यमानोऽभ्ययात्प्रभुः ।
महानसे तदान्नं तु साधयामास पाण्डवः ॥ ५
संस्कृतं प्रसवं याति वन्यमन्नं चतुर्विधम् ।
अक्षय्यं वर्धते चान्नं तेन भोजयते द्विजान् ॥ ६
भुक्तवत्सु च विप्रेषु भोजयित्वानुजानपि ।
शेषं विघससंज्ञं तु पश्चाद्भुङ्क्ते युधिष्ठिरः ।
युधिष्ठिरं भोजयित्वा शेषमश्नाति पार्षती ॥ ७
एवं दिवाकरात्प्राप्य दिवाकरसमद्युतिः ।
कामान्मनोभिलषितान्ब्राह्मणेभ्यो ददौ प्रभुः ॥ ८
पुरोहितपुरोगाश्च तिथिनक्षत्रपर्वसु ।
यज्ञियार्थाः प्रवर्तन्ते विधिमन्त्रप्रमाणतः ॥ ९
ततः कृतस्वस्त्ययना धौम्येन सह पाण्डवाः ।
द्विजसंघैः परिवृताः प्रययुः काम्यकं वनम् ॥ १०

इति श्रीमहाभारते आरण्यकपर्वणि चतुर्थोऽध्यायः ॥ ४ ॥

---

**1** $K_{2.3}$ $B_{1-3}$ Dn $D_{4.6}$ S (which cont the previous adhy) om the ref , while $B_4$ Dc $D_{2.3.5}$ (which ins the ref before the last line of passage No 1 of App I) also om the ref here

**2** Before 2, $Ś_1$ $K_2$ B Dc Dn $D_{4-6}$ $M_2$ ins विवस्वा-नुवाच ($Ś_1$ om उ°, but *not* $M_2$), $K_3$ $D_{1-3}$ $G_2$ सूर्य उ° ($G_2$ om उ ), $T_1$ $G_1$ $M_1$ आदित्य — [a]) $K_2$ $B_{1.2}$ Dn $D_{4.6}$ किंचित्, $B_3$ काम (for राजन्) — [b]) $K_2$ $B_2$ Dn $D_{4.6}$ तत्त्व सर्वम्, $B_1$ तत्सर्वं त्वम् (for सर्वमेतद्) $B_3$ तत्सर्वं समवा° — [d]) S नव वर्षाणि त्रीणि च — After 2, $K_2$ Dn $D_{5.6}$ (both latter marg ) ins 21*

**3** [a]) $S_1$ पथ्य (for शाक) — $D_3$ (marg *sec m* ) S ins after $3^{ab}$ $K_2$ Dn $D_{5.6}$ (both latter marg ), after 2

21* गृहाणेदं पिठर ताम्रं मया दत्तं नराधिप ।
यावद्वाञ्छति पाञ्चाली पात्रेणानेन सुव्रत ।

[(L 2) $K_2$ Dn $D_{5.6}$ वर्त्स्यति , $T_1$ इच्छति (for वाञ्छति) $T_1$ सम्मता (for सुव्रत) ]

— After $3^{cd}$, $K_2$ B (except $B_1$) Dn $D_{4.6}$ ins

22* इतश्चतुर्दशे वर्षे भूयो राज्यमवाप्स्यसि ।,

followed by वैश° उ

— [ef]) $D_5$ चतुर्विधं (for च विविधं) $K_2$ B Dn $D_{4.6}$ एवमुक्त्वा तु भगवांस्तत्रैवांतरधीयत — $3^f$=1 12 $3^d$ — After 3, N (except $K_3$ $D_1$, $K_{1.4}$ missing) ins a passage given in App I (No 2)

**4** Before 4, all MSS (except $D_1$ $T_2$ $G_3$, $K_{1.4}$ missing) ins वैश° उ° (resp वैश°) — [d]) $S_1$ $B_4$ Dc $D_{1-3.5}$ भ्रातृभिः स्वजनेन च ; $K_2$ $B_{1-3}$ Dn $D_{4.6}$ भ्रातॄंश्च परिषस्वजे — After 4, $B_{3.4}$ ins

23* युधिष्ठिर उवाच ।
त्वत्प्रसादाद् द्विजश्रेष्ठ यदिष्टं प्राप्तवानहम् ।,

followed by वैश° उ°

**5** [a]) $D_{1.3}$ या समुपागम्य — [b]) N ($K_{1.4}$ missing) वध्यमानो ; $G_1$ पच (for पश्य ) $K_2$ B (except $B_4$) Dn $D_{4-6}$ तया , $K_3$ ययौ , $T_1$ $G_{1.3}$ $M_1$ [अ]पयात् (for ऽभ्य°) — [c]) N ($K_{1.4}$ missing) तदानीं ; $T_2$ $G_{1.3.4}$ तदन्नं (for तदान्नं) — $T_1$ om (hapl ) $5^d$–$7^c$

**6** $T_1$ om 6 (cf v l 5) — [a]) $Ś_1$ यच्च (for याति) $M_2$ संस्कृतं तच्च भवति — [b]) $S_1$ धन्यम् ; $K_2$ B Dn $D_{4.5}$ स्वल्पम् , $D_6$ पक्वम् (for वन्यम्) — [d]) S ($T_1$ om ) [अ]-भोजयत (for भोज )

**7** $T_1$ om $7^{abc}$ (cf v l 5) — [a]) $K_3$ $D_3$ तु ; $G_{1.3.4}$ $M_1$ [अ]थ (for च) — [b]) Dc $D_2$ द्विजान्, $D_1$ [अ]नुगान् — [f]) $K_3$ (? orig gloss) द्रौपदी (for पार्षती)

## ५

वैशंपायन उवाच ।

वनं प्रविष्टेष्वथ पाण्डवेषु
प्रज्ञाचक्षुस्तप्यमानोऽम्बिकेयः ।
धर्मात्मानं विदुरमगाधबुद्धिं
सुखासीनो वाक्यमुवाच राजा ॥ १

प्रज्ञा च ते भार्गवस्येव शुद्धा
धर्मं च त्वं परमं वेत्थ सूक्ष्मम् ।
समश्च त्वं संमतः कौरवाणां
पथ्यं चैषां मम चैव ब्रवीहि ॥ २

एवं गते विदुर यदद्य कार्यं
पौराश्चेमे कथमस्मान्भजेरन् ।
ते चाप्यस्मान्नोद्धरेयुः समूला-
न्न कामये तांश्च विनश्यमानान् ॥ ३

विदुर उवाच ।

त्रिवर्गोऽयं धर्ममूलो नरेन्द्र
राज्यं चेदं धर्ममूलं वदन्ति ।
धर्मे राजन्वर्तमानः स्वशक्त्या
पुत्रान्सर्वान्पाहि कुन्तीसुतांश्च ॥ ४

स वै धर्मो विप्रलुप्तः सभायां
पापात्मभिः सौबलेयप्रधानैः ।
आहूय कुन्तीसुतमक्षवत्यां
पराजैषीत्सत्यसंधं सुतस्ते ॥ ५

एतस्य ते दुष्प्रणीतस्य राज-
ञ्शेषस्याहं परिपश्याम्युपायम् ।
यथा पुत्रस्तव कौरव्य पापा-
न्मुक्तो लोके प्रतितिष्ठेत साधु ॥ ६

---

— *N B* After 7, most old printed ed ins a spurious line द्रौपद्या क्षुज्यमानाया तदन्न क्षयमेति च ।, which was found only on the marg of one inferior MS collated for the edition but not included in our apparatus !

**8** $^{b}$) $K_3$ B D (except $D_{1\ 3}$) °समप्रभ°; $M_2$ पात्र हैरण्यमुत्तम — $^{c}$) $T_2$ (by corr ) $G_3$ आत्मा° (for मनो°) $G_1$ कामात्मानोभिलषितान् — $^{d}$) Dn $D_8$ S [अ]ददात् (for ददौ)

**9** $^{c}$) $K_3$ B Dc $D_{2\ 4\ 5}$ यज्ञे पार्था°, $D_1$ यज्ञार्थाय, $T_2$ यज्ञार्थे स°, G M इज्यार्थे स्म ($G_1$ च, $G_2$ °म्य°, $G_3$ °) (for यज्ञि°) $T_1$ इज्यार्थे समवर्तते — $^{d}$) $M_2$ विधिवन्मत्र कोविदा°

**10** $^{d}$) Dc $D_2$ °यु° काम्यके पुन° — After 10, S reads 3 3 15–33

Colophon om in $T_2$ G $M_1$ $K_{1\ 4}$ missing — *Major* (or *Sub* ) *parvan* $T_1$ $M_2$ आरण्य — *Adhy name* $S_1$ $K_3$ सूर्यस्तव°, $K_3$ $B_{1-3}$ Dc Dn $D_{2\ 4-6}$ काम्यकवन($B_2$ $D_2$ om वन)प्रवेश°, $B_4$ युधिष्ठिरादीनां काम्यकवनप्रवेश°, $M_2$ अर्कसवाद° — *Adhy no* (figures, words or both) Dn $T_1$ $M_2$ 3, $D_1$ 4 (as in text) — *Śloka no* Dn 83, $D_1$ 11

## 5

☞ This adhy is missing in $K_{1\ 4}$ (cf v l 3 1 1), the MSS are mostly ignored here

**1** $^{d}$) $Ś_1$ $D_{1\ 3}$ $T_2$ $G_{3-6}$ सुखासीन

**2** $Dc_2$ om $2^{a}$–$3^{b}$ Before 2, N ( $K_{1\ 4}$ missing, $Dc_2$ om ) $G_4$ M ins धृतराष्ट्र उ° (resp धृतराष्ट्र°) — $^{a}$) $Ś_1$ $K_3$ $D_1$ हि (for च) $S_1$ $K_3$ $Dc_1$ $D_{1-3}$ वृद्धा (for शुद्धा) — $^{b}$) $B_{3\ 4}$ वेत्सि, T $G_3$ वेद (for वेत्थ) — $^{c}$) $Dc_1$ $D_2$ कामश्च (for सम°) — $^{d}$) $K_3$ $D_3$ $T_2$ $G_{3\ 4}$ $M_2$ तेषां, $G_2$ वेद (for चैषां) $K_3$ [इ]ह ब्रूहि (for ब्रवीहि)

**3** $Dc_2$ om $3^{ab}$ (cf v l 2) — $^{a}$) T $G_3$ वीर (for विदुर) — $^{b}$) $K_3$ स्वेते, $B_2$ $Dc_1$ $D_4$ च मे, $T_2$ $G_{3\ 4}$ च ते (for चेमे) — $^{d}$) $K_3$ B (except $B_1$) Dn $D_{4\ 6}$ तत्त्वं भूया° साधु कार्याणि वेत्सि — After 3, $T_2$ $G_{2-4}$ ins

24* सौबलेनैव पापेन दुर्योधनहितैषिणा ।
क्रूरमाचरित कर्म न मे प्रियमनुष्ठितम् ।
तथैव हि कृते तत्र तद्भवान्वक्तुमर्हति ।
उत्तर प्राप्तकाल च किमन्यन्मन्यते क्षमम् ।
नास्ति धर्मे सहायत्वमिति मे दीर्यते मन° ।
यत्र पाण्डुसुता° सर्वे क्लिश्यन्ति वनमागता° ।
[ (L 2) $G_2$ क्षत्तर् (for कर्म) ]

**4** $^{d}$) $K_3$ B (except $B_1$) Dn $D_{4\ 6}$ पाहो° (for कुन्ती-)

तद्वै सर्वे पाण्डुपुत्रा लभन्तां
यत्तद्राजन्नतिसृष्टं त्वयासीत् ।
एष धर्मः परमो यत्स्वकेन
राजा तुष्येन्न परस्वेषु गृध्येत् ॥ ७
एतत्कार्यं तव सर्वप्रधानं
तेषां तुष्टिः शकुनेश्चावमानः ।
एवं शेषं यदि पुत्रेषु ते स्या-
देतद्राजंस्त्वरमाणः कुरुष्व ॥ ८
अथैतदेवं न करोषि राज-
न्ध्रुवं कुरूणां भविता विनाशः ।
न हि क्रुद्धो भीमसेनोऽर्जुनो वा
शेषं कुर्याच्छात्रवाणामनीके ॥ ९
येषां योद्धा सव्यसाची कृतास्त्रो
धनुर्येषां गाण्डिवं लोकसारम् ।
येषां भीमो बाहुशाली च योद्धा
तेषां लोके किं नु न प्राप्यमस्ति ॥ १०
उक्तं पूर्वं जातमात्रे सुते ते
मया यत्ते हितमासीत्तदानीम् ।
पुत्रं त्यजेममहितं कुलस्ये-
त्येतद्राजन्न च तत्त्वं चकर्थ ।
इदानीं ते हितमुक्तं न चेत्त्वं
कर्तासि राजन्परितप्तासि पश्चात् ॥ ११
यद्येतदेवमनुमन्ता सुतस्ते
संप्रीयमाणः पाण्डवैरेकराज्यम् ।
तापो न ते वै भविता प्रीतियोगा-
त्त्वं चेन्न गृह्णासि सुतं सहायैः ।
अथापरो भवति हि तं निगृह्य
पाण्डोः पुत्रं प्रकुरुष्वाधिपत्ये ॥ १२

---

— After 4, Do reads $7^{ab}$, and S (except $T_1$) reads $10^{cd}$ (for the first time)

**5** $^{a}$) $K_2$ B Dn $D_{4\ 6}$ $T_2$ G विप्रल($G_2$ °लु)ब्ध°, $K_3$ °युक्त°; $D_6$ °नष्ट — $^{c}$) $K_3$ (corrupt) आत्मप्रधानसुतमक्ष°

**6** $^{b}$) Do शेष नान्य (for शेषस्याहं) — $^{d}$) $B_1$ तिष्ठते साधुवृत्त° A few MSS साधु°

**7** Do reads $7^{ab}$ after 4, *repeating* it here $D_8$ om (hapl) $7^{b}$–$8^{c}$ — $^{b}$) $Ś_1$ इति, B Dn अभि-; $D_{1\ 2}$ विनि, $T_1$ अग्नि (for अति-) — Dn ins after $7^{cd}$ $Ś_1$ $K_3$, which om $7^{cd}$, ins after $7^{ab}$

25* यशो न नश्येज्ज्ञातिभेदश्च न स्या
द्धर्मो न स्यान्नैव चैव कृते त्वाम् ।
[ (L 2) $Ś_1$ $K_3$ जयाद्धर्मो (for धर्मो न स्यात्) ]

**8** $D_6$ om $8^{abc}$ (of v l 7) — $^{a}$) $B_4$ Do $Dn_2$ $D_1$ सर्वं, S धर्मं (for सर्वं) — $^{b}$) S वमानात् — $^{c}$) S एतच्छ्रेयस्तव (for एवं शेषं यदि) $D_{1-3}$ पुत्रस्य (for पुत्रेषु)

**9** $^{a}$) $K_2$ $B_{1\ 2}$ $Dn_1$ $n_2$ $D_{4\ 6}$ तथै° (for अथै°)

**10** $^{a}$) $Ś_1$ Do $D_6$ गोप्ता, $B_1$ यता, $D_{1\ 2}$ आस्ते, $D_3$ शास्ता (for योद्धा) — S (except $T_1$) reads $10^{cd}$ after 4, *repeating* it here — $^{d}$) $Dn_1$ $n_3$ $D_{4\ 6}$ $M_2$ नाप्राप्य°, $T_1$ $G_1$ दुष्प्राप (for न प्राप्य°) — After 10, T $G_{2-4}$ ins

26* येषां राजा धर्मपुत्रो महात्मा
तेषां लोके किं नु दुष्प्रापमस्ति ।,

the posterior half being a variant of $10^{d}$

**11** $^{b}$) S तद् (for ते) — $^{c}$) $Do_1$ $D_2$ एनम् (for इमम्) — $^{d}$) $K_2$ B D हित पर (for [इ]त्येतद्राजन्) $T_1$ तदा, $T_2$ $G_{2-4}$ तथा (for च तत्) Do (by transp) त्व तत्त्वकर्थ, $G_1$ नन्ववेत्थ — $^{ef}$) N ($K_{1\ 4}$ missing) इद च राजन् (for इदानीं ते), and एव कर्ता (for कर्तासि राजन्)

**12** $D_2$ om $12^{abc}$ — $^{a}$) $T_2$ $G_{2-4}$ transp एतत् and एव — $^{cd}$) N ($K_{1\ 4}$ missing, $D_2$ om) om वै The same MSS with $M_2$ read for $12^{d}$ न चे($M_2$ तस्मा)न्निगृह्णीष्व सुत सुखाय $T_2$ $G_{3\ 4}$ नि- (for न) — $^{e}$) $S_1$ $D_5$ अथापर; $D_3$ तयोपकारो, $G_1$ यथापरो $K_2$ $B_{1\ 3}$ Dn $D_{4\ 6}$ दुर्योधन स्वहित वै ($B_1$ त) निगृह्य, $K_3$ (corrupt) यत्तापस्कर भवति हित निगृह्णीष्व, $B_3$ दुर्योधनमहित वै विसृज्य, $B_4$ दुर्योधन सहित सनिगृह्य, Do दुर्योधनं वै स्वहित ($Do_2$ चैव हि त) निगृह्य, $D_{1\ 2}$ अपज्वरो भवति ($D_1$ °सि) हि त प्रगृह्य, $M_2$ निगृह्य पुत्र मानिन पापबुद्धि — $^{f}$) $S_1$ Do $D_{1-3\ 5}$ °राज्ये (for °पत्ये) — After 12, $G_2$ ins

27* ध्रुव विनाशस्तव पुत्रेण धीम-
न्सबन्धुवर्गेण सहैव राजर्षि ।
चतुर्दशे चैव वर्षे नरेन्द्र
कुलक्षय प्राप्स्यसि राजसिंह ।
तस्मात्कुरुष्वाधिपत्ये नरेन्द्र
युधिष्ठिरं धर्मभृता वरिष्ठम् ।

**13** $^{d}$) $B_1$ S (except $M_2$) उपतिष्ठति

**14** $^{b}$) $T_2$ $G_{2-4}$ पाण्डुपुत्र $K_{2\ 3}$ B Dn $D_{4\ 6}$ $M_2$ भजतु

अजातशत्रुर्हि विमुक्तरागो
धर्मेणेमां पृथिवीं शास्तु राजन् ।
ततो राजन्पार्थिवाः सर्व एव
वैश्या इवास्मानुपतिष्ठन्तु सद्यः ॥ १३

दुर्योधनः शकुनिः सूतपुत्रः
प्रीत्या राजन्पाण्डुपुत्रान्भजन्ताम् ।
दुःशासनो याचतु भीमसेनं
सभामध्ये द्रुपदस्यात्मजां च ॥ १४

युधिष्ठिरं त्वं परिसान्त्वयस्व
राज्ये चैनं स्थापयस्वाभिपूज्य ।
त्वया पृष्टः किमहमन्यद्वदेय-
मेतत्कृत्वा कृतकृत्योऽसि राजन् ॥ १५

धृतराष्ट्र उवाच ।

एतद्वाक्यं विदुर यत्ते सभाया-
मिह प्रोक्तं पाण्डवान्प्राप्य मां च ।
हितं तेषामहितं मामकाना-
मेतत्सर्वं मम नोपैति चेतः ॥ १६

इदं त्विदानीं कुत एव निश्चितं
तेषामर्थे पाण्डवानां यदात्थ ।
तेनाद्य मन्ये नासि हितो ममेति
कथं हि पुत्रं पाण्डवार्थे त्यजेयम् ॥ १७

असंशयं तेऽपि ममैव पुत्रा
दुर्योधनस्तु मम देहात्प्रसूतः ।
स्वं वै देहं परहेतोस्त्यजेति
को नु ब्रूयात्समतामन्ववेक्षन् ॥ १८

स मा जिह्मं विदुर सर्वं ब्रवीषि
मानं च तेऽहमधिकं धारयामि ।
यथेच्छकं गच्छ वा तिष्ठ वा त्वं
सुसान्त्व्यमानाप्यसती स्त्री जहाति ॥ १९

वैशंपायन उवाच ।

एतावदुक्त्वा धृतराष्ट्रोऽन्वपद्य-
दन्तर्वेश्म सहसोत्थाय राजन् ।
नेदमस्तीत्यथ विदुरो भाषमाणः
संप्राद्रवद्यत्र पार्था बभूवुः ॥ २०

इति श्रीमहाभारते आरण्यकपर्वणि पञ्चमोऽध्यायः ॥ ५ ॥

---

**15** [b]) $D_{1}$ $_{2}$ $G_{4}$ $M_{1}$ स्थापयित्वा° $M_{2}$ स्वराज्ये (for [अ]भि°) $G_{1}$ राजन्वचोभि° कुशलै° प्रपूज्य — [d]) Ś$_{1}$ $K_{3}$ $D_{1-3}$ भवाद्य (for ऽसि राजन्)

**16** [a]) Ś$_{1}$ $K_{3}$ $D_{1-3}$ $_{5}$ श्रुत, $D_{c}$ श्रुत्वा (for एतद्) $D_{5}$ सर्वं (for वाक्य) S (except $T_{1}$) तत् (for ते) — [d]) N ($K_{1}$ $_{4}$ missing) $M_{2}$ नावैति, $G_{2}$ नैवेति (for नोपैति), cf 3 6 13[c]

**17** [a]) $B_{1}$ Dn $D_{4}$ $_{6}$ $T_{2}$ $G_{3}$ Cnp (!) गत एव; $T_{1}$ $G_{2}$ $_{4}$ $M_{1}$ कृतमेव, $M_{2}$ मनसैव (for कुत एव) — [b]) Ś$_{1}$ $K_{3}$ $G_{2}$ यथात्थ, $D_{6}$ यदा तु, $T_{1}$ यदर्थं (for यदात्थ) — [c]) $T_{2}$ $G_{3}$ $_{4}$ केना° (for तेना°) $D_{2}$ नाशहेतो, $D_{3}$ $T_{1}$ नास्ति हितो, $T_{2}$ $G_{3}$ नासि भीतो, $G_{1}$ नासि मतो, $G_{4}$ नासि भूतो, $M_{2}$ ह्यहितो (for नासि हितो) — [d]) $S_{1}$ $D_{1-3}$ om हि $T_{2}$ $G_{3}$ $_{4}$ पुत्र नाह, $M_{1}$ तथा हि पुत्र, $M_{2}$ कथ नु पुत्र

**18** [b]) $S_{1}$ $K_{3}$ $D_{c}$ $D_{1-3}$ $_{5}$ $G_{2}$ om तु — [c]) $B_{2}$ स्व वै, $D_{1}$ $_{2}$ स्व चैव, $G_{1}$ $_{3}$ स्वक, $M_{1}$ स्वक वै (for स्व वै) $B_{4}$ आत्मोद्भूत (for स्व वै देह) — [d]) $K_{3}$ B D (except $D_{1-3}$) अन्ववेक्ष्य

**19** [a]) $K_{2}$ $_{3}$ B D (for $D_{3}$ see below) $G_{1}$ $_{2}$ मा (for मा) $K_{3}$ $D_{1}$ $_{2}$ transp जिह्म and सर्वं $T_{2}$ $G_{2-4}$ $M_{1}$ त्व (for सर्वं) $D_{3}$ सता मत विदुर जिह्म ब्रवीषि — [b]) $G_{2}$ मन्यु (for मान च) — With 19[cd], cf 2 57 12[cd] — [c]) $S_{1}$ $T_{1}$ $G_{2}$ यथेष्टक, $G_{1}$ तस्माद्यथेच्छ (for यथेच्छकं) $T_{2}$ $G_{3}$ $_{4}$ transp गच्छ and तिष्ठ Ś$_{1}$ साधो (for वा त्व) — [d]) $M_{1}$ om सु Ś$_{1}$ $K_{3}$ $D_{c}$ $D_{5}$ सुसान्त्वितापि ($K_{3}$ $D_{c}$ om -पि), T G ससांत्व ($T_{2}$ $G_{3}$ °त्व्य)माना, $M_{2}$ साध्यमाना (for सुसान्त्व्यमाना) Ś$_{1}$ $K_{3}$ $D_{c}$ $D_{1-3}$ $_{5}$ हि (for [अ]पि)

**20** S (except $G_{2}$) om the ref — [a]) Ś$_{1}$ $K_{2}$ $_{3}$ $D_{c}$ $D_{1-3}$ $_{5}$ एवम् (for एतावद्) — [b]) $K_{3}$ $D_{c}$ S राजा, $B_{4}$ तस्मात् (for राजन्) — [c]) Hypermetric ! S om अथ

Colophon $K_{1}$ $_{4}$ missing — *Major* (or *Sub-*)*parvan* Ś$_{1}$ $T_{2}$ $G_{2}$ $_{3}$ $M_{1}$ आरण्य, $B_{3}$ $T_{1}$ अरण्य — *Adhy name* $K_{3}$ $B_{1}$ $_{3}$ $D_{c}$ Dn $D_{4-6}$ विदुरवाक्य, $K_{3}$ विदुरगमन, $B_{3}$ $_{4}$ विदुरवि($B_{4}$ om -वि)त्याग, $D_{1}$ $_{2}$ विदुरयान, $T_{2}$ $G_{3}$ $_{4}$ $M_{2}$ धृतराष्ट्रकोप° — *Adhy no* (figures, words or both) $K_{3}$ $Dn_{3}$ $D_{5}$ $T_{1}$ $G_{1}$ $_{2}$ M 4, $D_{1}$ $T_{3}$ $G_{3}$ $_{4}$ 5 (as in text) — *Śloka no*. Dn 22, $D_{1}$ 21

# ६

वैशंपायन उवाच ।
पाण्डवास्तु वने वासमुद्दिश्य भरतर्षभाः ।
प्रययुर्जाह्नवीकूलात्कुरुक्षेत्रं सहानुगाः ॥ १
सरस्वतीदृषद्वत्यौ यमुनां च निषेव्य ते ।
ययुर्वनेनैव वनं सततं पश्चिमां दिशम् ॥ २
ततः सरस्वतीकूले समेषु मरुधन्वसु ।
काम्यकं नाम ददृशुर्वनं मुनिजनप्रियम् ॥ ३
तत्र ते न्यवसन्वीरा वने बहुमृगद्विजे ।
अन्वास्यमाना मुनिभिः सान्त्व्यमानाश्च भारत ॥ ४
विदुरस्त्वपि पाण्डूनां तदा दर्शनलालसः ।
जगामैकरथेनैव काम्यकं वनमृद्धिमत् ॥ ५
ततो यात्वा विदुरः काननं त-
च्छीघ्रैरश्वैर्वाहिना स्यन्दनेन ।
ददर्शासीनं धर्मराजं विविक्ते
सार्धं द्रौपद्या भ्रातृभिर्ब्राह्मणैश्च ॥ ६
ततोऽपश्यद्विदुरं तूर्णमारा-
दभ्यायान्तं सत्यसंधः स राजा ।
अथाब्रवीद्भ्रातरं भीमसेनं
किं नु क्षत्ता वक्ष्यति नः समेत्य ॥ ७
कच्चिन्नायं वचनात्सौबलस्य
समाह्वाता देवनायोपयाति ।
कच्चित्क्षुद्रः शकुनिर्नायुधानि
जेष्यत्यस्मान्पुनरेवाक्षवत्याम् ॥ ८
समाहूतः केनचिदाद्रवेति
नाहं शक्तो भीमसेनापयातुम् ।
गाण्डीवे वा संशयिते कथंचि-
द्राज्यप्राप्तिः संशयिता भवेन्नः ॥ ९
तत उत्थाय विदुरं पाण्डवेयाः
प्रत्यगृह्णन्नृपते सर्व एव ।
तैः सत्कृतः स च तानाजमीढो
यथोचितं पाण्डुपुत्रान्समेयात् ॥ १०
समाश्वस्तं विदुरं ते नरर्षभा-
स्ततोऽपृच्छन्नागमनाय हेतुम् ।
स चापि तेभ्यो विस्तरतः शशंस

## 6

☞ This adhy is missing in K1 4 (cf v l 3 1 1), the MSS are mostly ignored here

1 b) K3 B3 D1–3 T2 G3 4 भरतर्षभ — c) K2 G1 M जाह्नवीतीरात्, D1 T G2–4 तीरे (cf 3a)

3 a) T1 G1 4 M1 सरस्वतीतीरे (cf 1c) — b) B3 समेता; B4 °स्य (for °षु)

5 a) S1 K2 3 Dn D1–3 5 G3 4 अथ (for अपि) — b) S1 तथा, K2 B Dn D3 4 6 सदा (for तदा)

6 a) S1 यातो, K2 B Dc Dn D4 6 गत्वा (B1 Dc2 ययौ), K3 यात्वाथ, G1 यात्वा तु (for यात्वा) S1 कानने, B Dn D5 6 काम्यक (for कानन) — b) S वाहित° (for वाहिना) — c) B2 Dn D4 6 धर्मात्मान (for धर्म ) — d) K3 D2 3 T1 G3 M1 transp भ्रातृभि° and ब्राह्मणै°

7 a) B3 4 Dc मन्युमतम् (for तूर्णमाराद्) S एकम् (for आराद्) — b) D1–3 तदायात, S अभ्यागत K3 B1 4 D1–3 सत्यसध — c) S भीमसेन समीक्ष्य (for भ्रातर भीम°)

8 a) D1–3 वचसा (for °नात्) — b) K3 D1–3 G2 °ह्वातु K2 B Dc Dn D4 5 यात (for याति) — c) G1 2 4 M1 कुशली (for शकुनिर्) Dc वा°, S (except T1 M2) चा° (for ना ) — d) S अस्माक (for अस्मान्)

9 a) Dc आव्रजेति, S आह्वाय (for आद्रवेति) — b) Dn3 T2 G2–4 उपयातु (for अप°) — c) Some MSS गाजीवे K3 D1–3 om वा K2 B Dn D4 6 च; Dc चेत् (for वा) S1 B Dc2 D1–3 कथ नु, K2 3 Dc1 Dn D4–6 कथ तु, G4 कदाचिद्, M2 कथ तद् (for कथचिद्) — d) S1 D1–3 पुन (for राज्य )

10 c) S स तै° (G3 तत° ) समेतै° (T2 G3 4 °त°) सत्कृत° (G2 सहितै ) पाण्डवेयै° — d) T1 G1 2 M पाण्डुपुत्रै°; T2 G3 4 पाण्डवेयै°

11 a) Dc वै विदुर (for विदुर ते) S1 K3 D1–3 वै (for ते) — b) S1 M2 आगमनस्य

यथावृत्तो धृतराष्ट्रोऽम्बिकेयः ॥ ११

विदुर उवाच ।

अवोचन्मां धृतराष्ट्रोऽनुगुप्त-
भजातशत्रो परिगृह्याभिपूज्य ।
एवं गते समतामभ्युपेत्य
पथ्यं तेषां मम चैव ब्रवीहि ॥ १२
मयाप्युक्तं यत्क्षमं कौरवाणां
हितं पथ्यं धृतराष्ट्रस्य चैव ।
तद्वै पथ्यं तन्मनो नाभ्युपैति
ततश्चाहं क्षममन्यन्न मन्ये ॥ १३
परं श्रेयः पाण्डवेया मयोक्तं
न मे तच्च श्रुतवानाम्बिकेयः ।
यथातुरस्येव हि पथ्यमन्नं
न रोचते स्मास्य तदुच्यमानम् ॥ १४
न श्रेयसे नीयतेऽजातशत्रो
स्त्री श्रोत्रियस्येव गृहे प्रदुष्टा ।
ध्रुवन्न रुच्यै भरतर्षभस्य
पतिः कुमार्या इव षष्टिवर्षः ॥ १५
ध्रुवं विनाशो नृप कौरवाणां
न वै श्रेयो धृतराष्ट्रः परैति ।
यथा पर्णे पुष्करस्येव सिक्तं
जलं न तिष्ठेत्पथ्यमुक्तं तथास्मिन् ॥ १६
ततः क्रुद्धो धृतराष्ट्रोऽब्रवीन्मां
यत्र श्रद्धा भारत तत्र याहि ।
नाहं भूयः कामये त्वां सहायं
महीमिमां पालयितुं पुरं वा ॥ १७
सोऽहं त्यक्तो धृतराष्ट्रेण राजं-
स्त्वां शासितुमुपयातस्त्वरावान् ।
तद्वै सर्वं यन्मयोक्तं सभायां
तद्धार्यतां यत्प्रवक्ष्यामि भूयः ॥ १८
क्लेशैस्तीव्रैर्युज्यमानः सपत्नैः
क्षमां कुर्वन्कालमुपासते यः ।
संवर्धयन्स्तोकमिवाग्निमात्मवा-
न्स वै भुङ्क्ते पृथिवीमेक एव ॥ १९

---

**12** $^{a}$) $T_1$ $G_2$ $M_2$ मा (for मा) $Ś_1$ स, $B_2$ $_3$ न, S [ऽ]भि- (for ऽनु) — $^{b}$) $Ś_1$ $K_3$ प्रति° (for परि°) — $^{d}$) $S_1$ $B_3$ $_4$ $D_1$ $T_1$ चैषा (for तेषा) $K_3$ चैवेह ब्रूहि, $D_1$ $_2$ च ब्रूहि सौम्य (for चैव ब्रवीहि)

**13** $^{a}$) $Ś_1$ $K_3$ $B_4$ मयाप्युक्तः, Dc $D_{1-3}$ मया ह्युक्त°, S मया तूक्त $Ś_1$ सत्त्विद, $D_1$ $_2$ स च यत् (for यत्क्षम) — $^{b}$) S युक्त (for पथ्य) — $^{c}$) $S_1$ $K_2$ $_3$ Dc $D_5$ तद्वै तस्य ($K_2$ $_3$ °स्मै) न रुचित्वमभ्युपैति, B $Dn_1$ $D_4$ $_6$ तद्वै तस्मै न रुचामभ्युपैति, $Dn_2$ $D_{1-3}$ तद्वै तस्मै ($Dn_2$ °स्य) चेतसि नाभ्यु° — $S_1$ $K_3$ om $13^{d}$, $14^{ab}$ and $14^{d}$

**14** $S_1$ $K_3$ om $14^{abd}$ (of v l 13) — $^{a}$) $D_{1-3}$ मयोक्तो — $^{b}$) Dc तद्वाक्य (for मे तच्च) — $^{c}$) $G_2$ औषध (for अन्न) — $^{d}$) $K_3$ Dc $D_6$ $T_3$ $G_{2-4}$ तस्य, $D_3$ ह्यस्य, $G_1$ चास्य (for स्मास्य)

**15** $^{a}$) $G_1$ $_3$ $_4$ यतते (for नीयते) — $^{c}$) $G_1$ ध्रुव न (for ध्रुवन्न) $Ś_1$ $K_3$ नावैति लावण्यवयोपपन्ना (see below), $K_3$ B D ध्रुव न रोचेद्भरत° — $^{d}$) $T_2$ $G_2$ $_3$ षाष्टिवर्ष° $S_1$ $K_3$ पतिं कुमारीव हि षष्टिवर्षं (of v l 16)

**16** $^{a}$) $D_1$ $_2$ एव (for ध्रुव) $S_1$ $K_3$ नैकप्रकारैरनुनीयमान° — $^{b}$) $Dc_1$ $D_{1-3}$ $T_2$ $G_3$ $_4$ धृतराष्ट्र — $^{c}$) $K_3$ B D (except $D_{1-3}$ $_5$) ins च after यथा $Ś_1$ पत्रे (for पर्णे) N ($K_1$ $_4$ missing) $M_2$ अवसिक्त ($K_2$ अभिषिक्त) (for इव सिक्त)

**17** $^{b}$) B Dn $D_4$ $_6$ यस्मिन्, M यदि (for यत्र) $T_1$ $G_1$ $_2$ तात ($G_2$ तव) तत्र प्रयाहि, $T_2$ $G_3$ $_4$ $M_1$ तत्र तात ($M_1$ च त्व) प्रयाहि (for भारत etc) — $^{c}$) $Ś_1$ S (except $G_2$ $M_1$) त्वा (for त्वा) $G_1$ सभायां (for सहाय) — $^{d}$) $D_{1-3}$ पालयान $Ś_1$ $K_2$ $_3$ सुदुष्टचित्त ($K_3$ °चेष्ट) विपरीतचेष्ट ($K_2$ °बुद्धि)

**18** $^{a}$) $K_3$ B D (except $D_5$) $G_3$ राज्ञा (for राजन्) — $^{b}$) $K_3$ B ($B_1$m as in text) Dc Dn $D_4$ $_6$ प्रशासि (Dc °भाषि)तु त्वाम्, $T_1$ त्वा शायितुम्, $T_2$ $G_3$ $_4$ त्वा श्रावितुम् (for त्वा शासितुम्) $B_1$m उपागतस्, $T_1$ corrupt $K_3$ $B_1$(m as in text) $_2$ $_3$ Dn $D_4$ $_6$ °यातो नरेंद्र, Dc $D_{1-3}$ $_5$ °यातोस्मि राजन् (for °यातस्त्वरावान्) — $^{c}$) S (except $M_2$) युक्त (for तद्वै) — $^{d}$) S च (for प्र) $S_1$ $K_2$ $_3$ Dc $D_{1-3}$ चान्यत् (for भूय°)

**19** $^{a}$) $Ś_1$ $K_2$ $_3$ Dc $D_1$ $_2$ $G_1$ योज्य° (for युज्य°) $S_1$ समतात् (for सपत्न°) — $^{b}$) $M_2$ अपेक्षते (for उपासते)

यस्याविभक्तं वसु राजन्सहायै-
स्तस्य दुःखेऽप्यंशभाजः सहायाः ।
सहायानामेष संग्रहणेऽभ्युपायः
सहायाप्तौ पृथिवीप्राप्तिमाहुः ॥ २०
सत्यं श्रेष्ठं पाण्डव निष्प्रलापं
तुल्यं चान्नं सह भोज्यं सहायैः ।
आत्मा चैषामग्रतो नातिवर्तेद्-
एवंवृत्तिर्वर्धते भूमिपालः ॥ २१

युधिष्ठिर उवाच ।

एवं करिष्यामि यथा ब्रवीषि
परां बुद्धिमुपगम्याप्रमत्तः ।
यच्चाप्यन्यद्देशकालोपपन्नं
तद्वै वाच्यं तत्करिष्यामि कृत्स्नम् ॥ २२

इति श्रीमहाभारते आरण्यकपर्वणि षष्ठोऽध्यायः ॥ ६ ॥

## ७

वैशंपायन उवाच ।

गते तु विदुरे राजन्नाश्रमं पाण्डवान्प्रति ।
धृतराष्ट्रो महाप्राज्ञः पर्यतप्यत भारत ॥ १
स सभाद्वारमागम्य विदुरस्मारमोहितः ।
समक्षं पार्थिवेन्द्राणां पपाताविष्टचेतनः ॥ २
स तु लब्ध्वा पुनः संज्ञां समुत्थाय महीतलात् ।
समीपोपस्थितं राजा संजयं वाक्यमब्रवीत् ॥ ३
भ्राता मम सुहृच्चैव साक्षाद्धर्म इवापरः ।

---

**20** $^{b}$) S दुःखस्यांश° (for दुःखेऽप्यंश) — $^{c}$) $K_3$ $T_1$ अपि (for अभि°) — $^{d}$) $K_3$ $D_{2,3}$ $M_2$ सहायावाप्तौ, $T_1$ $G_1$ $M_1$ सहायावाप्तिं; $T_2$ $G_{3,4}$ सहायप्राप्तिं (for सहायाप्तौ) — After 20, $K_2$ ins

28* तस्मात्सत्य सतत वै ब्रुवाणो
लोकस्य हृद्यो भवतीति सत्य° ।

**21** $K_3$ om 21 — $^{a}$) $Ś_1$ $Dc_2$ $D_{1,3,5}$ श्रेय°; $Dc_1$ $D_2$ श्रेय (for श्रेष्ठ) $K_2$ S पांडवा $S_1$ $G_2$ निष्प्रलाप°, $K_2$ B (except $B_2$) Dc Dn $D_{4,6}$ विप्रलाप, $D_2$ निष्प्रभाव — $^{b}$) S तस्मिन् ($M_3$ तस्मात्) (for तुल्य) — $^{c}$) $S_1$ मा (for न) N ($K_{1,4}$ missing, $K_3$ om) स पूज्यो, $M_2$ [अ]भिवर्तेद् (for [अ]ति) — $^{d}$) $Dc_2$ T $G_{1,3,4}$ एववृत्तिं, $M_1$ °वृत्त $D_5$ S (except $M_3$) वर्ते (for वर्धं°) — After 21, $K_2$ ins

29* मित्रैः पुत्रैर्भूमिहस्त्यश्वभूरि
महीमिमा पालयित्तु पुरस्तात् ।

**22** $^{a}$) S तथा (for एव) $D_{1-3}$ भवि (for करि) — $^{d}$) $K_2$ $D_6$ सर्व, $K_3$ राजन्, S भूय° (for कृत्स्नम्)

Colophon $K_{1,4}$ missing — *Major* (or *Sub*) *parvan* $Ś_1$ $D_6$ $G_{2-4}$ आरण्य, $T_1$ अरण्य — *Adhy name* $K_2$ विदुरागमन विदुरवाक्य, $K_3$ विदुरकाम्यकप्राप्ति°, $B_{1,2}$ Dc Dn $D_{4,6}$ विदुरनिर्वास, $B_{3,4}$ $D_{1-3}$ विदुरवाक्य, $G_2$ $M_2$ विदुर° ($M_2$ om वि°)युधिष्ठिरसवाद° — *Adhy no* (figures, words or both) $K_3$ Dn $T_1$ $G_{1,2}$ M 5, $Dc_2$ $D_1$ $T_2$ $G_{3,4}$ 6 (as in text) — *Śloka no* Dn $D_1$ 22

**7**

☞ This adhy is missing in $K_{1,4}$ (cf v l 3 1 1), the MSS are mostly ignored here

**1** $^{b}$) $D_{1-3}$ transp आश्रम and पाण्डवान् — $^{d}$) $Ś_1$ परि° (for पर्य) S दुर्मना° (for भारत) — After 1, $K_2$ Dn $D_6$ ins

30* विदुरस्य प्रभाव च सधिविग्रहकारितम् ।
विवृद्धिं च परा मत्वा पाण्डवाना भविष्यति ।

**2** $^{a}$) $K_2$ आगत्य, $D_{1,2,6}$ आसाद्य (for आगम्य) $G_2$ सभाद्वारमुपागम्य — $^{b}$) Cf $6^{b}$ $S_1$ $K_{2,3}$ $D_5$ °स्नेह° (for °स्मार°) ❀Cn स्नेहेत्यपपाठ ।❀ — After $2^{ab}$, $Ś_1$ (which om $2^{cd}$) reads $3^{cd}$ (with v l) *repeating* it in its proper place — $^{d}$) S विसज्ञ° ($G_2$ विदुर°) प्रापतद्भुवि — After 2, $D_2$ ins

31* पपात सहसा राजा छिन्नद्रुम इवावश ।

**3** $^{a}$) $Ś_1$ $K_3$ $D_{1-3}$ transp तु and लब्ध्वा $K_2$ तत°, S

तस्य स्मृत्वाद्य सुभृशं हृदयं दीर्यतीव मे ॥ ४
तमानयस्व धर्मज्ञं मम भ्रातरमाशु वै ।
इति ब्रुवन्स नृपतिः करुणं पर्यदेवयत् ॥ ५
पश्चात्तापाभिसंतप्तो विदुरस्मारकर्शितः ।
भ्रातृस्नेहादिदं राजन्संजयं वाक्यमब्रवीत् ॥ ६
गच्छ संजय जानीहि भ्रातरं विदुरं मम ।
यदि जीवति रोषेण मया पापेन निर्धुतः ॥ ७
न हि तेन मम भ्रात्रा सुसूक्ष्ममपि किंचन ।
व्यलीकं कृतपूर्वं मे प्राज्ञेनामितबुद्धिना ॥ ८
स व्यलीकं कथं प्राप्तो मत्तः परमबुद्धिमान् ।
न जह्याज्जीवितं प्राज्ञस्तं गच्छानय संजय ॥ ९
तस्य तद्वचनं श्रुत्वा राज्ञस्तमनुमान्य च ।
संजयो बाढमित्युक्त्वा प्राद्रवत्काम्यकं वनम् ॥ १०
सोऽचिरेण समासाद्य तद्वनं यत्र पाण्डवाः ।
रौरवाजिनसंवीतं ददर्शाथ युधिष्ठिरम् ॥ ११
विदुरेण सहासीनं ब्राह्मणैश्च सहस्रशः ।
भ्रातृभिश्चाभिसंगुप्तं देवैरिव शतक्रतुम् ॥ १२
युधिष्ठिरमथाभ्येत्य पूजयामास संजयः ।
भीमार्जुनयमांश्चापि तदर्हं प्रत्यपद्यत ॥ १३
राज्ञा पृष्टः स कुशलं सुखासीनश्च संजयः ।
शशंसागमने हेतुमिदं चैवाब्रवीद्वचः ॥ १४
राजा स्मरति ते क्षत्तर्धृतराष्ट्रोऽम्बिकासुतः ।
तं पश्य गत्वा त्वं क्षिप्रं संजीवय च पार्थिवम् ॥ १५
सोऽनुमान्य नरश्रेष्ठान्पाण्डवान्कुरुनन्दनान् ।
नियोगाद्राजसिंहस्य गन्तुमर्हसि मानद ॥ १६
एवमुक्तस्तु विदुरो धीमान्स्वजनवत्सलः ।
युधिष्ठिरस्यानुमते पुनरायाद्गजाह्वयम् ॥ १७
तमब्रवीन्महाप्राज्ञं धृतराष्ट्रः प्रतापवान् ।

---

चिरात् (for पुन°) — $^{b}$) B1 धरासनात् (for मही°) — Ś1 *repeats* $3^{cd}$ here, reading it (with v l) for the first time after $2^{ab}$ — $^{c}$) Dc राजन् (for राजा) Ś1 (first time) भ्रातृस्नेहादिद राजा (cf 6$^{c}$), D1 2 समीपे सस्थिते राजन्

4 $^{c}$) T2 G3 4 त च (for तस्य) K2 B Dn D4–6 G1 2 स्मृत्या° (for स्मृत्वा) — $^{d}$) T2 G3 4 तप्यती° (for दीर्यती°) K3 D1–3 हृदय दीर्यते मम, Dc D5 मनो वै दीर्यते च मे

5 $^{d}$) N (except Ś1, K1 4 missing) T2 G3 4 कृपण (for करुण)

6 $^{b}$) Cf 2$^{b}$ S1 K3 3 °कर्षित, B D (except D1–3) M2 °मोहित — $^{c}$) S °स्नेहान्वितो B D (except D1–3) G2 M2 राजा

7 $^{b}$) S1 K3 transp भ्रातर and विदुर T2 G3 4 मया (for मम) D1–3 मम भ्रातरमाशु वै — $^{cd}$) Ś1 K2 3 निर्हृत, B3 4 निंदित, D5 निर्वृत (for निर्धुत) D1 मया पापाभिपेधित (for $^{d}$) T1 G1 2 M मया मूढेन निकृत कच्चिज्जीवति वा न वा, T2 G3 4 मूढेन निकृत कच्चिद्यदि (G4 कच्चिदद्य) जीवति वा न वा

8 $^{c}$) S1 K2 तु, K3 B D वै (for मे) — $^{d}$) S1 कृत° (for [अ]मित°)

9 Dc1 om 9$^{ab}$ — $^{a}$) D1–3 व्यलीक च (for स व्यलीक) B Dn D4–6 G4 पर (B1 यत्) (for कथ) — $^{c}$) B1 त्यक्त्वा हि, B3 Dn D4–6 त्यक्ष्यामि, B3 4 त्यक्तासि (for न जह्याज्) K2 3 B D (except D1) प्राज्ञ

10 $^{cd}$) K2 B4 D प्रति (for वनम्) S1 K3 जगाम सजयस्तूर्णं यत्रास्ते विदुरो वने

12 $^{a}$) Dc D1 T2 G2–4 M1 समा° (for सहा°) — $^{b}$) S1 समतत (for सह ) — $^{c}$) Ś1 Dc D3 M1 चापि संगुप्त, T1 सहित गुप्त (for चाभिस ) — $^{d}$) S1 K2 B D (except D1–3) पुरदर (for शत°)

13 $^{a}$) B (except B2) D (except D1–3) उपागम्य (for अथाभ्येत्य) — $^{c}$) N (except Dc2 Dn2, K1 4 missing) यमाश्चापि — $^{d}$) G1 तदा स (for तदर्ह) N (K1 4 missing) तद्युक्त प्रतिपेदिरे

14 $^{a}$) S1 राज्ञ (for राज्ञा) T2 G3 4 च, G3 सु (for स) — $^{d}$) K3 इद वचनमब्रवीत्

15 Before 15, N (K1 4 missing) G4 M1 ins सजय उ° (resp सजय) — $^{a}$) G4 त्वां स्मरते (for स्मरति ते) — $^{c}$) S1 K3 धर्मज्ञ, D1–3 त्वरित, T1 M2 सुक्षिप्र; M1 स क्षिप्र (for त्व क्षिप्र) — $^{d}$) S नराधिप (for च पार्थिवम्) Ś1 K3 त्वच्छोकाकुलितेंद्रिय

16 $^{a}$) S1 कुरुश्रेष्ठ; Dc कुरून्सर्वान्, D3 T1 G2 कुरुश्रेष्ठान् (for नर°) — $^{b}$) K3 कुतिनदनान्, T1 G1 2 M1 कुरुनदन — $^{d}$) S1 K3 D1–3 भारत, K2 B Dc Dn D4–6 सत्तम (for मानद)

17 Before 17, S1 K2 B D (except D1–3) S ins वैश° उ° (S1 D4–6 S om उ°) — $^{b}$) Dn2 ns °वल्लभ (for °वत्सल) — $^{d}$) T1 पुरमागाद् (for पुनरायाद्) — After 17,

दिष्ट्या प्राप्तोऽसि धर्मज्ञ दिष्ट्या स्मरसि मेऽनघ ॥ १८
अद्य रात्रौ दिवा चाहं त्वत्कृते भरतर्षभ ।
प्रजागरे प्रपश्यामि विचित्रं देहमात्मनः ॥ १९
सोऽङ्कमादाय विदुरं मूर्ध्न्युपाघ्राय चैव ह ।
क्षम्यतामिति चोवाच यदुक्तोऽसि मया रुषा ॥ २०

विदुर उवाच ।

क्षान्तमेव मया राजन्गुरुर्नः परमो भवान् ।
तथा ह्यस्म्यागतः क्षिप्रं त्वद्दर्शनपरायणः ॥ २१
भवन्ति हि नरव्याघ्र पुरुषा धर्मचेतसः ।
दीनाभिपातिनो राजन्नात्र कार्या विचारणा ॥ २२
पाण्डोः सुता यादृशा मे तादृशा मे सुतास्तव ।
दीना इति हि मे बुद्धिरभिपन्नाद्य तान्प्रति ॥ २३

वैशंपायन उवाच ।

अन्योन्यमनुनीयैवं भ्रातरौ तौ महाद्युती ।
विदुरो धृतराष्ट्रश्च लेभाते परमां मुदम् ॥ २४

इति श्रीमहाभारते आरण्यकपर्वणि सप्तमोऽध्यायः ॥ ७ ॥

---

$M_1$ ins

32* सोऽभिगत्वा तदा वेश्म राज्ञः समभिवाद्य च ।
उपातिष्ठन्महात्मान राजान प्रेष्यवत्तदा ।

**18** $^a$) $K_2$ Dc $D_{1-3\ 5}$ महाराज॰, B Dn $D_{4\ 6}$ महातेजा॰, $G_{1\ 4}$ $M_1$ महाप्राज्ञ॰ $S_1$ $K_3$ आगतं विदुरं ज्ञात्वा ($K_3$ दृष्ट्वा) — $^b$) $Ś_1$ $K_3$ राजा वचनमब्रवीत्, Dc Dn $D_5$ धृतराष्ट्रोंबिका सुत॰ (= $15^b$) — $^d$) $S_1$ $K_3$ काक्षमाणस्य दर्शन

**19** $^a$) $B_{1\ 3}$ Dn $D_{4\ 6}$ transp रात्रौ and चाहं

**20** $^a$) $Ś_1$ $G_2$ आरोप्य, $K_2$ B D (except $D_{1-3}$) आनीय (for आदाय) $T_2$ $G_{3\ 4}$ स समादाय चैवैन — $^b$) $K_{2\ 3}$ B $Dc_1$ Dn $D_{1\ 3-6}$ मूर्ध्न्यपाघ्राय, $D_2$ मूर्ध्नि चाघ्राय $Ś_1$ $K_3$ $D_{1-3\ 6}$ $T_2$ G चैव हि, $B_1$ वै मृश, $T_1$ $M_2$ भारत — After $20^{ab}$, $D_3$ ins

33* धृतराष्ट्रो महाराज भ्रातृस्नेहादुवाच ह ।
युधिष्ठिरस्तु कुशली भ्रातृभि॰ सह तिष्ठति ।
अथ रात्रिं दिन चाह त्वत्कृते भरतर्षभ ।
प्रीतस्त्वमेव मे नित्य भ्राता सर्वगुणान्वित ।
[ With line 3, cf $19^{ab}$ ]

— $^c$) $B_1$ Dc $D_{1-3}$ $T_1$ $G_1$ M ह्यो (for चो) — $^d$) $K_2$ $B_3$ Dn $D_{4\ 6}$ [अ]नघ, $D_3$ तदा (for रुषा)

**21** $^a$) $D_{1-3}$ $T_2$ $G_{3\ 4}$ एतन् (for एव) $K_2$ Dc $D_{1\ 2}$ $G_{1\ 3}$ महाराज (for मया राजन्) — $^b$) B D (except $D_{1-3}$) मे (for न॰) $Ś_1$ $K_3$ क कोप॰ प्रभविष्णवे — $^c$) $G_1$ [अ]स्मि ह्य्, $G_2$ [अ]हम् (for ह्यस्मि) $K_3$ $D_{1-3}$ शीघ्र (for क्षिप्र) $K_2$ B Dc Dn $D_{4-6}$ एषोहमागत शीघ्र — $^d$) $S_1$ $K_3$ आदेशात्तव सुमत ($Ś_1$ orig भारत and *sup lin* सुव्रत)

**22** $^a$) $S_1$ $K_{2\ 3}$ $D_{1-3}$ पुरुषव्याघ्र, S हि कुरुश्रेष्ठ — $^b$) S धर्मचेतना॰ ($G_2$ चोदिता॰) — $^c$) S दीनानुपातिनो ($T_1$ $G_2$ कपिनो, $G_1$ ॰वादिनो) — $^d$) $Ś_1$ B (except $B_2$) Dc तत्र (for नात्र)

**23** $^a$) S (except $G_1$) पुत्रा (for सुता) $G_1$ $M_2$ ते (for मे) — $^b$) B Dc Dn $D_{4-6}$ तादृशास्तव भारत, $D_1$ ॰शा भवत॰ सुता॰, $T_1$ $M_1$ ॰शास्ते सुता मम — $^c$) $K_2$ B $Dc_1$ Dn $D_{4-6}$ इतीव मे, $Dc_2$ $M_2$ इति च मे — $^d$) Dc $M_2$ प्रति (for अभि॰)

**24** $Ś_1$ $K_3$ $D_3$ $T_1$ $G_1$ $M_2$ om the ref — $^a$) $K_3$ अनुनीय वै, Dc उपनीय वै, $G_2$ अनुनाय्योभौ, $M_1$ अभिनीयैवं — $^b$) $K_2$ B D (except $D_{1-3}$) $G_{1\ 4}$ द्वौ (for तौ) $Ś_1$ $B_1$ $D_{1\ 2}$ महामती

Colophon $K_{1\ 4}$ missing — *Major* (or *Sub-*) *parvan* $Ś_1$ $B_1$ T $G_{2-4}$ आरण्य — *Adhy name* $K_2$ B Dc Dn $D_{4-6}$ $T_2$ $G_3$ $M_2$ विदुरप्रत्यागमन ($B_{3\ 4}$ $Dc_1$ $D_5$ ॰नयन), $K_3$ $D_2$ विदुरागमन — *Adhy no* (figures, words or both) $Dn_1$ $n_3$ $T_1$ $G_{1\ 2\ 4}$ M 6, $D_1$ $T_2$ $G_3$ 7 (as in text) — *Śloka no* Dn 23, $D_1$ 24

# 8

This adhy is missing in $K_{1\ 4}$ (cf v l 3 1 1), the MSS are mostly ignored here

**1** $^{ab}$) S तु (for च both times)

**2** $^a$) $Ś_1$ $K_{2\ 3}$ B D (except $D_{1-3}$) स सौबलेयमानाय्य — $^b$) $K_2$ B D (except $D_{1-3}$) तथा (for अपि) — $^c$) S मधुर वाक्य (for वचन राजा)

**3** $T_2$ $G_3$ om 3–4 — $^b$) B (except $B_3$) Dn $D_{4-6}$ धीमत॰ (for स॰)

**4** $T_2$ $G_3$ om 4 (cf v l 3) — $^c$) Dc पाडवार्थे च यूय सन्

## ८

वैशंपायन उवाच ।
श्रुत्वा च विदुरं प्राप्तं राज्ञा च परिसान्त्वितम् ।
धृतराष्ट्रात्मजो राजा पर्यतप्यत दुर्मतिः ॥ १
स सौबलं समानाय्य कर्णदुःशासनावपि ।
अब्रवीद्वचनं राजा प्रविश्याबुद्धिजं तमः ॥ २
एष प्रत्यागतो मन्त्री धृतराष्ट्रस्य संमतः ।
विदुरः पाण्डुपुत्राणां सुहृद्विद्वान्हिते रतः ॥ ३
यावदस्य पुनर्बुद्धिं विदुरो नापकर्षति ।
पाण्डवानयने तावन्मन्त्रयध्वं हितं मम ॥ ४
अथ पश्याम्यहं पार्थान्प्राप्तानिह कथंचन ।
पुनः शोषं गमिष्यामि निरासुर्निरवग्रहः ॥ ५
विषमुद्बन्धनं वापि शस्त्रमग्निप्रवेशनम् ।
करिष्ये न हि तानृद्धान्पुनर्द्रष्टुमिहोत्सहे ॥ ६
शकुनिरुवाच ।
किं बालिशां मतिं राजन्नास्थितोऽसि विशां पते ।
गतास्ते समयं कृत्वा नैतदेवं भविष्यति ॥ ७
सत्यवाक्ये स्थिताः सर्वे पाण्डवा भरतर्षभ ।
पितुस्ते वचनं तात न ग्रहीष्यन्ति कर्हिचित् ॥ ८
अथ वा ते ग्रहीष्यन्ति पुनरेष्यन्ति वा पुरम् ।
निरस्य समयं भूयः पणोऽस्माकं भविष्यति ॥ ९
सर्वे भवामो मध्यस्था राज्ञश्छन्दानुवर्तिनः ।
छिद्रं बहु प्रपश्यन्तः पाण्डवानां सुसंवृताः ॥ १०
दुःशासन उवाच ।
एवमेतन्महाप्राज्ञ यथा वदसि मातुल ।
नित्यं हि मे कथयतस्तव बुद्धिर्हि रोचते ॥ ११
कर्ण उवाच ।
काममीक्षामहे सर्वे दुर्योधन तवेप्सितम् ।
ऐकमत्यं हि नो राजन्सर्वेषामेव लक्ष्यते ॥ १२
वैशंपायन उवाच ।
एवमुक्तस्तु कर्णेन राजा दुर्योधनस्तदा ।
नातिहृष्टमनाः क्षिप्रमभवत्स पराङ्मुखः ॥ १३
उपलभ्य ततः कर्णो विवृत्य नयने शुभे ।
रोषाद्दुःशासनं चैव सौबलेयं च तावुभौ ॥ १४
उवाच परमक्रुद्ध उद्यम्यात्मानमात्मना ।

---

**5** b) S (except T2 G3 4) transp प्राप्तान् and इह — c) K3 D1–3 शोक (for शोष) — d) K2 B Dn D4 6 Cnp निरसुर्, Dc T1 M1 निरसुर्, D1–3 निराशो (for निरासुर्) G2 निष्परि (for निरव°) S1 K3 Cnp वारणो वा नवग्रह ❀ Cn निरसुरिति निरासुरिति च पाठौ चिन्त्यौ । ❀
**6** a) S (except G2) क्षिप्रम् (for विषम्) D6 उग्र वन (for उद्ब°) K2 D5 चापि, B1 Dc Dn D4 6 चैव (for वापि) — b) T2 G3 4 विषम् (for शस्त्रम्) — c) S1 K3 T1 G2 4 वृद्धान्, Dc D3 5 G1 क्रुद्धान्, D1 2 सर्वान् (for ऋद्धान्)
**7** a) K3 B Dn D4 6 बालिश — c) S चै (for ते)
**8** T2 G3 4 om (hapl) 8–9 — a) K3 सत्या॰ सत्ये (for सत्य ) — b) G1 M °र्षभा° — K3 om 8cd — c) S1 D2 3 जातु, K2 D1 राजन् (for तात)
**9** Dn3 T2 G3 4 om 9 (for T2 G3 4 cf v l 8) — a) K3 नैव ते समय कृत्वा — b) K3 ते (for वा) — After 9ab, K3 (which om 9cd) ins
34* अथागमिष्यन्ति पुन पाण्डवा वारणाह्वयम् ।
— c) N (K1 4 missing, K3 om ) सर्वे (for भूय॰)
**10** a) S भवाम — d) T1 सुसयता
**11** d) S1 K3 Dc D1–3 5 वि- (for हि) — After 11, M1 ins
35* तथा तद्भविता राजन्नान्यथा तद्भविष्यति ।
K3 D1–3 6 (marg ) ins after 11 Ś1 B4 Dn, after 12
36* नागमिष्यन्ति ते वीरा अकृत्वा कालसंविदम् ।
आगच्छेयुश्च ते मोहात्पुनर्द्यूत न सदाय॰ ।
[ (L 1) S1 नागमिष्यति K3 राजन्, B4 Dn D6 धीरा (for वीरा) — (L 2) B4 Dn D6 आगमिष्यति चेन्मोहात्पुनर्द्यूतेन ताश्रय ]
**12** K3 om 12 — a) B3 कालम् (for कामम्) B1 4 ईक्षा°, D1–3 G2 ईप्सा° (for ईक्षा ) — c) K3 Dc D3–4 एक॰ (for ऐक°) — d) N (K1 4 missing, K3 om ) लक्षये (for लक्ष्यते) — After 12, S1 B1 Dn ins 36*
**14** a) K2 3 उपलक्ष्य — d) N (K1 4 missing) सौबल च ममैव च

अहो मम मतं यत्तन्निबोधत नराधिपाः ॥ १५
प्रियं सर्वे चिकीर्षामो राज्ञः किंकरपाणयः ।
न चास्य शक्नुमः सर्वे प्रिये स्थातुमतन्द्रिताः ॥ १६
वयं तु शस्त्राण्यादाय रथानास्थाय दंशिताः ।
गच्छामः सहिता हन्तुं पाण्डवान्वनगोचरान् ॥ १७
तेषु सर्वेषु शान्तेषु गतेष्वविदितां गतिम् ।
निर्विवादा भविष्यन्ति धार्तराष्ट्रास्तथा वयम् ॥ १८
यावदेव परिद्यूना यावच्छोकपरायणाः ।
यावन्मित्रविहीनाश्च तावच्छक्या मतं मम ॥ १९
तस्य तद्वचनं श्रुत्वा पूजयन्तः पुनः पुनः ।
बाढमित्येव ते सर्वे प्रत्यूचुः सूतजं तदा ॥ २०
एवमुक्त्वा तु संक्रुद्धा रथैः सर्वे पृथक्पृथक् ।
निर्ययुः पाण्डवान्हन्तुं संघशः कृतनिश्चयाः ॥ २१
तान्प्रस्थितान्परिज्ञाय कृष्णद्वैपायनस्तदा ।
आजगाम विशुद्धात्मा दृष्ट्वा दिव्येन चक्षुषा ॥ २२
प्रतिषिध्याथ तान्सर्वान्भगवाँल्लोकपूजितः ।
प्रज्ञाचक्षुषमासीनमुवाचाभ्येत्य सत्वरः ॥ २३

इति श्रीमहाभारते आरण्यकपर्वणि अष्टमोऽध्यायः ॥ ८ ॥

## ९

व्यास उवाच ।
धृतराष्ट्र महाप्राज्ञ निबोध वचनं मम ।
वक्ष्यामि त्वा कौरवाणां सर्वेषां हितमुत्तमम् ॥ १
न मे प्रियं महाबाहो यद्गताः पाण्डवा वनम् ।

**15** $^{b}$) T1 G2 M आत्मवान् (for आत्मना) — $^{cd}$) N (K1 4 missing) अथो (D1–3 अहो) मम मत यत्तु तन्निबोधत भूमिपा°
**16** $^{a}$) K2 सदा; D1 क्षिप्र (for प्रिय) K3 प्रिय, B3 D5 सर्व (for सर्वे) Ś1 B Dc Dn D2 4–6 करिष्यामो; D1 यति ष्यामो — $^{b}$) K3 किंकरवद्वय, Dc किं करवाणि ते, D2 किं करवाम वै, S किं करवामहे (sic) — $^{cd}$) D5 रणेस्य (for न चास्य) D1–3 स्थातु (for सर्वे), and शक्नद् (for स्थातुम्) Ś1 K2 3 B (except B1) Dc Dn D4–6 transp सर्वे and स्थातु and read स्थ(Ś1 °स्य)तन्द्रिता (for अतन्द्रिता)
**17** $^{ab}$) S ते वय शस्त्रमादाय · दंसिता° — $^{c}$) T1 G1 3 M गच्छाम
**18** $^{c}$) K3 S (except G1 2) transp सर्वे and शान्ते° — $^{c}$) Ś1 G2 निर्विषादा; B2 D1–3 निर्विशङ्का
**19** $^{c}$) T1 G1 2 4 मत्र (for मित्र°) — $^{d}$) Ś1 Dc शक्य K3 तावच्छक्यस्त्वमागता°, S (except M2) तावद्गच्छाम माचिर
**20** $^{b}$) K3 पूजयित्वा — $^{c}$) S प्रहृष्टमनस सर्वे — $^{d}$) D3 om from सूतज up to संघश (in 21$^{d}$) Ś1 सूतज प्रति; D2 सूतनदन — After 20, M ins
37* एतत्कृत्यतम राज्ञ कौरव्यस्य महात्मन ।
**21** D3 om up to संघश (cf v l 20) — $^{a}$) Ś1 K3 B3 Dc D1 2 6 सु(K3 तु)सनद्धा, K2 सुसधाय, B1 2 4 Dn D4 6 सुसरब्धा (for तु सक्रुद्धा) — $^{b}$) S1 G3 4 M2 सर्वै° — $^{d}$) K3 BD (except D1 2, D3 om) सहिता°, M2 सर्वत°
**22** $^{a}$) Ś1 D1 G1 प्रति°, G3 4 प्रवि° (for परि°) — $^{b}$) K3 B D (except D1–3) प्रभु° (for तदा) — $^{c}$) S महायोगी (for विशु°)
**23** $^{a}$) D1 2 च; S तु (for [अ]थ) — $^{d}$) G3 जगादाभ्येत्य B D (except Dc2 D1–3) सत्वर K3 उवाचावितथ वच

Colophon om in B4 T2 G3 4 K1 4 missing — *Major* (or *Sub*) *parvan* Ś1 G2 आरण्य, T1 अरण्य — *Adhy name* K2 3 B1 2 Dc Dn D1 2 4–6 व्यासागमन, M कर्णसरभ° — *Adhy no* (figures, words or both) Dc2 Dn1 n3 T1 G1 2 M 7, D1 8 (as in text) — *Śloka no* Dn D1 24

## 9

☞ This adhy is missing in K1 4 (cf v l 3 1 1), the MSS are mostly ignored here
**1** $^{c}$) K3 B D त्वा; T1 M2 च° (for त्वा) D1 व्यास दिग्ध (for कौर°)
**2** $^{c}$) K2 Dn D5 निकृता (for निर्जिता°) — $^{d}$) K2 B2 Dn D4 6 °पुरोगमै

निकृत्या निर्जिताश्चैव दुर्योधनवशानुगैः ॥ २
ते स्मरन्तः परिक्लेशान्वर्षे पूर्णे त्रयोदशे ।
विमोक्ष्यन्ति विषं क्रुद्धाः कौरवेयेषु भारत ॥ ३
तदयं किं नु पापात्मा तव पुत्रः सुमन्दधीः ।
पाण्डवान्नित्यसंक्रुद्धो राज्यहेतोर्जिघांसति ॥ ४
वार्यतां साध्वयं मूढः शमं गच्छतु ते सुतः ।
वनस्थांस्तानयं हन्तुमिच्छन्प्राणैर्विमोक्ष्यते ॥ ५
यथाह विदुरः प्राज्ञो यथा भीष्मो यथा वयम् ।
यथा कृपश्च द्रोणश्च तथा साधु विधीयताम् ॥ ६
विग्रहो हि महाप्राज्ञ स्वजनेन विगर्हितः ।
अधर्म्यमयशस्यं च मा राजन्प्रतिपद्यथाः ॥ ७
समीक्षा यादृशी ह्यस्य पाण्डवान्प्रति भारत ।
उपेक्ष्यमाणा सा राजन्महान्तमनयं स्पृशेत् ॥ ८
अथ वायं सुमन्दात्मा वनं गच्छतु ते सुतः ।
पाण्डवैः सहितो राजन्नेक एवासहायवान् ॥ ९
ततः संसर्गजः स्नेहः पुत्रस्य तव पाण्डवैः ।
यदि स्यात्कृतकार्योऽद्य भवेस्त्वं मनुजेश्वर ॥ १०
अथ वा जायमानस्य यच्छीलमनुजायते ।
श्रूयते तन्महाराज नामृतस्यापसर्पति ॥ ११
कथं वा मन्यते भीष्मो द्रोणो वा विदुरोऽपि वा ।
भवान्वात्र क्षमं कार्यं पुरा चार्थोऽतिवर्तते ॥ १२

इति श्रीमहाभारते आरण्यकपर्वणि नवमोऽध्यायः ॥ ९ ॥

---

**3** b) Dc transp वर्षे and पूर्णे — c) S1 क्रोधात् (for क्रुद्धा॰)
**4** b) K3 B1 Dn3 T1 स मदधी॰, G3 तु मद॰, M3 सुयोधन॰
**5** a) K3 D1–3 पाप॰ (for मूढ॰) — c) S1 K3 D1–3 अपि (for तान्) — d) K2 B Dn D4–6 प्राणान्विमोक्ष्यति
**6** a) K2 B D यथा हि, T2 G3 4 यदाह — D2 om (hapl) 6b–7a — d) K2 B Dc Dn3 D1 3 6 साधुद् (for साधु) N (K1 4 missing, D2 om) भवानपि (for विधी॰)
**7** D2 om 7a (cf v l 6) — a) Dc [ऽ]पि (for हि) B1 महाबाहो (for ॰प्राज्ञ) — c) Dc Dn3 D4 6 अधर्मम् — d) Ś1 transp मा and राजन् K2 प्रतिपद्यत, Dc D5 प्रत्यपद्यथा॰ [*N B* The form प्रतिपद्यता of some printed ed is *not* found in any MS collated !]
**8** a) K3 D5 समीक्ष्य, D3 T2 ॰क्ष्या K3 G2 यस्य, D5 तस्य (for ह्यस्य) G3 समीक्ष्य यादृशीं बुद्धिं — c) B4 मा, G2 स्व (for सा) — d) B4 समय (for अनय) B1–3 T1 M सृजेत्, T2 G व्रजेत् (for स्पृशेत्)
**9** a) S1 K3 Dc D1–3 5 अथ वा स्य(Dc D5 स)ज्यता साधु — d) T2 G3 4 वन प्रति (for [अ]सहायवान्)
**10** c) S (except G1) कृतकृत्यस्त्व Ś1 वा, B1 [ऽ]य (for ऽद्य) — d) S भवेथा॰ पुरुषर्षभ
**11** b) K3 D1 उपजायते, M2 अनुवर्तते — c) Dc M1 हि (for तन्) — d) T2 G3 4 नोमृतस्यानुसर्पति, Cnp न मृतस्यापि सर्पति
**12** b) K3 B Dn D4 6 [ऽ]थ, Dc T2 G2 4 [ऽ]पि (for the first वा) D5 न द्रोणो विदुरो न वा — c) K3 D1–3 वा यद् (for वात्र) S पर (for क्षम) — d) N (except K3 D3, K1 4 missing) चार्थो, G2 [अ]प्यर्थो (for चार्थो) Ś1 Dn3 D2 G1 3 Cnp निवर्तते, K2 B1 Dn3 [ऽ]भिवर्धते, Dn1 D4–6 [ऽ]भिवर्तते, Cnp also अतिवर्तते (as in text)

Colophon om in K2 3 K1 4 missing — *Major* (or *Sub*) *parvan* Ś1 G2 4 आरण्य, B2 T1 अरण्य; Dc2 वन — *Adhy name* B Dc Dn D4–6 T2 G3 4 M व्यासवाक्य, D1 व्यासवचन — *Adhy no* (figures, words or both) Dn1 ns S 8, D1 9 (as in text) — *Śloka no* Dn D1 12

## 10

☞ This adhy is missing in K1 4 (cf v l 3 1 1), the MSS are mostly ignored here
**1** b) K2 B D (except D1–3) द्यूतसभव — c) K3 S तु (for तद्) K2 B Dn D4–6 ॰कृत्य (for ॰क्रम्य) — d) D1–3 महा (for [इ]ति वै)
**2** a) T1 G1 3 M1 न तद् (for नैतद्) — b) K3 द्रोणो वा विदुरोपि वा (=3 9 12b) — c) S गाधार्या नेष्यते द्यूत — d) B Dn1 D5 तत्र (for तथा)

# १०

धृतराष्ट्र उवाच।

भगवन्नाहमप्येतद्रोचये द्यूतसंस्तवम्।
मन्ये तद्विधिनाक्रम्य कारितोऽस्मीति वै मुने ॥ १
नैतद्रोचयते भीष्मो न द्रोणो विदुरो न च।
गान्धारी नेच्छति द्यूतं तच्च मोहात्प्रवर्तितम् ॥ २
परित्यक्तुं न शक्नोमि दुर्योधनमचेतनम्।
पुत्रस्नेहेन भगवञ्जानन्नपि यतव्रत ॥ ३

व्यास उवाच।

वैचित्रवीर्य नृपते सत्यमाह यथा भवान्।
दृढं वेद्मि परं पुत्रं परं पुत्रान्न विद्यते ॥ ४
इन्द्रोऽप्यश्रुनिपातेन सुरभ्या प्रतिबोधितः।
अन्यैः समृद्धैरप्यर्थैर्न सुताद्विद्यते परम् ॥ ५
अत्र ते वर्तयिष्यामि महदाख्यानमुत्तमम्।
सुरभ्याश्चैव संवादमिन्द्रस्य च विशां पते ॥ ६
त्रिविष्टपगता राजन्सुरभिः प्रारुदत्किल।
गवां माता पुरा तात तामिन्द्रोऽन्वकृपायत ॥ ७

इन्द्र उवाच।

किमिदं रोदिषि शुभे कच्चित्क्षेमं दिवौकसाम्।
मानुषेष्वथ वा गोषु नैतदल्पं भविष्यति ॥ ८

सुरभिरुवाच।

विनिपातो न वः कश्चिद् दृश्यते त्रिदशाधिप।
अहं तु पुत्रं शोचामि तेन रोदिमि कौशिक ॥ ९
पश्यैनं कर्षकं रौद्रं दुर्बलं मम पुत्रकम्।
प्रतोदेनाभिनिघ्नन्तं लाङ्गलेन निपीडितम् ॥ १०
एतं दृष्ट्वा भृशं श्रान्तं वध्यमानं सुराधिप।
कृपाविष्टास्मि देवेन्द्र मनश्चोद्विजते मम ॥ ११
एकस्तत्र बलोपेतो धुरमुद्वहतेऽधिकाम्।
अपरोऽल्पबलप्राणः कृशो धमनिसंततः।
कृच्छ्रादुद्वहते भारं तं वै शोचामि वासव ॥ १२
वध्यमानः प्रतोदेन तुद्यमानः पुनः पुनः।
नैव शक्नोति तं भारमुद्वोढुं पश्य वासव ॥ १३
ततोऽहं तस्य दुःखार्ता विरौमि भृशदुःखिता।

---

**3** $^{a}$) M शक्नोसि (for शक्नोमि) — $^{b}$) = 1 1 98$^{f}$ $K_{2.3}$ $B_{1.2}$ Dc $D_{1-3.5}$ $G_1$ $M_2$ अचेतस, $D_6$ अमर्षण — $^{d}$) B Dn $D_{4.6}$ प्रिय, $T_2$ $G_{2.3}$ महा, $T_1$ व्रत तव (for यत)

**4** $^{ab}$) $G_1$ °वीर्य ते सत्य यथाह भगवान्वच° — $^{c}$) $K_2$ B Dc Dn $D_{4-6}$ विद्म° (for वेद्मि) Dc $M_2$ प्रिय (for परं) $Ś_1$ $K_3$ $D_{1-3}$ दृढ पुत्र वय विद्म°

**5** $^{b}$) $B_2$ $G_{1.3}$ सुरभ्या° — $^{c}$) $Dc_1$ $D_8$ $M_1$ समर्थैर् (for समृद्धैर्) — $^{d}$) N (except $B_2$ $D_1$, $K_{1.4}$ missing) मन्यते (for विद्य)

**6** $^{a}$) $Ś_1$ $K_{2.3}$ $M_2$ वर्णयिष्यामि ($K_2$ °प्येह), $D_1$ $G_2$ कथ°, $D_2$ कीर्त° — $^{b}$) $K_2$ इतिहास पुरातन, $K_3$ महाख्यानमनुत्तम

**7** $^{a}$) B (as usual) त्रिपिष्टप — $^{b}$) N (except $Ś_1$ $Dc_1$ $D_5$, $K_{1.4}$ missing) सुरभी

**8** $8^{b}$ = 1 91 10$^{d}$ — $^{c}$) B D (except $D_{1-3}$) T $G_3$ मनुष्येष्वथ $K_3$ B D नागेषु (for वा गोषु) $Ś_1$ $K_2$ कारण सुमहन्मन्ये

**9** $K_3$ $D_{1-3}$ सुरभ्युवाच — $^{a}$) B D (except $D_{1-3}$) वे (for व°) — $^{b}$) $G_4$ $M_1$ विद्य° (for दृश्य) — $^{d}$) $B_{3.4}$ (? gloss) वासव (for कौशिक)

**10** $T_2$ $G_3$ om 10 — $^{a}$) $K_3$ एत, Dc $D_5$ $G_{2.4}$ इम (for एन) $Ś_1$ कार्षिकं, $D_{1.2}$ कर्षुक $K_{2.3}$ B D (except $D_{1-3}$) $G_4$ क्षुद्र ($B_4$ क्रुद्ध) (for रौद्र) $G_1$ (corrupt) पश्येम युग्य तौ रौद्र — $^{d}$) $Ś_1$ $K_3$ $D_{1-3}$ $G_2$ [अ]भि°, B Dc Dn $D_{4-6}$ च (for नि°)

**11** $^{a}$) $Ś_1$ एव, $D_{1-3}$ एन, $T_1$ एतद् (for एत) $K_2$ T $G_{3.4}$ शांत (for श्रान्तं) B Dc Dn $D_{4-6}$ निषीदमान सोत्कंठं — $^{b}$) $D_{1-3}$ वह°, $G_1$ साद्य (for वध्य°) — $^{c}$) $K_3$ $Dc_2$ देवेश — $^{d}$) S (except $G_2$) उद्वेपते (for उद्विज°)

**12** $^{a}$) $K_3$ $D_{2.3}$ स्यत्र (for तत्र) — $^{b}$) $K_3$ भृशः Dc $D_{1-3}$ $G_1$ $M_2$ [ऽ]धिक — $^{c}$) $K_2$ B Dn $D_{1.4.6}$ [ऽ]प्य° (for ऽल्प°) — $^{d}$) $G_{1.4}$ कृशोयमनिश तत — $^{f}$) $B_2$ कौशिक (cf 9), Dc पुत्रक (for वासव)

**13** $^{b}$) S तथैव च (for पुनः पुनः) — $^{c}$) $T_2$ $G_{3.4}$ न वै (for नैव)

अश्रूण्यावर्तयन्ती च नेत्राभ्यां करुणायती ॥ १४

इन्द्र उवाच ।

तव पुत्रसहस्रेषु पीड्यमानेषु शोभने ।
किं कृपायितमस्त्यत्र पुत्र एकोऽत्र पीड्यते ॥ १५

सुरभिरुवाच ।

यदि पुत्रसहस्रं मे सर्वत्र सममेव मे ।
दीनस्य तु सतः शक्र पुत्रस्याभ्यधिका कृपा ॥ १६

व्यास उवाच ।

तदिन्द्रः सुरभीवाक्यं निशम्य भृशविस्मितः ।
जीवितेनापि कौरव्य मेनेऽभ्यधिकमात्मजम् ॥ १७
प्रववर्ष च तत्रैव सहसा तोयमुल्बणम् ।
कर्षकस्याचरन्विघ्नं भगवान्पाकशासनः ॥ १८
तद्यथा सुरभिः प्राह सममेवास्तु ते तथा ।
सुतेषु राजन्सर्वेषु दीनेष्वभ्यधिका कृपा ॥ १९
यादृशो मे सुतः पाण्डुस्तादृशो मेऽसि पुत्रक ।
विदुरश्च महाप्राज्ञः स्नेहादेतद्ब्रवीम्यहम् ॥ २०
चिराय तव पुत्राणां शतमेकश्च पार्थिव ।
पाण्डोः पञ्चैव लक्ष्यन्ते तेऽपि मन्दाः सुदुःखिताः ॥
कथं जीवेयुरत्यन्तं कथं वर्धेयुरित्यपि ।
इति दीनेषु पार्थेषु मनो मे परितप्यते ॥ २२
यदि पार्थिव कौरव्याञ्जीवमानानिहेच्छसि ।
दुर्योधनस्तव सुतः शमं गच्छतु पाण्डवैः ॥ २३

इति श्रीमहाभारते आरण्यकपर्वणि दशमोऽध्यायः ॥ १० ॥

---

**14** [a]) K3 D3 त्वस्य, D1 3 त्वद्य (for तस्य) N (K1 4 missing) M1 शोकार्ता (for दुःखा°) — [b]) G3 शोचामि (for विरौ°) — [c]) K3 [इ]ह, B1 3 Dc [इ]व (for च) S अश्रूण्य(G2 3 °ण्या)वर्तय चैव — [d]) K3 Dn3 करुणावती, D1 भृशदुःखिता, D2 3 कृपणा सती, D5 करुणागता

**15** Ś1 om the ref B Dn D4 6 शक्र (for इन्द्र) — [b]) S1 वृद्धसारेषु, G1 विद्ध° (for पीड्य°) — [c]) K2 B3 4 Dn1 कृपायितवत्यत्र, T3 G3 4 °मत्यर्थं, G2 °मप्यत्र, M2 °वस्यत्र Cnp कृपायित (as in text) — [d]) K2 B Dn3 D4 6 एकत्र (for एकोऽत्र) S1 K3 B1 3 D1–3 हन्यते, B2 4 Dc Dn D4–6 हन्यति (for पीड्यते) T1 एक एव न पीड्यते, Cnp पुत्र एको हि हन्यते

**16** K2 3 B D1–3 सुरभ्युवाच — [a]) B D (except D1–3) °सहस्राणि (for °सहस्रं मे) — [b]) S1 K3 D1–3 सर्वे सत् (for सर्वत्र) B D (except D1–3 5) समतैव (for सममेव) G1 सर्वत्र तु समा कृपा — [c]) K2 तु यत, K3 S तु तत (G1 पुन), B2 3 Dc D5 सुयत, Dn1 वशत, D1 2 वहत (for तु सत) — [d]) T2 G1 3 4 अप्य(G1 °भ्य)धिक (for अभ्यधिका) G1 मम (for कृपा) D1–3 पुत्रस्यास्याधिका दया

**17** [a]) T1 सुरभिर्, G1 M1 सुरभेर् (for सुरभी) — [b]) Ś1 K2 D1 5 T1 (*sup lin* as in text) भृशदुःखित — [c]) Ś1 K2 3 D1–3 G1 जीवितादपि — [d]) K3 D3 [ऽ]पि (for ऽभि-)

**18** [c]) S1 कार्षि°, K3 कार्ष, Dc2 कृष°, D1 2 कर्षु° (for कर्ष°) Dc D5 पर (for [आ]चरन्)

**19** [a]) Ś1 सुरभीवाक्य, K2 3 B2–4 Dc2 Dn1 n3 D4 6 सुरभी प्राह, D1–3 प्राह सुरभी — [b]) K2 B2 Dc1 Dn D4 5 G1 समवेतास्तु D1–3 तत् (for ते) — [c]) Dc G1 दीने° (for सर्वे) — [d]) K2 B Dn D5 हीतेष्वभ्यधिका, Dc सर्वे°, G1 सर्वेषामधिका Ś1 K3 D1–3 दया (for कृपा), cf 16 and v l

**20** Before 20, Dc2 G2 ins व्यास उ° (G2 om उ°) — [b]) M1 त्वं च (for मेऽसि) — [c]) S1 D2 6 T1 G1 2 4 M महाप्राज्ञ — [d]) B4 वदा° (for ब्रवी) Ś1 K2 3 B3 D1–3 ते (for [अ]हम्)

**21** [b]) K2 B2–4 Dc2 D1 2 5 T1 G1 2 M एक च, T2 G3 4 चैक च (for एकश्च) N (except D1–3, S1 *sup lin*) भारत (for पार्थिव) — [d]) D1 T1 च, G1 2 M हि (for ऽपि) T1 सुदुर्जया (for सुदुःखिता)

**22** [a]) K3 अत्यर्थं, G2 इत्येव (for अत्यन्त)

Colophon K1 4 missing — *Major* (or *Sub*) *parvan* Ś1 D5 T G आ(G4 अ)रण्य — *Adhy name* Ś1 T2 G3 4 M सुरभींद्रसवाद, K2 व्यासवाक्य, K3 B D सुरभ्युपाख्यान (D1 व्यासवचन) — *Adhy no* (figures, words or both) Dn1 n3 S 9, D1 10 (as in text) — *Śloka no* Dn 23, D1 24

## ११

धृतराष्ट्र उवाच ।

एवमेतन्महाप्राज्ञ यथा वदसि नो मुने ।
अहं चैव विजानामि सर्वे चेमे नराधिपाः ॥ १
भवांस्तु मन्यते साधु यत्कुरूणां सुखोदयम् ।
तदेव विदुरोऽप्याह भीष्मो द्रोणश्च मां मुने ॥ २
यदि त्वहमनुग्राह्यः कौरवेषु दया यदि ।
अनुशाधि दुरात्मानं पुत्रं दुर्योधनं मम ॥ ३

व्यास उवाच ।

अयमायाति वै राजन्मैत्रेयो भगवानृषिः ।
अन्वीय पाण्डवान्भ्रातॄनिहैवास्मद्दिदृक्षया ॥ ४
एष दुर्योधनं पुत्रं तव राजन्महानृषिः ।
अनुशास्ता यथान्यायं शमायास्य कुलस्य ते ॥ ५
ब्रूयाद्यदेष राजेन्द्र तत्कार्यमविशङ्कया ।
अक्रियायां हि कार्यस्य पुत्रं ते शप्स्यते रुषा ॥ ६

वैशंपायन उवाच ।

एवमुक्त्वा ययौ व्यासो मैत्रेयः प्रत्यदृश्यत ।
पूजया प्रतिजग्राह सपुत्रस्तं नराधिपः ॥ ७
दत्त्वार्घ्याद्याः क्रियाः सर्वा विश्रान्तं मुनिपुंगवम् ।
प्रश्रयेणाब्रवीद्राजा धृतराष्ट्रोऽम्बिकासुतः ॥ ८
सुखेनागमनं कच्चिद्भगवन्कुरुजाङ्गले ।
कच्चित्कुशलिनो वीरा भ्रातरः पञ्च पाण्डवाः ॥ ९
समये स्थातुमिच्छन्ति कच्चिच्च पुरुषर्षभाः ।
कच्चित्कुरूणां सौभ्रात्रमव्युच्छिन्नं भविष्यति ॥ १०

मैत्रेय उवाच ।

तीर्थयात्रामनुक्रामन्प्राप्तोऽस्मि कुरुजाङ्गलम् ।
यदृच्छया धर्मराजं दृष्टवान्काम्यके वने ॥ ११

---

## 11

☞ This adhy is missing in $K_{1}$ $_{4}$ (cf v l 3 1 1), the MSS are mostly ignored here

**1** $^{b}$) $K_{2}$ $_{3}$ $G_{1}$ मे, $T_{2}$ $G_{2-4}$ M मा (for नो) — $M_{2}$ om (hapl ) $1^{c}$–$2^{d}$ — $^{c}$) $K_{2}$ एव, $G_{1}$ एव, $G_{2}$ चैव $K_{2}$ च (for वि )

**2** $M_{2}$ om 2 (cf v l 1) — $^{a}$) $B_{3}$ Dn $D_{4}$ $_{6}$ च (for तु ) — $^{b}$) $S_{1}$ $K_{2}$ $D_{1-3}$ गुणो , $K_{3}$ $D_{5}$ कुलो°, B Dc Dn $D_{4}$ $_{6}$ महो (for सुखो ) — $^{cd}$) $G_{1}$ तदेव तत्र भीष्मो पि द्रोणश्चैव महामुने

**3** $^{b}$) $B_{1}$ Dn $D_{4}$ $_{6}$ कौरव्येषु — $^{c}$) $K_{2}$ $B_{1}$ Dn $D_{4}$ $_{6}$ अन्व (for अनु ) ॥

**4** $K_{2}$ om 4 — $^{a}$) $K_{3}$ $D_{1}$ $_{2}$ ते, $T_{2}$ $G_{3}$ $_{4}$ मे (for वै) — In $D_{1}$, the portion from 3 11 $4^{c}$ to 3 12 $17^{b}$ is lost on a missing fol (8) Ś$_{1}$ om (hapl ) $4^{c}$–$5^{b}$ — $^{c}$) B Dc Dn $D_{4}$ $_{6}$ अन्विष्य , $G_{2}$ M अन्वीक्ष्य (for अन्वीय) $K_{3}$ $D_{2}$ $_{3}$ $_{5}$ वीरान्, $G_{1}$ सर्वान् (for भ्रातॄन्) — $^{d}$) Dn $D_{4}$ $_{6}$ [ए]ति (for [ए]व)

**5** Ś$_{1}$ om $5^{cb}$ $D_{1}$ missing (cf v l 4) — $^{d}$) $K_{2}$ वै, $B_{3}$ $_{4}$ Dn $D_{4}$ $_{6}$ च (for ते)

**6** $D_{1}$ missing (cf. v l 4) $G_{1}$ om $6^{a}$–$7^{b}$ — $^{a}$) B D (except $D_{2}$ $_{3}$ $_{5}$, $D_{1}$ missing) कौरव्य (for राजेन्द्र) — $^{c}$) $B_{2}$ $_{4}$ Dn $D_{4}$ $_{6}$ $G_{3}$ तु (for हि)

**7** $D_{1}$ missing (cf v l 4) $G_{1}$ om $7^{ab}$ (cf v l 6) S (except $G_{2}$) om the ref — After $7^{ab}$, $K_{2}$ ins

38* तमागतमृषिं दृष्ट्वा धृतराष्ट्रो जनेश्वरः ।
पूजयित्वा यथान्यायं पप्रच्छागमनक्रियाम् ।

— $^{d}$) Ś$_{1}$ $D_{2}$ $_{3}$ °सुत° (for पुत्र ) $K_{3}$ तं मुनिं नृपसत्तमः

**8** $D_{1}$ missing (cf v l 4) — $^{a}$) $K_{3}$ सपाद्यादि , B D (except $D_{2}$ $_{3}$ , $D_{1}$ missing) अर्घाद्याभिः (for दत्त्वा ) — $^{b}$) B D (except $D_{2}$ $_{3}$ , $D_{1}$ missing) मुनिसत्तम ; S (except $G_{1}$ $_{2}$) ऋषिपुंगव

**9** $D_{1}$ missing ( cf v l 4 ) Before 9, $D_{2}$ $_{3}$ read धृतराष्ट्र उ — $^{b}$) $S_{1}$ $Dc_{2}$ $D_{6}$ जागलात्, $K_{2}$ $B_{2}$ $_{3}$ Dn $D_{5}$ °जांगलान्, $K_{3}$ $B_{1}$ $_{4}$ $Dc_{1}$ $D_{2-4}$ जगलान्, $M_{2}$ °जांगल

**10** $D_{1}$ missing ( cf v l 4 ) — $^{b}$) B D ( except $D_{2}$ $_{3}$ , $D_{1}$ missing ) भरत° (for पुरुष° ) — $^{d}$) S (except $M_{2}$) अपि (for अव्यु )

**11** $D_{1}$ missing (cf v l 4) — $^{a}$) Ś$_{1}$ $K_{3}$ $D_{2}$ $M_{1}$ परिक्रामन् , $D_{3}$ परिक्रम्य (for अनु ) $B_{2}$ तीर्थयात्राप्रसंगेन — $^{b}$) $S_{1}$ $K_{2}$ Dc $D_{3}$ जगल, $K_{2}$ $B_{1}$ $_{3}$ $Dn_{2}$ $n_{3}$ $D_{5}$ °जागलान् , $B_{3}$ $D_{6}$ जागलात् ; $B_{4}$ °जगलात्, $Dn_{1}$ $D_{4}$ °जगलान्

तं जटाजिनसंवीतं तपोवननिवासिनम् ।
समाजग्मुर्महात्मानं द्रष्टुं मुनिगणाः प्रभो ॥ १२
तत्राश्रौषं महाराज पुत्राणां तव विभ्रमम् ।
अनयं द्यूतरूपेण महापायमुपस्थितम् ॥ १३
ततोऽहं त्वामनुप्राप्तः कौरवाणामवेक्षया ।
सदा ह्यभ्यधिकः स्नेहः प्रीतिश्च त्वयि मे प्रभो ॥ १४
नैतदौपयिकं राजंस्त्वयि भीष्मे च जीवति ।
यदन्योन्येन ते पुत्रा विरुध्यन्ते नराधिप ॥ १५
मेढीभूतः स्वयं राजन्निग्रहे प्रग्रहे भवान् ।
किमर्थमनयं घोरमुत्पतन्तमुपेक्षसे ॥ १६
दस्यूनामिव यद्वृत्तं सभायां कुरुनन्दन ।
तेन न भ्राजसे राजंस्तापसानां समागमे ॥ १७

वैशंपायन उवाच ।

ततो व्यावृत्य राजानं दुर्योधनममर्षणम् ।
उवाच श्लक्ष्णया वाचा मैत्रेयो भगवानृषिः ॥ १८
दुर्योधन महाबाहो निबोध वदतां वर ।
वचनं मे महाप्राज्ञ ब्रुवतो यद्धितं तव ॥ १९
मा द्रुहः पाण्डवान्राजन्कुरुष्व हितमात्मनः ।
पाण्डवानां कुरूणां च लोकस्य च नरर्षभ ॥ २०
ते हि सर्वे नरव्याघ्राः शूरा विक्रान्तयोधिनः ।
सर्वे नागायुतप्राणा वज्रसंहनना दृढाः ॥ २१
सत्यव्रतपराः सर्वे सर्वे पुरुषमानिनः ।
हन्तारो देवशत्रूणां रक्षसां कामरूपिणाम् ।
हिडिम्बबकमुख्यानां किर्मीरस्य च रक्षसः ॥ २२
इतः प्रच्यवतां रात्रौ यः स तेषां महात्मनाम् ।
आवृत्य मार्गं रौद्रात्मा तस्थौ गिरिरिवाचलः ॥ २३
तं भीमः समरश्लाघी बलेन बलिनां वरः ।
जघान पशुमारेण व्याघ्रः क्षुद्रमृगं यथा ॥ २४

---

**12** $D_1$ missing (cf v l 4) — a) $M_1$ जटावल्कल-सवीत

**13** $D_1$ missing (cf v l 4) — a) S अह राजन् (for महाराज) — b) $B_2$ $D_{2\ 3}$ विभ्रमात्, S विग्रह — d) $K_2$ B Dn $D_{4\ 6}$ महाभयम्, Dc महापापम् (for °पायम्) $Ś_1$ $D_{2\ 3}$ महापातकमुत्थित, $K_3$ $D_5$ °पाप समुत्थित

**14** $D_1$ missing (cf v l 4) — a) T $G_{2-4}$ M समनु° (for त्वामनु ) $G_1$ तस्मादहमनु° — b) $Ś_1$ $D_2$ $T_2$ $G_{2\ 3}$ अपे°, $G_{1\ 4}$ उपे° (for अवे ) — c) $B_3$ $T_1$ $G_{1\ 2}$ $M_1$ यदा ह्यस्य°, $T_2$ $G_{3\ 4}$ यदस्य($G_4$ स्म्य)भ्यधिक° — d) $K_3$ $T_1$ $G_1$ M मे विभो, $B_2$ भारत

**15** $D_1$ missing (cf v l 4) — a) $B_2$ मन्ये (for राजन्) — c) $K_3$ यदन्योन्य हि, Dc °न्य न, $G_2$ °न्य च (for °न्येन) $T_2$ $G_{3\ 4}$ न ते पुत्रा विरुध्येरन् — d) $Dc_1$ Dn $D_{4\ 6}$ विरो°, $T_2$ $G_{3\ 4}$ पांडुपुत्रैर् (for विरु°) B D (except $D_{2\ 3}$ $D_1$ missing) कथचन (for नरा°)

**16** $D_1$ missing (cf v l 4) — a) $Ś_1$ $K_3$ मेषी , $D_{3\ 5}$ $T_{1\ 2}$ (before corr ) $G_{1\ 2\ 4}$ M मेधी° (for मेढी°) — b) $K_2$ $B_3$ Dc $Dn_1$ $D_{3\ 5}$ S निग्रह-, $K_3$ $B_2$ $D_2$ °ह-, $T_1$ °हन् — d) $K_2$ B Dc Dn $D_{4\ 6}$ उत्पततम्, $D_5$ उपयुक्तम्

**17** $D_1$ missing (cf v l 4) — a) $D_2$ इह (for इव) $D_2$ स-, $T_1$ $G_2$ M वो, $T_2$ $G_{3\ 4}$ तद्, $G_1$ यो (for यद्) — b) $S_1$ $K_3$ $D_{2\ 3}$ कुरुसंसदि — d) $K_3$ यथा वह्नि° स्थिते रवौ

**18** $D_1$ missing (cf v l 4) — a) $Ś_1$ व्याहृत्य, $G_1$ [ऽ]पावृत्य $K_3$ इत्युक्त्वाहत्य राजानं

**19** $D_1$ missing (cf v l 4) Before 19, $Dn_1$ $D_4$ $G_1$ ins मैत्रेय उ ($G_1$ om उ ) — a) $K_2$ महाभाग (for °बाहो) — b) $K_3$ °ध चन हित — c) Dc वै (for मे) $S_1$ D (except $D_{2\ 3\ 6}$, $D_1$ missing) महाभाग — d) $T_2$ $G_{3\ 4}$ च (for यद्)

**20** $D_1$ missing (cf v l 4) — b) N ($K_{1\ 4}$ $D_1$ missing) प्रियम् (for हितम्) — c) = 1 1 11c $Ś_1$ $K_3$ $D_3$ transp पाण्डवाना and कुरूणा $D_2$ कौरवाणा पाण्डवाना — d) Dc $D_5$ भरत° (for च नर°) — After 20, S (except $M_1$) reads $23^{a}$–$26^{b}$

**21** $D_1$ missing (cf v l 4) $T_2$ $G_3$ om $21^{ab}$ (cf v l 25) — c) $Ś_1$ $K_3$ $D_3$ सर्वे नागशतप्रा($Ś_1$ °त्रा )णा°

**22** $D_1$ missing (cf v l 4) — a) B Dc Dn $D_{4-6}$ सत्यव्रतधरा° सर्वे ($B_2$ सर्वे सत्यव्रतधरा°), $D_2$ राजन्प्रीतिपरा° सर्वे — e) Some MSS हिडंब — f) S (mostly) किम्मीरस्य

**23** $D_1$ missing (cf v l 4) S (except $M_1$) reads $23^{a}$–$26^{b}$ after 20 — a) $K_2$ $B_{2\ 4}$ $Dc_2$ Dn $D_{3\ 4\ 6}$ प्रद्रवता, $Dc_1$ $D_5$ प्रधावता, $D_2$ प्रवसता S (except $M_1$) पाण्डवान्प्राप्य ताम्रात्रौ — b) $Ś_1$ य स्म, $K_3$ यदा, $D_3$ यस्मात् (for य° स) S (except $M_1$) किम्मी($M_2$ °र्मी )रो नाम राक्षस° — c) $Ś_1$ $K_3$ $D_{2\ 3}$ दुष्टात्मा (for रौद्रा°)

**24** $D_1$ missing (cf v l 4) For S cf v l 23



त्वदभिद्रोहसंयुक्तं युद्धमुत्पत्स्यते महत् ।
तत्र भीमो गदापातैस्तवोरुं भेत्स्यते बली ॥

3 . 10 . 34

पश्य दिग्विजये राजन्यथा भीमेन पातितः ।
जरासंधो महेष्वासो नागायुतबलो युधि ॥ २५
संबन्धी वासुदेवश्च येषां श्यालश्च पार्षतः ।
कस्तान्युधि समासीत जरामरणवान्नरः ॥ २६
तस्य ते शम एवास्तु पाण्डवैर्भरतर्षभ ।
कुरु मे वचनं राजन्मा मृत्युवशमन्वगाः ॥ २७
एवं तु ब्रुवतस्तस्य मैत्रेयस्य विशां पते ।
ऊरुं गजकराकारं करेणाभिजघान सः ॥ २८
दुर्योधनः स्मितं कृत्वा चरणेनालिखन्महीम् ।
न किंचिदुक्त्वा दुर्मेधास्तस्थौ किंचिदवाङ्मुखः ॥ २९
तमशुश्रूषमाणं तु विलिखन्तं वसुंधराम् ।
दृष्ट्वा दुर्योधनं राजन्मैत्रेयं कोप आविशत् ॥ ३०
स कोपवशमापन्नो मैत्रेयो मुनिसत्तमः ।
विधिना संप्रयुक्तश्च शापायास्य मनो दधे ॥ ३१
ततः स वार्युपस्पृश्य कोपसंरक्तलोचनः ।
मैत्रेयो धार्तराष्ट्रं तमशपद्दुष्टचेतसम् ॥ ३२
यस्मात्त्वं मामनादृत्य नेमां वाचं चिकीर्षसि ।
तस्मादस्याभिमानस्य सद्यः फलमवाप्नुहि ॥ ३३
त्वदभिद्रोहसंयुक्तं युद्धमुत्पत्स्यते महत् ।
यत्र भीमो गदापातैस्तवोरुं भेत्स्यते बली ॥ ३४
इत्येवमुक्ते वचने धृतराष्ट्रो महीपतिः ।
प्रसादयामास मुनिं नैतदेवं भवेदिति ॥ ३५

मैत्रेय उवाच ।

शमं यास्यति चेत्पुत्रस्तव राजन्यथा तथा ।

---

— $^{a}$) ❀ Cn समरे जेतुमिति पाठे क्षम इत्यध्याहार' । ❀ — $^{b}$) S (except M1) बलिन (for बलेन)

**25** D1 missing (cf v l 4) T2 G3 om 25$^{a}$–26$^{b}$ (cf v l 21) For S cf v l 23 — $^{b}$) S1 K3 D2 3 भीमसेनेन (for यथा भीमेन) — $^{c}$) T1 G1 2 4 M2 महीपालो (for महेष्वासो) — $^{d}$) Ś1 D2 3 °समो (for °बलो) S1 बले (for युधि)

**26** D1 missing (cf v l 4) T2 G3 om 26$^{ab}$ (cf v l 25) For S cf v l 23 — $^{a}$) K3 °देवस्य, D2 3 T1 G1 2 4 M2 °देवस्तु — $^{b}$) S स्याल° K2 हि, G1 2 तु (for च) K3 Dc D2 3 येषा श्यालाश्च (D2 3 स्तु) पार्षता, B Dn D4 6 श्याला' सर्वे च पार्षता' — $^{c}$) K2 समाजेतु, M1 समासीदेज्

**27** D1 missing (cf v l 4) — $^{c}$) S कुरुष्व (for कुरु मे) — $^{d}$) K2 B Dn D4 6 मन्यु° (for मृत्यु ) Dc आगम' (for अन्वगा')

**28** D1 missing (cf v l 4) Before 28, S ins वैदा — $^{c}$) T1 गजगजाकार, T2 G M1 करिकराकार (more alliterative !) — $^{d}$) T2 G3 4 ह (for स)

**29** D1 missing (cf v l 4) — $^{b}$) K2 B Dn D4 6 [उ]ल्लिखन्, Dc D5 T2 G3 लिखन् — $^{c}$) K3 D2 अ (for न) D5 धर्मो वा (for दुर्मेधास्) — $^{d}$) K3 D3 अधोमुख (for अवाङ्मुख ) Ś1 किंचिदासीदधोमुख , T1 (*sup lin* as in text) तस्थौ गिरिरिवाचल' ( = 23$^{d}$)

**30** D1 missing (cf v.l 4) — $^{a}$) Dc D5 तमधोमुखमासीन — $^{b}$) Ś1 विलिखेत्त (or °खन्त ) — $^{d}$) B1 3 4 T1 G1 2 M1 मैत्रेय कोप(T1 M1 क्रोध )माविशत्

**31** D1 missing (cf v l 4) Ś1 K3 D2 3 om 31$^{ab}$ — $^{b}$) S °यो भगवानृपि — $^{c}$) Ś1 K3 मन्यु° (for विधि ) Ś1 [अ]सौ प्रकुपित , K3 सप्रमुदित ; K3 Dc Dn D3–5 स(K3 D3 4 स ; D5 [अ]य )प्रणुदित , B1 2 Dc सप्रचुदत', B4 चोदित सोथ, D2 नोदितो विप्र (for सप्रयुक्तश्च) Cnp प्रचुदित (cf B1 2 Dc above) B3 प्रचोदितो वै विधिना

**33** D1 missing (cf v l 4) — $^{b}$) D2 मोघा ; T1 न मे (for नेमा) Ś1 न मे वाच करिष्यसि ; K3 कार्यमन्यचिकी — $^{c}$) K2 G1 [अ]वमानस्य ; K3 T2 G2–4 [अ]ति° ; T1 [अ]प° (for [अ]भि° ) — $^{d}$) G1 अवाप्स्यसि (for अवाप्नुहि )

**34** D1 missing (cf v l 4) — $^{a}$) K3 D5 त्वदभिप्राय° , Dc त्वमभिद्रोह° — $^{b}$) G2 M2 उत्पद्यते — $^{c}$) B Dn D4 6 M2 तत्र (for यत्र) K2 B Dn D3 4 6 T G2–4 गदाघातैस् ; K3 महाबाहुस — $^{d}$) Ś1 K3 Dc2 D5 तघोरू S बलात् (for बली)

**35** D1 missing (cf v l 4) — $^{a}$) S इत्युक्ते वचने तेन (G1 2 °नैनैव) — $^{d}$) Dn2 D4 6 T2 G3 4 भविष्यति ; Dn3 भवत्विति

**36** D1 missing (cf v l 4) — $^{a}$) D5 शमयिष्यति — $^{b}$) K2 3 B Dc Dn D4–6 यदा तदा ; D3 मदा तदा ; T G2 3 यथातथ — $^{c}$) Ś1 तर्हि, K2 राजन् ; K3 ह्यस्य ; T2 G3 4 तेन (for तात)

**37** D1 missing (cf v l 4) — $^{a}$) Ś1 K3 B1 Dc

शापो न भविता तात विपरीते भविष्यति ॥ ३६

वैशंपायन उवाच ।

स विलक्षस्तु राजेन्द्र दुर्योधनपिता तदा ।
मैत्रेयं प्राह किर्मीरः कथं भीमेन पातितः ॥ ३७

मैत्रेय उवाच ।

नाहं वक्ष्याम्यसूया ते न ते शुश्रूषते सुतः ।
एष ते विदुरः सर्वमाख्यास्यति गते मयि ॥ ३८

वैशंपायन उवाच ।

इत्येवमुक्त्वा मैत्रेयः प्रातिष्ठत यथागतम् ।
किर्मीरवधसंविग्नो बहिर्दुर्योधनोऽगमत् ॥ ३९

इति श्रीमहाभारते आरण्यकपर्वणि एकादशोऽध्यायः ॥ ११ ॥ समाप्तमारण्यकपर्व ॥

# १२

धृतराष्ट्र उवाच ।

किर्मीरस्य वधं क्षत्तः श्रोतुमिच्छामि कथ्यताम् ।
रक्षसा भीमसेनस्य कथमासीत्समागमः ॥ १

विदुर उवाच ।

शृणु भीमस्य कर्मेदमतिमानुषकर्मणः ।
श्रुतपूर्वं मया तेषां कथान्तेषु पुनः पुनः ॥ २

---

Dn D2 3 5 विलक्षयंस्तु, K3 विलक्षणस्तु, B2-4 D4 6 विलक्षस्तत्र ❀ Cn विलक्षयन् भीमस्य बलं विशेषेण भयमस्मजय्यो न वेति राक्षसबलद्वारा लक्षयन् । हेतौ शतृप्रत्ययः । विलक्षण इति पाठे दुर्योधनस्य दुराग्रहेण शापभयाद्विच्छायः । वलक्षस्तत्रेति पाठे वलक्षो धवलोऽर्जुन इति कोशात् स एवार्थः ।❀ K3 B D (except D2, D1 missing) राजेंद्र — c) Ś1 किंदीर, S किम्मीर — d) K3 D2 3 घातित

**38** D1 missing (cf v l 4) — a) K2 3 B Dc Dn D4 6 ते भूय (for [अ]सूया ते) Ś1 वै, M3 मे (for ते) D2 3 न वक्ष्यामि तयोर्युद्ध — b) T1 M3 मे (for ते)

**39** D1 missing (cf v l 4) All MSS om वैश° उ° । — b) D2 स प्रातिष्ठद् (for प्राति°) T1 G2 यथासुख — c) Ś1 किंदीरवधनिर्विण्णो, D2 °सतप्तो, S किम्मीर° — d) T G भय, M1 स हि, M3 भृश (for बहिर्) K2 B D (except D2 3, D1 missing) ययौ, M1 [ऽ]भवत् (for ऽगमत्)

Colophon K1 4 D1 missing — *Major* (or *Sub*) *parvan* S1 T1 G2-4 आरण्य — *Adhy name* K3 B4 D5 T2 G3 4 M मैत्रेयशाप, K3 D6 दुर्योधनशाप, Dc मैत्रेयवाक्य, D2 दुर्योधन प्रति मैत्रेयशाप — *Adhy no* (figures, words or both) K2 9, Dn S 10 — *Śloka no* Dn 39

## 12

☞ This adhy is missing in K1 4 (cf v.l 3 1 1), *the MSS are mostly ignored here*

**1** The portion from stanza 1 up to विप्र in 17[ab] is lost in D1 on a missing fol (cf v l 3 11 4) Before 1, G4 ins श्रीकृष्णाय नमः — c) Here and below S1 (uniformly) किन्दीर° (for किर्मीर°) — b) Ś1 तत्वत (for कथ्यताम्)

**2** D1 missing (cf v l 1) — After 2, D2 ins

39* य जघानैकचक्रायां भीमो भीमपराक्रमः ।
राक्षसं क्रोधताम्राक्षं दर्पोत्सिक्तं बलाधिकम् ।
तस्य भ्राता महावीर्यः कनीयानतुलविक्रमः ।
भ्रातृनाशसमुत्थेन छन्नो व्यसनभस्मना ।
भीमसेनान्तरप्रेप्सुश्चचार पृथिवीमिमाम् । [5]
स निर्जितानुपाश्रौषीत्पाण्डवानतुलक्षये ।

**3** D1 missing (cf v l 1) — d) Dc D6 प्रति (for नाम) Ś1 K3 D2 3 काननं (for तद्वनम्)

**4** D1 missing (cf v l 1) — c) S1 स्वावीले; K2 Cnp सप्राप्ते, B1 Dn1 Cn स्वाभीले, D2 चातीते, D6 स्वाधीते, G1 स्त्रामीले, Cnp स्वाभीले (as in text) ❀ Cn सप्राप्ते इत्यपपाठः । ❀ — b) Ś1 गतेस्तेर्कमय नृप — d) B Dc Dn D4 5 G4 घोर° (B2 भीर) (for भीम°)

इतः प्रयाता राजेन्द्र पाण्डवा द्यूतनिर्जिताः ।
जग्मुस्त्रिभिरहोरात्रैः काम्यकं नाम तद्वनम् ॥ ३
रात्रौ निशीथे स्वाभीले गतेऽर्धसमये नृप ।
प्रचारे पुरुषादानां रक्षसां भीमकर्मणाम् ॥ ४
तद्वनं तापसा नित्यं शेषाश्च वनचारिणः ।
दूरात्परिहरन्ति स्म पुरुषादभयात्किल ॥ ५
तेषां प्रविशतां तत्र मार्गमावृत्य भारत ।
दीप्ताक्षं भीषणं रक्षः सोल्मुकं प्रत्यदृश्यत ॥ ६
बाहू महान्तौ कृत्वा तु तथास्यं च भयानकम् ।
स्थितमावृत्य पन्थानं येन यान्ति कुरूद्वहाः ॥ ७
दष्टोष्ठदंष्ट्रं ताम्राक्षं प्रदीप्तोर्ध्वशिरोरुहम् ।
सार्करश्मितडिच्चक्रं सबलाकमिवाम्बुदम् ॥ ८
सृजन्तं राक्षसीं मायां महारावविराविणम् ।
मुञ्चन्तं विपुलं नादं सतोयमिव तोयदम् ॥ ९
तस्य नादेन संत्रस्ताः पक्षिणः सर्वतोदिशम् ।
विमुक्तनादाः संपेतुः स्थलजा जलजैः सह ॥ १०
संप्रद्रुतमृगद्वीपिमहिषर्क्षसमाकुलम् ।
तद्वनं तस्य नादेन संप्रस्थितमिवाभवत् ॥ ११
तस्योरुवाताभिहता ताम्रपल्लवबाहवः ।
विदूरजाताश्च लताः समाश्लिष्यन्त पादपान् ॥ १२
तस्मिन्क्षणेऽथ प्रववौ मारुतो भृशदारुणः ।
रजसा संवृतं तेन नष्टर्क्षमभवन्नभः ॥ १३
पञ्चानां पाण्डुपुत्राणामविज्ञातो महारिपुः ।
पञ्चानामिन्द्रियाणां तु शोकवेग इवातुलः ॥ १४
स दृष्ट्वा पाण्डवान्दूरात्कृष्णाजिनसमावृतान् ।
आवृणोत्तद्वनद्वारं मैनाक इव पर्वतः ॥ १५
तं समासाद्य वित्रस्ता कृष्णा कमललोचना ।
अदृष्टपूर्वं संत्रासान्न्यमीलयत लोचने ॥ १६

---

**5** D1 missing (cf v l 1) — b) S1 K2 B D (except D2 3, D1 missing) M1 गोपाश्च, T2 G3 4 अशेषा, G1 शेषा वा (for शेषाश्च) — c) S (except G1 M2) °हरिष्यति (for हरन्ति स्म)

**6** D1 missing (cf v l 1) — d) K3 Dn D4 T2 G3 4 पश्यत (for दृश्यत)

**7** D1 missing (cf v l 1) — a) K2 G1 2 M2 [अ]थ, Dn D4 6 च (for तु) — b) S1 M2 तु (for च) D5 भयकर (for भया°)

**8** D1 missing (cf v l 1) — a) Ś1 स्पष्टौष्टदष्ट्र, K2 B Dc2 Dn D5 6 स्पष्टा( Dn3 °ष्टो )ष्ट, K3 दष्टौष्ट°, Dc1 स्पृष्टाष्ट, D2 दष्टोष्ठदत, D3 वष्टौष्ठदत, D4 स्पृष्टापदष्ट्र, M1 दष्टोग्र — c) S1 D2 3 तडिच्चित्र, K2 Dn3 °तडिद्वक्त्र ❀ Cn तडिद्वक्त्रमित्यपपाठः । ❀

**9** D1 missing (cf v l. 1) — b) S1 K3 Dc D4-6 रावविनादित ( Ś1 °न ), K2 Dn °नादविनादित, D2 वराहविनादिता ( hypermetric ! ), D3 °रावविनादिनी, M2 अपश्यस्ते महाबला° — c) S1 विमुख नाद, K2 D (except D2 3, D1 missing) विपुलान्नादान्

**10** D1 missing (cf v l 1) — b) A few MSS °दिश (for दिशम्)

**11** D1 missing (cf v.l 1) — a) Ś1 समुद्रुत°, K3 समुद्भूत ; D2 समाहित° — d) T G आवभौ ( for अभवत् ) S1 K2 D2 3 वित्रस्तमिव चाभवत् ( S1 दारुवत् )

**12** D1 missing (cf v l 1) — a) T1 वेगाभि°, T2 G4 °घाताभि° (for °वाताभि°) — c) K3 D2 °जातापि (for °जाताश्च ) K2 विदुरश्चालिता जाता° (sic), D3 विदूरजा अपि लता — d) B T1 G ( except G3 ) M2 श्लिष्यति

**13** D1 missing (cf v l 1) — a) K2 D2 3 च प्रववौ, T2 G3 4 अथ ववौ (for ऽथ प्रववौ) — b) M2 [ऽ]तीव (for भृश ) — c) S सा समवृत्तेन — d) D2 3 नष्टार्कम् (for नष्टर्क्षम्) K3 B Dc Dn D4-6 नष्ट ज्योतिरभूत्नभ°

**14** D1 missing (cf v.l 1) K2 om (hapl) 14ab — a) T1 G1 2 M2 ना पांडवेयानाम् — b) S (for T1 see below) महाश्रिपु° T1 विज्ञानेनोपमाद्रिपु° — c) N (K1 4 D1 missing) यार्थांना (for °याणा तु) — d) K3 B2 4 Dn D4 6 शोकावेश (for शोकवेग) Dc2 [आ]कुल , D5 S (except M2) [आ]तुर° (for [अ]तुल°)

**15** D1 missing (cf v l. 1) — a) S transp दृष्ट्वा and दूरात्

**16** D1 missing (cf v l 1) — a) T2 G3 4 स° (for वि° ) — c) Ś1 K3 °पूर्व (for °पूर्वं) S अत्यत (M2 पश्यती) (for सत्रासान्) — d) S विषादमगमत्कृश

दुःशासनकरोत्सृष्टविप्रकीर्णशिरोरुहा ।
पञ्चपर्वतमध्यस्था नदीवाकुलतां गता ॥ १७
मोमुह्यमानां तां तत्र जगृहुः पञ्च पाण्डवाः ।
इन्द्रियाणि प्रसक्तानि विषयेषु यथा रतिम् ॥ १८
अथ तां राक्षसीं मायामुत्थितां घोरदर्शनाम् ।
रक्षोघ्नैर्विविधैर्मन्त्रैर्धौम्यः सम्यक्प्रयोजितैः ।
पश्यतां पाण्डुपुत्राणां नाशयामास वीर्यवान् ॥ १९
स नष्टमायोऽतिबलः क्रोधविस्फारितेक्षणः ।
काममूर्तिधरः क्षुद्रः कालकल्पो व्यदृश्यत ॥ २०
तमुवाच ततो राजा दीर्घप्रज्ञो युधिष्ठिरः ।
को भवान्कस्य वा किं ते क्रियतां कार्यमुच्यताम् ॥२१
प्रत्युवाचाथ तद्रक्षो धर्मराजं युधिष्ठिरम् ।
अहं बकस्य वै भ्राता किर्मीर इति विश्रुतः ॥ २२
वनेऽस्मिन्काम्यके शून्ये निवसामि गतज्वरः ।
युधि निर्जित्य पुरुषानाहारं नित्यमाचरन् ॥ २३
के यूयमिह संप्राप्ता भक्ष्यभूता ममान्तिकम् ।
युधि निर्जित्य वः सर्वान्भक्षयिष्ये गतज्वरः ॥ २४

युधिष्ठिरस्तु तच्छ्रुत्वा वचस्तस्य दुरात्मनः ।
आचचक्षे ततः सर्वं गोत्रनामादि भारत ॥ २५
पाण्डवो धर्मराजोऽहं यदि ते श्रोत्रमागतः ।
सहितो भ्रातृभिः सर्वैर्भीमसेनार्जुनादिभिः ॥ २६
हृतराज्यो वने वासं वस्तुं कृतमतिस्ततः ।
वनमभ्यागतो घोरमिदं तव परिग्रहम् ॥ २७
किर्मीरस्त्वब्रवीदेनं दिष्ट्या देवैरिदं मम ।
उपपादितमद्येह चिरकालान्मनोगतम् ॥ २८
भीमसेनवधार्थं हि नित्यमभ्युद्यतायुधः ।
चरामि पृथिवीं कृत्स्नां नैनमासादयाम्यहम् ॥ २९
सोऽयमासादितो दिष्ट्या भ्रातृहा काङ्क्षितश्चिरम् ।
अनेन हि मम भ्राता बको विनिहतः प्रियः ॥ ३०
वेत्रकीयगृहे राजन्ब्राह्मणच्छद्मरूपिणा ।
विद्याबलमुपाश्रित्य न ह्यस्त्यस्यौरसं बलम् ॥ ३१
हिडिम्बश्च सखा मह्यं दयितो वनगोचरः ।
हतो दुरात्मनानेन स्वसा चास्य हृता पुरा ॥ ३२
सोऽयमभ्यागतो मूढो ममेदं गहनं वनम् ।

---

**17** $D_1$ missing up to °प्रकी (cf v l 1) — [ab]) $Ś_1$ $K_{2\ 3}$ $D_{2\ 3}$ °करस्पर्श°, Dc °करोन्मृष्ट°, T $G_{1\ 3}$ $M_1$ °करोत्कृष्ट°, $G_2$ °करोरिक्षस° (for °करोत्सृष्ट°)

**18** [a]) S विमुह्य° (for मोमुह्य°)

**19** [a]) $T_1$ अतथा (for अथ ता) — [b]) $D_6$ समुत्था (for उत्थिता) T $G_{3\ 4}$ $M_1$ °दर्शिनीं, $G_1$ °रूपिणीं — [f]) $S_1$ $T_2$ $G_{3\ 4}$ शमया°, $T_1$ नवीया° (for नाशया)

**20** [b]) S (except $T_2$ $G_3$) °विष्फारिते — [c]) $K_2$ क्रूरमूर्ति°, $B_1$ कामरूप°, $T_1$ एकमूर्ति $K_2$ क्रुद्ध॰, D (except $D_{1-3}$) क्रूर॰, $T_1$ $G_{1\ 3}$ $M_1$ क्षुब्ध॰ (for क्षुद्र॰) — [d]) $T_1$ $G_{1\ 3}$ ह्य°, $T_2$ $G_{3\ 4}$ [ऽ]म्य (for व्य)

**21** [c]) $K_3$ (by transp) किं वा, $K_3$ -चित् किं S वा (for ते)

**22** [a]) S त (for तद्) — After 22, $D_1$ ins
40* पैठीनगोत्रे उत्पन्नो नास्तिको वेदनिन्दक॰ ।

**23** [b]) $G_2$ वसामि विगतज्वर॰

**24** [a]) $K_3$ B D (except $D_{1-3\ 6}$) अभि-, $T_2$ $G_3$ अय (for इह) — [b]) Some MSS भक्ष° (for भक्ष्य°) — [c]) $K_3$ $T_1$ $M_1$ युद्धे, $G_3$ युद्धान्, $M_3$ युधा (for युधि)

**25** Before 25, $S_1$ B $D_{1-3}$ S (except $M_3$) विदुर उ॰ (resp विदुर॰), $K_3$ Dc Dn $D_{4-6}$ वैशं° उ° — [d]) $T_2$ $G_3$ $M_2$ °नामानि

**27** [b]) $Dn_3$ $T_2$ G (except $G_2$) $M_2$ कर्तुं (for वस्तु) $T_2$ $G_{3\ 4}$ °मना॰ (for °मति) $T_2$ G (except $G_1$) स्थित॰ (for तत)

**28** Before 28, $K_2$ Dn $D_{4\ 6}$ S ins विदुर उ (resp विदुर॰), Dc $D_{2\ 5}$ वैश उ° — $K_2$ $D_2$ cont
41* विस्मय परम गत्वा राक्षसो घोरदर्शन ।
— [d]) $S_1$ $K_3$ $D_5$ $T_2$ $G_3$ चिरकाल $K_3$ मनोहर, $B_2$ T G मनोरथ

**29** [c]) $K_{2\ 3}$ $D_1$ सर्वां (for कृत्स्ना) — [d]) $G_1$ एनम् (for नैनम्) N (except Dc $D_5$, $K_{1\ 4}$ missing) चा($Dn_2$ स्वा-, $D_3$ वा)साद्° (for आसाद°)

**31** [a]) = (var) 1 148 9[a] $Dn_3$ वैत्रकीयवने, $T_1$ $G_1$ $M_1$ वे($G_1$ वै)त्रकीयपुरे $S_1$ $D_3$ राज्ञि, $K_3$ पूर्वं (for राजन्) — [c]) = (var) 1 38 39[d] $Ś_1$ $K_2$ $D_3$ समा°, Dc अपा°; $D_2$ अथा° (for उपा°)

**32** *$D_4$ om 32[a]–33[b]* — [a]) *A few MSS* हिडम्बश्च — [d]) $T_1$ $G_3$ $M_1$ चास्याहता $T_1$ पुन॰ (for पुरा)

**33** $D_4$ om 33[ab] (cf v l 32) — [a]) $D_{1-3}$ T



किर्मीरश्चापि सहसा वृक्षमुत्पाट्य पाण्डवम् ।
दण्डपाणिरिव क्रुद्धः समरे प्रत्ययुध्यत ॥
तद्वृक्षयुद्धमभवन्महीरुहविनाशनम् ।

प्रचारसमयेऽस्माकमर्धरात्रे समास्थिते ॥ ३३
अद्यास्य यातयिष्यामि तद्वैरं चिरसंभृतम् ।
तर्पयिष्यामि च बकं रुधिरेणास्य भूरिणा ॥ ३४
अद्याहमनृणो भूत्वा भ्रातुः सख्युस्तथैव च ।
शान्तिं लब्धास्मि परमां हत्वा राक्षसकण्टकम् ॥ ३५
यदि तेन पुरा मुक्तो भीमसेनो बकेन वै ।
अद्यैनं भक्षयिष्यामि पश्यतस्ते युधिष्ठिर ॥ ३६
एनं हि विपुलप्राणमद्य हत्वा वृकोदरम् ।
संभक्ष्य जरयिष्यामि यथागस्त्यो महासुरम् ॥ ३७
एवमुक्तस्तु धर्मात्मा सत्यसंधो युधिष्ठिरः ।
नैतदस्तीति सक्रोधो भर्त्सयामास राक्षसम् ॥ ३८
ततो भीमो महाबाहुरारुज्य तरसा द्रुमम् ।
दशव्याममिवोद्विद्धं निष्पत्रमकरोत्तदा ॥ ३९
चकार सज्यं गाण्डीवं वज्रनिष्पेषगौरवम् ।
निमेषान्तरमात्रेण तथैव विजयोऽर्जुनः ॥ ४०
निवार्य भीमो जिष्णुं तु तद्रक्षो घोरदर्शनम् ।
अभिद्रुत्याब्रवीद्वाक्यं तिष्ठ तिष्ठेति भारत ॥ ४१
इत्युक्त्वैनमभिक्रुद्धः कक्ष्यामुत्पीड्य पाण्डवः ।
निष्पिष्य पाणिना पाणिं संदष्टोष्ठपुटो बली ।
तमभ्यधावद्वेगेन भीमो वृक्षायुधस्तदा ॥ ४२
यमदण्डप्रतीकाशं ततस्तं तस्य मूर्धनि ।
पातयामास वेगेन कुलिशं मघवानिव ॥ ४३
असंभ्रान्तं तु तद्रक्षः समरे प्रत्यदृश्यत ।
चिक्षेप चोल्मुकं दीप्तमशनिं ज्वलितामिव ॥ ४४
तदुदस्तमलातं तु भीमः प्रहरतां वरः ।
पदा सव्येन चिक्षेप तद्रक्षः पुनराव्रजत् ॥ ४५
किर्मीरश्चापि सहसा वृक्षमुत्पाट्य पाण्डवम् ।
दण्डपाणिरिव क्रुद्धः समरे प्रत्ययुध्यत ॥ ४६
तद्वृक्षयुद्धमभवन्महीरुहविनाशनम् ।
वालिसुग्रीवयोर्भ्रात्रोर्यथा श्रीकाङ्क्षिणोः पुरा ॥ ४७

---

G3 4 अद्यागतो, M1 आसादितो (for अभ्यागतो) — d) Ś1 समे स्थित, K2 3 B D स्थिते समे (D1 सति), G1 समागते

**34** a) Ś1 आसाद्य, K2 D1 3 (by transp) अस्याद्य, D2 अस्याह, G1 अन्वास्य Ś1 K2 3 B1 3 Dc1 Dn D1 3–6 G1 पात, B4 D2 घात (for यात) T2 G3 4 अस्याहमानयिष्यामि, M1 अद्यैन खाद (*N B* It is difficult to distinguish between Nāgarī प and य!) — b) B4 चिरसंहृत, Dc D5 चिरसचित, M2 अनुसवृत

**35** c) T1 G3 लप्स्यामि (for लब्धास्मि)

**38** a) B Dc1 D4–6 स (for तु) — c) B2 सक्रोध, Dn1 D1 2 S (except G1) सक्रुद्धो, Dn2 स क्रोधाद्

**39** b) K3 आभज्य, D1 उत्पाट्य (for आरुज्य) B2 D1 S (except M2) तरु (for द्रुमम्) — c) S शत (for दश) K2 B D (for D2 see below) T2 G3 अथ (for इव) K2 3 आविद्ध, G3 उत्क्षिप्य; G4 उद्वृद्ध (for उद्विद्ध) D2 (corrupt) दशव्याममियोद्वद्ध — d) T2 G3 4 तत° (for तदा)

**40** a) Ś1 transp चकार and सज्य A few MSS सज्ज D3 गांजीव — b) K2 D1 2 °निर्घोष, D3 T2 G3 4 निस्वन, T1 G2 M1 °भैरव

**41** a) D3 चाजौ (m भीमो as in text) B2 4 D (except D1–3) त (for तु) S (except M2) यै जिष्णु भीमोय — b) B Dc Dn D4–6 मेघनिस्वन, D3 T2 (before corr) G1 M1 मोघगर्जित, T1 (orig) भीमगर्वित, T2 (by corr) G2–4 M2 मेघगर्जित (for घोर°)

**42** a) D1 2 [ए]व (see below), S (except M2) तम् (for [ए]नम्) B (except B2) Dc G2 अति°, D1 2 स स (for अभि) — b) Ś1 K2 3 B (except B1) Dc D3–6 कक्षाम्, D1 कक्षम् (for कक्ष्याम्) D3 निष्पीड्य — c) B2 T1 G2 M2 निष्पीड्य (for ष्पिष्य) — d) N (except Dn2 D1, K1 4 missing) G4 सदष्टौष्ठ° — K3 om (hapl) $42^{f}$–$43^{c}$

**44** a) T2 G भ्रातस्तु — b) N (except Dn D2, K1 4 missing) प्रत्यतिष्ठत — c) T2 G3 4 तस्मै (for दीप्तम्) — d) Ś1 मघवान् (for ज्वलिताम्) T G समग्नि (G1 सदग्निं, G2 4 समग्नि) ज्वलित यथा

**45** a) T1 G2 4 तमुदस्तम् — b) G4 भीम प्रहरता वर — cd) T2 G3 4 transp चिक्षेप and तद्रक्ष S1 °पतत् (for °व्रजत्)

**46** a) Dc D5 किर्मीरकश्च सहसा — d) B D (except D1–3) प्रत्यधावत, S (except G1 M1) °दृश्यत

**47** $47^{a} = 50^{a}$ — $47^{ab} = 1\ 151\ 16^{ab}$ — After $47^{a}$, D1 ins $50^{bc}$ (with v l), *repeating* it in its proper place — c) T1 G1 2 M पूर्वं, T2 G3 4 युद्ध (for

शीर्षयोः पतिता वृक्षा विभिदुर्नैकधा तयोः ।
यथैवोत्पलपद्मानि मत्तयोर्द्विपयोस्तथा ॥ ४८
मुञ्जवज्जर्जरीभूता बहवस्तत्र पादपाः ।
चीराणीव व्युदस्तानि रेजुस्तत्र महावने ॥ ४९
तद्युद्धमभवत्सुमुहूर्तं विशां पते ।
राक्षसानां च मुख्यस्य नराणामुत्तमस्य च ॥ ५०
ततः शिलां समुत्क्षिप्य भीमस्य युधि तिष्ठतः ।
प्राहिणोद्राक्षसः क्रुद्धो भीमसेनश्चचाल ह ॥ ५१
तं शिलाताडनजडं पर्यधावत्स राक्षसः ।
बाहुविक्षिप्तकिरणः स्वर्भानुरिव भास्करम् ॥ ५२
तावन्योन्यं समाश्लिष्य प्रकर्षन्तौ परस्परम् ।
उभावपि चकाशेते प्रयुद्धौ वृषभाविव ॥ ५३
तयोरासीत्सुतुमुलः संप्रहारः सुदारुणः ।
नखदंष्ट्रायुधवतोर्व्याघ्रयोरिव दृप्तयोः ॥ ५४

दुर्योधननिकाराच्च बाहुवीर्याच्च दर्पितः ।
कृष्णानयनदृष्टश्च व्यवर्धत वृकोदरः ॥ ५५
अभिपत्याथ बाहुभ्यां प्रत्यगृह्णादमर्षितः ।
मातङ्ग इव मातङ्गं प्रभिन्नकरटामुखः ॥ ५६
तं चाप्यथ ततो रक्षः प्रतिजग्राह वीर्यवान् ।
तमाक्षिपद्भीमसेनो बलेन बलिनां वरः ॥ ५७
तयोर्भुजविनिष्पेषादुभयोर्बलिनोस्तदा ।
शब्दः समभवद्घोरो वेणुस्फोटसमो युधि ॥ ५८
अथैनमाक्षिप्य बलाद् गृह्य मध्ये वृकोदरः ।
धूनयामास वेगेन वायुश्चण्ड इव द्रुमम् ॥ ५९
स भीमेन परामृष्टो दुर्बलो बलिना रणे ।
व्यस्पन्दत यथाप्राणं विचकर्ष च पाण्डवम् ॥ ६०
तत एनं परिश्रान्तमुपलभ्य वृकोदरः ।
योक्त्रयामास बाहुभ्यां पशुं रशनया यथा ॥ ६१

---

भ्रात्रोर्) — $^d$) S भ्रात्रो (for यथा) $K_{2\,3}$ B D (except $D_{1-4}$) स्त्री° (for श्री°) S इव (for पुरा)

**48** $^a$) $K_3$ $B_1$ पातिता — $^c$) B Dc $D_{4-6}$ यथोत्पलानि (for यथैवोत्पल-) $K_2$ $D_{1-3}$ S -पत्राणि, Dn -मालानि (for -पद्मानि) — $^d$) S मत्तयोर्द्विपमुख्ययो° ($G_1$ द्विपयोरिव मुख्ययो°)

**49** $^a$) S मूर्ध्नि ($T_2$ $G_3$ °र्ध्ना) जर्जरभूतास्तु ($G_1$ °श्च) — $^d$) S विरेजुस्तत्र भारत ($T_2$ $G_{3\,4}$ पादपा )

**50** $50^a = 47^a$ — $D_1$ *repeats* $50^{bc}$ here, reading it, for the first time, after $47^a$ — $^b$) Dc मुहूर्तार्धं, $G_2$ मुहूर्तं तु (for सुमुहूर्तं) $B_2$ Dn $D_{4\,6}$ मु($B_2$ सुमु)हूर्तं भरतर्षभ, T $G_{1\,3\,4}$ $M_1$ मुहूर्तमिव (°र्तं तत्र) भारत

**51** $^d$) N ($K_{1\,4}$ missing) भीमश्च (Dc $Dn_1$ $D_5$ °स्तु) न चचाल ह, $G_1$ तेन भीमश्चचार ह, $M_2$ भीमश्च विचचाल ह

**52** $^b$) N (except $S_1$ $D_5$, $K_{1\,4}$ missing) पर्यधावत रा° — $^c$) $G_1$ क्षिप्र, $G_2$ बभौ (for बाहु-) $S_1$ बाहुविक्षेपकरण, $D_{1-3}$ $T_1$ M च($D_3$ $T_1$ $M_2$ बा)हुविक्षेपकिरण, $D_6$ बाहुविक्षिप्तकरण°, $T_2$ $G_{3\,4}$ बाहू विक्षिप्य किर्मी($G_4$ °स्मी)र

**53** $^b$) $K_{2\,3}$ $D_{2\,3}$ $M_1$ विकर्षंतौ — $^c$) T G चकाशेता — $^d$) $S_1$ $K_3$ $B_{2\,4}$ D (except $D_{1\,3}$) $T_2$ $G_3$ प्रवृद्धौ, $K_2$ प्रयुद्धे

**54** $^a$) $K_{2\,3}$ $D_{1-3}$ तयोर्व्यासीत् $Dc_2$ $D_2$ सुतुमल°,

**55** $^c$) $B_{1-3}$ °कटाक्षदृष्ट($B_3$ °स)श्च, $Dc_1$ $Dn_{2\,3}$ $D_6$ °कटाक्षतृप्तश्च, $T_2$ G (except $G_1$) नयनरुष्टश्च

**56** $^a$) B Dn $D_{1\,2\,4\,6}$ °पत्य, $T_1$ °गत्य, $T_2$ G $M_1$ °हत्य (for °पत्य) B D (except $D_{1-3}$) च (for [अ]थ) — $^b$) $T_1$ °वीक्षद्, $T_2$ $G_{3\,4}$ °वेक्षद्, $G_1$ °पेक्षद् (for °गृह्णाद्) $T_1$ अमर्षत, $G_1$ (before corr ) अरिंदम° — $^c$) B D (except $D_{1-3}$) $M_2$ मातगमिव मातंग° — $^d$) = (var ) 4 30 $26^b$ $S_1$ $K_{2\,3}$ $B_{1\,3}$ D (except Dc) $G_1$ °मुख

**57** $^a$) $Ś_1$ $K_3$ $B_{2\,3}$ Dc $D_{1\,5}$ तच्चाप्येन, $K_2$ तथार्थिन, $B_1$ Dn $D_{3\,4\,6}$ स चाप्येन, $B_4$ ससर्प्येन, $D_2$ त चाप्येन, $M_2$ त चाभ्येत्य — $^b$) $B_{3\,4}$ $Dc_1$ वीर्यवत् — $^c$) $S_1$ $K_3$ $B_4$ Dc $D_{1\,2\,5}$ तद् (for तम्)

**58** $^b$) $Ś_1$ $K_{2\,3}$ $D_{1\,3}$ तत°, $D_2$ $T_1$ $G_{3-4}$ तया (for तदा)

**59** $^b$) S भीमसेनो महाबल°

**60** $^a$) $D_1$ S भीमसेनपरा°, $D_2$ भीमेन स परा° — $^b$) $Ś_1$ (by transp ) बलिना दुर्बलो, $T_1$ बलेन बलिना $G_1$ बलेन बलिना वर° ( $= 57^d$ ) — $^c$) $Ś_1$ व्यस्पर्धच्च, $D_1$ प्रास्पदच्च, $D_2$ प्रसादच्च (sic), $D_3$ व्यस्पदच्च, $T_2$ $G_{3\,4}$ व्यसर्पत, $M_1$ प्रास्पदत — $^d$) $B_2$ S (except $T_2$ $G_3$) पाडव°

☞ Stanzas 61–67 recur almost *verbatim* in passage No 24 of App I of the Virāta

**61** $^a$) $D_1$ चैव, $D_{2\,3}$ चैन, $T_2$ $G_{3\,4}$ त म (for एन)

विनदन्तं महानादं भिन्नभेरीसमस्वनम् ।
भ्रामयामास सुचिरं विस्फुरन्तमचेतसम् ॥ ६२
तं विषीदन्तमाज्ञाय राक्षसं पाण्डुनन्दनः ।
प्रगृह्य तरसा दोर्भ्यां पशुमारममारयत् ॥ ६३
आक्रम्य स कटीदेशे जानुना राक्षसाधमम् ।
अपीडयत बाहुभ्यां कण्ठं तस्य वृकोदरः ॥ ६४
अथ तं जडसर्वाङ्गं व्यावृत्तनयनोल्बणम् ।
भूतले पातयामास वाक्यं चेदमुवाच ह ॥ ६५
हिडिम्बबकयोः पाप न त्वमश्रुप्रमार्जनम् ।
करिष्यसि गतश्चासि यमस्य सदनं प्रति ॥ ६६
इत्येवमुक्त्वा पुरुषप्रवीर-
स्तं राक्षसं क्रोधविवृत्तनेत्रः ।
प्रस्रस्तवस्त्राभरणं स्फुरन्त-
मुद्भ्रान्तचित्तं व्यसुमुत्ससर्ज ॥ ६७

तस्मिन्हते तोयदतुल्यरूपे
कृष्णां पुरस्कृत्य नरेन्द्रपुत्राः ।
भीमं प्रशस्याथ गुणैरनेकै-
र्हृष्टास्ततो द्वैतवनाय जग्मुः ॥ ६८
एवं विनिहतः संख्ये किर्मीरो मनुजाधिप ।
भीमेन वचनात्तस्य धर्मराजस्य कौरव ॥ ६९
ततो निष्कण्टकं कृत्वा वनं तदपराजितः ।
द्रौपद्या सह धर्मज्ञो वसतिं तामुवास ह ॥ ७०
समाश्वास्य च ते सर्वे द्रौपदीं भरतर्षभाः ।
प्रहृष्टमनसः प्रीत्या प्रशशंसुर्वृकोदरम् ॥ ७१
भीमबाहुबलोत्पिष्टे विनष्टे राक्षसे ततः ।
विविशुस्तद्वनं वीराः क्षेमं निहतकण्टकम् ॥ ७२
स मया गच्छता मार्गे विनिकीर्णो भयावहः ।
वने महति दुष्टात्मा दृष्टो भीमबलाद्धतः ॥ ७३

— $^{b}$) B Dn $D_{4}$ $_{6}$ G ($G_{1}$ corrupt) लक्ष्य (for °लम्य) — $T_{2}$ $G_{3}$ om (hapl) $61^{c}$–$64^{d}$

**62** $T_{2}$ $G_{3}$ om 62 (cf v.l 61) — $^{a}$) $T_{1}$ त नद त, $G_{1}$ M नदत त — $^{b}$) $B_{1}$ $_{4}$ Dn $D_{4-6}$ °स्वन बली, $B_{3}$ Dc सम बली, $D_{2}$ $G_{1}$ निभस्वन; $G_{4}$ °महास्वन — $^{d}$) $G_{1}$ $_{2}$ M विष्फुरतम् $Ś_{1}$ (*sup lin* as in text) $K_{2}$ $B_{4}$ Dc $D_{5}$ $T_{1}$ $M_{1}$ अचेतन

**63** $T_{2}$ $G_{3}$ om 63 (cf v l 61) — $^{c}$) $T_{1}$ त हत्य, $G_{1}$ त गृह्य, $G_{2}$ सगृह्य, $G_{4}$ सहृत्य (for प्रगृह्य) — $63^{d}$ = 1 142 $28^{d}$

**64** $T_{2}$ $G_{3}$ om 64 (cf v l 61) — $^{a}$) N ($K_{1}$ $_{4}$ missing) च ($Ś_{1}$ $D_{1-3}$ तु) (for स) — $^{b}$) S (except $G_{4}$, $T_{2}$ $G_{3}$ om) राक्षसाधिप — $^{c}$) B D पीडयामास ($D_{1-3}$ अपीडयच्च) $K_{3}$ B D पाणिभ्यां — $^{d}$) B D (except $D_{1-3}$) तस्य कठ (by transp), $T_{1}$ M कठमस्य, $G_{1}$ कठमध्ये; $G_{4}$ कर्णमस्य $G_{2}$ कठ छिन्नमिवाबर

**65** $^{a}$) $K_{2}$ B D (except $D_{1-3}$) जर्जर (for स जड) — $^{b}$) $K_{2}$ व्याविद्ध, B Dn $D_{1}$ $_{4}$ $_{6}$ व्याविद्धनयनांबर, $D_{2}$ $_{3}$ व्यावृत्तनयनोज्वल — $^{c}$) $B_{1}$ $_{3}$ Dn $D_{4}$ $_{6}$ भ्राम° (for पात°)

**66** $^{a}$) MSS हिडब, हिडिंबि° also — $^{c}$) $K_{2}$ $_{3}$ $Dc_{1}$ Dn $D_{4}$ $_{5}$ गतश्चा($K_{3}$ °स्या)पि

**67** $^{b}$) $Ś_{1}$ क्रोधविरक्तनेत्र°, $K_{2}$ B D (except $D_{1-3}$) क्रोधपरीतचेता°, S घोर($T_{1}$ कोप, $G_{1}$ $M_{2}$ क्रोध)विवृत्तनेत्र ($T_{1}$ त्र°) — $^{c}$) $Ś_{1}$ $D_{3}$ अस्रस्त°, $K_{2}$ B Dc Dn $D_{4-6}$ $G_{2}$ विस्रस्त, $K_{3}$ प्रभ्रष्ट°, $D_{1}$ $_{2}$ आस्रस्त — $^{d}$) T $G_{1}$ $_{3}$ $M_{1}$ नेत्र (for °चित्त)

**68** $^{c}$) S परिष्वज्य (for प्रश°) — $^{d}$) $G_{2}$ स्तुत्वा (for हृष्टास्) $G_{1}$ ततोपेत्य; $M_{1}$ ततोन्वेत्य (for ततो द्वैत°) $M_{2}$ द्वैतवन प्रजग्मु°

**69** Before 69, N (except $Ś_{1}$ $D_{1}$, $K_{1}$ $_{4}$ missing) $G_{1}$ ins विदुर उ (resp विदुर°) — $^{b}$) Some MSS वसुधाधिप (*or* °प) — $^{c}$) $D_{6}$ भीमेन च बलात्तस्य, $M_{2}$ भीमसेनेन वचनात् — $^{d}$) $T_{2}$ $G_{3}$ $_{4}$ धीमत° (for कौरव)

**70** $^{c}$) $K_{3}$ (marg *sec. m*) S धर्मात्मा ($M_{2}$ °ज्ञा) (for ज्ञो) — $^{d}$) $K_{3}$ $G_{2}$ M वसतीं, $D_{2}$ वसतीर् $K_{3}$ Dc तामुवास ह; $K_{3}$ अवसद्वने, $D_{3}$ अवसत्तत°, S तामुपा($M_{2}$ ता समा)वसत्

**71** $^{a}$) S हि ($G_{4}$ तु) (for च) $D_{3}$ ता समाश्वास्य ते सर्वे — $^{b}$) $K_{2}$ $T_{1}$ $G_{1}$ $_{2}$ M पुरुष° (for भरत°) — $^{c}$) S सर्वे (for प्रीत्या)

**72** $^{ab}$) S (except $M_{2}$) °बलोत्क्षिप्ते निह($T_{1}$ हि)ते राक्षसे सदा — $^{c}$) $K_{3}$ B D (except $D_{1-3}$) ते (for तद्) Dc $D_{5}$ प्रीता°, S (except $G_{2}$ $M_{2}$) घोर (for वीरा°)

**73** $^{b}$) $Ś_{1}$ $K_{3}$ Dc $D_{1-3}$ नक (for °वह°) — $^{c}$) $T_{2}$ $G_{3}$ वसति (for महति) $K_{3}$ तस्मिन्नरण्ये सहसा — $^{d}$) $B_{1}$ $_{2}$ बलात्तत°, $D_{1}$ $T_{1}$ $G_{1}$ $_{2}$ $_{4}$ $M_{1}$ बलाहत°, $D_{2}$ बलोद्धृत°, $T_{2}$ $G_{3}$ °बलो हत°

तत्राश्रौषमहं चैतत्कर्म भीमस्य भारत ।
ब्राह्मणानां कथयतां ये तत्रासन्समागताः ॥ ७४
वैशंपायन उवाच ।
एवं विनिहतं संख्ये किर्मीरं राक्षसोत्तमम् ।
श्रुत्वा ध्यानपरो राजा निशश्वासार्तवत्तदा ॥ ७५

इति श्रीमहाभारते आरण्यकपर्वणि द्वादशोऽध्यायः ॥ १२ ॥ समाप्त किर्मीरवधपर्व ॥

# १३

वैशंपायन उवाच ।
भोजाः प्रव्रजिताञ्श्रुत्वा वृष्णयश्चान्धकैः सह ।
पाण्डवान्दुःखसंतप्तान्समाजग्मुर्महावने ॥ १
पाञ्चालस्य च दायादा धृष्टकेतुश्च चेदिपः ।
केकयाश्च महावीर्या भ्रातरो लोकविश्रुताः ॥ २
वने तेऽभिययुः पार्थान्क्रोधामर्षसमन्विताः ।
गर्हयन्तो धार्तराष्ट्रान्किं कुर्म इति चाब्रुवन् ॥ ३
वासुदेवं पुरस्कृत्य सर्वे ते क्षत्रियर्षभाः ।
परिवार्योपविविशुर्धर्मराजं युधिष्ठिरम् ॥ ४
वासुदेव उवाच ।
दुर्योधनस्य कर्णस्य शकुनेश्च दुरात्मनः ।
दुःशासनचतुर्थानां भूमिः पास्यति शोणितम् ॥ ५
ततः सर्वेऽभिषिञ्चामो धर्मराजं युधिष्ठिरम् ।
निकृत्योपचरन्वध्य एष धर्मः सनातनः ॥ ६
वैशंपायन उवाच ।
पार्थानामभिषङ्गेण तथा क्रुद्धं जनार्दनम् ।
अर्जुनः शमयामास दिधक्षन्तमिव प्रजाः ॥ ७
संक्रुद्धं केशवं दृष्ट्वा पूर्वदेहेषु फल्गुनः ।

---

**74** $^{a}$) S (except M2) राजन् (for चैतत्) — $^{b}$) T G1 3 4 M1 सयुगे, G2 दुष्कर (for भारत)
**75** $^{b}$) Ś1 D1 G2 राक्षसाधम, K2 नाम राक्षस, K3 Dc D2 3 5 T1 M2 राक्षसाधिप, B Dn D4 6 रक्षसा वर

Colophon K1 4 missing — *Major parvan* Ś1 T1 G2 4 आरण्य, D4 अरण्यक — *Sub parvan* Ś1 K2 3 B1 3 4 D M1 किर्मीरवध (to it B1 3 add समाप्त), T2 G3 किर्मारवध, G4 किम्मीरवध — *Adhy no* (figures, words or both) Dn S 11, D1 12 (as in text) — *Śloka no* Dn 75, D1 6 76

## 13

☞ This adhy is missing in K1 4 (cf. v l 3 1 1), the MSS are mostly ignored here
**2** $^{a}$) Ś1 K3 B3 Dn Dc D4 6 पचालस्य K2 Dc T G (except G1) तु (for च) Ś1 K2 B Dn D4–6 T2 G (except G1) दायादो, T1 तदा (sic) — After 2$^{a}$, T1 ins

42* धृष्टद्युम्न प्रतापवान्।
शिशुपालसुत श्रीमान्

— $^{c}$) K2 3 B3 4 D (except Dc1) कैकेयाश्च S महेष्वासा — B1 om 2$^{d}$–3$^{a}$
**3** B1 om 3$^{a}$ (cf v l 2) — $^{a}$) K2 B (B1 om) D (except D1–3) द्रष्टु (for तेऽभि-) — $^{b}$) Ś1 ऊचु किं करवामहे (cf 43*) — After 3$^{ab}$, K2 ins

43* केशव सात्यकिश्चैव धृष्टद्युम्नश्च पार्षत ।
अमात्यै सह मित्रैश्च बलेन स्वजनेन च ।
वने तेन ययु पार्थानूचु किं करवामहे ।

— $^{d}$) Ś1 D1–3 धिक्पापान् (for किं कुर्म) K3 धिक् धिक् पापानि चाब्रुवन्
**4** After 4, K3 B D (except D1–3) ins

44* अभिवाद्य कुरुश्रेष्ठ विषण्ण केशवोऽब्रवीत् ।

**5** M1 om 5 (with ref) and 6$^{ab}$ — $^{ab}$) T2 G (except G1) transp कर्णस्य and शकुने — After 5, B (except B1) Dn2 D1 2 ins

45* एतान्निहत्य समरे ये च तेषा पदानुगा ।
तांश्च सर्वान्विनिर्जित्य सहितान्सनराधिपान् ।

[(L 1) Dn2 तस्य (for तेषां) — (L 2) B2 4 महिता मनराधिपा ]

कीर्तयामास कर्माणि सत्यकीर्तेर्महात्मनः ॥ ८
पुरुषस्याप्रमेयस्य सत्यस्यामिततेजसः ।
प्रजापतिपतेर्विष्णोर्लोकनाथस्य धीमतः ॥ ९

अर्जुन उवाच ।

दश वर्षसहस्राणि यत्रसायंगृहो मुनिः ।
व्यचरस्त्वं पुरा कृष्ण पर्वते गन्धमादने ॥ १०
दश वर्षसहस्राणि दश वर्षशतानि च ।
पुष्करेष्ववसः कृष्ण त्वमपो भक्षयन्पुरा ॥ ११
ऊर्ध्वबाहुर्विशालायां बदर्यां मधुसूदन ।
अतिष्ठ एकपादेन वायुभक्षः शतं समाः ॥ १२
अपकृष्टोत्तरासङ्गः कृशो धमनिसंततः ।
आसीः कृष्ण सरस्वत्यां सत्रे द्वादशवार्षिके ॥ १३
प्रभासं चाप्यथासाद्य तीर्थं पुण्यजनोचितम् ।
तथा कृष्ण महातेजा दिव्यं वर्षसहस्रकम् ।
आतिष्ठस्तप एकेन पादेन नियमे स्थितः ॥ १४
क्षेत्रज्ञः सर्वभूतानामादिरन्तश्च केशव ।
निधानं तपसां कृष्ण यज्ञस्त्वं च सनातनः ॥ १५
निहत्य नरकं भौममाहृत्य मणिकुण्डले ।
प्रथमोत्पादितं कृष्ण मेध्यमश्वमवासृजः ॥ १६
कृत्वा तत्कर्म लोकानामृषभः सर्वलोकजित् ।
अवधीस्त्वं रणे सर्वान्समेतान्दैत्यदानवान् ॥ १७
ततः सर्वेश्वरत्वं च संप्रदाय शचीपतेः ।
मानुषेषु महाबाहो प्रादुर्भूतोऽसि केशव ॥ १८
स त्वं नारायणो भूत्वा हरिरासीः परंतप ।
ब्रह्मा सोमश्च सूर्यश्च धर्मो धाता यमोऽनलः ॥ १९
वायुर्वैश्रवणो रुद्रः कालः खं पृथिवी दिशः ।
अजश्चराचरगुरुः स्रष्टा त्वं पुरुषोत्तम ॥ २०
तुरायणादिभिर्देव क्रतुभिर्भूरिदक्षिणैः ।

---

**8** $^{b}$) N (except Ś$_{1}$, K$_{1-4}$ missing) M$_{2}$ फाल्गुन°, T G M$_{1}$ भारत (for फल्गुन°)
**11** $^{c}$) Ś$_{1}$ पुष्करे ह्यवस°; Dc T (T$_{1}$ om) G$_{3}$ पुष्करेषु (Dc °ष्व) वसन्, D$_{1}$ $_{2}$ °रे न्यवसत् (D$_{2}$ °वस°)
**12** $^{a}$) T$_{2}$ G$_{3}$ $_{4}$ दश वर्षसहस्राणि (=10$^{a}$, 11$^{a}$) — $^{b}$) Ś$_{1}$ K$_{2}$ D$_{1}$ $_{2}$ M$_{1}$ °सूदन — D$_{3}$ om 12$^{c}$–13$^{d}$ — $^{c}$) Some MSS आतिष्ठदेक°
**13** D$_{3}$ om 13 (cf v l 12) — $^{a}$) K$_{2}$ B D (D$_{3}$ om) अवकृष्टोत्तरा°, S कृष्णाजिनोत्तरा° — T$_{2}$ G$_{3}$ om 13$^{c}$–14$^{f}$ — $^{c}$) Some MSS आसीत् (for आसीः) — $^{d}$) Ś$_{1}$ K$_{2}$ D$_{1}$ $_{2}$ सत्रे वर्षसहस्रि(D$_{1}$ $_{2}$ °स्र)के
**14** T$_{2}$ G$_{3}$ om 14 (cf v l 13) — $^{a}$) K$_{2}$ B Dn D$_{1}$ $_{4}$ $_{6}$ om च D$_{2}$ प्रभास च समा — $^{b}$) T$_{1}$ G$_{4}$ M पुण्यजनार्चित, G$_{1}$ जनाकुल, G$_{2}$ पुण्य जनार्दन — $^{c}$) T$_{1}$ G (G$_{3}$ om) M$_{2}$ तत्र (for तथा) K$_{2}$ S (T$_{2}$ G$_{3}$ om) बाहो (for तेजा) — $^{d}$) K$_{2}$ B (except B$_{3}$) Dc$_{1}$ D$_{4-6}$ M °सहस्रिक — $^{e}$) Ś$_{1}$ अतिष्टस्तप एकेन; K$_{2}$ T$_{1}$ G (G$_{3}$ om) M$_{1}$ अतिष्ठ ए(T$_{1}$ दे, G$_{1}$ मे°, G$_{2}$ °स्त्वे)-कपादेन, B Dn D$_{3-6}$ आ(Dn$_{2}$ n$_{3}$ अ)तिष्ठस्त्वमथैकेन, Dc अतिष्ठस्त्व यदेकेन — $^{f}$) K$_{2}$ वायुभक्ष शत समा°, B Dn D$_{4}$ $_{6}$ पादेन नियमस्थित°, Dc प(Dc$_{2}$ पा)देन विषम° (Dc$_{2}$ °म) स्थितः; T$_{1}$ G$_{1}$ $_{2}$ $_{4}$ M$_{1}$ नियमेन च संयुत° — After 14, K$_{2}$ B$_{2}$ Dc Dn ins

46* लोकप्रवृत्तिहेतोस्त्वमिति व्यासो ममाब्रवीत् ।

**15** $^{c}$) D$_{3}$ निधान कृष्ण यज्ञस्त्व, S तपसा च निधि° कृष्ण — $^{d}$) D$_{3}$ तपसा (for यज्ञस्त्व) — After 15, T$_{2}$ G$_{3}$ $_{4}$ ins

47* योगकर्ता हृषीकेश साख्यकर्ता सनातन ।
शीलस्त्व सर्वयोगाना वीराणा नियमस्य च ।

**16** $^{a}$) T$_{2}$ G$_{3}$ $_{4}$ सौमम् (for भौमम्) — $^{c}$) D$_{1-3}$ T$_{1}$ G$_{2}$ $_{4}$ प्रथमोत्पत्तित
**18** $^{a}$) S (except M$_{2}$) हि (for च) — $^{c}$) T$_{2}$ G$_{3}$ मानुषोसि (for °षेषु)
**19** $^{b}$) Some MSS आसीत् (for आसीः), and °सप° (for °तप) — $^{c}$) Ś$_{1}$ K$_{3}$ B$_{2}$ Dc$_{1}$ transp सोम and सूर्य S विष्णुश्च (for सूर्य)
**20** $^{ab}$) T$_{2}$ G$_{3}$ $_{4}$ वसुर् (for वायुर्), and वायु° (for काल°) — $^{c}$) Dc अजरश्चामरगुरुः — $^{d}$) Some MSS पुरुषोत्तम
**21** $^{a}$) Ś$_{1}$ K$_{3}$ नारायणो देव मूर्त्वा (K$_{3}$ °मूर्ति), K$_{2}$ B Dc Dn D$_{4-6}$ नारायण देवमूर्धा (K$_{2}$ °मूर्धे; B$_{4}$ मूर्ध्व, Dc °गुरु, Dn$_{2}$ मूर्धन्, Dn$_{3}$ °मूर्ध, D$_{4-6}$ °मूर्ध), D$_{1-3}$ नारायणो ह्यभूः पूर्व, T$_{2}$ G$_{3}$ त्व दुरायणादिभिर्देव (hypermetric !), G$_{1}$ चतुरायणा (hypermetric !), M नारायणादिभिर्देव;

अयजो भूरितेजा वै कृष्ण चैत्ररथे वने ॥ २१
शतं शतसहस्राणि सुवर्णस्य जनार्दन ।
एकैकस्मिंस्तदा यज्ञे परिपूर्णानि भागशः ॥ २२
अदितेरपि पुत्रत्वमेत्य यादवनन्दन ।
त्वं विष्णुरिति विख्यात इन्द्रादवरजो भुवि ॥ २३
शिशुर्भूत्वा दिवं खं च पृथिवीं च परंतप ।
त्रिभिर्विक्रमणैः कृष्ण क्रान्तवानसि तेजसा ॥ २४
संप्राप्य दिवमाकाशमादित्यसदने स्थितः ।
अत्यरोचश्च भूतात्मन्भास्करं स्वेन तेजसा ॥ २५
सादिता मौरवाः पाशा निसुन्दनरकौ हतौ ।
कृतः क्षेमः पुनः पन्थाः पुरं प्राग्ज्योतिषं प्रति ॥ २६
जारूथ्यामाहुतिः क्राथः शिशुपालो जनैः सह ।
भीमसेनश्च शैब्यश्च शतधन्वा च निर्जितः ॥ २७
तथा पर्जन्यघोषेण रथेनादित्यवर्चसा ।
अवाक्षीर्महिषीं भोज्यां रणे निर्जित्य रुक्मिणम् ॥ २८
इन्द्रद्युम्नो हतः कोपाद्यवनश्च कशेरुमान् ।
हतः सौभपतिः शाल्वस्त्वया सौभं च पातितम् ॥ २९
इरावत्यां तथा भोजः कार्तवीर्यसमो युधि ।
गोपतिस्तालकेतुश्च त्वया विनिहतावुभौ ॥ ३०
तां च भोगवतीं पुण्यामृषिकान्तां जनार्दन ।
द्वारकामात्मसात्कृत्वा समुद्रं गमयिष्यसि ॥ ३१
न क्रोधो न च मात्सर्यं नानृतं मधुसूदन ।
त्वयि तिष्ठति दाशार्ह न नृशंस्यं कुतोऽनृजु ॥ ३२
आसीनं चित्तमध्ये त्वां दीप्यमानं स्वतेजसा ।

---

text as in $T_1$ $G_{2\,4}$ । — $^{b}$) $K_3$ क्रतु सन् (for क्रतुभिर्) N ($K_{1\,4}$ missing) मधुसूदन (*or* °न) (for भूरि°) — $^{c}$) $Ś_1$ $K_3$ $D_4$ अजयो, $K_2$ Cnp अघृष्यो, $Dn_3$ $D_1$ $G_1$ अजेयो, $D_2$ अयजद् (for अयजो) ❀ Cn अघृष्य इति पाठे त्व यज इत्यध्याहार ।❀ $K_{2\,3}$ S त्व (for वै)

**22** $^{a}$) $Ś_1$ अदात् (for शत) — $^{b}$) Some MSS जनार्दन° — $^{c}$) $T_1$ यथा, $T_2$ G (except $G_4$) M तथा (for तदा) — $^{d}$) $K_{2\,3}$ Dc S दत्तवान्, $D_5$ भारत (for भागश°)

**23** $^{b}$) Dc $D_5$ दानवमर्दन (for यादव°) — $^{c}$) $Ś_1$ $K_{2\,3}$ $D_{1-3}$ $G_2$ $M_1$ त्व ($K_2$ त) हि विष्णुरिति ख्यात° — $^{d}$) $K_3$ B Dn $D_{4\,6}$ $G_3$ विभु°, Dc युधि, $T_1$ दिवि (and भुवि as in text), $M_1$ भव, $M_2$ भव

**25** $K_2$ $D_{2\,3}$ om (hapl) 25 — $^{a}$) $T_1$ परम्, $G_2$ $M_1$ पदम्, $M_2$ च तथा (for दिवम्) $T_2$ $G_{3\,4}$ सप्राप्येदमथाकाश — $^{b}$) $S_1$ °भुवने, $K_3$ °दर्शनो, B $Dn_2$ $D_2$ °स्यदने (for °सदने) — $K_3$ om (? hapl) $25^{c}$–$27^{d}$ — $^{c}$) $T_2$ G (except $G_3$) अत्यरोचत $Dn_3$ $G_1$ $M_2$ भूतात्मा — $^{d}$) T $G_{3\,4}$ $M_1$ आदित्य, $G_1$ अनादि (for भास्कर) $G_2$ आदित्यस्तव रोचिषा — After 25, Dn $D_6$ ins

48* प्रादुर्भावसहस्रेषु तेषु तेषु त्वया विभो ।
अधर्मरुचय कृष्ण निहता शतशोऽसुरा ।

**26** $K_3$ om 26 (cf v l 25) — $^{a}$) $G_1$ M सूदिता (for सा°) — $^{b}$) Dc °पुद°, $D_{1-3\,5}$ °शुभ°, T G °सुभ° (for °सुन्द°) — $^{c}$) Some MSS कृत (for कृत°) T $G_{3\,4}$ कृत° (for पुन°)

**27** $K_3$ om 27 (of v l 25) — $^{a}$) Dn $D_{4-6}$ $T_1$ आहृति°, $D_{1-3}$ सकृति°, $T_2$ $G_{3\,4}$ आहरत्, $M_1$ आहृति° (for आहुति°) T $G_{3\,4}$ क्रोधात्, $G_1$ कोपा°, $G_2$ कोपात् (for क्राथ) S नृपै° ($M_2$ [ऽ]नुजै°) (for जनै) — $^{c}$) $K_2$ B D (except $D_{1-3}$) जरासधश्च, S भीमधन्वा च (for °सेनश्च) — $^{d}$) $Ś_1$ $K_2$ $D_{1-3\,6}$ वि- (for च)

**28** $^{c}$) $K_2$ $Dn_1$ अवाप्सी°, B Dc $Dn_2$ $n_3$ $D_{4\,6}$ उवाह, $D_1$ आदत्सी°, $D_2$ S अहार्षी° ($G_1$ आभाषी°), $D_5$ उवास (for अवाक्षी°) S (except $M_2$) रु($G_1$ रौ)क्मिणीं (for महिषीं) $B_1$ तेषा, $B_3$ भार्यां, $T_1$ $M_1$ भैष्मीं, $T_2$ $G_{1-3}$ भैमीं, $M_2$ देवीं (for भोज्यां) — $^{d}$) $Ś_1$ $K_2$ Dc $D_{1-3\,5}$ मृधे; $K_3$ युद्धे (for रणे)

**29** $^{a}$) $T_1$ $M_2$ क्रोधाद् (for कोपाद्) — $^{b}$) $K_3$ $B_{1\,3}$ Dn $D_{2\,3}$ कसेरुमान्, $D_1$ सकेरुमान्, $T_1$ कशेरुह°, $T_2$ G $M_1$ कशेरुक — $B_{1\,3}$ Dc $D_{4\,6}$ om $29^{cd}$ — $^{c}$) $K_2$ S (except $G_1$) साल्व° — $^{d}$) $K_3$ $B_3$ S (except $M_2$) सौभश्च पातित° — After 29, $B_{2-4}$ Dc Dn $D_{4-6}$ ins

49* एवमेते युधि हता भूयश्चान्याञ्शृणुष्व ह ।
[ $B_{2\,3}$ मे (for ह) ]

**30** $^{a}$) B D (except $D_{1-3}$) $G_4$ हतो, $G_2$ ततो (for तथा)

**32** $T_2$ $G_3$ om (hapl) $32^{c}$–$34^{b}$ — $^{d}$) $S_1$ $K_3$ B (except $B_1$) Dc $D_{3\,5\,6}$ $G_4$ Cnp नानृशस्य ($D_3$ $G_4$ °स), $D_{1\,2}$ $T_1$ $G_{1\,2}$ M न नृशंम ($T_1$ °सु, $G_{1\,2}$ $M_1$ म) $B_3$ $D_{1\,2}$ $T_1$ G ($G_3$ om) $M_1$ °नृजु

**33** $T_2$ $G_3$ om 33 (cf v l 32) — $^{a}$) $K_2$ Dn चैत्य°, $D_3$ चिति° (for चित्त°) B Dc $D_{4-6}$ Cnp °न निम्य($B_2$

आगम्य ऋषयः सर्वेऽयाचन्ताभयमच्युत ॥ ३३
युगान्ते सर्वभूतानि संक्षिप्य मधुसूदन ।
आत्मन्येवात्मसात्कृत्वा जगदास्से परंतप ॥ ३४
नैवं पूर्वे नापरे वा करिष्यन्ति कृतानि ते ।
कर्माणि यानि देव त्वं बाल एव महाद्युते ॥ ३५
कृतवान्पुण्डरीकाक्ष बलदेवसहायवान् ।
वैराजभवने चापि ब्रह्मणा न्यवसः सह ॥ ३६

वैशंपायन उवाच ।

एवमुक्त्वा तदात्मानमात्मा कृष्णस्य पाण्डवः ।
तूष्णीमासीत्ततः पार्थमित्युवाच जनार्दनः ॥ ३७
ममैव त्वं तवैवाहं ये मदीयास्तवैव ते ।
यस्त्वां द्वेष्टि स मां द्वेष्टि यस्त्वामनु स मामनु ॥ ३८
नरस्त्वमसि दुर्धर्ष हरिर्नारायणो ह्यहम् ।
लोकाल्लोकमिमं प्राप्तौ नरनारायणावृषी ॥ ३९
अनन्यः पार्थ मत्तस्त्वमहं त्वत्तश्च भारत ।
नावयोरन्तरं शक्यं वेदितुं भरतर्षभ ॥ ४०
तस्मिन्वीरसमावाये संरब्धेष्वथ राजसु ।
धृष्टद्युम्नमुखैर्वीरैर्भ्रातृभिः परिवारिता ॥ ४१
पाञ्चाली पुण्डरीकाक्षमासीनं यादवैः सह ।
अभिगम्याब्रवीत्कृष्णा शरण्यं शरणैषिणी ॥ ४२
पूर्वे प्रजानिसर्गे त्वामाहुरेकं प्रजापतिम् ।
स्रष्टारं सर्वभूतानामसितो देवलोऽब्रवीत् ॥ ४३

---

Cnp चित्त)मध्यस्थ — c) Ś1 S (T2 G3 om) मुनय — d) K3 याचतो° ; Dc D3 5 S (T2 G3 om) याचत्य ; D1 2 याचते (for ऽयाचन्ता) A few MSS अच्युत

**34** T2 G3 om 34ab (cf v l 32) — c) K2 3 B D (except D1–3) G2 आत्मनैवा , G2 लोकांश्चैवा° — d) Ś1 T2 G1 4 आस्ते, K2 3 B Dc1 Dn D4 6 G3 आसी , Dc2 D5 आसीत् (for आस्से) — After 34, K3 Dn ins

50* युगादौ तव वार्ष्णेय नाभिपद्मादजायत ।
ब्रह्मा चराचरगुरुर्यस्येदं सकलं जगत् ।
तं हन्तुमुद्यतौ घोरौ दानवौ मधुकैटभौ ।
तयोर्व्यतिक्रमं दृष्ट्वा क्रुद्धस्य भवतो हरेः ।
ललाटाज्जातवाञ्शम्भुः शूलपाणिस्त्रिलोचनः । [5]
इत्थं तावपि देवेशौ त्वच्छरीरसमुद्भवौ ।
त्वन्नियोगकरावेताविति मे नारदोऽब्रवीत् ।

[ ❀ Cn युगादौ तव वार्ष्णेय इत्यादि सार्धश्लोकत्रयं क्वचिन्न दृष्टम् । ❀ ]

— K3 Dn cont Ś1 K3 B Dc D1–6 ins after 34

51* तथा नारायण पुरा क्रतुभिर्भूरिदक्षिणैः ।
इष्टवानस्व महासत्रं कृष्ण चैत्ररथे वने ।

[ (L 1) = (var) 21 D2 पुरा नारायणो भूत्वा (for the prior half) — (L 2) B1 यज्ञ , D1 °सत्व (for °सत्र) ]

**35** a) T G (except G1) एव (for नैव) B1 Dn1 परे (for पूर्वे) Ś1 M2 परे चापि ; D1–3 परे वापि , T G3 4 नापरे ह — b) Dc भवि (for करि°) Ś1 D1–3 वै , K3 Dc Dn3 च , B Dn1 n3 D4–6 वा (for ते) — c) B D (except D1–3) transp कर्माणि and यानि — d) B1 भवानेव ; T2 G3 4 बालभावे (for बाल एव) Ś1 Dn1 D2 3 5 महाबल , K2 3 Dc2 Dn2 n3 D4 6 °बल , Dc1 °बल (for °द्युते) D1 बलिना बल एव हि

**36** c) N कैलास° (K3 D2–4 °श) T2 G3 4 [ऽ]पि त्व (for चापि) — d) Ś1 K2 3 B Dc Dn D4–6 G1 ब्राह्मणैर् (for ब्रह्मणा)

**37** a) K2 3 Dc D5 T G1–3 M स्वमा° , B Dn D4 6 महा° (for तदा°) — d) B2 उवाच मधुसूदनः ; S (except M2) अब्रवीत्स जना°

**38** a) Ś1 D1 2 मदीयस्त्व D1 त्वदीयोह

**39** b) Ś1 [ऽ]प्यह , B2 त्वह , D1 S (except M1) [ऽ]स्म्यह (for ह्यहम्) — c) B Dn D4–6 G3 काले (for लोकाल्)

**40** b) B1 2 Dn D4 6 त्वत्तश्चाह तथैव च , Dc अह त्वत्तस्तथैव च , G2 त्वत्तोह चैव भारत

**41** Before 41, all MSS except T2 G3 (K1 4 missing) ins वैश° (B Dn D1–3 cont उ) — After the ref , K2 B (except B1) Dc Dn D4–6 ins

52* एवमुक्ते तु वचने केशवेन महात्मना ।,

while T G2 4 ins

53* इत्युक्त्वा पुण्डरीकाक्ष पाण्डव सुप्रिय प्रियम् ।
प्रीयमाणो हृषीकेशस्तूष्णीमासाबभूव ह ।

— a) Dc राज , S (except T2 G3) समावापे — b) S समुत्क्षेप्वथ

**42** b) K3 पाण्डवैः , B Dc1 Dn D4 6 भ्रातृभिः (for यादवैः) — c) B Dc Dn D4 6 क्रुद्धा , T G कृष्ण (for कृष्णा)

**43** Before 43, K2 B Dc2 Dn D4–6 ins द्रौपद्युवाच , G1 2 द्रौपदी , G4 कृष्णा — B4 Dc2 D5 G2 4 ins after

विष्णुस्त्वमसि दुर्धर्ष त्वं यज्ञो मधुसूदन ।
यष्टा त्वमसि यष्टव्यो जामदग्न्यो यथाब्रवीत् ॥ ४४
ऋषयस्त्वां क्षमामाहुः सत्यं च पुरुषोत्तम ।
सत्याद्यज्ञोऽसि संभूतः कश्यपस्त्वां यथाब्रवीत् ॥ ४५
साध्यानामपि देवानां वसूनामीश्वरेश्वरः ।
लोकभावन लोकेश यथा त्वां नारदोऽब्रवीत् ॥ ४६
दिवं ते शिरसा व्याप्तं पद्भ्यां च पृथिवी विभो ।
जठरं ते इमे लोकाः पुरुषोऽसि सनातनः ॥ ४७
विद्यातपोभितप्तानां तपसा भावितात्मनाम् ।
आत्मदर्शनसिद्धानामृषीणामृषिसत्तम ॥ ४८
राजर्षीणां पुण्यकृतामाहवेष्वनिवर्तिनाम् ।
सर्वधर्मोपपन्नानां त्वं गतिः पुरुषोत्तम ॥ ४९
त्वं प्रभुस्त्वं विभुस्त्वं भूरात्मभूस्त्वं सनातनः ।
लोकपालाश्च लोकाश्च नक्षत्राणि दिशो दश ।
नभश्चन्द्रश्च सूर्यश्च त्वयि सर्वं प्रतिष्ठितम् ॥ ५०
मर्त्यता चैव भूतानाममरत्वं दिवौकसाम् ।
त्वयि सर्वं महाबाहो लोककार्यं प्रतिष्ठितम् ॥ ५१
सा तेऽहं दुःखमाख्यास्ये प्रणयान्मधुसूदन ।
ईशस्त्वं सर्वभूतानां ये दिव्या ये च मानुषाः ॥ ५२
कथं नु भार्या पार्थानां तव कृष्ण सखी विभो ।
धृष्टद्युम्नस्य भगिनी सभां कृष्येत मादृशी ॥ ५३
स्त्रीधर्मिणी वेपमाना रुधिरेण समुक्षिता ।
एकवस्त्रा विकृष्टास्मि दुःखिता कुरुसंसदि ॥ ५४
राजमध्ये सभायां तु रजसाभिसमीरिताम् ।

---

the ref Dc1 T G3 (which all om the ref), ins after 42

54* वासुदेव वसूना च वासवो बहुधाच्युत ।
देवदेवोऽसि लोकाना कृष्णद्वैपायनोऽब्रवीत् ।

[ (L 1) G2 हृषीकेश (for वसूना च) T2 G2 3 वासवाव-रजाच्युत — (L 2) G2 हि (for ऽसि) Dc1 T G2-4 देवा° (for लोका°) T G2-4 इति (for कृष्ण-) ]
— $^{a}$) K2 B Dc Dn D4-6 °भि- (B2 Dc2 °वि-) (for °नि-) — $^{c}$) B D (except D1-3) T1 सर्वलोकानाम्

**44** T1 om (hapl) 44 D5 transp 44 and 45 — $^{a}$) K3 Dc T2 G दुर्धर्ष° — $^{b}$) Dc1 D3 T2 G3 4 °सूदन°

**45** K3 om 45$^{a}$–46$^{b}$, D1 om (hapl) 45–46, G1 om (hapl) 45 D5 transp 44 and 45, Ś1 transp 45 and 46 — $^{c}$) S (G1 om) स त्व (for सत्याद्) D3 मायया चापि स° — $^{d}$) K2 Dc D4 5 T1 G2 4 M काश्यपस् S1 G2 त्वा

**46** Ś1 transp 45 and 46 K3 om 46$^{ab}$, D1 om 46 (cf v l 45) — $^{a}$) S असि (for अपि) — $^{b}$) S विश्वेषाम्, K3 D2 3 5 विश्वानाम्, B Dc Dn D4 6 शिवानाम् (for वसूनाम्) K2 Dn1 n2 D2-4 6 G1 2 °श्वर (for °श्वर°) — $^{c}$) K2 B2 Dn3 D4 भूतभावन N (K1 4 missing) भूतेश (Ś1 °शो) — $^{d}$) Ś1 K3 M2 स्वा (for त्वा) — After 46, K2 Dn ins

55* ब्रह्मशाकरशक्राद्यैर्देववृन्दै पुन पुन ।
क्रीडसे त्व नरव्याघ्र बाल क्रीडनकैरिव ।

**47** $^{a}$) Ś1 K2 3 Dn D1-3 5 G1 2 द्यौश्च (for दिव) Ś1 K2 3 Dn D1-3 G2 व्याप्ता — K2 om 47$^{b}$–48$^{c}$ — $^{b}$) Ś1 B2 Dn D4 6 प्रभो, D3 तथा (for विभो) — $^{c}$) Ś1 D1 2 च, T1 G2 4 M1 खम्, G1 तु (for ते) Ś1 K3 D1-3 त्रयो (for इमे)

**48** K2 om 48$^{abc}$ (cf v l 47) — $^{c}$) K3 B Dn D4 6 °तृप्ताना — $^{d}$) Ś1 K2 3 B1 2 Dn D2 4-6 असि, B3 D1 3 अपि (for ऋषि-) S1 K3 B1 Dn D4 सत्तम

**49** $^{d}$) K2 B1 3 Dn1 n2 D2-4 6 पुरुषर्षभ (B1 °भ°)

**50** $^{a}$) G2 गुरुस् (for प्रभुस्) K2 Dn D4 च त्व (for त्व भूर्) — $^{b}$) K2 Dn D4 भूतात्मा त्व विचेष्टसे — $^{c}$) Dc D5 transp लोक° and लोकाश्च — $^{d}$) S (except M2) तथा (for दश)

**51** D3 om (hapl) 51 — $^{a}$) Ś1 B2 Dc सत्य (for मर्त्य°) — $^{d}$) T G महत्- (for लोक-)

**52** $^{a}$) Dc D5 (by transp) साह ते — $^{c}$) Ś1 D1 2 ईश्वर° (for ईशस्त्व) T1 G1 M2 सर्वलोकाना — $^{d}$) T2 G2-4 मानवा° (for मानुषा°)

**53** $^{a}$) K2 3 Dn1 n2 D1 5 6 तु भार्या, D3 भार्या च K3 पाण्डु° (for पार्था°) — $^{b}$) K2 3 प्रिया, B2 D2 T1 प्रभो, M1 सती (for विभो) — $^{d}$) Ś1 परिक्लिश्येत; D1-3 परिकृष्येत, D3m 5. 6 स मा कृष्येत

**54** $^{b}$) K3 B D (except D1-3) शोणितेन (for रुधि°)

**55** $^{a}$) K3 B D (except D1-3) राज्ञा मध्ये Ś1 K3 D1 2 हि, B2 च (for तु) — $^{b}$) Dn1 n2 D4 [अ]ति,

दृष्ट्वा च मां धार्तराष्ट्राः प्राहसन्पापचेतसः ॥ ५५
दासीभावेन भोक्तुं मामीषुस्ते मधुसूदन ।
जीवत्सु पाण्डुपुत्रेषु पाञ्चालेष्वथ वृष्णिषु ॥ ५६
नन्वहं कृष्ण भीष्मस्य धृतराष्ट्रस्य चोभयोः ।
स्नुषा भवामि धर्मेण साहं दासीकृता बलात् ॥ ५७
गर्हये पाण्डवांस्त्वेव युधि श्रेष्ठान्महाबलान् ।
ये क्लिश्यमानां प्रेक्षन्ते धर्मपत्नीं यशस्विनीम् ॥ ५८
धिग्बलं भीमसेनस्य धिक्पार्थस्य धनुष्मताम् ।
यौ मां विप्रकृतां क्षुद्रैर्मर्षयेतां जनार्दन ॥ ५९
शाश्वतोऽयं धर्मपथः सद्भिराचरितः सदा ।
यद्भार्यां परिरक्षन्ति भर्तारोऽल्पबला अपि ॥ ६०
भार्यायां रक्ष्यमाणायां प्रजा भवति रक्षिता ।
प्रजायां रक्ष्यमाणायामात्मा भवति रक्षितः ॥ ६१
आत्मा हि जायते तस्यां तस्माज्जाया भवत्युत ।
भर्ता च भार्यया रक्ष्यः कथं जायान्ममोदरे ॥ ६२
नन्विमे शरणं प्राप्तान्न त्यजन्ति कदाचन ।
ते मां शरणमापन्नां नान्वपद्यन्त पाण्डवाः ॥ ६३
पञ्चेमे पञ्चभिर्जाताः कुमाराश्चामितौजसः ।
एतेषामप्यवेक्षार्थं त्रातव्यासि जनार्दन ॥ ६४
प्रतिविन्ध्यो युधिष्ठिरात्सुतसोमो वृकोदरात् ।
अर्जुनाच्छ्रुतकीर्तिस्तु शतानीकस्तु नाकुलिः ॥ ६५
कनिष्ठाच्छ्रुतकर्मा तु सर्वे सत्यपराक्रमाः ।
प्रद्युम्नो यादृशः कृष्ण तादृशास्ते महारथाः ॥ ६६
नन्विमे धनुषि श्रेष्ठा अजेया युधि शात्रवैः ।
किमर्थं धार्तराष्ट्राणां सहन्ते दुर्बलीयसाम् ॥ ६७
अधर्मेण हृतं राज्यं सर्वे दासाः कृतास्तथा ।
सभायां परिक्लिष्टाहमेकवस्त्रा रजस्वला ॥ ६८
नाधिज्यमपि यच्छक्यं कर्तुमन्येन गाण्डिवम् ।

D6 तु (for [अ]भि) K2 B Dn D4 6 M -परिप्लुता (M1 °ता), K3 Dc D3 5 T2 G1 समीरिता — d) Ś1 D1 2 °भ्यहसन्, K3 D3 विहसन् — After 55, D3 ins

56* कृष्यमाणा तथा दीनामनाथामिव माधव ।
आहुश्चैतान्षण्ढतिलान्पञ्च चैव तु पाण्डवान् ।
पतिमन्यं वृणीष्वेति सर्वे ते मधुसूदन ।

**56** a) K3 D1-3 दासीभोगेन Ś1 D1-3 सभोक्तुम्; K2 B1 2 Dn D4 6 G3 मा भोक्तुम् (by transp) — b) D1 2 मामीपुर्, D3 अन्वीपुर् (for ईपुस्ते) — d) K2 B (except B4) D (except D2 3) G3 च, G1 स (for [अ]थ)

**57** d) S (except M2) याह (for सा°) T G (except G1) transp कृता and बलात्

**58** a) S1 B4 स्वेव, T1 स्वेषा, T2 G (except G1) चैव (for स्वेव) — c) K2 B (except B4) Dn D4 G2 M2 यत् (for ये) K3 मर्षते, Dc प्रेक्षति; D1 2 प्रैक्षत; S (except M3) पश्यति

**59** Cf 70ab and v l — b) Ś1 च धन्विता, K2 B Dn D4 6 च गाण्डिव, S (except M1) धनुष्मत

**60** Cf Manu 9 6 — a) K3 G1 धर्मपथा° — c) D5 रक्षन्ति, S (except M1) °रक्षते — d) S भर्तारोप्यब हीयस°

**61** = 4 20 27 Many N MSS रक्ष (in 61a and 61c)

**62** c) T2 G2 3 हि, M2 तु (for च) — d) K3 D2 3 S (except T2 G3) जायेन् T2 G4 मनोहर°

**63** a) Dc D5 न हीमे, M3 ते त्विमे (for नन्विमे) K2 B Dn D3-6 प्राप्त, T1 G4 M3 प्राप्ता — b) Dc D5 सत्यजति, D2 विजहति — c) K2 B2 4 D4 6 शरणागता मा राजानो (B2 कृष्ण), B1 3 Dc D5 शरणागता तु मां (B1 °तन्ह म°, B3 om मा, D5 °तां हि मा) राजन् (hypermetric!) — d) S नान्वपद्यन्कथ वरा° (G1 पुर°, M2 -चन) — After 63, S reads 67

**64** a) D1 2 [प]ति (for [इ]मि) K2 B Dc Dn D4-6 पञ्चभि° पतिभिर्जाता — b) K2 B Dn D4-6 मे, Dc ये, S तु (for च) K2 B D (except D1-3) महौजस° (for [अ]मितौ)

**65** = 1 57 102 — a) Ś1 K3 D1-3 युधिष्ठिरात्प्रतिविन्ध्य — c) S1 K3 B1 4 Dn D1 4-6 G3 च (for तु) — d) K3 D1 च, D3 [अ]थ (for तु)

**66** a) Ś1 K2 3 B Dn D4 6 T2 G3 च (for तु)

**68** a) T2 G (except G1) जित (for हृत) — b) K2 M2 तथा कृता° (by transp), T2 G2 3 कृतास्तदा — cd) K3 D1 क्लिष्टा (for °कृष्टा) Ś1 transp परिकृष्टा and एकवस्त्रा

**69** ab) D1 3 तच्छक्य (for य°) D2 T G (except G1) transp शक्य and कर्तुं D2 गाण्डिवं — c) G2 °बाहु°

अन्यत्रार्जुनभीमाभ्यां त्वया वा मधुसूदन ॥ ६९
धिग्भीमसेनस्य बलं धिक्पार्थस्य च गाण्डिवम् ।
यत्र दुर्योधनः कृष्ण मुहूर्तमपि जीवति ॥ ७०
य एतानाक्षिपद्राष्ट्रात्सह मात्राविहिंसकान् ।
अधीयानान्पुरा बालान्व्रतस्थान्मधुसूदन ॥ ७१
भोजने भीमसेनस्य पापः प्राक्षेपयद्विषम् ।
कालकूटं नवं तीक्ष्णं संभृतं लोमहर्षणम् ॥ ७२
तज्जीर्णमविकारेण सहान्नेन जनार्दन ।
सशेषत्वान्महाबाहो भीमस्य पुरुषोत्तम ॥ ७३
प्रमाणकोट्यां विश्वस्तं तथा सुप्तं वृकोदरम् ।
बद्ध्वैनं कृष्ण गङ्गायां प्रक्षिप्य पुनराव्रजत् ॥ ७४
यदा विबुद्धः कौन्तेयस्तदा संछिद्य बन्धनम् ।
उदतिष्ठन्महाबाहुर्भीमसेनो महाबलः ॥ ७५
आशीविषैः कृष्णसर्पैः सुप्तं चैनमदंशयत् ।
सर्वेष्वेवाङ्गदेशेषु न ममार च शत्रुहा ॥ ७६
प्रतिबुद्धस्तु कौन्तेयः सर्वान्सर्पानपोथयत् ।
सारथिं चास्य दयितमपहस्तेन जघ्निवान् ॥ ७७
पुनः सुप्तानुपाधाक्षीद्बालकान्वारणावते ।
शयानानार्यया सार्धं को नु तत्कर्तुमर्हति ॥ ७८
यत्रार्या रुदती भीता पाण्डवानिदमब्रवीत् ।
महद्व्यसनमापन्ना शिखिना परिवारिता ॥ ७९
हा हतास्मि कुतो न्वद्य भवेच्छान्तिरिहानलात् ।
अनाथा विनशिष्यामि बालकैः पुत्रकैः सह ॥ ८०
तत्र भीमो महाबाहुर्वायुवेगपराक्रमः ।
आर्यामाश्वासयामास भ्रातॄंश्चापि वृकोदरः ॥ ८१
वैनतेयो यथा पक्षी गरुडः पततां वरः ।
तथैवाभिपतिष्यामि भयं वो नेह विद्यते ॥ ८२
आर्यामङ्केन वामेन राजानं दक्षिणेन च ।
अंसयोश्च यमौ कृत्वा पृष्ठे बीभत्सुमेव च ॥ ८३
सहसोत्पत्य वेगेन सर्वानादाय वीर्यवान् ।

(for °भीमा°)

**70** Cf $59^{ab}$ — $^{a}$) Ś$_1$ $K_3$ D (except $D_{2, 4, 6}$) धिग्बलं भीमसेनस्य (= $59^{a}$), S (except $M_2$) बलं धिग्भीमसेनस्य — $^{b}$) $K_3$ धनुष्मता, B Dn $D_{4-6}$ च (B [अ]पि) पौरुषं, $D_2$ च गाजिवं, S (except $M_1$) धनुष्मतः — $^{c}$) $D_{1, 2}$ S पापो (for कृष्ण) — After 70, $Dc_2$ ins

57* कालः सृजति भूतानि कालः संहरते प्रजाः ।
तत्कालेन कृतं मन्ये न तु पौरुषवर्धनम् ।
[Line 1 = (var) 1 1 188]

**71** $M_2$ om 71 — $^{a}$) $Dn_3$ $D_8$ $G_4$ य एनान् T G भ्रातॄन् (for राष्ट्रात्) — $^{b}$) Ś$_1$ विहिंसितुं, $B_1$ $Dc_2$ विहिंसितान्, $D_5$ विशां पते, S ($M_2$ om) विहिंसकः (for [अ]विहिंसकान्) $D_3$ सहामात्यान्सहाविकान्

☞ With stanzas 72–77, cf 1 119 35 ff

**72** = (var) 1 119 39 — $^{b}$) $K_3$ $D_{1-3, 5}$ पुनः (for पापः) — $^{c}$) $D_{2, 3}$ विषं (for नवं) S कालकूटनिभं तीक्ष्णं — $^{d}$) $K_2$ Dc $D_{5, 6}$ $T_2$ G Cn संभृतं ($G_4$ भ्रातर), $B_2$ संवृतं S रोम°

**73** $^{c}$) Ś$_1$ सशेषत्वान्, $D_3$ सशेष त, $T_1$ विशेषत्वान्, $T_2$ G (except $G_1$) सावशेष — $^{d}$) Ś$_1$ $K_3$ $D_{1, 3}$ भीमेन (for भीमस्य)

**74** $^{b}$) $K_3$ $D_5$ तदा सुप्तं, S (except $M_2$) पाशैर्बध्वा — $^{c}$) Ś$_1$ $K_3$ Dc $D_{1-3, 5}$ अथ° (for बद्ध्वै°) S तोये स भीमं ($T_1$ $G_1$ सुभीमे, $M_1$ तु भीमे, $M_2$ -षु कृष्ण) गंगायां ($T_1$ M °यां) — $^{d}$) $S_1$ $K_3$ $D_{1, 3}$ $M_2$ गृहम्, $K_2$ B Dc Dn $D_{4-6}$ पुरम् (for पुनर्) — After 74, $D_5$ reads 77

**75** = (var) 1 119 35 — $^{a}$) $M_1$ प्रबुद्धः — $^{b}$) Dc संछिद्य बंधनं

**76** = 1 55 12 Cf 1 119 36 also — $^{b}$) $K_2$ B Dc Dn $D_{4-6}$ भीमसेनम्; $G_1$ सुप्तं चेममं $D_3$ सुप्तश्चैव स दंशितः — $^{d}$) $T_1$ $G_2$ M स, $T_2$ $G_{3, 4}$ ह (for च)

**77** = (var) 1 119 38 — $D_5$ reads 77 after 74 — $^{a}$) $D_5$ यदा विबुद्धः कौंतेयः (= $75^{a}$) — $^{c}$) $D_5$ तदा च सारथिं चास्य

**78** $^{a}$) S ततः पुनर् ($M_2$ पुनः क्षिप्तान्) (for पुनः सुप्तान्)

**80** $^{b}$) Dc स्वस्ति (with hiatus), $D_5$ स्वस्तिर् (for शान्तिर्) $T_2$ G (except $G_1$) महा° (for इहा°)

**81** $^{d}$) $K_3$ $D_{3, 5}$ S चैव (for चापि)

**82** $^{b}$) $K_2$ B $Dc_2$ Dn $D_{4-6}$ गरुत्मान् (for गरुडः) — $^{c}$) S [अ]ति° (for [अ]भि°)

**83** $^{b}$) S (except $M_2$) दक्षिणेन युधिष्ठिरं — $^{c}$) $Dc_2$ यमौ चैव च बाहुभ्यां (m as in text)

**85** $^{b}$) $K_2$ B D (except $D_{1-3}$) सह मात्रा (by

आदूनार्यां च बलवान्मोक्षयामास पावकात् ॥ ८४
ते रात्रौ प्रस्थिताः सर्वे मात्रा सह यशस्विनः ।
अभ्यगच्छन्महारण्यं हिडिम्बवनमन्तिकात् ॥ ८५
श्रान्ताः प्रसुप्तास्तत्रेमे मात्रा सह सुदुःखिताः ।
सुप्तांश्चैनानभ्यगच्छद्धिडिम्बा नाम राक्षसी ॥ ८६
भीमस्य पादौ कृत्वा तु स्व उत्सङ्गे ततो बलात् ।
पर्यमर्दत संहृष्टा कल्याणी मृदुपाणिना ॥ ८७
तामबुध्यदमेयात्मा बलवान्सत्यविक्रमः ।
पर्यपृच्छच्च तां भीमः किमिहेच्छस्यनिन्दिते ॥ ८८
तयोः श्रुत्वा तु कथितमागच्छद्राक्षसाधमः ।
भीमरूपो महानादान्विसृजन्भीमदर्शनः ॥ ८९
केन सार्धं कथयसि आनयैनं ममान्तिकम् ।
हिडिम्बे भक्षयिष्यावो न चिरं कर्तुमर्हसि ॥ ९०
सा कृपासंगृहीतेन हृदयेन मनस्विनी ।
नैनमैच्छत्तदाख्यातुमनुक्रोशादनिन्दिता ॥ ९१
स नादान्विनदन्घोराद्राक्षसः पुरुषादकः ।
अभ्यद्रवत वेगेन भीमसेनं तदा किल ॥ ९२
तमभिद्रुत्य संक्रुद्धो वेगेन महता बली ।

transp ), cf v l 86 — $^{c}$) B Dn2 D8 4 महारण्ये — $^{d}$) Some MSS, here and below, हिडब- K3 D8 अतिके, Dn1 अतिकं

**86** $^{a}$) T2 G (except G1) [ए]ते, M2 [ए]व (for [इ]मे) — $^{b}$) Ś1 B2 Dc2 D1 2 5 सह मात्रा (by transp ), cf v.l 85 — $^{c}$) T2 G3 श्वेतान्, G2 4 एतान् (for चैनान्) — After 86, N (K1 4 missing) ins

58* सा दृष्ट्वा पाण्डव तत्र शयान भ्रातृभि सह ।
हृच्छयेनाभिभूता हि भीमसेनमकामयत् ।

[(L 1) B Dn D4–6 पाण्डवान् Dc1 D1 2 भीम (for तत्र) B Dc Dn D4 6 सुप्तान्मात्रा (Dc D4 °न्भ्रात्रा) सह क्षितौ (for the posterior half ) — (L 2) B Dc Dn D4 6 [अ]भिभूतात्मा, D3 समाविष्टा (for [अ]भिभूता हि) ]

**87** $^{a}$) D1 transp पादौ and कृत्वा — $^{b}$) D2 स्वोत्सगे तु, D3 उत्सगेन, D5 स्वोऽत्सगेव, T G M1 स्वपर्तोके (G1 °गे) (for स्व उत्सङ्गे) K3 D5 सुलोचना, B (except B2) Dc1 Dn D6 T1 M2 ततोबला D1 साप्युत्सगे महाबला — $^{c}$) T G3 4 M1 पर्य(T2 G3 4 °रि)ष्वजत ; G1 परिष्वज्य च, G2 (conflated) पर्यष्वमर्द (!)

**88** $^{a}$) Dc ता तदाप्रतिमेयात्मा — $^{c}$) K3 पर्यपृच्छत्स ता, B1 तु ता, B3 Dc Dn D5 °स तां, D3 °सदा — $^{d}$) D3 नदिके (for [अ]निन्दिते ) Ś1 D1 2 कस्य त्वमसि शोभने — After 88 all MSS except T1 G1 M ins

59* सैवमुक्ता तु भीमेन राक्षसी कामरूपिणी।
भीमसेन महात्मानमिदमाह शुचिस्मिता ।
पलायध्वमित' क्षिप्र मम भ्राता सुवीर्यवान्।
आगमिष्यति वो हन्तु तस्माद्गच्छत माचिरम्।
अथ भीमोऽभ्युवाचैना साभिमानमिदं वच' । [5]
नोद्विजेयमह तस्माज्जिहनिष्येऽहमागतम् ।

[(L 1) K3 B2 Dn D4 6 T2 G2–4 om सा D1 2 कामचारिणी — (L 2) K3 B Dc Dn D4 6 आह नैवमनिन्दिता (for the posterior half ) — (L 3) K3 D5 प्रबोधयामि वै क्षिप्र (for the prior half) B Dc Dn D4 6 T2 G2–4 [ए]ष (for सु ) — (L 4) D1 2 सहर्तु, T2 G2 व हतु (for वो हन्तु ) — (L 5) D1 ता चा° (for भीमो°) K3 Dc D3 5 [ऽ]पि (for ऽभि-) D3 ता प्रत्युवाच (for भीमोऽभ्युवाच) D1 2 [ए]ष (for [ए]नां) T2 G2–4 इवासुरीं (for इद वच ) Ś1 K3 D1–3 साम्ना परमवल्गुना (for the posterior half) — (L 6) Ś1 K3 D1–3 5 T2 G2–4 नोद्विजामि तव भ्रातुर् Ś1 D1–3 न चैनान् (D1 2 नैतांश्च, D3 नेमांश्च) प्रतिबोधये, K3 D5 भय नास्ति महावनात् (D5 °बलात्), T2 G2–4 निहन्मि च समागत
— Ś1 K3 D1–3 5 cont

60* आगत प्रतियोत्स्यामि राक्षस भ्रातर तव ।

**89** $^{a}$) K3 B D (except D1–3) सजल्पम्; G1 वचनम् (for कथितम्) — $^{b}$) Ś1 K3 D1–3 °धिप° (for °धम°) — $^{d}$) Ś1 विदधद्; K3 निनदन्, D1–3 G1 M2 वि(D3 G1 ध्य)नदन् (for विसृजन्)

**90** Before 90 K3 B2 Dc Dn D4 6 ins राक्षस उ°, B4 हिडिंब उ°, G4 पुरुषादक' On the other hand, K3 D2 3 5 ins before 90

61* अथैनामब्रवीत्क्रुद्धो राक्षस' पुरुषादक'।

— $^{a}$) Ś1 साक (for सार्धं) — $^{b}$) To avoid hiatus, S1 K3 D1 ह्यानयैन; D2 ह्यानयस्व (for आनयैन) — $^{c}$) Ś1 भक्षयिष्ये वा, K3 B1 3 Dn1 n2 D6 °ष्यामो; B2 Dn3 T2 G3 ष्यामि

**91** $^{a}$) Ś1 क्षमा°, M2 स्नेह° (for कृपा°) — $^{c}$) B1 Dc नैतम्, S नैतद् (for नैनम्) Ś1 Dc D2 G1 इच्छत्, K3 Dn2 ऐक्षत् (for ऐच्छत्) S तदा कर्तुम्

**92** K3 om 92$^{ab}$ — $^{a}$) B1 3 विविधान्, S (except

अगृह्णात्पाणिना पाणिं भीमसेनस्य राक्षसः ॥ ९३
इन्द्राशनिसमस्पर्शं वज्रसंहननं दृढम् ।
संहत्य भीमसेनाय व्याक्षिपत्सहसा करम् ॥ ९४
गृहीतं पाणिना पाणिं भीमसेनोऽथ रक्षसा ।
नामृष्यत महाबाहुस्तत्राक्रुध्यद्वृकोदरः ॥ ९५
तत्रासीत्तुमुलं युद्धं भीमसेनहिडिम्बयोः ।
सर्वास्त्रविदुषोर्घोरं वृत्रवासवयोरिव ॥ ९६
हत्वा हिडिम्बं भीमोऽथ प्रस्थितो भ्रातृभिः सह ।
हिडिम्बामग्रतः कृत्वा यस्यां जातो घटोत्कचः ॥ ९७
ततश्च प्राद्रवन्सर्वे सह मात्रा यशस्विनः ।
एकचक्रामभिमुखाः संवृता ब्राह्मणव्रजैः ॥ ९८
प्रस्थाने व्यास एषां च मन्त्री प्रियहितोऽभवत् ।
ततोऽगच्छन्नेकचक्रां पाण्डवाः संशितव्रताः ॥ ९९
तत्राप्यासादयामासुर्बकं नाम महाबलम् ।
पुरुषादं प्रतिभयं हिडिम्बेनैव संमितम् ॥ १००
तं चापि विनिहत्योग्रं भीमः प्रहरतां वरः ।
सहितो भ्रातृभिः सर्वैर्द्रुपदस्य पुरं ययौ ॥ १०१
लब्धाहमपि तत्रैव वसता सव्यसाचिना ।
यथा त्वया जिता कृष्ण रुक्मिणी भीष्मकात्मजा ॥ १०२
एवं सुयुद्धे पार्थेन जिताहं मधुसूदन ।
स्वयंवरे महत्कर्म कृत्वा नसुकरं परैः ॥ १०३
एवं क्लेशैः सुबहुभिः क्लिश्यमानाः सुदुःखिताः ।

---

$M_2$) विपुलान् (for विनदन्) — $^{b}$) $T_2$ $G_{3,4}$ (*inf lin* as in text) पिशिताशन° (for पुरुषा ) — $^{cd}$) S कृत्वाभ्य( $T_2$ $G_{3,4}$ °ह्य)गच्छद् (for अभ्यद्रवत) $Ś_1$ सक्रुद्धो (for वेगेन), and महाबल (for तदा किल) — After 92, $K_3$ $D_{3,5}$ (om line 2) ins

62* तमागतमभिप्रेक्ष्य भीमसेनो महाबलम् ।
उत्थाय सहसा रक्षो निजग्राह महाबल ।,

which in $K_3$ is followed by 63* (cf v l 93)

**93** $K_3$ om 93–96 — $^{ab}$) Dc सरब्धो (for °क्रुद्धो) $D_5$ अभिक्रुश्य च सरब्धो (for $^{a}$) $Ś_1$ $D_{1-3}$ transp सक्रुद्धो and वेगेन $S_1$ बलिन, $D_1$ बलवद्, $D_{2,3}$ बलवान्, $T_2$ $G_{3,4}$ तरसा (for महता) $D_6$ भीमसेन तदा बली (for $^{b}$)

**94** $K_3$ om 94 (cf. v l 93), $G_2$ om $94^{a}$–$95^{b}$ — $^{c}$) $D_{2,3,5}$ $G_4$ सहृत्य, $T_1$ सगत्य S (except $G_1$, $G_2$ om ) °सेनस्य

**95** $K_3$ om 95, $G_2$ om $95^{ab}$ (cf v l 93, 94) — $^{a}$) $B_2$ Dc $D_{2,6}$ गृहीत्वा, $D_3$ $T_1$ $G_4$ $M_1$ गृहीत°, $G_1$ सहृत्य (cf $94^{c}$) (for गृहीत) — $^{b}$) Dc Dn $D_{4-6}$ °सेनस्य $B_{1,2}$ $Dc_2$ $Dn_{2,3}$ $D_1$ राक्षस°, $D_2$ राक्षस $K_2$ भीमसेन तदा किल ( = $92^{d}$), $G_1$ °सेनेन रक्षसा

**96** $K_3$ om 96 (cf v l 93) — $^{ab}$) $Ś_1$ $D_{1-3}$ अथा°, $K_2$ B (except $B_2$) Dc Dn $D_{4,5}$ तदा° (for तत्रा°) $S_1$ अभूत् (for आसीत्) A few MSS तुमल and हिडबयो° — Dn $D_{2-6}$ ins after 96 $K_3$ (which om 93–96) cont after 62*

63* विक्रीड्य सुचिर भीमो राक्षसेन सहानघ ।
निजघान महावीर्यस्त तदा निर्बल बली ।

[ (L 1) $D_2$ क्रीडित्वा, $D_6$ विक्रम्य (for विक्रीड्य) $D_5$ महाबल (for सहा° ) — After line 1, $D_2$ ins

64* तलैरशनिकल्पैश्च मुष्टिभिश्चाहनत्तदा ।

— (L 2) $K_3$ निर्जघान, $D_3$ निजग्राह $D_2$ दुर्बल, $D_5$ [अ]तिबल, $D_6$ बलिन (for निर्बल) ]

On the other hand, $B_2$ ins after 96

65* ततो भीमो महाबाहु रूपमास्थाय वै महत् ।
जघान राक्षस क्रुद्धो वृत्र देवपतिर्यथा ।

**98** $^{a}$) $K_2$ B D (except $D_{1-3}$) स, S ते (for च) — $^{b}$) $K_2$ B D (except $D_{2,3}$) परतपा (for यश° ) — $^{c}$) S (except $G_1$ $M_2$) °गता° (for °मुखा° ) — $^{d}$) $S_1$ ब्राह्मणै° सह, $K_3$ °णैर्बुधै°, $B_2$ Dc T $G_{2,4}$ M °णाग्रतै°, $D_2$ णानुजै°; $G_1$ °णैर्वृतै°

**99** $^{a}$) $B_1$ Dc विदुरस्तेषा, $D_3$ व्यास एवैषा, S विदुरश्चैषा (for व्यास एषा च) — $^{b}$) $K_2$ $B_3$ Dn $D_{4,6}$ °हिते रत°, $B_1$ °हितेभवत् — $^{d}$) $T_2$ G (except $G_1$) पार्थिवा° (for पाण्डवा° ) A few MSS शसितव्रता

**102** $^{a}$) Dc $D_5$ कृष्ण (for अपि) — $^{cd}$) $Ś_1$ [अ]र्जिता, $T_2$ गता, $G_{2,4}$ हृता (for जिता) $Dn_2$ $D_{1,3}$ भीम° (for भीष्म° )

**103** $^{a}$) $M_1$ सथा सुयुद्धे, $M_2$ सत्रासुयुद्धे — $^{d}$) $S_1$ नासुकर; $B_1$ यद्दुष्कर, T $G_4$ $M_1$ [अ]प्यसु°, $G_2$ $M_2$ त्वसु° (for नसुकर)

**104** $^{b}$) $K_{2,3}$ B Dn $D_{1,2,4,6}$ °माना सुदु°खिता — $^{c}$) $S_1$ $D_{1,2}$ अवसन्, $K_2$ B Dn $D_{4,6}$ निवसामि, $K_3$ $D_5$ $G_1$ $M_2$ निवसति, Dc न्यवसन्, $D_3$ निवसन् $K_2$ $B_{1,3,4}$ $Dc_1$ Dn $D_{1,4,6}$ $T_1$ $G_1$ आर्यया हीना, $B_2$ अवसमाह, $D_2$

निवसामार्यया हीनाः कृष्ण धौम्यपुरःसराः ॥ १०४

त इमे सिंहविक्रान्ता वीर्येणाभ्यधिकाः परैः ।
विहीनैः परिक्लिश्यन्तीं समुपेक्षन्त मां कथम् ॥ १०५

एतादृशानि दुःखानि सहन्ते दुर्बलीयसाम् ।
दीर्घकालं प्रदीप्तानि पापानां क्षुद्रकर्मणाम् ॥ १०६

कुले महति जातास्मि दिव्येन विधिना किल ।
पाण्डवानां प्रिया भार्या स्नुषा पाण्डोर्महात्मनः ॥

कचग्रहमनुप्राप्ता सास्मि कृष्ण वरा सती ।
पञ्चानामिन्द्रकल्पानां प्रेक्षतां मधुसूदन ॥ १०८

इत्युक्त्वा प्रारुदत्कृष्णा मुखं प्रच्छाद्य पाणिना ।
पद्मकोशप्रकाशेन मृदुना मृदुभाषिणी ॥ १०९

स्तनावपतितौ पीनौ सुजातौ शुभलक्षणौ ।
अभ्यवर्षत पाञ्चाली दुःखजैरश्रुबिन्दुभिः ॥ ११०

चक्षुषी परिमार्जन्ती निःश्वसन्ती पुनः पुनः ।
बाष्पपूर्णेन कण्ठेन क्रुद्धा वचनमब्रवीत् ॥ १११

नैव मे पतयः सन्ति न पुत्रा मधुसूदन ।
न भ्रातरो न च पिता नैव त्वं न च बान्धवाः ॥

ये मां विप्रकृतां क्षुद्रैरुपेक्षध्वं विशोकवत् ।
न हि मे शाम्यते दुःखं कर्णो यत्प्राहसत्तदा ॥ ११३

अथैनामब्रवीत्कृष्णस्तस्मिन्वीरसमागमे ।
रोदिष्यन्ति स्त्रियो ह्येवं येषां क्रुद्धासि भामिनि ॥ ११४

बीभत्सुशरसंछन्नाञ्शोणितौघपरिप्लुतान् ।

---

आर्यया सार्धं, $G_1$ आश्रयाहीना — $^d$) Dn $D_4$ $_6$ °पुरःसरा, $D_1$ पुरःसर, $D_3$ पुरस्कृता

**105** $^b$) $B_1$ वीर्यवतो दुरासदा — $^c$) B (except $B_4$) $D_1$ $_6$ निहीनैः, S (except $M_2$) अजिताः $K_3$ $D_2$ $T_2$ $G_{2-4}$ $M_1$ °कृष्यतीं, $Dn_2$ $D_3$ $_5$ क्लिश्यति, $T_1$ $G_1$ $M_2$ °तुष्यति ($M_2$ तीं) — $^d$) $Ś_1$ समुदैक्षत, $K_2$ B Dc Dn $D_4$ $_6$ $G_1$ °पेक्ष($K_2$ Dn $D_4$ $_6$ पेक्ष्य)ति, $K_3$ $D_2$ $_3$ M °पैक्षत; $D_1$ °पैक्षत, $D_5$ पेक्षसि

**106** $^b$) $K_2$ B D (except $D_{1-3}$ $_5$) सहती — $G_1$ om $106^c$–$107^d$ — $^c$) $K_3$ Dc $D_2$ $_3$ M दीर्घकाल-, $T_1$ काले $S_1$ $D_1$ $_2$ प्रसृष्टानि, $K_2$ B Dn $D_{4-6}$ प्रदीप्तास्मि; $K_3$ -प्रतिष्ठानि, $D_3$ -[ऽ]पसृष्टानि, $M_1$ -प्रवृत्तानि — $B_3$ om (hapl) $106^d$–$107^a$ — $^d$) $K_2$ $B_2$ Dn $D_4$ $_6$ पापकर्मणा, $B_4$ क्षुद्रकर्मिणा

**108** $^a$) $T_2$ G (except $G_1$) केशग्रहणमापन्ना — $^b$) $K_2$ परा, $Dn_2$ स्वसा, $D_1$ च सा (for वरा) S का नु जीवेत मादृशी — $^c$) $K_2$ $B_2$ Dn $D_1$ $_4$ $_6$ पाण्डुपुत्राणा (for इन्द्र)

**109** Before 109, T G ins वैश — $^{bc}$) A few MSS स° (for प्र), and कोप (for कोश°)

**110** $^b$) $B_1$ शुभदर्शनौ — $^c$) $D_2$ अभ्यषिंचत — $^d$) $S_1$ शोक°, $T_2$ $G_1$ मुख (for दुःख°)

**112** $K_3$ B D (except $D_{1-3}$) transp मधुसूदन (in $^b$) and न च बान्धवाः (in $^d$)

**113** $^b$) $Ś_1$ $D_{1-3}$ मर्षयति; $T_1$ $G_1$ $M_2$ उपेक्षसे, $T_2$ $G_{2-4}$ उपेक्षति, $M_1$ उपैक्षत $T_2$ G (except $G_1$) विशेषतः. — $^c$) $K_2$ B D (except $D_{1-3}$) च (for हि) — $^d$) $K_3$ यत्कर्ण (by transp), $B_1$ यच्छोक — After 113, N ($K_1$ $_4$ missing) ins

66* चतुर्भिः कारणैः कृष्ण त्वया रक्ष्यास्मि नित्यशः ।
सबन्धाद्गौरवात्सख्यात्प्रभुत्वेनैव केशव ।

[(L 1) $Ś_1$ कृत्वा (for कृष्ण) $Ś_1$ $K_3$ $D_{1-3}$ $_5$ त्रातव्यास्मि तवानघ ($S_1$ जनार्दन, $K_3$ $D_1$ त्वयानघ) (for the posterior half) — (L 2) $S_1$ $K_3$ $D_1$ $_3$ वशित्वाद् (for सबन्धाद्) $Ś_1$ $D_2$ $_3$ बधुत्वेन, $K_3$ $D_1$ वधूत्वेन (for प्रभुत्वेन) B (except $B_2$) Dc $D_{1-3}$ $_6$ च (for [ए]व)]

— Thereafter $B_2$ ins a colophon

**114** Before 114, all MSS except $M_2$ ($K_1$ $_4$ missing) ins वैश, $K_3$ B Dc Dn $D_{1-3}$ cont उवाच — $^a$) $K_2$ $B_2$ Dn $D_4$ $_6$ ताम्, $B_1$ $_3$ $_4$ $G_3$ [ए]ताम् (for [ए]नाम्) — After $114^{ab}$, $B_2$ $_4$ ins

67* द्रौपद्यास्तद्वचः श्रुत्वा क्रोधामर्षसमन्वितः ।;

while $B_3$ ins

68* सान्त्वयंश्च वरारोहां सुवाक्यैर्भरतर्षभ ।

Before $114^{cd}$, $K_2$ B D (except $D_{1-3}$ $_5$) ins वासुदेव ($B_3$ श्रीकृष्ण) उ° — $^c$) S (except $G_4$) [ऽ]प्येव (for ह्येव) — $^d$) $D_3$ यैराकृष्टा° (for येषां क्रुद्धा) $G_2$ $_4$ तु (for [अ]सि) $K_2$ $B_1$ $_4$ Dc $Dn_3$ $D_{4-6}$ भाविनि ($K_2$ °नी)

**115** $^a$) $K_3$ छिन्नांगान्; $D_1$ °सच्छिन्नान्; $G_2$ °निर्भिन्नान्, $G_4$ $M_1$ भिन्नागात्रान् — $^b$) $K_3$ तच्छोणितपरि° — $K_3$ om $115^{cd}$ — $^c$) $Ś_1$ द्रक्ष्यसि च तान्, $K_2$ $B_1$ $_2$ Dn $D_4$ $_6$ वल्लभान्वीक्ष्य, $B_3$ दुर्लभान्वीक्ष्य, $D_1$ $_2$ $_5$ जीवित त्यक्तान्; $D_3$ जीवितान्त्यक्त्वा — $^d$) S धरणी (for वसुधा°) $D_1$ $_2$ $_6$ ins after 115 $K_3$ (which om. $115^{cd}$) ins after $115^{ab}$

निहताञ्जीवितं त्यक्त्वा शयानान्वसुधातले ॥ ११५
यत्समर्थं पाण्डवानां तत्करिष्यामि मा शुचः ।
सत्यं ते प्रतिजानामि राज्ञां राज्ञी भविष्यसि ॥ ११६
पतेद् द्यौर्हिमवाञ्शीर्येत्पृथिवी शकलीभवेत् ।
शुष्येत्तोयनिधिः कृष्णे न मे मोघं वचो भवेत् ॥ ११७
धृष्टद्युम्न उवाच ।
अहं द्रोणं हनिष्यामि शिखण्डी तु पितामहम् ।
दुर्योधनं भीमसेनः कर्णं हन्ता धनंजयः ॥ ११८
रामकृष्णौ व्यपाश्रित्य अजेयाः स्म शुचिस्मिते ।
अपि वृत्रहणा युद्धे किं पुनर्धृतराष्ट्रजैः ॥ ११९
वैशंपायन उवाच ।
इत्युक्तेऽभिमुखा वीरा वासुदेवमुपस्थिताः ।
तेषां मध्ये महाबाहुः केशवो वाक्यमब्रवीत् ॥ १२०

इति श्रीमहाभारते आरण्यकपर्वणि त्रयोदशोऽध्यायः ॥ १३ ॥

# १४

वासुदेव उवाच ।
नेदं कृच्छ्रमनुप्राप्तो भवान्स्याद्वसुधाधिप ।
यद्यहं द्वारकायां स्यां राजन्संनिहितः पुरा ॥ १
आगच्छेयमहं द्यूतमनाहूतोऽपि कौरवैः ।

---

69* स्व श्रोष्यस्यनवद्याङ्गि दुर्योधनमुखान्रिपून् ।

**116** a) T G M1 यत्समक्ष M2 यथा द्रक्ष्यसि पाचाली — b) A few MSS शुच (for शुचः) — d) T1 M राज्ञो राज्ञी

**117** d) Ś1 K3 D1-3 5 मिथ्या (for मोघ) — N (K1 4 missing) ins after 117 (Ś1 K3 D1-3 however read line 1 after 118)

70* तच्छ्रुत्वा द्रौपदी वाक्य प्रतिवाक्यमथाच्युतात् ।
साचीकृतमवैक्षत्सा पाञ्चाली मध्यम पतिम् ।
आबभाषे महाराज द्रौपदीमर्जुनस्तदा ।
मा रोदी शुभताम्राक्षि यदाह मधुसूदन ।
तथा तद्भविता देवि नान्यथा वरवर्णिनि ।

[ (L 1) K3 अथोच्युतात्, B1 D1 अथाच्युत, D3 अथोचत — B Dc D4-6 om line 2 — (L 3) S1 तत कृष्णां, K3 D2 तदा कृष्णा, D1 3 तथा कृष्णा (for महाराज) Ś1 K3 D1-3 अर्जुन प्रहसन्निव (for the posterior half) — (L 4) D3 शुचि° (for शुभ°) Ś1 K3 D1-3 यथाह वरवर्णिनी (Ś1 °नि), Dc2 यथाह मधुसूदन — (L 5) Ś1 K3 D1-3 कृष्णोय तत्तथा (D3 कृष्णो जनार्दनो) देवि (for the prior half) S1 K3 D1-3 चारुलोचने (for वर°) ]

**118** After 118, S1 K3 D1-3 ins line 1 of 70*, while D5 ins

71* शकुनिं स्वक्षकितव माद्रीपुत्रो हनिष्यति ।

**119** a) S1 उपा°, K3 D3 G1 M2 समा°, D1 3 व्युपा° (for व्यपा°) — b) S1 K3 D1 2 ह्यजेया स, Dc विजेया स, D3 अजेयोस्मि, T2 G अजेयांश्च, M1 अजय्या स K3 B D (except D1-3) रणे स्वस (for शुचि°) — cd) D3 T2 G (except G1) वृत्रहण T2 G (except G1) °राष्ट्रजान्

**120** Ś1 K3 D2 3 T G2-4 M om the ref — a) D3 S इत्युक्त्वा — b) B Dn1 उपास्थिता, D1 उपाश्रिता, T2 G (except G1) उपागता

Colophon K1 4 missing — *Major parvan* S1 T G2 4 M2 आरण्य, D4 अरण्यक — *Adhy name* B1 3 4 Dc वासुदेवागमन (Dc1 °वाभिगमन), D1 2 द्रौपदी वाक्य, D5 वासुदेवागम , T2 G3 4 M वासुदेव (M1 केशव) प्रतिज्ञा — *Adhy no* (figures, words or both) Dn S 12, D1 13 (as in text) — *Śloka no* Dn 135, D1 128, D6 132

## 14

☞ This adhy is missing in K1 4 (cf v l 3 1 1), the MSS are mostly ignored here

**1** Before the ref, G4 ins श्रीकृष्णाय नम S1 B2 D2 श्री (D2 om श्री) कृष्ण उ° (S1 om उ°), D1 भगवानुवाच, T1 श्रीभगवान् — a) K2 B D (except D1-3) नैतत् (B2 नैव) (for नेद)

**2** d) K3 D1-3 तथा (for राज्ञा)

**3** b) T1 G (except G3) M1 बहुदोषान् S1 K3 D3

आम्बिकेयेन दुर्धर्ष राज्ञा दुर्योधनेन च ॥ २
वारयेयमहं द्यूतं बहून्दोषान्प्रदर्शयन् ।
भीष्मद्रोणौ समानाय्य कृपं बाह्लीकमेव च ॥ ३
वैचित्रवीर्यं राजानमलं द्यूतेन कौरव ।
पुत्राणां तव राजेन्द्र त्वन्निमित्तमिति प्रभो ॥ ४
तत्र वक्ष्याम्यहं दोषान्यैर्भवानवरोपितः ।
वीरसेनसुतो यैश्च राज्यात्प्रभ्रंशितः पुरा ॥ ५
अभक्षितविनाशं च देवनेन विशां पते ।
सातत्यं च प्रसङ्गस्य वर्णयेयं यथातथम् ॥ ६
स्त्रियोऽक्षा मृगया पानमेतत्कामसमुत्थितम् ।
व्यसनं चतुष्टयं प्रोक्तं यैः राजन्भ्रश्यते श्रियः ॥ ७
तत्र सर्वत्र वक्तव्यं मन्यन्ते शास्त्रकोविदाः ।
विशेषतश्च वक्तव्यं द्यूते पश्यन्ति तद्विदः ॥ ८
एकाह्ना द्रव्यनाशोऽत्र ध्रुवं व्यसनमेव च ।
अभुक्तनाशश्चार्थानां वाक्पारुष्यं च केवलम् ॥ ९
एतच्चान्यच्च कौरव्य प्रसङ्गि कटुकोदयम् ।
द्यूते ब्रूयां महाबाहो समासाद्याम्बिकासुतम् ॥ १०
एवमुक्तो यदि मया गृह्णीयाद्वचनं मम ।
अनामयं स्याद्धर्मस्य कुरूणां कुरुनन्दन ॥ ११
न चेत्स मम राजेन्द्र गृह्णीयान्मधुरं वचः ।
पथ्यं च भरतश्रेष्ठ निगृह्णीयां बलेन तम् ॥ १२
अथैनानभिनीयैवं सुहृदो नाम दुर्हृदः ।
सभासदश्च तान्सर्वान्भेदयेयं दुरोदरान् ॥ १३
असांनिध्यं तु कौरव्य ममानर्तेष्वभूत्तदा ।

---

प्रकीर्तयन् — $^{c}$) D1 3 समानाय्य, T2 G (except G1) °नीय, M2 भाय्य — $^{d}$) S1 D1–3 बाह्लिकम्

**4** $^{b}$) D5m T1 G4 अह (for अल)

**5** $^{a}$) K2 B1 3 Dn D4 6 [आ]चक्षमह, D2 [आ]चक्षन्महा, D3 [आ]चक्षामहे — $^{b}$) Ś1 K3 D5 व्यवरोपित°, K2 B Dc Dn D4 व्यति (B4 अभि), D1 3 व्यप, D2 उपतापित°, D6 प्रतिरो (for अवरो) — $^{c}$) K2 B1 3 Dn D2 4 6 तु (for च) — $^{d}$) D1 3 प्रध्वसित° पुरा — After 5, M2 ins

72* पुष्करेण नरेन्द्रेण तांश्च वक्ष्यामि तस्य वै ।

**6** $^{a}$) S1 अभ्यर्थित, K2 3 B Dc Dn D3–6 अतर्कित- (K3 D3 °तो), D1 असूक्षिति, D2 अलक्षित-, T1 अभक्ष्यत, T2 G2–4 अह क्षिति, G1 अहक्षित (sic), M1 अभिक्षित, M2 अभिक्षत [Text reading अभक्षित (cf 9$^{c}$) was found in a Telugu MS (No 155) borrowed from Yadugiri Yatiraj Math and in a Malayalam MS (No 927) borrowed from Paliyam Library, both MSS being collated for the entire Āranyaka but not included in our apparatus The reading has been adopted also by Prof P P S Sastri in his edition of the Southern Recension (vol. IV, part 1 p 76), *apparently* supported by the unanimous evidence of all his MSS !] N -विनाशश्च — $^{c}$) S स्वास्थ्य (G1 अस्वास्थ्य, M2 सातत्य) द्यूतसगस्य

**7** $^{b}$) Dc काम, D5 काल (m स्याज्य) (for काम) D4 -समुपस्थित, D6 उपस्थित (for समुत्थितम्) — K3 om 7$^{c}$–8$^{d}$, T2 G3 om 7$^{c}$–9$^{d}$ — $^{c}$) Hypermetric ! Ś1 K2 B D दुःख (for व्यसन) — $^{d}$) Ś1 D1 2 M2 क्षय, K3 B Dc Dn D4–6 नरो, D3 हय, G1 राज्याद्, M1 राजा (for राजन्)

**9** T2 G3 om 9 (cf v l 7), T1 G (G3 om) M1 transp 8$^{cd}$ and 9$^{ab}$ — $^{a}$) K3 B Dn2 n3 D4 6 G1 एकाहाद् (for एकाह्ना) — $^{c}$) G2 4 नाश (for °नाशश्च) M2 आत्मनाशो भवेत्तूर्णं

**10** $^{a}$) S अविश्वास्यमनर्थं (G1 °र्थ्य) च — $^{b}$) Dc S प्रसंगे — $^{c}$) D1 °भाग, D2 °राज (for बाहो)

**11** $^{c}$) D2 अनामयश्च Ś1 B Dn D2–4 6 G1 धर्मश्च, Dc धर्मज्ञ — $^{d}$) K2 B1 3 4 D (except D1–3) कुरुवर्धन, B2 मानवर्धन

**12** $^{a}$) T1 M1 तन्; G1 त (for स) T G2–4 न चेन्मम महाराज — $^{b}$) K2 D2 गृहीत (sic), D3 गृह्णीते S1 K3 D1–3 वचन हित (for मधुर वच) — $^{c}$) S1 K2 D1 2 तथ्य च

**13** $^{a}$) D6 (before corr ) अपनीतेन, and (by corr ) अवनीपालान्, T2 G (except G2) अविनीयैव; M अनु(M2 °प)नीयैव (for अभिनीयैव) S1 K2 B Dc Dn D4 6 अथैनमपनीतेन, K3 D1–3 ये चैनमन्ववर्तत (K3 प्रतीसेन) — $^{c}$) Ś1 K3 D2 3 °सदश्च सर्वांस्तान्, K2 B Dc Dn D4–6 °सदोनुवर्तेरन् — $^{d}$) Ś1 K3 D1–3 अथ सर्वान्, K2 B Dn D4 6 तांश्च हन्या, Dc D5 तांश्चहन्या (for भेदयेय) S दुरोदरात् — After 13, D1 ins

73* सर्वांस्तानुगृह्णीम बद्ध्वा पाशैस्तु वारुणैः ।

**14** $^{a}$) Ś1 K3 D1–3 T1 कौंतेय (for कौरव्य) — $^{b}$)

येनेदं व्यसनं प्राप्ता भवन्तो द्यूतकारितम् ॥ १४
सोऽहमेत्य कुरुश्रेष्ठ द्वारकां पाण्डुनन्दन ।
अश्रौषं त्वां व्यसनिनं युयुधानाद्यथातथम् ॥ १५
श्रुत्वैव चाहं राजेन्द्र परमोद्विग्नमानसः ।
तूर्णमभ्यागतोऽस्मि त्वां द्रष्टुकामो विशां पते ॥ १६
अहो कृच्छ्रमनुप्राप्ताः सर्वे स्म भरतर्षभ ।
ये वयं त्वां व्यसनिनं पश्यामः सह सोदरैः ॥ १७

इति श्रीमहाभारते आरण्यकपर्वणि चतुर्दशोऽध्यायः ॥ १४ ॥

## १५

युधिष्ठिर उवाच ।
असांनिध्यं कथं कृष्ण तवासीद्वृष्णिनन्दन ।
क्व चासीद्विप्रवासस्ते किं वाकार्षीः प्रवासकः ॥ १
कृष्ण उवाच ।
शाल्वस्य नगरं सौभं गतोऽहं भरतर्षभ ।
विनिहन्तुं नरश्रेष्ठ तत्र मे शृणु कारणम् ॥ २
महातेजा महाबाहुर्यः स राजा महायशाः ।
दमघोषात्मजो वीरः शिशुपालो मया हतः ॥ ३
यज्ञे ते भरतश्रेष्ठ राजसूयेऽर्हणां प्रति ।
स रोषवशसंप्राप्तो नामृष्यत दुरात्मवान् ॥ ४
श्रुत्वा तं निहतं शाल्वस्तीव्ररोषसमन्वितः ।
उपायाद्द्वारकां शून्यामिहस्थे मयि भारत ॥ ५
स तत्र योधितो राजन्बालकैर्वृष्णिपुंगवैः ।
आगतः कामगं सौभमारुह्यैव नृशंसकृत् ॥ ६

---

$D_5$ समये मे स्वभूत्तदा

**15** a) $K_3$ $D_c$ [ऽ]यम् (for ऽहम्) $Ś_1$ $K_3$ $D_c$ $D_{1-3}$ $_5$ अद्य (for एत्य) — b) $Ś_1$ $K_3$ $D_2$ एत्य भारत, $D_{c1}$ यदुनदन॰, $D_{c2}$ कुरुनदन, $D_1$ एत्य सत्वर॰, $D_3$ अभि भारत (for पाण्डु॰) — c) $Ś_1$ $M_2$ स्वा (for त्वा)

**16** b) $T_1$ $G_4$ परमुद्विग्न॰ — d) $K_3$ $D_1$ $_3$ S (except $G_1$) महीपते, $D_2$ यथातथ

**17** b) $T_1$ च, $G_3$ ते (for स्म) — cd) $T_2$ $G_2$ ते (for ये) N यो($S_1$ $K_3$ Dn $D_1$ $_2$ $_4$ $_5$ सो)हं त्वा व्यसने मग्न पश्यामि etc

Colophon $K_1$ $_4$ missing — *Major parvan* $Ś_1$ T $G_{2-4}$ आरण्य; $D_4$ अरण्यक — *Adhy name* $K_2$ $B_2$ $D_{n1}$ $n_3$ $D_4$ $_6$ वासुदेवसमागम॰, $B_1$ $_3$ $_4$ $D_c$ $D_1$ $_2$ कृष्ण ($D_2$ श्रीकृष्ण)वाक्य, $D_5$ $T_2$ $G_3$ $_4$ M वासुदेव($M_1$ केशव)-वाक्य — *Adhy no* (figures, words or both) Dn ($D_{n1}$ *sup lin*) S 13, $D_1$ 14 (as in text) — *Śloka no* Dn 17, $D_1$ 18

## 15

☞ This adhy is missing in $K_1$ $_4$ (cf v l 3 1 1), the MSS are mostly ignored here

**1** d) $D_c$ $D_{n1}$ $n_3$ $D_{2-4}$ $G_4$ चा॰, $T_1$ त्वा॰ (for वा॰) $K_2$ B Dn $D_{4-6}$ $T_2$ G प्रवास($G_3$ ॰सि)त॰, $D_3$ ॰सग॰

**2** $K_3$ $D_2$ $_3$ $M_2$ वासुदेव, $D_1$ $T_1$ $M_1$ भगवान् (for कृष्ण) — a) Here and below S (generally) shows the spelling साल्व॰ (for शाल्व) — b) $D_3$ $T_1$ $G_3$ $_4$ पुरुषर्षभ — c) S (except $M_2$) नृप॰ (for नर॰) $K_2$ B D (except $D_{1-3}$) निहंतुं कौरव($B_2$ $_3$ भरत)श्रेष्ठ, $K_3$ अभव पुरुषश्रेष्ठ — d) S (except $G_4$) transp तत्र and शृणु

**3** a) $K_3$ S महाबाहो ($M_2$ ॰कायो) — b) $Ś_1$ $M_2$ स च (for य॰ स)

**4** b) $K_3$ $B_1$ $_3$ $D_1$ $_3$ $T_1$ $G_3$ $_4$ [ऽ]र्हेण — c) $K_2$ $B_2$ $_3$ $D_c$ Dn $D_2$ $_{4-6}$ ॰वशमापन्नो ($B_{3m}$ ॰वशता प्राप्तो) $D_3$ स तु रोषवश प्राप्तो; $T_1$ $G_1$ M सरोष इव सम्प्राप्तो; $T_2$ $G_{2-4}$ स रोषमभिसम्प्राप्तो

**5** a) $Ś_1$ $K_3$ $D_1$ $_3$ तु, $D_3$ [ए]व (for त) — b) S (except $M_2$) ॰कोप॰ (for ॰रोष॰)

**6** a) $K_2$ $D_4$ $_6$ तत्रायोधितो $S_1$ $K_3$ $D_1$ $_3$ वीरै, $D_3$ बालै (for राजन्) $G_1$ स तत्र युद्धमकरोत् — b) $K_2$ B $D_c$ Dn $D_{4-6}$ कुमारैर् (for बालकैर्) $D_3$ वृष्णिभी राजपुगवै — c) S निवृत्त॰ (for आगत॰) — d) Dn $D_4$ आहत्य (for आरुह्य) $K_2$ $B_1$ $_4$ $D_c$ Dn $D_2$ $_4$ $_5$ $G_1$ [ए]व, $K_3$ $D_6$ [ए]न (for [ए]व) $K_2$ Dn $D_4$ $_6$ T G नृशम्सवत् — After

ततो वृष्णिप्रवीरांस्तान्बालान्हत्वा बहूंस्तदा ।
पुरोद्यानानि सर्वाणि भेदयामास दुर्मतिः ॥ ७
उक्तवांश्च महाबाहो क्वासौ वृष्णिकुलाधमः ।
वासुदेवः सुमन्दात्मा वसुदेवसुतो गतः ॥ ८
तस्य युद्धार्थिनो दर्पं युद्धे नाशयितास्म्यहम् ।
आनर्ताः सत्यमाख्यात तत्र गन्तास्मि यत्र सः ॥ ९
तं हत्वा विनिवर्तिष्ये कंसकेशिनिषूदनम् ।
अहत्वा न निवर्तिष्ये सत्येनायुधमालभे ॥ १०
क्वासौ क्वासाविति पुनस्तत्र तत्र विधावति ।
मया किल रणे युद्धं काङ्क्षमाणः स सौभराट् ॥ ११
अद्य तं पापकर्माणं क्षुद्रं विश्वासघातिनम् ।
शिशुपालवधामर्षाद्गमयिष्ये यमक्षयम् ॥ १२
मम पापस्वभावेन भ्राता येन निपातितः ।
शिशुपालो महीपालस्तं वधिष्ये महीतले ॥ १३
भ्राता बालश्च राजा च न च संग्राममूर्धनि ।
प्रमत्तश्च हतो वीरस्तं हनिष्ये जनार्दनम् ॥ १४
एवमादि महाराज विलप्य दिवमास्थितः ।
कामगेन स सौभेन क्षिप्त्वा मां कुरुनन्दन ॥ १५
तमश्रौषमहं गत्वा यथा वृत्तः सुदुर्मतिः ।
मयि कौरव्य दुष्टात्मा मार्तिकावतको नृपः ॥ १६
ततोऽहमपि कौरव्य रोषव्याकुललोचनः ।
निश्चित्य मनसा राजन्वधायास्य मनो दधे ॥ १७
आनर्तेषु विमर्दं च क्षेपं चात्मनि कौरव ।
प्रवृद्धमवलेपं च तस्य दुष्कृतकर्मणः ॥ १८
ततः सौभवधायाहं प्रतस्थे पृथिवीपते ।
स मया सागरावर्ते दृष्ट आसीत्परीप्सता ॥ १९
ततः प्रध्माप्य जलजं पाञ्चजन्यमहं नृप ।
आहूय शाल्वं समरे युद्धाय समवस्थितः ॥ २०
सुमुहूर्तमभूद्युद्धं तत्र मे दानवैः सह ।
वशीभूताश्च मे सर्वे भूतले च निपातिताः ॥ २१

---

6, S (except $M_{2}$) ins

74* चिरजीवी नृप सोऽपि प्रसादात्पद्मजन्मन ।

**8** $^{c}$) $Ś_{1}$ Dn $G_{1}$ स (for सु)

**9** $^{b}$) S विन (for नाश°) $K_{3}$ हि (for [अ]स्मि) $K_{2}$ $B_{2-4}$ $D_{4\,6}$ ह (for [अ]हम्)

**10** $T_{2}$ $G_{3}$ $M_{1}$ om (hapl) $10^{bc}$ — $^{b}$) $Ś_{1}$ शिशुपालनिपूदन, $D_{3}$ कृष्ण देवकिनदन, some MSS °निसूदन — $^{c}$) $Ś_{1}$ $K_{3}$ $D_{1\,2}$ नाहत्वा विनि

**11** $^{b}$) $K_{2}$ B D (except $D_{2\,3}$) $M_{2}$ प्र (for वि) — $^{c}$) Dn $D_{4\,6}$ S योद्धु (for युद्ध)

**12** $^{a}$) $Ś_{1}$ $K_{3}$ $D_{1\,2}$ [अ]ह (for त) — $^{b}$) Dc $D_{3}$ क्रुद्ध $K_{3}$ $D_{3}$ S विश्वस्तघातिन — $K_{3}$ om (hapl) from वधा° up to शिशुपालो (in $13^{c}$)

**13** $K_{3}$ om up to शिशुपालो (of v l 12) — $^{a}$) Dc गोप (for पाप) — $^{c}$) $Ś_{1}$ $D_{1\,2}$ महावीर्यस्, $K_{3}$ महाशत्रुस् (for मही) — $^{d}$) $Ś_{1}$ $K_{3}$ $D_{1\,2}$ हनि° (for वधि°) $Ś_{1}$ $K_{3}$ $D_{1\,2}$ महाहवे, $K_{2}$ B $Dn_{2}$ $n_{3}$ $D_{4\,6}$ महीपते, $D_{3}$ जनार्दन

**14** $D_{3}$ om (hapl) 14 — $^{b}$) $D_{1\,2}$ मम (for न च) $S_{1}$ पूर्वविद्, S °कोविद (for मूर्धनि) — $^{d}$) $T_{1}$ $M_{1}$ वधिष्ये

**15** After 15 $D_{1\,2}$ ins

75* गत कौरव्य दुष्टात्मा मार्तिकावतिको नृप ।
[= (var) $16^{cd}$]

**16** $D_{3}$ transp $16^{ab}$ and $16^{cd}$ — $^{a}$) $Ś_{1}$ $D_{1-3}$ हतो (for अह) — $^{b}$) $Ś_{1}$ $K_{3}$ $B_{1\,2}$ $Dn_{1}$ $D_{2\,3\,6}$ $T_{1}$ $M_{1}$ स (for सु-) — $^{d}$) A few MSS मार्तिकावतिको Several MSS नृप

**17** $M_{1}$ transp 17 and 18 — $^{a}$) $T_{2}$ $G_{2\,3}$ अथ (for अपि) — $^{b}$) $Ś_{1}$ °चेतन, $K_{2}$ B D (except $D_{1-3}$) °मानस — $^{c}$) $T_{2}$ $G_{3\,4}$ निश्चित

**19** $^{b}$) $Ś_{1}$ $D_{1\,3}$ $T_{1}$ $M_{1}$ प्रस्थित (for प्रतस्थे) — $^{c}$) $K_{3}$ तन्, $G_{2}$ $M_{2}$ त (for स) $K_{3}$ सागराभ्यासे, S सागरोपाते — $^{d}$) $B_{4}$ Dc $T_{2}$ $G_{3}$ परीप्सया, $D_{1\,3}$ °प्सुना $K_{3}$ दृष्टमासीत्पुर पुरा

**20** $^{a}$) $Ś_{1}$ $K_{2}$ $M_{1}$ प्रध्मा($Ś_{1}$ °घ्मा)य $G_{2}$ प्रध्माप्य जलज शङ्ख — $^{c}$) $D_{3}$ आसाद्य (for आहूय) $Ś_{1}$ $K_{3}$ $D_{1-3}$ transp शाल्व and समरे — $^{d}$) $Ś_{1}$ $K_{2\,3}$ $T_{1}$ समुपस्थित

**21** $^{a}$) $K_{2}$ B Dn $D_{4\,6}$ T $G_{2-4}$ $M_{1}$ तन् (for सु-) Dc $D_{1\,5}$ $G_{1}$ मुहूर्तमभवद्युद्ध — $^{c}$) $T_{2}$ $G_{3}$ शयी°, $G_{1}$ $M_{1}$ शवी, $G_{2}$ क्षयी, $G_{4}$ वधी° (for वशी°) $D_{1}$ $T_{1}$ $G_{2\,4}$ $M_{1}$ ते (for मे) — $^{d}$) $K_{3}$ $D_{5}$ वि-, $T_{2}$ G (except $G_{1}$) तु (for च)

**22** $^{a}$) $D_{1}$ कृत्वा; $G_{1}$ कृत (for कार्य) Dc महाराज

एतत्कार्यं महाबाहो येनाहं नागमं तदा । श्रुत्वैव हास्तिनपुरं द्यूतं चाविनयोत्थितम् ॥ २२

इति श्रीमहाभारते आरण्यकपर्वणि पञ्चदशोऽध्यायः ॥ १५ ॥

# १६

युधिष्ठिर उवाच ।
वासुदेव महाबाहो विस्तरेण महामते ।
सौभस्य वधमाचक्ष्व न हि तृप्यामि कथ्यतः ॥ १
वासुदेव उवाच ।
हतं श्रुत्वा महाबाहो मया श्रौतश्रवं नृपम् ।
उपायाद्भरतश्रेष्ठ शाल्वो द्वारवतीं पुरीम् ॥ २
अरुन्धत्तां सुदुष्टात्मा सर्वतः पाण्डुनन्दन ।
शाल्वो वैहायसं चापि तत्पुरं व्यूह्य विष्ठितः ॥ ३
तत्रस्थोऽथ महीपालो योधयामास तां पुरीम् ।
अभिसारेण सर्वेण तत्र युद्धमवर्तत ॥ ४
पुरी समन्ताद्विहिता सपताका सतोरणा ।
सचक्रा सहुडा चैव सयन्त्रखनका तथा ॥ ५
सोपतल्पप्रतोलीका साट्टाट्टालकगोपुरा ।
सकचग्रहणी चैव सोल्कालातावपोथिका ॥ ६
सोष्ट्रिका भरतश्रेष्ठ सभेरीपणवानका ।
समित्तृणकुशा राजन्सशतघ्नीकलाङ्गला ॥ ७

---

— $^{b}$) T1 M नागत॰, G1 ह्यागत॰ S पुरा (for तदा) — $^{c}$) D3 5 S ह(D3 5 G1 हा)स्तिनपुरे — $^{d}$) D5 T2 G (except G1) चाप्यनयो॰, D6 चाविनये स्थित — After 22, K2 B Dc Dn D2 4-6 ins

76* द्रुतमागतवान्युष्मान्द्रष्टुकाम॰ सुदु॰खितान् ।,

while D1 ins

77* श्रुत्वैव तत्क्षण वेगादागतोऽह नराधिप ।

Colophon om in B1 4 Dc K1 4 missing — *Major parvan* Ś1 T G2-4 आरण्य — *Sub parvan* Ś1 Dn D4 6 T2 G2-4 M2 (all om sub parvan name) mention only सौभवध, B2 D5 likewise only शाल्ववध, and B3 only सौभवधोपाख्यान — *Adhy name* D2 शाल्वगर्जन, T3 G3 4 वासुदेवसान्निध्यकथन — *Adhy no* (figures, words or both) Dn S 14, D1 15 (as in text) — *Śloka no* Dn2 n3 D6 22, Dn1 D1 23

## 16

☞ This adhy is missing in K1 4 (cf v l 3 1 1), the MSS are mostly ignored here

**1** $^{b}$) S (except M2) महाद्युते — $^{d}$) Ś1 कथ्यति, K3 D1 T G M1 कथ्यता, D2 केशव M2 न हि मे तृप्यते मन॰

**2** Ś1 B2 D5 T2 G श्रीकृष्ण, D1 T1 M1 श्रीभगवान् (for वासुदेव॰) — $^{b}$) B Dc Dn1 n2 D2 3 G1 नृप D1 दमघोषसुत नृप, T1 शिशुपाल मया रणे

**3** $^{a}$) Ś1 K3 Dn2 अरुधद्, G (except G3) M अ(M2 न्य)रुणत् K3 D1 3 5 6 M1 स, M2 तु (for सु) — $^{d}$) G3 वीक्ष्य (for व्यूह्य) Ś1 वेष्टित, K2 3 B1-3 Dn D1-3 5 धिष्ठित॰, B4 T1 G1 तिष्ठति (G1 ॰त)

**4** $^{a}$) T G तत्र सोथ (G1 सौध) Ś1 K3 D1-3 G1 M1 महीपाल, M2 महाराज — $^{b}$) T1 रोधयामास

**5** $^{c}$) B2 सहुला (m सगजा), B3 D4 T2 (after corr) G3 सगुडा, Dc1 सतृणा, Dc2 D6 समुदा, D3 सध्वजा, D5 (m as in text) सगदा, T1 बहुला, T2 (before corr) G1 2 4 M सहुला (for सहुडा)

**6** $^{a}$) Ś1 ॰तप्त॰, K2 B Dn D4 6 ॰शल्य॰, G1 ॰कल्प॰ (for ॰तल्प॰) — $^{b}$) T1 प्रासादाट्टालगोपुरा, G2 4 साट्टालकसगोपुरा — $^{c}$) N (except K3, K1 4 missing) T1 सचक्र (for सकच॰) Ś1 ॰ग्राहणी, T1 G4 M2 ॰ग्रहिणी — In Dc1 the portion of the text from 6$^{c}$ up to 3 17 3$^{a}$ is lost on a missing fol, the MS is ignored up to the end of the lacuna — $^{d}$) S सोल्कापाता (M2 सोल्का चैव) सपोथिका

**7** $^{a}$) S1 D3 सोष्ट्रीका, B4 D5 सोष्णि(D5 ॰ष्णी)का, Cnp सर्ष्टिका — $^{c}$) K2 3 m B Dc2 Dn D4-6 सतोमराकुशा, D3 सयदृणाकुशा, S साष्टिका सा(G1 श्रा)कुशा B3 चैव (for राजन्) — $^{d}$) D3 M सशतघ्नी सलागला

सशुण्ड्यश्मलगुडा सायुधा सपरश्वधा ।
लोहचर्मवती चापि साग्निः सहुडशृङ्गिका ॥ ८
शास्त्रदृष्टेन विधिना संयुक्ता भरतर्षभ ।
द्रव्यैरनेकैर्विविधैर्गदसाम्बोद्धवादिभिः ॥ ९
पुरुषैः कुरुशार्दूल समर्थैः प्रतिबाधने ।
अभिख्यातकुलैर्वीरैर्दृष्टवीर्यैश्च संयुगे ॥ १०
मध्यमेन च गुल्मेन रक्षिता सारसंज्ञिता ।
उत्क्षिप्तगुल्मैश्च तथा हयैश्चैव पदातिभिः ॥ ११
आघोषितं च नगरे न पातव्या सुरेति ह ।
प्रमादं परिरक्षद्भिरुग्रसेनोद्धवादिभिः ॥ १२
प्रमत्तेष्वभिघातं हि कुर्याच्छाल्वो नराधिपः ।
इति कृत्वाप्रमत्तास्ते सर्वे वृष्ण्यन्धकाः स्थिताः ॥ १३
आनर्ताश्च तथा सर्वे नटनर्तकगायनाः ।
बहिर्विवासिताः सर्वे रक्षद्भिर्वित्तसंचयान् ॥ १४
संक्रमा भेदिताः सर्वे नावश्च प्रतिषेधिताः ।
परिखाश्चापि कौरव्य कीलैः सुनिचिताः कृताः ॥ १५
उदपानाः कुरुश्रेष्ठ तथैवाप्यम्बरीषकाः ।
समन्तात्क्रोशमात्रं च कारिता विषमा च भूः ॥ १६
प्रकृत्या विषमं दुर्गं प्रकृत्या च सुरक्षितम् ।
प्रकृत्या चायुधोपेतं विशेषेण तदानघ ॥ १७
सुरक्षितं सुगुप्तं च सर्वायुधसमन्वितम् ।
तत्पुरं भरतश्रेष्ठ यथेन्द्रभवनं तथा ॥ १८
न चामुद्रोऽभिनिर्याति न चामुद्रः प्रवेश्यते ।
वृष्ण्यन्धकपुरे राजंस्तदा सौभसमागमे ॥ १९
अनु रथ्यासु सर्वासु चत्वरेषु च कौरव ।
बलं बभूव राजेन्द्र प्रभूतगजवाजिमत् ॥ २०

---

**8** $^a$) $K_2$ $B_{1\,3\,4}$ Dn $D_{4-6}$ समुशुंड्यश्मगुडका, $K_3$ $D_{1\,2}$ समुसढी ($D_1$ मुषढी, $D_2$ °मुकुठी) सलगुडा ; $D_3$ स तु सिंहस्वनभरा, S समुसु($G_2$ °स-, M °स्र)ठी सासिधारा — $^b$) $K_3$ $Dc_1$ $Dn_1$ $D_{1-5}$ °स्वधा, $T_2$ G (except $G_4$) °श्रया (for °श्वधा) — $^c$) A few MSS °वर्म° (for °चर्म°) $D_1$ साग्नि (for चापि) — $^d$) $K_2$ सगोल°, $B_1$ सपट°, $B_2$ सवहु°, $B_3$ $Dc_1$ Dn $D_{4-6}$ सगुड°, $D_5$ साकुल°, S सहुळ° ($T_1$ समुल, $M_2$ स्वगळ) (for सहुड°) $D_1$ सहुडश्टंगिका तथा

**9** $^b$) $Ś_1$ सयुक्ता, $K_{2\,3}$ B $Dn_{1}$ $n_3$ $D_{3\,4-6}$ सुयुक्ता — $^c$) $K_2$ B $Dc_1$ Dn $D_{4-6}$ रथैर्, S द्रव्यैर् ($M_2$ तूर्यैर्) (for द्रव्यैर्) — $^d$) $K_3$ $D_5$ गदसाम्बोल्मुकादिभि, $T_1$ गदाप्रासासियोधिभि

**10** $M_2$ om (hapl) 10–11 — $^a$) $T_1$ G (except $G_3$) $M_1$ राज° (for कुरु°) $D_1$ पुरुषै शार्दूलदर्पाभै (hypermetric!) — $^b$) S ($M_2$ om) समतात् (for समर्थैः) $K_2$ प्रतिचारणे, Dn $D_{4-6}$ °वारणे, $D_1$ °योधित°, $D_2$ °योधने, $D_3$ योधनै, $T_1$ $M_1$ परिवारिता, $T_2$ G परिपालिता — $^c$) $Ś_1$ $B_4$ $Dc_1$ Dn $D_{4-6}$ $T_2$ $G_3$ असि-, $K_2$ अवि (for अभि) S गुणैर् (for कुलैर्)

**11** $M_2$ om 11 (cf v l 10) — $^b$) $K_3$ सारसहिते ; S सा पुरी तदा $K_2$ $B_{2\,4}$ Dn $D_{4-6}$ रक्षिभि सा सु($B_4$ साधु)रक्षिता — $^{cd}$) $Ś_1$ $T_1$ $G_1$ तदा, $Dc_1$ ततो, $T_2$ $G_{2-4}$ हयं (for तथा) $D_5$ गुल्मैश्च ततो $D_5$ ध्वजैश, $T_2$ $G_{2-4}$ रथैश्च (for हयैश्च) N (except $D_3$) $T_1$ $G_1$ $M_1$ च स (for चैव) $K_2$ $B_3$ Dn $D_{4-6}$ -पताकिभि° (for पदातिभि)

**12** $^b$) $K_3$ B $Dc_2$ Dn $D_{4-6}$ वै, $D_3$ च, $T_1$ हि (for ह) — $K_2$ om $12^c$–$13^b$

**14** $^a$) $D_3$ अनरण्यास्, $T_1$ $M_1$ आनर्तैश्च, $G_1$ आगताश्च $Dc_2$ $D_5$ तत सर्वै — $^b$) $K_2$ $B_{1\,4}$ Dn $D_{4-6}$ $G_4$ नटा (for नट-) $D_2$ $T_1$ $G_2$ -नर्तन (for -नर्तक) $K_2$ S (except $T_2$ $G_3$) -गायका° — $^c$) $K_2$ B D (except $D_2$) $M_2$ निवासिता° ($B_2$ नि°सारिता°) $K_2$ B $Dc_2$ Dn $D_{4-6}$ क्षिप्र, $M_2$ चैव (for सर्वे) — $^d$) $B_2$ $T_1$ $G_{2\,4}$ रक्षिभिर् $K_2$ $Dc_2$ Dn $D_{4-6}$ $G_1$ $M_2$ सचय

**15** $^d$) $D_3$ सु (for सु-) $K_3$ कीलकै सुचिता° कृता°, S कीलकै सुनिकीलिता°

**16** $^a$) $M_1$ च कौरव्य (for कुरुश्रेष्ठ) — $^b$) $K_3$ च (for [ए]व) T $G_{2-4}$ $M_1$ तथा ($G_4$ दा) वाप्य° करीषका°, $G_1$ तदा वाप्य° क्षितास्तदा, $M_2$ तथा वाप्याश्च शोधिता° — $^d$) $Ś_1$ $K_3$ $D_{1\,2}$ [अ]थ, $D_5$ [आ]स्म (for च) — After 16, T $G_{3\,4}$ $M_1$ ins

78* सक्रमा भेदिता सर्वे प्राकाराश्च नवीकृता° ।

[Prior half = $15^a$ — After the prior half, $G_4$ *repeats* $15^b$ (v l नरा for नाव)]

**17** $^a$) S (except $M_2$, $G_4$ broken) सर्वं (for दुर्गं)

**19** $^a$) $D_3$ न चाशुद्धो ; S नासुद्रो हि ($G_1$ [ऽ]भि ; $M_1$ [ऽ]पि) $D_2$ T G $M_2$ वि, $D_3$ $M_1$ हि (for [ऽ]भि) — $^b$) $D_3$ चाशुद्ध° (for चामुद्र°) — $^d$) $K_{2\,3}$ $D_3$ $T_2$ G (except $G_1$) $M_2$ तथा (for तदा)

**20** $^b$) $T_1$ $G_{2\,4}$ $M_1$ [अ]थ, $G_1$ [अ]पि (for च)

दत्तवेतनभक्तं च दत्तायुधपरिच्छदम् ।
कृतापदानं च तदा बलमासीन्महाभुज ॥ २१
न कुप्यवेतनी कश्चिन्न चातिक्रान्तवेतनी ।
नानुग्रहभृतः कश्चिन्न चादृष्टपराक्रमः ॥ २२
एवं सुविहिता राजन्द्वारका भूरिदक्षिणैः ।
आहुकेन सुगुप्ता च राज्ञा राजीवलोचन ॥ २३

इति श्रीमहाभारते आरण्यकपर्वणि षोडशोऽध्यायः ॥ १६ ॥

# १७

वासुदेव उवाच ।
तां तूपयात्वा राजेन्द्र शाल्वः सौभपतिस्तदा ।
प्रभूतनरनागेन बलेनोपविवेश ह ॥ १
समे निविष्टा सा सेना प्रभूतसलिलाशये ।
चतुरङ्गबलोपेता शाल्वराजाभिपालिता ॥ २
वर्जयित्वा श्मशानानि देवतायतनानि च ।
वल्मीकांश्चैव चैत्यांश्च तन्निविष्टमभूद्बलम् ॥ ३
अनीकानां विभागेन पन्थानः षट्कृताभवन् ।
प्रवणा नव चैवासञ्शाल्वस्य शिबिरे नृप ॥ ४
सर्वायुधसमोपेतं सर्वशस्त्रविशारदम् ।
रथनागाश्वकलिलं पदातिध्वजसंकुलम् ॥ ५
तुष्टपुष्टजनोपेतं वीरलक्षणलक्षितम् ।

---

**21** D4 om 21 — ᶜ) Ś1 K3 B Dc Dn D1 5 6 कृतोपधा(S1 D1 °दा)न, K3 कृतोपचार, D2 दृष्टावदान, D3 कृतावदान, T1 °पधान Ś1 K3 D1–3 तथा — ᵈ) D3 समाहित, S विशा पते (for महाभुज)

**22** ᵃ) B2 G1 M1 न कुप्यत्रेतन°, D3 न कूटवेतन°, T1 न कोपि वेतन°, T2 G2–4 नादत्तवेतन° — ᵇ) T G (except G1) M1 °वेतन°

**23** ᵇ) N °दक्षिणा (D2 °दक्षणा, D3 °लक्षणा) — ᶜ) D1 M2 सा (for च)

Colophon K1 4 Dc1 missing *Major parvan* S1 T G2–4 आरण्य — *Sub parvan* Ś1 D1–3 M2 (all om sub-parvan name) mention only सौभवध, K3 likewise only सौभोपाख्यान, B Dc2 Dn D4 only सौभवधोपाख्यान, and D5 only शाल्ववध — *Adhy name* D2 द्वारकावेष्टने शाल्वयुद्ध, T2 G3 4 M द्वारकाकरण(M °दुर्गकरण)-कीर्तन — *Adhy no* (figures, words or both) Dn (Dn1 *sup lin*) S 15, D1 16 (as in text) — *Śloka no* Dn D1 23, D5 21

## 17

☞ This adhy is missing in K1 4 (cf v.l. 3 1 1), the MSS are mostly ignored here

**1** Dc1 missing (cf v.l 3 16 6) — K3 B2 Dn1 D2 5 T2 G कृष्ण° (or श्रीकृष्ण°), D1 T1 M1 श्रीभगवान् (for वासुदेव) — ᵃ) Ś1 B4 D3 तान् (for तां) Ś1 तूपायास्तु (sic), K2 B Dc2 Dn D4–6 तूपयातो, K3 उपायाय, D1 उपेयाय, D2 उपेत्याथ, D3 तूपयाय (for तूपयात्वा) — ᵇ) Here and below S सात्व° (for शाल्व°)

**2** Dc1 missing (cf v l 3 16 6) — ᵈ) Ś1 K3 D1–3 °रक्षिता

**3** Dc1 resumes from 3ᵇ (cf v l 3 16 6) — ᶜ) K2 B D (except D1 3) °कांश्चैत्यवृक्षांश्च — ᵈ) D1 2 S (except M2) सनिविष्टम्

**4** ᵃ) T2 G2 3 विगाहेन — ᵇ) K3 बलेन (for पन्थान°) K2 B Dc Dn D4 6 सवृता°, K3 पतता, D5 सभृता°, T G सु(T1 स)कृता°, M1 सस्कृता°, M2 प्रथिता° (for षट् कृता°) S तदा (for [अ]भवन्) — G2 om 4ᶜᵈ — ᶜ) K2 Dn D4 6 प्रवणाय च नैवासन्, B Dc2 प्रवणानि च नैवा(B2 न चैवा°, B4 च मेवा)सन्, D1 प्रवणा इव नैवा°, D3 पणवानकं वै शब्द , D5 प्रबला न च नैवा°, T G (G2 om ) M1 प्रथि°(T1 °ति°, G1 °थ)मा नवमा चैव (T1 G1 °माश्चैव, M1 °मा श्चैव), M2 सस्तुता नवमाश्चैव

**5** ᵃ) Ś1 K3 B2 D1–3 M2 °बलोपेत — ᵇ) S1 K2 B3 4 Dn1 D1 2 6 T G1 3 °शास्त्र° — ᵈ) B3 पत्तिध्वजसमाकुल, S (except M2) प(T3 G3 पा)दातिजनस° 

**6** ᵃ) Ś1 B2 D1 2 हृष्ट (for तुष्ट) Ś1 K2 B D (except D1 2 5) -बलोपेत — ᶜ) T2 G (except G1) °महत्र — ᵈ) S (except M2) °शार°

**7** ᵃ) Ś1 D1–3 M2 [ए]व, T1 G (except G3) M1 तु

विचित्रध्वजसंनाहं विचित्ररथकार्मुकम् ॥ ६
संनिवेश्य च कौरव्य द्वारकायां नरर्षभ ।
अभिसारयामास तदा वेगेन पतगेन्द्रवत् ॥ ७
तदापतन्तं संदृश्य बलं शाल्वपतेस्तदा ।
निर्याय योधयामासुः कुमारा वृष्णिनन्दनाः ॥ ८
असहन्तोऽभियानं तच्छाल्वराजस्य कौरव ।
चारुदेष्णश्च साम्बश्च प्रद्युम्नश्च महारथः ॥ ९
ते रथैर्दंशिताः सर्वे विचित्राभरणध्वजाः ।
संसक्ताः शाल्वराजस्य बहुभिर्योधपुंगवैः ॥ १०
गृहीत्वा तु धनुः साम्बः शाल्वस्य सचिवं रणे ।
योधयामास संहृष्टः क्षेमवृद्धिं चमूपतिम् ॥ ११
तस्य बाणमयं वर्षं जाम्बवत्याः सुतो महत् ।
मुमोच भरतश्रेष्ठ यथा वर्षं सहस्रदृक् ॥ १२
तद्बाणवर्षं तुमुलं विषेहे स चमूपतिः ।
क्षेमवृद्धिर्महाराज हिमवानिव निश्चलः ॥ १३
ततः साम्बाय राजेन्द्र क्षेमवृद्धिरपि स्म ह ।
मुमोच मायाविहितं शरजालं महत्तरम् ॥ १४
ततो मायामयं जालं माययैव विदार्य सः ।
साम्बः शरसहस्रेण रथमस्याभ्यवर्षत ॥ १५
ततः स विद्धः साम्बेन क्षेमवृद्धिश्चमूपतिः ।
अपायाज्जवनैरश्वैः साम्बबाणप्रपीडितः ॥ १६
तस्मिन्विप्रद्रुते क्रूरे शाल्वस्याथ चमूपतौ ।
वेगवान्नाम दैतेयः सुतं मेऽभ्यद्रवद्बली ॥ १७
अभिपन्नस्तु राजेन्द्र साम्बो वृष्णिकुलोद्वहः ।
वेगं वेगवतो राजंस्तस्थौ वीरो विधारयन् ॥ १८
स वेगवति कौन्तेय साम्बो वेगवतीं गदाम् ।
चिक्षेप तरसा वीरो व्याविध्य सत्यविक्रमः ॥ १९
तया त्वभिहतो राजन्वेगवानपतद्भुवि ।
वातरुग्ण इव क्षुण्णो जीर्णमूलो वनस्पतिः ॥ २०
तस्मिन्निपतिते वीरे गदानुन्ने महासुरे ।

---

(for च) Ś1 D1 2 कौंतेय (for कौरव्य) — $^{b}$) T1 G1 2 द्वारका भरतर्षभ — $^{c}$) Hypermetric ! K3 अभिसारयत्स तदा, D1 2 अभित॰ सारयामास, D5 (by corr) आसारयामास तदा

**8** $^{a}$) Dc तदापतन्तत्, Dn1 n2 D4 S (except G1 M2) पतत्तु Ś1 सवीक्ष्य, K3 D1 3 5 6 M2 समेक्ष्य, D2 सलक्ष्य — $^{b}$) D1 2 5 6 सौभ (for शाल्व॰)

**9** $^{a}$) K2 3 [ऽ]भिसार, D2 निपात (for ऽभियान) T2 G (except G1) च (for तत्) — $^{c}$) K2 3 Dn3 D2 3 5 शावश्च — $^{d}$) A few MSS महारथा॰

**10** $^{a}$) S (except T2 G3) दसिता॰ — $^{b}$) D1 ॰भरणायुधा॰, D3 (sup lin as in text) 5 भरणस्तज॰

**11** $^{a}$) K2 B Dc Dn D4–6 T2 G3 कार्मुकं, D1 2 [अ]थ धनु॰ (for तु धनु॰) K2 3 B (except B1) Dn3 D2–6 शाव॰ — $^{d}$) S क्षेमधू(T2 G2–4 ॰मू)र्तिं, cf v l 13, 14, etc

**13** $^{a}$) K3 विपुल, Dc2 D3 सुमरु, M2 बहुल — $^{b}$) D3 निपेद्य (for विषेहे) M1 om 13$^{c}$–14$^{b}$ — $^{c}$) S (M1 om) धू(T2 G2–4 ॰मू)र्तिर् (for ॰वृद्धिर्), cf v l 11, 14, etc — $^{d}$) Ś1 हिमाचल इवाचल॰ (alliterative !)

**14** M1 om 14$^{ab}$ (cf v.l 13) — $^{a}$) K3 B (except B1) Dc Dn1 n3 D2–6 शावाय — $^{b}$) T G क्षेमम्‌(T1 G1 धू)र्तिर्, cf v l 11, 13, etc K2 B Dc Dn D2 4–6 अपि स्वय, D3 अपि स्मयन्, T G स्मयन्निव, M2 इव स्मयन् (for अपि स्म ह)

**15** $^{a}$) T1 राजन् (for जालं) — $^{b}$) S1 K3 Dn1 D1–3 5 निवार्य, K2 B D4 6 विदीर्य — $^{c}$) K2 3 B (except B1) Dc1 Dn1 D2–6 शाब॰ — $^{d}$) T2 G (except G1) रथमभ्येत्य॰

**16** $^{a}$) K2 B (except B1) Dc2 Dn1 n3 D2–6 शाबेन — $^{b}$) T1 G1 4 (inf lin) M1 ॰धूर्ति, T2 G2–4 मूर्ति (for ॰वृद्धि) — $^{d}$) K2 3 B (except B1) Dc1 Dn1 n3 D2–6 शाब॰

**17** $^{a}$) D3 क्षेमे, T1 वीरे, T2 G M1 शूरे (for क्रूरे) — $^{d}$) D2 मे प्राद्रवद्; D3 T2 G अभ्यद्रवद् (om मे), T1 मे न्यपतद्

**18** $^{a}$) T G द्रुत॰, M1 श्रुत॰ (for पन्न॰) D1 2 स (for तु) — $^{b}$) K3 3 Dc Dn1 D2–6 शाबो

**19** $^{b}$) K3 B (except B1) Dc Dn1 D2–6 शाबो — $^{d}$) D2 भ्रामयन्, D3 व्याविशत्, B व्याविध्यन् (M2 ॰द्धा) Ś1 K2 D5 [अ]सद्य, K3 [अ]सत्य॰ (for सत्य॰)

**20** $^{b}$) K2 B1 3 Dn D4 6 न्यपतद्, G1 निपतद् (for अपतद्) B4 Dc वेपमानोपतद्भुवि — $^{c}$) K3 D1 3 भग्न, D5 भुग्न (for ॰रुग्ण) Ś1 K3 D1–3 5 क्षुण्णो, K2 छन्नो, G1 क्षिप्र (for क्षुण्णो) — $^{d}$) S शीर्ण॰ (for जीर्ण)

प्रविश्य महतीं सेनां योधयामास मे सुतः ॥ २१
चारुदेष्णेन संसक्तो विविन्ध्यो नाम दानवः ।
महारथः समाज्ञातो महाराज महाधनुः ॥ २२
ततः सुतुमुलं युद्धं चारुदेष्णविविन्ध्ययोः ।
वृत्रवासवयो राजन्यथा पूर्वं तथाभवत् ॥ २३
अन्योन्यस्याभिसंक्रुद्धावन्योन्यं जघ्नतुः शरैः ।
विनदन्तौ महाराज सिंहाविव महाबलौ ॥ २४
रौक्मिणेयस्ततो बाणमग्न्यर्कोपमवर्चसम् ।
अभिमन्त्र्य महास्त्रेण संदधे शत्रुनाशनम् ॥ २५
स विविन्ध्याय सक्रोधः समाहूय महारथः ।
चिक्षेप मे सुतो राजन्स गतासुरथापतत् ॥ २६
विविन्ध्यं निहतं दृष्ट्वा तां च विक्षोभितां चमूम् ।
कामगेन स सौभेन शाल्वः पुनरुपागमत् ॥ २७
ततो व्याकुलितं सर्वं द्वारकावासि तद्बलम् ।
दृष्ट्वा शाल्वं महाबाहो सौभस्थं पृथिवीगतम् ॥ २८
ततो निर्याय कौन्तेय व्यवस्थाप्य च तद्बलम् ।
आनर्तानां महाराज प्रद्युम्नो वाक्यमब्रवीत् ॥ २९
सर्वे भवन्तस्तिष्ठन्तु सर्वे पश्यन्तु मां युधि ।
निवारयन्तं संग्रामे बलात्सौभं सराजकम् ॥ ३०
अहं सौभपतेः सेनामायसैर्भुजगैरिव ।
धनुर्भुजविनिर्मुक्तैर्नाशयाम्यद्य यादवाः ॥ ३१
आश्वसध्वं न भीः कार्या सौभराडद्य नश्यति ।
मयाभिपन्नो दुष्टात्मा ससौभो विनशिष्यति ॥ ३२
एवं ब्रुवति संहृष्टे प्रद्युम्ने पाण्डुनन्दन ।
विष्ठितं तद्बलं वीर युयुधे च यथासुखम् ॥ ३३

इति श्रीमहाभारते आरण्यकपर्वणि सप्तदशोऽध्यायः ॥ १७ ॥

**21** a) K2 B D (except D1–3) G3 विनिहते (for निपतिते) — b) S (except M2) °रूग्ण (for °नुन्ने)

**22** a) Here and below Ś1 uniformly चारुदोष्ण- (cf v l सुदेष्णा सुदोष्णा in the Virāta) K3 B (except B4) Dn2 D3 5 T1 M2 सयुक्तो — c) Some MSS °रथसमा°.

**23** c) S1 K3 Dc D1–3 5 M2 आसीद् (for राजन्)

**24** a) D3 5 G3 अपि (for अभि) Ś1 K3 D1–3 °सर-ब्धौ — c) K2 B2 3 Dc2 Dn D4 6 G1 °रावान्, B4 Dc1 °नादान्, D2 °नाद (for °राज) — d) K3 बलोत्कटौ (for महा°)

**25** a) Ś1 K3 D1–3 T2 G3 4 तदा (for ततो) — b) K3 D1 2 5 T1 G1 M °र्कोरगवर्चसं, D3 °र्कोरगसनिभ, T2 G2–4 °र्कांगारवर्चसं

**26** a) K3 D3 M2 सक्रुद्ध°, D2 सक्रोध Ś1 विविंध्यायाय-तक्रोध°, D6 विविंध्याय च सक्रुद्ध°, T2 G2–4 स विन्याथ स सुक्रोध (G2 च क्रोध) — d) S अवा° (for अथा°)

**27** b) G4 विक्षेपिता — d) G2 4 अवापतत् (for उपा°)

**28** K3 D6 om (hapl) 28c–29b — d) Ś1 K3 Dc D5 M2 भूपते तदा, B Dn D4 नृपते तदा, D1 भूपतिं तदा, D3 पतित तदा, T1 पृथिवीगत°, M1 पृथिवीपतिं D3 सौभस्तभगत सदा

**29** K3 D6 om 29ab (cf v.l 28) — ab) B D (except D1–3, D6 om) कौरव्य (for कौन्तेय), and अव° (for व्यव°)

**31** a) K3 B (except B3) Dc2 Dn D4–6 G2 अय (K3 m Dn1 [by corr] इमा), Dc1 अथ; D1 एष, D2 एना, T1 अग (for अह) — b) K3 D1–3 सायकैर् (for आयसैर्) S भुजगोपमै° — c) B4 Dc शरैर्धनुर्विनिर्मुक्तैर्, T1 M1 धनुर्मुक्तैश्च नाराचैर्, T2 G2–4 धनुर्मुक्तैः शितै(G2 शरै)र्भृशैर्, G1 निशितैश्चैव नाराचैर्, M2 धनुर्विमुक्तैर्नाराचैर् — d) B1 सायकै° (for यादवा°)

**32** b) D1 2 नक्ष्यति K3 सौभराज प्रणश्यति, G2 सौभ राड्य पश्यतु, M2 सौभरावद्य सयुगे — d) S (except M2) सपदानुग° (for विन°)

**33** a) D5 G4 वदति (for ब्रुवति) — c) Ś1 वेष्टित, K2 5 Dn D1–3 5 धिष्ठित T1 G (except G3) द्वारि (for वीर) — d) T2 G3 विविध, G4 विविधैश्च (for युयुधे)

Colophon K1 4 missing — *Major parvan* Ś1 T G2–4 आरण्य — *Sub parvan* Ś1 B1 2 D1–3 M (all om sub parvan name) mention only सौभवध, K3 likewise only सौभोपाख्यान, K3 D5 only शाल्ववध; and B3 4 Dc Dn D4 6 only सौभवधोपाख्यान — *Adhy name* D2 शाल्वयुद्ध चारुदेष्णयुद्ध प्रद्युम्नयुद्ध, M विविन्ध्यवेग-वध — *Adhy no* (figures words or both) Dn S 16, D1 17 (as in text) — *Śloka no* Dn D1 33

# १८

वासुदेव उवाच ।
एवमुक्त्वा रौक्मिणेयो यादवान्भरतर्षभ ।
दंशितैर्हरिभिर्युक्तं रथमास्थाय काञ्चनम् ॥ १
उच्छ्रित्य मकरं केतुं व्यात्ताननमलंकृतम् ।
उत्पतद्भिरिवाकाशं तैर्हयैरन्वयात्परान् ॥ २
विक्षिपन्नादयंश्चापि धनुःश्रेष्ठं महाबलः ।
तूणखड्गधरः शूरो बद्धगोधाङ्गुलित्रवान् ॥ ३
स विद्युच्चलितं चापं विहरन्वै तलात्तलम् ।
मोहयामास दैतेयान्सर्वान्सौभनिवासिनः ॥ ४
नास्य विक्षिपतश्चापं संदधानस्य चासकृत् ।
अन्तरं ददृशे कश्चिन्निघ्नतः शात्रवान्रणे ॥ ५
मुखस्य वर्णो न विकल्पतेऽस्य
चेलुश्च गात्राणि न चापि तस्य ।
सिंहोन्नतं चाप्यभिगर्जतोऽस्य
शुश्राव लोकोऽद्भुतरूपमग्र्यम् ॥ ६
जलेचरः काञ्चनयष्टिसंस्थो
व्यात्ताननः सर्वतिमिप्रमाथी ।
वित्रासयन्राजति वाहमुख्ये
शाल्वस्य सेनाप्रमुखे ध्वजाग्र्यः ॥ ७
ततः स तूर्णं निष्पत्य प्रद्युम्नः शत्रुकर्शनः ।
शाल्वमेवाभिदुद्राव विधास्यन्कलहं नृप ॥ ८
अभियानं तु वीरेण प्रद्युम्नेन महाहवे ।
नामर्षयत संक्रुद्धः शाल्वः कुरुकुलोद्वह ॥ ९
स रोषमदमत्तो वै कामगादवरुह्य च ।

## 18

☞ This adhy is missing in $K_{1\,4}$ (cf v l 3 1 1), the MSS are mostly ignored here

**1** Ś$_1$ $B_2$ $D_5$ $G_2$ कृष्ण , $D_1$ $T_1$ $M_1$ भगवान् (for वासुदेव°) — $^b$) $K_3$ $D_3$ S (except $M_2$) यादवर्षभ (for भर ) — $^c$) $K_3$ $D_{2\,3}$ S दसितैर् ($D_2$ तो); $D_5$ दशिभिर् — $^d$) $D_{1\,2}$ आरुह्य (for आस्थाय)

**2** $^a$) $D_3$ $G_{1\,2}$ उत्सृत्य, $T_1$ उच्छ्रित्य — $^b$) $K_2$ B D (except $D_{1-3}$) $G_2$ (*sup lin*) ह्यांतक (for अलकृतम्) — $^c$) Dc $T_2$ G (except $G_1$) आकाशे — $^d$) $D_{1\,2}$ अन्वगात्; $M_2$ अभ्ययात् T G $M_1$ हयैरभ्यपतत्परान्

**3** $^a$) Ś$_1$ विनदन्नभ्यद्, $K_3$ इदमश्चाम्य (sic), $D_{1-3}$ विनदश्चाम्य, S आददानश्च ($M_2$ निनदश्चाद) — $^b$) Ś$_1$ °रथ, $K_2$ बलै ; $K_3$ $D_{1-3\,6}$ °रथ (for बल ) S (except $M_2$) धनुर्ज्यामाक्षिपन्मुहु° — $^c$) $S_1$ खड्गतूण (by transp ), $K_3$ $D_{1\,2}$ S (except $T_1$ $G_1$) तूणीखड्ग

**4** $D_4$ om $4^c$–$5^b$ — $^a$) Ś$_1$ $K_3$ $B_3$ Dc $D_{1\,2\,5}$ °चरित; $K_2$ $B_{1\,2}$ Dn $D_6$ च्छु($K_2$ °च्छ)रित — $^b$) $T_2$ $G_{2\,3}$ विचरन्वै, $G_1$ विकिरन्वै $D_{3\,5}$ बलांतर ($D_5$ °रे), $G_1$ कराम्कर

**5** $D_4$ om $5^{ab}$ (cf v l 4) — $^a$) $K_2$ $D_6$ (before corr ) सत (sic), B Dc Dn $D_{3\,5\,6}$ (by corr ) $G_4$ $M_2$ तस्य, $M_1$ अस्य (for नास्य) — $^b$) $D_3$ पचधा नवधासकृत् — $^c$) Ś$_1$ $K_3$ $T_1$ $G_{1\,3}$ अतर (as in text), $D_3$ नोत्तर, the rest नान्तर

**6** $^a$) $K_3$ विचाल्यते, $B_4$ $D_1$ विका($B_4$ °क)ल्पते, $D_2$ विलुप्यते; S विकपते ($M_2$ विलिप्यते) $T_1$ च, $M_1$ स्म (for ऽस्य) — $^b$) $T_2$ $G_{2-4}$ वेपुश्च — $^c$) $T_2$ $G_3$ °गर्जन च, $G_2$ °गर्जितस्य, $G_4$ °गर्जित च $D_3$ सिंहोन्नतासस्य हि गर्जितस्य, $M_2$ सिंहोन्नत गर्जितमस्य लोक° — $^d$) Ś$_1$ $D_6$ $G_2$ लोकेऽद्भुत ; T $G_{3\,4}$ लोका°, $M_2$ चात्यद्भुत (for लोकोऽद्भुत ) $K_2$ B Dc Dn $D_{4-6}$ -वीर्यम्; $D_3$ -शब्दम् (for -रूपम्) $K_3$ $D_{1-3}$ $G_2$ $M_2$ उग्र (for अग्र्यम्)

**7** $^a$) $D_1$ सश्रितो; $D_2$ °सस्थितो (for °सस्थो) — $^b$) $D_{1\,3\,5}$ सर्वरिपु°; S शत्रुबल (for सर्वतिमि°) — $^c$) S व्यत्रासयद् ($G_2$ वित्रासयद्, $M_2$ व्यद्रावयद्) दानवराजमुख्यान् — $^d$) $K_3$ ध्वजोस्य, $T_2$ $G_3$ तथाग्र्य°, $G_{2\,4}$ सदाग्र्य°

**8** $^a$) $K_2$ B D (except $D_{1-3}$) ततस्तूर्णं विनिष्पत्य — $^b$) Ś$_1$ $K_3$ B Dn $D_{1\,2\,5\,6}$ °कर्षण°, $D_3$ °सूदन — $^d$) $K_2$ B Dc Dn $D_{4\,6}$ विधित्सु°, $D_5$ विधाय S निवार्यो(M °हत्या)रिबल रुषा

**9** $^a$) $T_1$ M यावस् (for °यान) Ś$_1$ $D_{1\,2}$ प्र (for तु) — $^b$) $K_2$ B D (except $D_{1-3}$) °रणे, $G_1$ मृधे (for °हवे) — $^c$) $B_2$ नामर्षत सुसरब्ध , $D_1$ $T_1$ G (except $G_3$) $M_1$ °यत्सु° $D_1$ °यत्स )सक्रुद्ध° — $^d$) S साल्व सौभपतिस्तदा ($G_1$ °था)

प्रद्युम्नं योधयामास शाल्वः परपुरंजयः ॥ १०
तयोः सुतुमुलं युद्धं शाल्ववृष्णिप्रवीरयोः ।
समेता ददृशुर्लोका बलिवासवयोरिव ॥ ११
तस्य मायामयो वीर रथो हेमपरिष्कृतः ।
सध्वजः सपताकश्च सानुकर्षः सतूणवान् ॥ १२
स तं रथवरं श्रीमान्समारुह्य किल प्रभो ।
मुमोच बाणान्कौरव्य प्रद्युम्नाय महाबलः ॥ १३
ततो बाणमयं वर्षं व्यसृजत्तरसा रणे ।
प्रद्युम्नो भुजवेगेन शाल्वं संमोहयन्निव ॥ १४
स तैरभिहतः संख्ये नामर्षयत सौभराट् ।
शरान्दीप्ताग्निसंकाशान्मुमोच तनये मम ॥ १५
स शाल्वबाणै राजेन्द्र विद्धो रुक्मिणिनन्दनः ।
मुमोच बाणं त्वरितो मर्मभेदिनमाहवे ॥ १६
तस्य वर्म विभिद्याशु स बाणो मत्सुतेरितः ।
बिभेद हृदयं पत्री स पपात मुमोह च ॥ १७
तस्मिन्निपतिते वीरे शाल्वराजे विचेतसि ।
संप्राद्रवन्दानवेन्द्रा दारयन्तो वसुंधराम् ॥ १८
हाहाकृतमभूत्सैन्यं शाल्वस्य पृथिवीपते ।
नष्टसंज्ञे निपतिते तदा सौभपतौ नृप ॥ १९
तत उत्थाय कौरव्य प्रतिलभ्य च चेतनाम् ।
मुमोच बाणं तरसा प्रद्युम्नाय महाबलः ॥ २०
तेन विद्धो महाबाहुः प्रद्युम्नः समरे स्थितः ।
जत्रुदेशे भृशं वीरो व्यवासीदद्रथे तदा ॥ २१
तं स विद्ध्वा महाराज शाल्वो रुक्मिणिनन्दनम् ।
ननाद सिंहनादं वै नादेनापूरयन्महीम् ॥ २२
ततो मोहं समापन्ने तनये मम भारत ।
मुमोच बाणांस्त्वरितः पुनरन्यान्दुरासदान् ॥ २३
स तैरभिहतो बाणैर्बहुभिस्तेन मोहितः ।
निश्चेष्टः कौरवश्रेष्ठ प्रद्युम्नोऽभूद्रणाजिरे ॥ २४

इति श्रीमहाभारते आरण्यकपर्वणि अष्टादशोऽध्यायः ॥ १८ ॥

---

**10** $^{a}$) S (except $M_2$) °समत्त (for °मत्तो वै) — $^{b}$) $Ś_1$ वै, $K_3$ $D_{2\ 3\ 5}$ $M_2$ ह, $B_4$ $T_2$ G (except $G_1$) स॰ (for च)
**11** $^{a}$) $T_2$ G (except $G_1$) तत॰ (for तयो॰) $Ś_1$ $Dc_2$ $G_2$ मतुमुल, $D_2$ सुतुमल — $^{d}$) $D_1$ वृत्र°, $D_2$ $T_1$ बल°
**12** $^{c}$) $K_2$ $B_2$ Dn $D_{4\ 6}$ सपताक॰ सध्वजश्च — $^{d}$) $Ś_1$ $D_3$ च तूण°, Dc प्रताप°, $G_1$ सतूणि°
**14** $^{b}$) $K_3$ $D_3$ विसृजत्, $D_5$ विसृजन् — $^{d}$) $T_2$ G (except $G_1$) °हर्ष° (for °मोह°)
**15** $^{a}$) Dc परिवृत (for अभिहत॰) S सखे ($T_2$ $G_3$ षे) — $^{b}$) $D_1$ नामर्षत स सौभ° — $^{c}$) $D_2$ शरान्दीप्तान्प्राक्षिपत्स — After 15, $Ś_1$ $K_2$ B D (except $D_{1-3}$) ins

79* तानापतत (sic !) बाणौघान्स चिच्छेद महाबल॰ ।
ततश्चान्यान्शरान्दीप्तान्प्रचिक्षेप सुते मम ।

[(L 1) $K_3$ तानापततो, $Ś_1$ तान्बाणौघानापतत , $D_5$ तमापतत बाणौघ (evident emendations !) ❀ Cn आपततेति विसर्गलोप आर्ष । ❀ Dc transp स and चिच्छेद — (L 2) $Ś_1$ $K_3$ B Dc पुन (for तत ) $Ś_1$ om च $Ś_1$ प्राक्षिपत्स (for प्रचिक्षेप) $D_5$ प्राक्षिपत्तनये मम ]
**16** $^{c}$) $K_3$ बाणान्त्वरितो, $G_1$ बाणाभिहतो
**17** $^{a}$) $Ś_1$ (*sup lin* ) $K_3$ $B_2$ $D_{3\ 5}$ $T_1$ $G_4$ $M_2$ मर्म $Ś_1$ $D_3$ विभेद्याशु — $^{c}$) $K_2$ B D (except $D_{1-3}$) विव्याध, S विवेश — $^{d}$) $Ś_1$ $D_1$ मुमोच ह, S (except $M_2$) भृशा ($G_1$ °श )हत॰ (for मुमोह च) $K_2$ B Dc Dn $D_{4-6}$ transp पपात and मुमोह
**18** $^{a}$) $Ś_1$ अस्मिन् (*sup lin* त° as in text) $K_2$ वीर (for वीरे ) — $^{cd}$) $T_2$ G (except $G_1$) transp दानवेन्द्रा and दारयन्तो
**19** $^{a}$) Dc हाहाभूतम् $T_2$ $G_3$ महत् (*for* अभूत्) — $^{b}$) $T_2$ G (except $G_1$) च महीपते॰ ($G_2$ °ते) (for पृथिवी°) — $^{d}$) $K_2$ B D (except $D_{2\ 3\ 5}$) नृपे
**20** $^{a}$) S (except $M_2$) राजेंद्र (for कौरव्य) — $^{c}$) N (except $D_{1\ 3}$, $K_{1\ 4}$ missing) $G_1$ बाणान् $K_2$ B D (except $D_{1-3}$) सह° (for तर°)
**21** $^{a}$) $K_2$ B D (except $D_{1-3}$) तै स (for तेन) S तेन बाणेन महता ($M_2$ तेनातिविद्धो बलवान्) — $^{c}$) S (except $M_2$) विद्धो (for वीरो) — $^{d}$) $D_6$ भृश (for तदा) $D_3$ अवसाद गतस्तदा, T G (except $G_1$ ) व्यथितो ददृशे तदा
**22** $^{a}$) $Ś_1$ (by transp ) स त विद्ध्वा; $K_2$ त विद्धो स, $D_{1\ 2}$ त तु ($D_2$ नु) विद्ध्वा, $T_1$ त विद्ध्वा स, $M_2$ स च निष्य S (except $M_2$) तु राजेंद्र (for महा°) — $^{c}$) Dc °नादेन, S (except $M_2$) °नाद च — $^{d}$) $D_3$ आनादयन् (for आपूरयन्) $K_3$ दिश॰ (for महीम्)

# १९

वासुदेव उवाच ।
शाल्वबाणार्दिते तस्मिन्प्रद्युम्ने बलिनां वरे ।
वृष्णयो भग्नसंकल्पा विव्यथुः पृतनागताः ॥ १
हाहाकृतमभूत्सर्वं वृष्ण्यन्धकबलं तदा ।
प्रद्युम्ने पतिते राजन्परे च मुदिताभवन् ॥ २
तं तथा मोहितं दृष्ट्वा सारथिर्जवनैर्हयैः ।
रणादपाहरत्तूर्णं शिक्षितो दारुकिस्ततः ॥ ३
नातिदूरापयाते तु रथे रथवरप्रणुत् ।
धनुर्गृहीत्वा यन्तारं लब्धसंज्ञोऽब्रवीदिदम् ॥ ४
सौते किं ते व्यवसितं कस्माद्यासि पराङ्मुखः ।
नैष वृष्णिप्रवीराणामाहवे धर्म उच्यते ॥ ५
कच्चित्सौते न ते मोहः शाल्वं दृष्ट्वा महाहवे ।
विषादो वा रणं दृष्ट्वा ब्रूहि मे त्वं यथातथम् ॥ ६
सूत उवाच ।
जानार्दने न मे मोहो नापि मे भयमाविशत् ।
अतिभारं तु ते मन्ये शाल्वं केशवनन्दन ॥ ७
सोऽपयामि शनैर्वीर बलवानेष पापकृत् ।
मोहितश्च रणे शूरो रक्ष्यः सारथिना रथी ॥ ८
आयुष्मंस्त्वं मया नित्यं रक्षितव्यस्त्वयाप्यहम् ।
रक्षितव्यो रथी नित्यमिति कृत्वापयाम्यहम् ॥ ९
एकश्चासि महाबाहो बहवश्चापि दानवाः ।
नसमं रौक्मिणेयाहं रणं मत्वापयाम्यहम् ॥ १०

---

**23** $^{a}$) Do D1–3 5 M3 मोहसमा॰ — $^{d}$) S दुरात्मवान् (for दुरासदान्)

Colophon om in K3 K1 4 missing — *Major parvan* Ś1 T G2–4 आरण्य — *Sub parvan* Ś1 B D (all om sub parvan name) mention only सौभवधोपाख्यान (Ś1 B2 4 D1–3 6 सौभवध, D5 शाल्ववध), K2 likewise only सौभ — *Adhy name* B4 Dc प्रद्युम्नसमोह॰, D2 शाल्वप्रद्युम्नयोर्युद्ध, T2 G3 4 M1 प्रद्युम्नसाल्वयुद्ध — *Adhy no* (figures, words or both) Dn S 17, D1 18 (as in text) — *Śloka no* Dn 25, D1 24

## 19

☞ This adhy is missing in K1 4 (cf v l 3 1 1), the MSS are mostly ignored here

**1** K3 om the ref S1 K2 B2 श्रीकृष्ण॰, D1 T1 M1 श्रीभगवान् (for वासुदेव) — $^{a}$) T G2 3 M1 बाणार्पिते, M3 चिते — $^{b}$) T1 M1 रतिवल्लभे (for बलिना वरे) ! — $^{cd}$) K3 M3 transp वृष्णय and विव्यथु॰ S (except M1) सुखे (for गता॰)

**2** $^{a}$) S1 D1–3 पराङ्मुखम् (for हाहाकृतम्) Dc सैन्य (for सर्वं) — $^{b}$) Do ॰मय (for बल) N (K1 4 missing) तत॰ (for तदा) — $^{c}$) B D (except D1–3) मोहिते (for पतिते) K2 प्रद्युम्नो मोहितो राजन् — $^{d}$) B2 ते (for च) K2 B Dn D4 6 भृश (for [अ]भवन्) S (except M3) साल्व॰ प्रमुदितोभवत्

**3** $^{c}$) T2 G (except G1) M3 शीघ्र (for तूर्णं) — $^{d}$) K2 3 B2 Dn D4 6 T2 G (except G1) M3 तदा, T1 तथा (for तत )

**7** K2 B (except B4) D (except D1–3 5) सौति॰ (for सूत॰) — $^{b}$) K2 B Dc Dn D4 6 मा, T1 वा, M मा (for मे) — $^{c}$) G2 4 अह (for तु ते) D2 अभिभवत वै मन्ये

**8** $^{a}$) Ś1m K3 Dn3 (by corr ) सोपयाति, D6 ॰यासि; T2 G (except G1) सोभियाति D5 T2 G (except G1) शरैर् (for शनैर्) — $^{c}$) G3 4 M3 वीरो (for शूरो) — $^{d}$) T2 G3 रथे (for रथी)

**9** $^{a}$) Ś1 K3 D1–3 M3 हि (for त्व) M1 रक्ष्यो (for नित्य) — $^{b}$) K3 D1–3 हि (for [अ]पि) — K3 B1 2 om (? hapl ) 9$^{cd}$ — $^{c}$) S1 D3 S रणे, B4 मया (for रथी) — $^{d}$) D3 ज्ञात्वा॰, M मत्वा॰ (for कृत्वा॰), cf v l 10

**10** $^{b}$) S1 D1 3 [अ]त्र, D2 [अ]स्य (for [अ]पि) Ś1 D1–3 शत्रव (for दानवा) — D1 om 10$^{cd}$ — $^{c}$) G2 4 रौक्मिणेयस्य, M3 ॰येद — $^{d}$) B Dn D1 4 6 रणे, T G इति Ś1 D2 त्यक्त्वा, K2 हित्वा, T2 G (except G3) कृत्वा (for मत्वा), cf v l 9 K2 3 B (except B2) D T1 G1 M1 वै (for [अ]हम्)

वासुदेव उवाच ।
एवं ब्रुवति सूते तु तदा मकरकेतुमान् ।
उवाच सूतं कौरव्य निवर्तय रथं पुनः ॥ ११
दारुकात्मज मैवं त्वं पुनः कार्षीः कथंचन ।
व्यपयानं रणात्सौते जीवतो मम कर्हिचित् ॥ १२
न स वृष्णिकुले जातो यो वै त्यजति संगरम् ।
यो वा निपतितं हन्ति तवास्मीति च वादिनम् ॥ १३
तथा स्त्रियं वै यो हन्ति वृद्धं बालं तथैव च ।
विरथं विप्रकीर्णं च भग्नशस्त्रायुधं तथा ॥ १४
त्वं च सूतकुले जातो विनीतः सूतकर्मणि ।
धर्मज्ञश्चासि वृष्णीनामाहवेष्वपि दारुके ॥ १५
स जानंश्चरितं कृत्स्नं वृष्णीनां पृतनामुखे ।
अपयानं पुनः सौते मैवं कार्षीः कथंचन ॥ १६
अपयातं हतं पृष्ठे भीतं रणपलायिनम् ।
गदाग्रजो दुराधर्षः किं मां वक्ष्यति माधवः ॥ १७
केशवस्याग्रजो वापि नीलवासा मदोत्कटः ।
किं वक्ष्यति महाबाहुर्बलदेवः समागतः ॥ १८
किं वक्ष्यति शिनेर्नप्ता नरसिंहो महाधनुः ।
अपयातं रणात्सौते साम्बश्च समितिंजयः ॥ १९
चारुदेष्णश्च दुर्धर्षस्तथैव गदसारणौ ।
अक्रूरश्च महाबाहुः किं मां वक्ष्यति सारथे ॥ २०
शूरं संभावितं सन्तं नित्यं पुरुषमानिनम् ।
स्त्रियश्च वृष्णिवीराणां किं मां वक्ष्यन्ति संगताः ॥ २१
प्रद्युम्नोऽयमुपायाति भीतस्त्यक्त्वा महाहवम् ।
धिगेनमिति वक्ष्यन्ति न तु वक्ष्यन्ति साध्विति ॥ २२
धिग्वाचा परिहासोऽपि मम वा मद्विधस्य वा ।
मृत्युनाभ्यधिकः सौते स त्वं मा व्यपयाः पुनः ॥ २३
भारं हि मयि संन्यस्य यातो मधुनिहा हरिः ।

---

**11** All MSS except $B_4$ ($K_{1-4}$ missing) om the ref $D_4$ om $11^{ab}$ — $^{a}$) $K_2$ स, $B_1$ [ऽ]पि, $B_3$ वै (for तु) — $^{b}$) $Ś_1$ $K_{2-3}$ $D_{2-3}$ सयन् (for तदा) $D_1$ $M_2$ °केतन° — $^{c}$) $D_3$ सौतिं (for सूत) — $^{d}$) S (except $T_2$ $G_3$) सनिवर्त्य (for निवर्तय) $T_1$ (both) प्रति and पुन° (as in text)

**13** $^{a}$) $S_1$ $K_{2-3}$ $D_{1-3}$ नासौ, $G_1$ क स (for न स) — $^{b}$) $T_1$ सकर; $T_2$ $G_{2-4}$ $M_1$ सयुग (for सगरम्) — $^{c}$) $D_3$ S (except $M_2$) यश्च (for यो वा) $K_3$ $D_{1-3}$ S [अ]पि for नि- )

**14** $^{a}$) $B_1$ Dn $T_2$ $G_3$ च, $B_{2-4}$ Dc $D_{4-6}$ वा (for वै) $Ś_1$ $K_{2-3}$ $D_{1-3}$ $M_2$ यो वै स्त्रिय (by transp) — $^{b}$) B D (except $D_{1-3}$) बाल वृद्ध (by transp), S (except $M_2$) वृद्धान्बालान् — $^{c}$) $K_{2-3}$ S मुक्तकेश (for विप्र°)

**15** $^{b}$) $T_1$ G (except $G_3$) $M_1$ विदित (for विनी°) — $^{c}$) $K_3$ $D_{1-3}$ [अ]पि (for [अ]सि)

**16** $^{a}$) $K_3$ जानश्च, S (except $G_2$ $M_3$) विजानन् (for स जानन्) — $D_5$ om (hapl) $16^{cd}$ — $^{cd}$) $Dn_2$ $M_2$ रणात् (for पुन°) $D_2$ transp सौते and कार्षी°

**17** $^{a}$) $S_1$ $K_3$ अपयात — $^{b}$) $K_3$ $D_2$ $T_1$ G (except $G_3$) $M_1$ भीरु, $Dn_1$ $n_2$ भ्रात, $D_3$ भीक्ष्ण (for भीत) $B_{1-3}$ $Dn_1$ $D_4$ °पलायित, $B_2$ °पराङ्मुख — $^{d}$) $K_3$ $T_2$ G (except $G_1$) M मा (for मा)

**19** $D_3$ om $19^{ab}$ — $^{b}$) $K_3$ $D_1$ S रण (for नर°) $Ś_1$ $D_{1-2}$ मदोत्कट° (cf $18^{b}$), $K_{2-3}$ महाबल, Dc °हनु°, S (except $M_2$) °रथ (for °धनु°) — $^{c}$) B Dc Dn $D_{2-4-6}$ सूत, $D_5$ तत्र (for सौते) — $^{d}$) $K_{2-3}$ B (except $B_1$) Dc $D_{4-6}$ शाबश्च

**20** $^{d}$) $K_3$ नो, $D_5$ $M_2$ वा, $T_2$ G (except $G_1$) $M_1$ मा (for मा); cf v l 21

**21** $^{a}$) $T_1$ $G_{1-2}$ M शूर° $G_2$ $M_2$ -समाविन $K_2$ $B_{1-2}$ Dn $D_{3-4-6}$ $G_1$ शात, T $G_{2-4}$ $M_2$ नित्य (for सन्त) — $^{b}$) $T_1$ सत°, $T_2$ G (except $G_1$) $M_2$ तथा (for नित्य) — $D_4$ om $21^{c}$–$22^{d}$ — $^{d}$) $G_1$ M मा, $G_2$ वा (for मा), cf v l 20 B Dn $D_6$ सह( $B_1$ °हि )ता° (for सगता°) $T_2$ $G_{3-4}$ किं वक्ष्यति समागता

**22** $D_4$ om 22 (cf v l 21) — $^{a}$) $K_2$ $B_4$ इहा°, Dc $D_{2-5}$ $T_1$ $G_2$ M अपा° (for उपा°) — $^{b}$) $D_1$ S (except $T_2$ $G_3$) रणाजिर (for महा°) — $^{c}$) $G_2$ धिग्धिग्भयादपानीतो — $^{d}$) $T_{1-2}$ (before corr) $G_{1-4}$ $M_1$ साधु, $G_2$ यदि (for न तु) $K_2$ T G (except $G_2$) $M_1$ साध्विति मा प्रति ($K_2$ सर्वत°, $G_1$ वादिन) (for वक्ष्यन्ति साध्विति) — $T_2$ $G_{3-4}$ *repeat* $22^{cd}$, with v l as in $G_2$

**23** $^{a}$) S धिग्वच (G₁ °ग्वाच°, $G_2$ °क्तया) $B_1$ Dc T G वा, $D_5$ M [ऽ]प्य (for ऽपि) — $^{c}$) $D_3$ S (except $G_2$ $M_2$) मृत्युतो° (for ना°) — $^{d}$) $Ś_1$ $K_{2-3}$ $D_{3-5}$ मा

यन्नं भरतसिंहस्य पार्थस्यामिततेजसः ॥ २४
कृतवर्मा मया वीरो निर्यास्यन्नेव वारितः ।
शाल्वं निवारयिष्येऽहं तिष्ठ त्वमिति सूतज ॥ २५
स च संभावयन्मां वै निवृत्तो हृदिकात्मजः ।
तं समेत्य रणं त्यक्त्वा किं वक्ष्यामि महारथम् ॥ २६
उपयातं दुराधर्षं शङ्खचक्रगदाधरम् ।
पुरुषं पुण्डरीकाक्षं किं वक्ष्यामि महाभुजम् ॥ २७
सात्यकिं बलदेवं च ये चान्येऽन्धकवृष्णयः ।
मया स्पर्धन्ति सततं किं नु वक्ष्यामि तानहम् ॥ २८
त्यक्त्वा रणमिमं सौते पृष्ठतोऽभ्याहतः शरैः ।
त्वयापनीतो विवशो न जीवेयं कथंचन ॥ २९
स निवर्त रथेनाशु पुनर्दारुकनन्दन ।
न चैतदेवं कर्तव्यमथापत्सु कथंचन ॥ ३०
न जीवितमहं सौते बहु मन्ये कदाचन ।
अपयातो रणाद्भीतः पृष्ठतोऽभ्याहतः शरैः ॥ ३१
कदा वा सूतपुत्र त्वं जानीषे मां भयार्दितम् ।
अपयातं रणं हित्वा यथा कापुरुषं तथा ॥ ३२
न युक्तं भवता त्यक्तुं संग्रामं दारुकात्मज ।
मयि युद्धार्थिनि भृशं स त्वं याहि यतो रणम् ॥ ३३

इति श्रीमहाभारते आरण्यकपर्वणि एकोनविंशोऽध्यायः ॥ १९ ॥

# २०

वासुदेव उवाच ।
एवमुक्तस्तु कौन्तेय सूतपुत्रस्तदा मृधे ।
प्रद्युम्नमब्रवीच्छ्लक्ष्णं मधुरं वाक्यमञ्जसा ॥ १
न मे भयं रौक्मिणेय संग्रामे यच्छतो हयान् ।

---

(Ś$_1$ [before corr ] K$_3$ स ) मा त्व , D$_1$ मैव त्व , D$_2$ मा त्व , S तस्मान्मा ( for स त्व मा ) S$_1$ अपया॰ (for ऽप॰)

**24** $^a$) T G ( except G$_1$ ) वि (for स ) — $^c$) S$_1$ B$_1$ $_2$ Dn$_1$ D$_6$ भारत — $^d$) Ś$_1$ न तु शक्योऽद्य सीदितु , K$_2$ $_3$ D$_1$ न स शक्ष्येद्य सीदितु , B न हि शक्ये( B$_1$ ॰क्ष्ये )त्यमर्षितु , Dc Dn D$_{4-6}$ न हि ( Dc स न ) शक्येद्य मर्षितु , D$_2$ न स रक्षेद्य जीवित , D$_3$ स न शक्षेद्य सीदितु, M$_2$ राजसूय महाक्रतु

**25** $^{ab}$) T$_2$ G$_3$ $_4$ महा॰ ( for मया ), and निर्यास्यन्हि निवारित॰

**26** $^a$) Ś$_1$ D$_{1-3}$ स च सभाव्य मामेव ( D$_1$ $_2$ ॰व )

**27** $^a$) Dn D$_1$ T$_2$ G$_1$ $_3$ M$_2$ उपयात , D$_2$ उपागत

**28** $^b$) T$_1$ G$_1$ M$_1$ तत्र ; T$_2$ G$_{2-4}$ कुरु ( for ऽन्धक ) — $^c$) S$_1$ K$_2$ $_3$ D$_{1-3}$ स्पर्धते ये मया नित्य

**29** $^a$) D$_1$ सुख ; D$_3$ ॰मह , T$_2$ G ( except G$_1$ ) ॰मिद (for ॰मिम) — $^b$) =31$^d$ Dn$_2$ T$_2$ G$_3$ [ऽ]प्याहत॰ , D$_3$ [ऽ]भिहत॰ , T$_1$ [ऽ]भ्यागत॰ B$_2$ $_4$ परै ( for शरै॰ ) — D$_3$ G$_2$ om ( hapl ) 29$^c$–31$^d$ — $^d$) D$_1$ $_2$ न जीवेह

**30** D$_3$ G$_2$ om 30 (cf v l 29) — $^a$) K$_2$ B ( except B$_2$ ) Dc Dn$_2$ D$_1$ $_4$ T G$_3$ $_4$ M सनिवर्त ( Dc$_1$ M$_2$ वृत्त , T$_1$ G$_4$ ॰वर्त्स्य ), D$_2$ निवर्तैक॰ — $^d$) S$_1$ D$_1$ $_2$ ममापत्सु ; K$_3$ Dc$_2$ D$_5$ $_6$ M$_2$ अप्यापत्सु , T G$_3$ $_4$ M$_1$ आपत्सु च (for अथापत्सु)

**31** D$_3$ G$_2$ om 31 (cf v l 29), B$_1$ om ( hapl ) 31$^{ab}$ — $^b$) K$_3$ मस्ये B$_4$ Dn D$_4$ $_6$ G$_1$ कथचन — $^d$) =29$^b$ T$_2$ G$_3$ [ऽ]प्याहत , M$_2$ च हत B$_3$ M$_2$ परै॰ (for शरै॰)

**32** $^a$) B$_2$ $_3$ Dn$_1$ D$_4$ $_6$ च, Dn$_2$ n$_3$ [अ]पि, T$_2$ G ( G$_2$ त्व ) (for वा) — $^b$) T G ( except G$_2$ ) वा , M मा (for मा) — $^d$) B ( except B$_2$ ) D$_5$ S कापुरुषस्

**33** $^a$) Ś$_1$ न च युक्त भवेत्त्यक्तु, K$_3$ अयुक्त कृतवान्यस्त्व, D$_1$ $_2$ न च युक्त तव त्यक्तुं, D$_3$ अयुक्त तु भवेत्त्य॰ , S अयुक्त तु मया त्य॰ — $^c$) M$_2$ सति (for भृश) — $^d$) S$_1$ D$_3$ यतो रण॰ , T$_1$ M$_1$ रणाजिर , G$_2$ $_4$ ततो रण

Colophon K$_1$ $_4$ missing — *Major parvan* Ś$_1$ T G$_{2-4}$ आरण्य — *Sub parvan* S$_1$ K$_2$ $_3$ B D M (all om sub parvan name) mention only सौभवध (B$_1$ $_3$ $_4$ सौभवधोपाख्यान , D$_5$ शाल्ववध) — *Adhy name* B$_4$ D$_2$ प्रद्युम्नवाक्य , T$_2$ G$_{2-4}$ M$_1$ अपयानगर्हण — *Adhy no* (figures, words or both) Dn$_1$ n$_2$ S 18, D$_1$ 19 (as in text) — *Śloka no* Dn D$_1$ 33 , D$_6$ 32

## 20

☞ This adhy is missing in K$_1$ $_4$ (cf v l 3 1 1), the MSS are mostly ignored here

**1** Ś$_1$ B$_2$ D$_5$ श्रीकृष्ण , D$_1$ T$_1$ M$_1$ श्रीभगवान् (for

युद्धज्ञश्चासि वृष्णीनां नात्र किंचिदतोऽन्यथा ॥ २
आयुष्मन्नुपदेशस्तु सारथ्ये वर्ततां स्मृतः ।
सर्वार्थेषु रथी रक्ष्यस्त्वं चापि भृशपीडितः ॥ ३
त्वं हि शाल्वप्रयुक्तेन पत्रिणाभिहतो भृशम् ।
कश्मलाभिहतो वीर ततोऽहमपयातवान् ॥ ४
स त्वं सात्वतमुख्याद्य लब्धसंज्ञो यदृच्छया ।
पश्य मे हयसंयाने शिक्षां केशवनन्दन ॥ ५
दारुकेणाहमुत्पन्नो यथावच्चैव शिक्षितः ।
वीतभीः प्रविशाम्येतां शाल्वस्य महतीं चमूम् ॥ ६
एवमुक्त्वा ततो वीर हयान्संचोद्य संगरे ।
रश्मिभिश्च समुद्यम्य जवेनाभ्यपतत्तदा ॥ ७
मण्डलानि विचित्राणि यमकानीतराणि च ।
सव्यानि च विचित्राणि दक्षिणानि च सर्वशः ॥ ८
प्रतोदेनाहता राजन्रश्मिभिश्च समुद्यताः ।
उत्पतन्त इवाकाशं विबभुस्ते हयोत्तमाः ॥ ९
ते हस्तलाघवोपेतं विज्ञाय नृप दारुकिम् ।
दह्यमाना इव तदा पस्पृशुश्चरणैर्महीम् ॥ १०
सोऽपसव्यां चमूं तस्य शाल्वस्य भरतर्षभ ।
चकार नातियत्नेन तदद्भुतमिवाभवत् ॥ ११
अमृष्यमाणोऽपसव्यं प्रद्युम्नेन स सौभराट् ।
यन्तारमस्य सहसा त्रिभिर्बाणैः समर्पयत् ॥ १२
दारुकस्य सुतस्तं तु बाणवेगमचिन्तयन् ।
भूय एव महाबाहो प्रययौ हयसंमतः ॥ १३
ततो बाणान्बहुविधान्पुनरेव स सौभराट् ।
मुमोच तनये वीरे मम रुक्मिणिनन्दने ॥ १४
तानप्राप्ताञ्शितैर्बाणैश्चिच्छेद परवीरहा ।
रौक्मिणेयः स्मितं कृत्वा दर्शयन्हस्तलाघवम् ॥ १५
छिन्नान्दृष्ट्वा तु तान्बाणान्प्रद्युम्नेन स सौभराट् ।

---

वाँसुदेव॰ ) — $^{b}$) $K_{2}$ T G ( except $G_{1}$ ) तथा मृधे, B D ( except $D_{1-3}$ ) ततोब्रवीत् — $^{cd}$) B D ( except $D_{1-3}$ ) प्रद्युम्न बलिना श्रेष्ठ, and श्लक्ष्णम् ( for वाक्यम् )

**3** $^{a}$) $T_{2}$ $G_{2\ 3}$ उपदेशास्तु — $^{b}$) $G_{4}$ शिक्षता, $M_{2}$ शिक्षित॰ ( for वर्तता ) Dc $D_{3}$ श्रुत॰, $D_{2}$ मत॰, $T_{2}$ $G_{2\ 3}$ श्रुता ( for स्मृत॰ )

**4** $D_{4}$ om $4^{a}$–$5^{b}$ — $^{a}$) $T_{2}$ $G_{3\ 4}$ च ( for हि ) — $^{b}$) B D ( except $D_{1-3}$, $D_{4}$ om ) $T_{2}$ $G_{3}$ शरेण ( for पत्रिणा ) $T_{2}$ G ( except $G_{1}$ ) भृशमाहत॰ ( for [अ]भिहतो भृशम् ) — $^{d}$) $K_{3}$ $D_{3}$ $M_{2}$ उपयातवान्

**6** $^{a}$) $Ś_{1}$ $K_{3}$ $Dc_{1}$ $D_{1\ 2}$ दारुकाच्चाहम् ( $K_{3}$ ॰च्चैवम्, $D_{2}$ ॰द्योहम् ) उत्पन्नो, $T_{1}$ दारुकेण समुत्पन्नो — $^{c}$) $Ś_{1}$ प्रतियास्ये सा, S ( except $T_{2}$ $G_{3}$ ) प्रविशाम्येना — $^{d}$) B D ( except $D_{1-3}$ ) प्रथिता चमू

**7** Before 7, $K_{2}$ B D ( except $D_{1-3}$ ) ins वासुदेव ( $B_{2}$ श्रीकृष्ण ) उ॰ — $^{a}$) $D_{1-3}$ $T_{2}$ G ( except $G_{1}$ ) $M_{2}$ वीरो — $^{b}$) $S_{1}$ सयुज्य, $K_{2\ 3}$ ॰नोद्य, $D_{1\ 2}$ योज्य, $D_{3}$ ॰नह्य $T_{1}$ $G_{1}$ $M_{2}$ संयुगे — $^{c}$) B D ( except $D_{1-3\ 5}$ ) तु ( for च )

**8** $^{b}$) $T_{2}$ G या( $G_{2}$ धा )वकानी॰

**9** $^{a}$) $S_{1}$ $K_{2\ 3}$ Dc $D_{1-3}$ हता ( for [आ]हता ) — $^{c}$) Cf 3 18 $2^{c}$ $Ś_{1}$ Dn $D_{5}$ $G_{1}$ आकाशे — $^{d}$) B ( except $B_{4}$ ) Dc Dn $D_{4\ 5}$ व्यचरंस्ते, $D_{1}$ विविशुस्ते, $D_{3}$ प्रवर्षंस्ते

**10** $^{a}$) $D_{1\ 2}$ हया ( for हस्त- ) — $^{c}$) $D_{6}$ $T_{2}$ G ऊ( $D_{6}$ उ )ह्य॰ ( for दह्य॰ ) — $^{d}$) $K_{2}$ B D ( except $D_{1-3}$ ) $T_{2}$ $G_{3}$ नास्पृशन्, $K_{3}$ [अ]पस्पृशन्, $G_{4}$ [अ]पस्पृश्य

**11** $^{a}$) S ( except $T_{2}$ $G_{3}$ ) सोपसव्य $S_{1}$ $K_{3}$ $D_{2}$ तत्र, $D_{1}$ कृत्वा, $T_{2}$ G ( except $G_{1}$ ) ता च ( for तस्य ) — $^{b}$) B पुरुषर्षभ, $M_{2}$ समितिंजय — $^{d}$) = 1 1 $77^{d}$, 201 $9^{d}$ 4 52 $15^{d}$, 53 $29^{d}$ etc

**12** $^{b}$) $D_{2}$ प्रद्युम्नस्य B Dn $D_{1\ 4\ 6}$ च ( for स ) S साल्व॰ समितिदारुण — $^{d}$) $Ś_{1}$ $B_{4}$ $D_{3}$ समर्द॰, $K_{2}$ $B_{1-3}$ Dc Dn $D_{1\ 2\ 4\ 6}$ समार्द॰, $K_{3}$ अमर्ष॰, $D_{5}$ अमर्द ( for समर्प॰ )

**13** $^{a}$) B D ( except $D_{1-3}$ ) तत्र ( for स तु ) — $^{b}$) $S_{1}$ $K_{2}$ $D_{1\ 2}$ ॰पातम्, $K_{3}$ ॰घातम् ( for ॰वेगम् ) — $^{c}$) $T_{2}$ G ( except $G_{1}$ ) महाबाहु॰ — $^{d}$) $K_{3}$ स ( for प्र- ) $K_{2}$ $B_{2\ 3}$ Dn $D_{4\ 6}$ अपसव्यत , $D_{3}$ हयसयुत॰, $T_{1}$ हरिसत्तम , $T_{2}$ $G_{2-4}$ हयमार्गत॰

**14** $^{a}$) $K_{2\ 3}$ S बहुतरान्, $D_{3}$ बहून्राजन् — $^{b}$) $T_{2}$ G भूय एव ( for पुनरेव ) — $^{c}$) $B_{1\ 3\ 4}$ Dn $D_{2-4\ 6}$ $T_{1}$ वीर, $B_{2}$ $Dc_{1}$ $M_{1}$ वीरो

**15** $^{d}$) $Ś_{1}$ $K_{1\ 2}$ $D_{3}$ अस्त्र॰, S ( except $M_{1}$ ) पाणि॰ ( for हस्त॰ )

**16** $^{a}$) $D_{3}$ दृष्ट्वा छिन्नान् ( by transp ), $T_{1}$ $G_{2\ 4}$ भिन्नान्दृष्ट्वा, $G_{1}$ भग्नान्दृष्ट्वा $K_{2}$ $D_{1\ 2}$ ततो, $D_{5}$ [अ]द्भुतान् ( for

आसुरीं दारुणीं मायामास्थाय व्यसृजच्छरान् ॥ १६
प्रयुज्यमानमाज्ञाय दैतेयास्त्रं महाबलः ।
ब्रह्मास्त्रेणान्तरा छित्त्वा मुमोचान्यान्पतत्रिणः ॥ १७
ते तदस्त्रं विधूयाशु विव्यधू रुधिराशनाः ।
शिरस्युरसि वक्त्रे च स मुमोह पपात च ॥ १८
तस्मिन्निपतिते क्षुद्रे शाल्वे बाणप्रपीडिते ।
रौक्मिणेयोऽपरं बाणं संदधे शत्रुनाशनम् ॥ १९

　तमर्चितं सर्वदाशार्हपूगै-
　　राशीर्भिरर्कज्वलनप्रकाशम् ।
　दृष्ट्वा शरं ज्यामभिनीयमानं
　　बभूव हाहाकृतमन्तरिक्षम् ॥ २०

ततो देवगणाः सर्वे सेन्द्राः सहधनेश्वराः ।
नारदं प्रेषयामासुः श्वसनं च महाबलम् ॥ २१
तौ रौक्मिणेयमागम्य वचोऽब्रूतां दिवौकसाम् ।
नैष वध्यस्त्वया वीर शाल्वराजः कथंचन ॥ २२
संहरस्व पुनर्बाणमवध्योऽयं त्वया रणे ।
एतस्य हि शरस्याजौ नावध्योऽस्ति पुमान्कचित् ॥ २३
मृत्युरस्य महाबाहो रणे देवकिनन्दनः ।
कृष्णः संकल्पितो धात्रा तन्न मिथ्या भवेदिति ॥ २४
ततः परमसंहृष्टः प्रद्युम्नः शरमुत्तमम् ।
संजहार धनुःश्रेष्ठात्तूणे चैव न्यवेशयत् ॥ २५
तत उत्थाय राजेन्द्र शाल्वः परमदुर्मनाः ।
व्यपायात्सबलस्तूर्णं प्रद्युम्नशरपीडितः ॥ २६
स द्वारकां परित्यज्य क्रूरो वृष्णिभिरर्दितः ।
सौभमास्थाय राजेन्द्र दिवमाचक्रमे तदा ॥ २७

इति श्रीमहाभारते आरण्यकपर्वणि विंशोऽध्यायः ॥ २० ॥

---

तु तान्) T$_2$ G (except G$_1$) बाणान्वै (for तान्बाणान्) — $^b$) Dn D$_3$ $_6$ च (for स) — $^c$) Ś$_1$ B$_2$ D$_3$ M दारुणा, K$_3$ दानवीं — $^d$) G$_2$ $_4$ [अ]वासृज°

**17** $^a$) Ś$_1$ तं स्तुत्वा, K$_2$ $_3$ B$_4$m D$_{1-3}$ त (D$_3$ स) ज्ञात्वा (for आज्ञाय) B$_4$ Dc तत्प्रयुज्यतमाज्ञाय. S ता प्रयुक्ता (G$_1$ सप्रयुक्त; M$_2$ तत्प्रयुक्तं) समाज्ञाय — $^b$) K$_2$ $_3$ °हवे, B (except B$_2$) Dn D$_{4-6}$ G$_2$ $_4$ °बल (for °बल°)

**18** $^a$) D$_3$ ततो हस्ताद्विनिःक्षिप्ता; S तस्य चास्त्र (M$_2$ ते तदस्त्र) विधूयाथ — $^b$) D$_3$ विधिवद्; T G विव्याथ, M$_1$ विव्याध, M$_2$ विविद्धू (for विव्यधू) B$_1$ रुधिराशनै, T$_1$ G$_1$ M$_1$ °नान्, T$_2$ G$_{2-4}$ °न

**19** $^c$) D$_1$ T$_2$ G$_3$ $_4$ पर (for [अ]पर) — $^d$) K$_3$ T$_2$ G$_3$ शत्रुतापन, T$_1$ G$_1$ $_4$ M$_1$ °तापन°, G$_2$ °शातन°

**20** $^a$) K$_2$ $_3$ B$_2$ Dn$_1$ n$_3$ D$_{1-5}$ G (except G$_3$) M$_2$ दशार्ह- Ś$_1$ K$_2$ $_3$ D$_{1-3}$ $_5$ -मुख्यैर् (for -पूगैर्) — $^b$) K$_2$ B D आशीविषाग्नि(B$_2$ Dc °र्क)ज्वलन(B$_4$ °ज्वलित)प्रकाश, T$_1$ G$_1$ M आशीर्भिरग्नि(M$_2$ °श्मि)ज्वलित(G$_1$ °ज्वलन)प्र°, T$_2$ G$_{2-4}$ आशीर्भिराजज्वलनप्र° (sic)

**21** $^b$) B$_3$ सहमहेश्वरा°, D$_3$ सभुवने°, T$_2$ G$_3$ ससदिगी°, G$_2$ $_4$ सपतगे° — $^d$) B D (except D$_{1-3}$) मनोजव (for महा )

**22** $^a$) Ś$_1$ T G$_3$ $_4$ आगत्य, G$_1$ M$_1$ आसाद्य

**23** K$_3$ om 23 — $^a$) D$_1$ $_2$ महायाण — $^b$) Dc रणे त्वया (by transp ) — $^c$) B D (except D$_{1-3}$) M$_2$ च (for हि)

**24** $^d$) Dn D$_4$ $_6$ तन्मिथ्या न, D$_3$ M$_2$ न तन्मिथ्या (by transp) G$_1$ भविष्यति

**25** $^d$) K$_2$ $_3$ तूर्णे; S तूणौ Ś$_1$ चैव, K$_3$ B$_2$ Dc D$_3$ $_5$ चैन

**27** M$_2$ om (hapl ) 27$^{abc}$ (with 26$^{bcd}$) — $^b$) T G (except G$_3$) M$_1$ साल्वो (for क्रूरो) B$_1$ Dn$_2$ T$_2$ G$_3$ आर्दित

Colophon om in K$_3$ K$_1$ $_4$ missing — *Major parvan* Ś$_1$ T G$_{2-4}$ आरण्य — *Sub parvan* Ś$_1$ K$_2$ B Dn Dc D$_1$ $_4$ $_6$ (all om sub parvan name) mention only सौभवध (B$_1$ $_3$ $_4$ Dc सौभवधोपाख्यान); D$_5$ likewise only शाल्ववध — *Adhy name* D$_2$ प्रद्युम्नेन शाल्वपराजय; M$_1$ साल्वापयान — *Adhy no* (figures, words or both) Dn S 19, D$_1$ 20 (as in text) — *Śloka no* Dn D$_1$ $_6$ 27

## 21

☞ This adhy is missing in K$_1$ $_4$ (cf v l 3 1 1), the MSS are mostly ignored here

**1** B$_3$ D$_2$ $_5$ T$_2$ G$_{2-4}$ श्रीकृष्ण°, D$_1$ T$_1$ M$_1$ श्रीभगवान्

# २१

वासुदेव उवाच ।

आनर्तनगरं मुक्तं ततोऽहमगमं तदा ।
महाक्रतौ राजसूये निवृत्ते नृपते तव ॥ १
अपश्यं द्वारकां चाहं महाराज हतत्विषम् ।
निःस्वाध्यायवषट्कारां निर्भूषणवरस्त्रियम् ॥ २
अनभिज्ञेयरूपाणि द्वारकोपवनानि च ।
दृष्ट्वा शङ्कोपपन्नोऽहमपृच्छं हृदिकात्मजम् ॥ ३
अस्वस्थनरनारीकमिदं वृष्णिपुरं भृशम् ।
किमिदं नरशार्दूल श्रोतुमिच्छामहे वयम् ॥ ४
एवमुक्तस्तु स मया विस्तरेणेदमब्रवीत् ।
रोधं मोक्षं च शाल्वेन हार्दिक्यो राजसत्तम ॥ ५
ततोऽहं कौरवश्रेष्ठ श्रुत्वा सर्वमशेषतः ।
विनाशे शाल्वराजस्य तदैवाकरवं मतिम् ॥ ६
ततोऽहं भरतश्रेष्ठ समाश्वास्य पुरे जनम् ।
राजानमाहुकं चैव तथैवानकदुन्दुभिम् ।
सर्ववृष्णिप्रवीरांश्च हर्षयन्नब्रुवं तदा ॥ ७
अप्रमादः सदा कार्यो नगरे यादवर्षभाः ।
शाल्वराजविनाशाय प्रयातं मां निबोधत ॥ ८
नाहत्वा तं निवर्तिष्ये पुरीं द्वारवतीं प्रति ।
सशाल्वं सौभनगरं हत्वा द्रष्टास्मि वः पुनः ।
त्रिसामा हन्यतामेषा दुन्दुभिः शत्रुभीषणी ॥ ९
ते मयाश्वासिता वीरा यथावद्भरतर्षभ ।
सर्वे मामब्रुवन्हृष्टाः प्रयाहि जहि शात्रवान् ॥ १०
तैः प्रहृष्टात्मभिर्वीरैराशीर्भिरभिनन्दितः ।
वाचयित्वा द्विजश्रेष्ठान्प्रणम्य शिरसाहुकम् ॥ ११
सैन्यसुग्रीवयुक्तेन रथेनानादयन्दिशः ।
प्रध्माप्य शङ्खप्रवरं पाञ्चजन्यमहं नृप ॥ १२
प्रयातोऽस्मि नरव्याघ्र बलेन महता वृतः ।

---

(for वासुदेव॰) — $^{a}$) $D_1$ रम्य (for मुक्त) S °नगरीं मुक्ता ($G_{1\ 4}$ मुक्त्वा, $M_3$ मुख्या) — $^{d}$) A few MSS निर्वृत्ते S (except $M_2$) भरतर्षभ (for नृपते तव)

**2** $^{a}$) $D_8$ चैना, $T_1$ $G_1$ $M_1$ चैव, $T_2$ $G_{2-4}$ चापि (for चाहं) — $^{b}$) $K_{2\ 3}$ दूरादेव (for महा°) — $^{d}$) Ś$_1$ निर्भूषणमिव स्त्रिय, $M_3$ निर्भूषामिव योषितं

**3** $^{c}$) $M_3$ दृष्ट्वाहं शङ्कमानो वै — $^{d}$) $G_{1\ 2}$ अपश्यं, $G_4$ पप्रच्छ, $M_3$ ह्यपृच्छं

**4** $^{b}$) Dn $T_2$ $G_3$ °कुलं (for °पुरं) Ś$_1$ वरं, $D_{1\ 2}$ महत् (for भृशम्) — $^{d}$) = 1 2 1$^{d}$, 31 3$^{d}$, 86 8$^{d}$, etc Ś$_1$ इच्छामि तेनघ, $K_3$ B Dc Dn $D_{4-6}$ °मि सत्वत॰; $K_3$ $D_{1-3}$ °मि ते वच (for इच्छामहे वयम्)

**5** $^{a}$) $K_2$ B D (except $D_{1-3}$) $G_{2\ 4}$ transp तु and स — $^{d}$) Ś$_1$ $K_3$ Dc $D_{1-3\ 5}$ $M_2$ वृष्णिसत्तम॰ (for राज°)

**6** $^{a}$) $K_3$ $B_3$ Dn $D_{4\ 6}$ $T_2$ $G_3$ भरतश्रेष्ठ — $^{b}$) $K_3$ S श्रुत्वाप्रियमनुत्तमं, Dc $D_5$ श्रुत्वा सुमहदप्रियं — $^{c}$) $M_1$ सालराजविनाशाय

**7** $^{e}$) $K_2$ B D (except $D_{1-3}$) $M_3$ सर्वान् (for सर्व-) $S_1$ $K_{2\ 3}$ $D_{1-3}$ तान् (for च) — $^{f}$) Dc $D_5$ इदमब्रुव (for अब्रुवं तदा)

**8** $^{d}$) $K_3$ $D_{1\ 2}$ प्रायात मा, $D_3$ [अ]भियातोस्मि

**9** $^{a}$) $T_1$ $G_1$ M वि- (for त) $T_2$ $G_{2-4}$ त हत्वा विनिवर्तिष्ये — $^{e}$) Ś$_1$ $D_{1\ 2}$ त्रि(Ś$_1$ त्रिः)सामा ताड्यताम्, $K_3$ B Dn$_3$ $D_{4\ 6}$ T $G_{1-3}$ M Cnp त्रि॰ समाहन्यताम्, Dc $D_5$ त्रि॰ समा($D_5$ °मे) ताड्यताम्, Dn$_1$ n$_3$ $G_4$ त्रि॰ सामाहन्यताम्, $D_3$ भृशमावाद्यताम् Cn cites त्रि॰सामा (= त्रिस्वरा नीचमन्द्रतारभावेन) $K_2$ $D_{1\ 3}$ S (except $G_1$ $M_2$) एष $K_3$ प्रशाम्य तान्यतामेषा — $^{f}$) $K_2$ Dn $D_6$ दुंदुभी $K_3$ B Dc Dn $D_{4-6}$ °भीषणा, $D_{1\ 3}$ S (except $G_1$ $M_2$) °भीषण॰

**11** $^{a}$) $K_3$ Dc$_1$ $D_{2\ 4}$ प्रकृष्टा° — $^{d}$) Ś$_1$ त्वहं, $K_3$ B Dc Dn $D_{1\ 4-6}$ M भव, $K_3$ $D_3$ च तान्, $D_2$ तथा (for [आ]हुक)

**12** $^{a}$) = 1 212 3$^{c}$ $K_2$ B D (except $D_1$) शैब्य° ($B_{3\ 4}$ $D_5$ सैब्य°) — $^{b}$) $D_2$ आनंद°, T $G_{1\ 3\ 4}$ आच्छाद°, $M_1$ उन्नाद° — $^{c}$) $K_3$ प्रगृह्य, $B_1$ Dn $T_2$ $G_3$ प्रध्माय — $^{d}$) $K_3$ च भारत; S भयावहं (for अहं नृप)

**13** $^{a}$) Ś$_1$ $K_3$ $D_{1-3}$ नरश्रेष्ठ, $M_2$ महाराज (for नर°) — $^{c}$) $B_2$ $G_1$ दृप्तेन; $M_3$ युक्तेन — $^{d}$) Ś$_1$ $K_3$ Dc Dn

क्लसेन चतुरङ्गेण बलेन जितकाशिना ॥ १३
समतीत्य बहून्देशान्गिरींश्च बहुपादपान् ।
सरांसि सरितश्चैव मार्तिकावतमासदम् ॥ १४
तत्राश्रौषं नरव्याघ्र शाल्वं नगरमन्तिकात् ।
प्रयातं सौभमास्थाय तमहं पृष्ठतोऽन्वयाम् ॥ १५
ततः सागरमासाद्य कुक्षौ तस्य महोर्मिणः ।
समुद्रनाभ्यां शाल्वोऽभूत्सौभमास्थाय शत्रुहन् ॥ १६
स समालोक्य दूरान्मां स्मयन्निव युधिष्ठिर ।
आह्वयामास दुष्टात्मा युद्धायैव मुहुर्मुहुः ॥ १७
तस्य शार्ङ्गविनिर्मुक्तैर्बहुभिर्मर्मभेदिभिः ।
पुरं नासाद्यत शरैस्ततो मां रोष आविशत् ॥ १८
स चापि पापप्रकृतिर्दैतेयापसदो नृप ।
मय्यवर्षत दुर्धर्षः शरधाराः सहस्रशः ॥ १९
सैनिकान्मम सूतं च हयांश्च समवाकिरत् ।
अचिन्तयन्तस्तु शरान्वयं युध्याम भारत ॥ २०
ततः शतसहस्राणि शराणां नतपर्वणाम् ।
चिक्षिपुः समरे वीरा मयि शाल्वपदानुगाः ॥ २१
ते हयान्मे रथं चैव तदा दारुकमेव च ।
छादयामासुरसुरा बाणैर्मर्मविभेदिभिः ॥ २२
न हया न रथो वीर न यन्ता मम दारुकः ।
अदृश्यन्त शरैश्छन्नास्तथाहं सैनिकाश्च मे ॥ २३
ततोऽहमपि कौरव्य शराणामयुतान्बहून् ।
अभिमन्त्रितानां धनुषा दिव्येन विधिनाक्षिपम् ॥ २४
न तत्र विषयस्त्वासीन्मम सैन्यस्य भारत ।
खे विषक्तं हि तत्सौभं क्रोशमात्र इवाभवत् ॥ २५
ततस्ते प्रेक्षकाः सर्वे रङ्गवाट इव स्थिताः ।

---

D3 5 यत्नेन, K2 B D1 2 4 6 यत्तेन

**15** b) K2 B D (except D1–3) T2 G3 4 M2 सागरम् (for नगरम्) D5 अतिके — c) B Dn1 n2 n3 (before corr) D2 T G3 प्रयात — d) K3 Dc D5 G1 [ऽ]न्वगा, T1 [ऽ]न्विया — After 15, S (except M2) ins

80* दृष्टवानस्मि राजेन्द्र साल्वराजमथान्तिके ।

**16** b) S (except M2) चलो (for महो°) — After 16, T G2–4 M1 ins

81* स मामालोक्य सहसा सेना स्वा प्राहिणोन्मृधे ।
महाहुना च सेनाया शिष्टाया किंचिदेव च ।

[(L 1) T2 G3 स समालोक्य G4 M1 युधि (for मृधे)]

**17** a) D5 समालोक्य च, S (except M2) स मामालोक्य S (except M2) सहसा (for दूरान्मा) — After 17, T1 reads 19cd–20ab, *repeating* the lines in their proper place

**18** T2 G2 3 om 18a–19b G1 reads 18 after 20ab — a) Dc M तत (for तस्य) — c) G1 बलम्, M2 परो (for पुर) D1 G1 om न D2 आच्छाद्य च (om न), D5 नासाद्य स M2 तदा (for शरैस्) — d) Some MSS मा (for मा)

**19** T2 G2 3 om 19ab (cf v l. 18) For T1 cf v.l 17 — a) T1 G4 M1 परमक्रुद्धो (for पाप) — b) T G4 M पापशदो G4 [ऽ]भवत् (for नृप) — c) K3 T1 (second time) G1 4 अभ्यवर्षत, D1 मय्यभ्यवर्षद्, D2 मय्यवर्षस्त, T1 (first time) पर्यवर्षत, T2 G2 3 सम°

**20** For T1 cf v l 17 — a) S1 मा च, T1 (both times) G (except G3) M1 चैव (for मम) — b) K3 B1 Dn D4 स समा° (for समवा°) D3 स हयांश्च समाकिरत् — After 20ab, G1 reads 18 — c) K3 D3 M2 च, T2 G2–4 [अ]स्य (for तु) G1 अचिंतयंस्तु स शरान् — d) T G M1 योत्स्याम (for युध्या) M2 प्रतियुध्यामहे परान्

**22** c) K2 B D (except D1–3) M2 च (for मे) — b) K3 स त (? read सूत), D1 तथा, D3 तच्च, S ध्वज (for तदा) — d) B D तैर्बाणैर् (D1 सुबाणैर्, D5 शरैस्तैर्) मर्मभेदिभि° (D3 बाणैर्मर्मातिभेदिभि°), S (except M2) साल्वराजेन चोदिता°

**23** a) Ś1 D5 T2 G3 4 वीरा (for र) — b) Ś1 D2 न वरूथो (D2 थ) न दारुक°, D1 न च रूप न दारुक, S (except M2, G4 broken) न ध्वजो न च दारुक — d) D3 तसोह, T2 G2–4 न चाह

**24** a) K2 B D (except D1–3) कौंतेय (for कौरव्य) — c) Hypermetric! K2 B Dc Dn D4 6 आमन्त्रिताना, K3 अभिमन्त्रितेन; T1 अभिमन्त्रिताश्च; T2 G अनुमन्त्र्य साश्च (G ता), M1 अभिमन्त्रिताश्च ※ Cn आमन्त्रिताना अभिमन्त्रिताना । ※ S (except M2) धनुषि

**25** a) T1 विषय, T2 G2 3 विषयाश्च K3 D3 5 चासीत्, T2 G2–4 चासन् — c) S सैन्य (for सौभ) — d) D2 om क्रोशमात्रम्

**26** b) Dc1 D3 M2 [आ]स्थिता° T G M1 से देवा (G1

हर्षयामासुरुच्चैर्मां सिंहनादतलस्वनैः ॥ २६
मत्कार्मुकविनिर्मुक्ता दानवानां महारणे ।
अङ्गेषु रुधिराक्तास्ते विविशुः शलभा इव ॥ २७
ततो हलहलाशब्दः सौभमध्ये व्यवर्धत ।
वध्यतां विशिखैस्तीक्ष्णैः पततां च महार्णवे ॥ २८
ते निकृत्तभुजस्कन्धाः कबन्धाकृतिदर्शनाः ।
नदन्तो भैरवान्नादान्निपतन्ति स्म दानवाः ॥ २९
ततो गोक्षीरकुन्देन्दुमृणालरजतप्रभम् ।
जलजं पाञ्चजन्यं वै प्राणेनाहमपूरयम् ॥ ३०
तान्दृष्ट्वा पतितांस्तत्र शाल्वः सौभपतिस्तदा ।
मायायुद्धेन महता योधयामास मां युधि ॥ ३१
ततो हुडहुडाः प्रासाः शक्तिशूलपरश्वधाः ।
पट्टिशाश्च भुशुण्ड्यश्च प्रापतन्ननिशं मयि ॥ ३२
तानहं माययैवाशु प्रतिगृह्य व्यनाशयम् ।
तस्यां हतायां मायायां गिरिशृङ्गैरयोधयत् ॥ ३३
ततोऽभवत्तम इव प्रभातमिव चाभवत् ।
दुर्दिनं सुदिनं चैव शीतमुष्णं च भारत ॥ ३४
एवं मायां विकुर्वाणो योधयामास मां रिपुः ।
विज्ञाय तदहं सर्वं माययैव व्यनाशयम् ।
यथाकालं तु युद्धेन व्यधमं सर्वतः शरैः ॥ ३५
ततो व्योम महाराज शतसूर्यमिवाभवत् ।
शतचन्द्रं च कौन्तेय सहस्रायुततारकम् ॥ ३६

---

देवा वै ) दिवमास्थिता

**27** a) K₂ B (except B₂) D (except D₁₋₃) M₂ मत्कराग्र°, T₂ G₂₋₄ °विमुक्तास्ते — b) Ś₁ D₁₋₃ बाणास्ते वातरहस॰ (D₂ ₃ °सा), K₂ B Dc Dn D₄₋₆ M₂ दानवाना शरास्तथा (B₃ °दा, M₂ °त), K₃ बाणास्तान्दानवास्तत॰ — c) Ś₁ K₃ D₁ ₃ ₅ रुचि(K₃ °धि)रागास्ते, K₂ B Dc Dn D₄ ₆ रुचिरापागा, D₂ M₂ रुधिराशास्ते, T₁ रुधिरासक्ता

**28** b) Ś₁ D₁ ₅ T₂ G₃ व्यवर्तत, D₂ व्यवस्थित॰, D₃ प्रवर्तत, T₁ ह्यवर्तत, G₁ ₂ ₄ M₁ [S]भ्यवर्तत — c) Ś₁ K₃ D₁ ₂ विद्धाना, D₃ विज्ञान (for वध्यता) K₃ D₁ ₂ निशितै° (for विशिखै°)

**29** c) B (except B₄) Dc रुवंतो (for नदन्तो) — After 29, N (except K₃, K₁ ₄ missing) ins

82* पतितास्तेऽपि भक्ष्यन्ते समुद्राम्भोनिवासिभि॰ ।
[Dc तेपि मज्जन्त, D₁ ते ह्यभक्ष्यत (for तेऽपि भक्ष्यन्ते)]

**31** b) K₂ Dn D₄ ₆ तत, D₂ तथा (for तदा) T₂ G (except G₁) साल्वराजपुरस्कृतान् — After 31, K₃ (which om 32ab) D₁ ins 83*

**32** K₃ om 32ab — a) K₂ Dn D₄ ₆ गदा हला॰, B Dc हला (Dc °ल-) गदा, D₁ ₂ हुडा गुडा॰, D₅ भिंडी गदा, T₂ G₃ हि बहुला; M₁ गुळहुळ॰, M₂ हुळगुण॰ (for हुडहुडा॰) Ś₁ चापि (for प्रासा॰) D₃ तान्येव लगुडप्रासा॰ — b) B₃ Dn D₂₋₄ ₆ transp शक्ति॰ and शूल॰ Many N MSS °परस्वधा॰ — K₂ Dn D₂ ins after 32ab, K₃ (which om 32ab) D₁ ins after 31

83* असय॰ शक्तिमुशलपाशर्ष्टिकणपा॰ शरा॰ ।
[K₂ -कुशल-, Dn -कुलिश- (for -मुशल-) K₂ Dn -कनपा, D₂ -घनपा (for -कणपा)]

— c) S पट्टसाश्च (T₁ पट्टप्रास) K₂ ₃ भुशुड्य°, D₁ ₂ मुसुड्य°, T₁ G₂ ₄ मुस(G₄ °सु)ड्य°, T₂ G₃ मुसुल्य°, G₁ मुसूला°, M मुसुण्ड्य° (for भुशुण्ड्य°) — D₁ om 32d–34c — d) K₃ Dn D₂ ₃ ₅ T₁ प्रपतति (D₃ °त); B पातयन् (for प्रापतन्) B₁ ₄ स्वनिशं, Dc निशिता (for अनिशं)

**33** D₁ om 33 (cf v l 32) — a) Ś₁ K₃ B Dc Dn D₄ ₆ तामह, G₂ ततोह — b) G₁ ₂ प्रतिहत्य K₂ ₃ D₂ विनाशय — c) Ś₁ तु मया, D₂ माया तु, M₂ दुष्टाया (for मायाया)

**34** D₁ om 34abc (cf v l 32) — b) N (D₁ om, K₁ ₄ missing) T₂ (by corr) G₃ प्रकाश, T₂ (orig) G₂ ₄ प्रभात (for प्रभातम्) D₅ वाभवत्, M₂ चाभिभो B₁ om 34cd — c) B₂ सुदिन दुर्दिन चैव — After 34, Ś₁ K₂ B D (except D₁ ₂) ins

84* अङ्गारपांशुवर्षं च शस्त्रवर्षं च भारत ।

**35** a) Dn₂ n₃ D₆ प्र° (for वि°) — b) A few MSS मा (for मां) — d) T₂ G (except G₁) तदा माया (for माययैव) K₂ विनाशय, D₃ M₂ वि(M₂ व्य)नाशयन्, T₁ विनाशन, M₁ व्यशातय — K₃ om 35ef, D₂ om 35e–36b — ef) B₂ यथाकालं च व्यधम तामह स° — K₃ (which om 35ef and line 1 of the foll passage) ins after 35cd D₁, after 35ef

85* स मोहयामास तदा मायया युधि दानव॰ ।
ततो हताया च मया मायाया युधि दानव॰ ।

**37** a) Ś₁ K₃ Dc D₁₋₃ ₅ मया, M₂ विभो (for तदा) — b) Ś₁ तथा रात्रिर्दिवानिश — c) T₂ G₂ ₃ तम् (for

ततो नाज्ञायत तदा दिवारात्रं तथा दिशः ।
ततोऽहं मोहमापन्नः प्रज्ञास्त्रं समयोजयम् ।
ततस्तदस्त्रमस्त्रेण विधूतं शरतूलवत् ॥ ३७
तथा तदभवद्युद्धं तुमुलं लोमहर्षणम् ।
लब्धालोकश्च राजेन्द्र पुनः शत्रुमयोधयम् ॥ ३८

इति श्रीमहाभारते आरण्यकपर्वणि एकविंशोऽध्यायः ॥ २१ ॥

# २२

वासुदेव उवाच ।
एवं स पुरुषव्याघ्र शाल्वो राज्ञां महारिपुः ।
युध्यमानो मया संख्ये वियदभ्यागमत्पुनः ॥ १
ततः शतघ्नीश्च महागदाश्च
दीप्तांश्च शूलान्मुसलानसींश्च ।
चिक्षेप रोषान्मयि मन्दबुद्धिः
शाल्वो महाराज जयाभिकाङ्क्षी ॥ २
तानाशुगैरापततोऽहमाशु
निवार्य तूर्णं खगमान्ख एव ।
द्विधा त्रिधा चाच्छिनमाशु मुक्तै-
स्ततोऽन्तरिक्षे निनदो बभूव ॥ ३
ततः शतसहस्रेण शराणां नतपर्वणाम् ।
दारुकं वाजिनश्चैव रथं च समवाकिरत् ॥ ४
ततो मामब्रवीद्वीर दारुको विह्वलन्निव ।
स्थातव्यमिति तिष्ठामि शाल्वबाणप्रपीडितः ॥ ५
इति तस्य निशम्याहं सारथेः करुणं वचः ।

---

तद्) $K_3$ B D (except $D_{1-3, 5}$) कौंतेय (for अस्त्रेण) — $^f$) $M_2$ विधूय $K_3$ $D_{2, 3}$ तूण° (for तूल°) $K_2$ B Dc Dn $D_{4, 6}$ धूतं तूल($B_2$ घ्नत तृण, $B_3$ धूत तूण)मिवानिलै°, $T_2$ $G_{2-4}$ वायुना तूलराशिवत्

**38** $^a$) $Ś_1$ $D_{1-3}$ तदा, S (except $M_2$) एव (for तथा) $D_2$ M (except $M_2$) समभवद् — $^b$) A few MSS तुमल $K_2$ S (except $G_4$) रोम° — $^c$) $D_3$ $T_2$ G $M_1$ °लोक (for °लोकश्च) $K_2$ B D (except $D_{1-3}$) $T_1$ तु (for च)

Colophon $K_{1, 4}$ missing — *Major parvan* $Ś_1$ $Dn_2$ T $G_{1-3}$ आरण्य — *Sub parvan* $Ś_1$ $K_4$ $B_2$ $D_{1-3}$ $T_2$ $G_3$ M (all om sub parvan name) mention only सौभवध, $K_3$ likewise only सौभोपाख्यान, $B_{1, 3, 4}$ Dc $Dn_1$ $n_3$ $D_{4, 6}$ only सौभवधोपाख्यान, and $D_5$ only शाल्ववध — *Adhy name* $D_2$ श्रीकृष्णशाल्वयुद्ध, $T_2$ $G_3$ साल्वसमागम°, $M_1$ कृष्णसाल्वसमागम — *Adhy no* (figures, words or both) Dn S 20, $D_1$ 21 (as in text) — *Śloka no* $Dn_1$ 42, $Dn_2$ $n_3$ $D_6$ 41, $D_1$ 40

## 22

☞ This adhy is missing in $K_{1, 4}$ (cf v l 3 1 1), the MSS are mostly ignored here

**1** $Ś_1$ $B_3$ $D_{1, 2}$ श्रीकृष्ण°, $T_1$ $M_1$ श्रीभगवान् (for वासुदेव) — $^a$) $Ś_1$ $K_3$ B (except $B_3$) Dn $D_{4, 6}$ $T_1$ $G_1$ पुरुषव्याघ्र° — $^b$) $Ś_1$ $K_3$ $D_{1-3}$ सर्वराज्ञा, $K_2$ B Dc Dn $D_{4-6}$ $T_2$ G (except $G_1$) $M_2$ शाल्वराजो, $M_1$ साल्वो राजा — $^d$) $K_3$ B D (except $D_{1, 2}$) $M_2$ अभ्यगमत्

**2** $^b$) Dc $Dn_2$ $n_3$ $D_{4, 6}$ मुशलान्, $D_1$ च महान् S (except $M_2$) अपि ($T_1$ $G_1$ $M_1$ °सि) सायकांश्च (for मुसलान°) $D_3$ शूलास्तथा मुद्गरकानसींश्च — $^c$) $K_3$ $D_{1-3}$ राजन् (for रोषान्)

**3** $^a$) $Ś_1$ तानाशुगान्; $K_3$ तैश्चाशु तान्, $D_3$ तानाशु बाणैश्च ततो महास्त्रै° — $^b$) $K_2$ $B_4$ Dn $D_{4, 6}$ हन्तु (for तूर्णं) $D_3$ शतश° (for खगमान्) $D_1$ खगैश्च, $D_3$ समेत्य (for ख एव) — $^c$) B Dc $D_{1, 2}$ चाच्छिद, $D_3$ छिद्यमाना° $D_1$ अस्त्रमुक्तैस्, $D_2$ चाशु मुक्तौ; $D_3$ सुमुक्तैस्

**4** $^d$) $T_2$ G (except $G_1$) रथचक्रमवाकिरत्

**5** $^a$) $T_1$ वीरो; $T_2$ G (except $G_1$) $M_1$ धीरो (for वीर) — $^b$) $T_2$ G (except $G_1$) विह्वलन्निव दारुक° — $^d$) Cf $9^d$ $T_2$ $G_{2, 3}$ -[अ]भि (for -प्र) $G_4$ साल्वराजाभिपी° — After 5, $K_2$ B Dc $Dn_1$ $n_2$ $D_{4-6}$ ins

86* अवस्थातुं न शक्यामि अङ्गं मे व्यवसीदति ।

**6** $^d$) $K_{2, 3}$ अवश्य, $D_{1-3}$ अतीव, T G भवशं (for अपश्य) S (except $M_2$) भृश° (for शर°)

अवेक्षमाणो यन्तारमपश्यं शरपीडितम् ॥ ६
न तस्योरसि नो मूर्ध्नि न काये न भुजद्वये ।
अन्तरं पाण्डवश्रेष्ठ पश्यामि नहतं शरैः ॥ ७
स तु बाणवरोत्पीडाद्विस्रवत्यसृगुल्बणम् ।
अभिवृष्टो यथा मेघैर्गिरिर्गैरिकधातुमान् ॥ ८
अभीषुहस्तं तं दृष्ट्वा सीदन्तं सारथिं रणे ।
अस्तम्भयं महाबाहो शाल्वबाणप्रपीडितम् ॥ ९
अथ मां पुरुषः कश्चिद्द्वारकानिलयोऽब्रवीत् ।
त्वरितो रथमभ्येत्य सौहृदादिव भारत ॥ १०
आहुकस्य वचो वीर तस्यैव परिचारकः ।
विषण्णः सन्नकण्ठो वै तन्निबोध युधिष्ठिर ॥ ११
द्वारकाधिपतिर्वीर आह त्वामाहुको वचः ।
केशवेह विजानीष्व यत्त्वां पितृसखोऽब्रवीत् ॥ १२
उपयात्वाद्य शाल्वेन द्वारकां वृष्णिनन्दन ।
विषक्ते त्वयि दुर्धर्ष हतः शूरसुतो बलात् ॥ १३
तदलं साधु युद्धेन निवर्तस्व जनार्दन ।
द्वारकामेव रक्षस्व कार्यमेतन्महत्तव ॥ १४
इत्यहं तस्य वचनं श्रुत्वा परमदुर्मनाः ।
निश्चयं नाधिगच्छामि कर्तव्यस्येतरस्य वा ॥ १५
सात्यकिं बलदेवं च प्रद्युम्नं च महारथम् ।
जगर्हे मनसा वीर तच्छ्रुत्वा विप्रियं वचः ॥ १६
अहं हि द्वारकायाश्च पितुश्च कुरुनन्दन ।
तेषु रक्षां समाधाय प्रयातः सौभपातने ॥ १७
बलदेवो महाबाहुः कच्चिज्जीवति शत्रुहा ।
सात्यकी रौक्मिणेयश्च चारुदेष्णश्च वीर्यवान् ।
साम्बप्रभृतयश्चैवेत्यहमासं सुदुर्मनाः ॥ १८
एतेषु हि नरव्याघ्र जीवत्सु न कथंचन ।
शक्यः शूरसुतो हन्तुमपि वज्रभृता स्वयम् ॥ १९
हतः शूरसुतो व्यक्तं व्यक्तं ते च परासवः ।
बलदेवमुखाः सर्वे इति मे निश्चिता मतिः ॥ २०

---

**7** $^{a}$) $G_2$ $M_3$ तस्योरसि ततो ($M_3$ तथा) मूर्ध्नि — $^{d}$) Ś$_1$ $K_3$ $D_{1-3}$ यद($K_3$ °दि)नाह(Ś$_1$ °ह्)त, $K_2$ B Dn $D_4$ $_6$ [अ]($K_2$ om अ)निचित शरै°, Dc $D_5$ निशित ($D_5$ °तै) शरै°, $G_1$ $_2$ $M_1$ निहत शरै, $M_2$ [अ]निहत शरै

**8** $^{a}$) Ś$_1$ °शरोत्पीडाद्, $K_3$ $D_{1-3}$ °वधोत्पीडाद्, S °मयो त्पीडो — $^{b}$) $D_3$ विसृजन्नसृगु°, S व्यसृजद्रुधिर बहु ($M_2$ conflated व्यसृजच्चासृगुल्बण) — $^{c}$) $K_2$ Dn $D_{4-6}$ $T_2$ $G_3$ अभिवृष्टे, B Dc अतिवृष्टे, $G_1$ अतिसृष्टो $K_2$ B D (except $D_{1-3}$) मेघे — $^{d}$) $G_1$ °धातुभि°

**9** $^{a}$) Ś$_1$ S (except $T_2$ $G_3$) अभीशु° — $^{c}$) S (except $G_3$, $T_2$ before corr) सस्तभय — $^{d}$) Cf $5^{d}$ $T_2$ $G_3$ $_4$ °बाणाभिपी°

**10** $^{c}$) $B_2$ Dn $D_4$ $_6$ आरोप्य (for अभ्येत्य)

**11** $^{c}$) $M_2$ विवर्ण (for विषण्ण°) $K_2$ B D (except $D_{1-3}$) °कठेन, S (except $M_2$) °कठश्च

**12** $^{a}$) Ś$_1$ वीरम् — $^{b}$) $D_1$ $_2$ प्राह (for आह) — $^{c}$) $K_2$ B Dn $D_{4-6}$ [ए]हि, Dc [ए]तद्, $T_2$ $G_3$ $_4$ [ए]व (for [इ]ह) Ś$_1$ $K_3$ $D_{1-3}$ $_5$ विजानीहि

**13** $^{a}$) Ś$_1$ $B_3$ Dc उपयाय, $K_2$ $_3$ $B_1$ $_2$ $_4$ Dn $D_4$ $_6$ उपायाय, $D_1$ उपगम्य, $D_2$ उपायातो, $D_3$ उपागत्य, $D_5$ उपपद्य, $T_1$ उपायात्वा $D_3$ च, $D_5$ [अ]थ, $T_2$ $G_2$ $_3$ तु (for [अ]द्य) $D_2$ शाल्वो वै — $^{c}$) $D_3$ निसृते, $D_5$ विमुक्ते, $G_1$ प्रयाते (for विषक्ते) $T_2$ $G_3$ $_4$ दुर्धर्षे — $^{d}$) S (except $G_1$) हत (for हत°), cf v l $20^{a}$

**14** $^{b}$) Dc जनाधिप (for °र्दन) — $^{d}$) $B_2$ $_4$ Dc $D_5$ महत्तर, $B_1$ महत्तम

**15** $^{a}$) S (except $G_3$ $M_2$) इत्येव $T_2$ G वचन तस्य (by transp) — $^{d}$) $K_2$ Dn $D_{2-6}$ च (for वा)

**16** $^{b}$) Ś$_1$ $D_{1-3}$ °बल, $K_3$ बलीं (for °रथम्) — $^{c}$) S विगर्हे $B_3$ सर्वान्; S (except $G_4$ $M_2$) वीरान् (for वीर) — $^{d}$) $K_2$ B Dc Dn $D_{4-6}$ महदप्रिय, $D_1$ ह्यप्रिय वच

**18** $^{b}$) $K_2$ $B_2$ $_3$ $D_4$ $_6$ शत्रुहन्, $M_2$ वा न वा (*sup lin as in text*) — $^{cd}$) $D_3$ सात्वतो (*for* सात्यकी) S transp रौक्मि° and चारु° — $^{e}$) Some N MSS शाम्ब $D_1$ सर्वे, $G_4$ चेमे (for चैव) — $^{f}$) $D_1$ हि (for [इ]ति) $D_3$ om इति

**19** $^{a}$) $D_1$ $_2$ S (except $M_2$) च, $D_5$ [अ]पि (for हि) — $^{c}$) $T_1$ $G_2$ $_4$ M हर्तुम्, $T_2$ $G_3$ कर्तुम् (for हन्तुम्)

**20** $^{a}$) S (except $G_1$) हत°, cf v l. $13^{d}$ $G_1$ चैव (for व्यक्त) — $^{b}$) $K_2$ B Dc Dn $D_4$ $_6$ चैते, $T_2$ $G_{2-4}$ $M_1$ चैव (for ते च) $D_3$ तेपि सर्वे पराजिता°, $G_1$ वर्तते च परासव° — $20^{d}$ = 1 77 $9^{b}$, 149 $15^{d}$

सोऽहं सर्वविनाशं तं चिन्तयानो मुहुर्मुहुः ।
सुविह्वलो महाराज पुनः शाल्वमयोधयम् ॥ २१
ततोऽपश्यं महाराज प्रपतन्तमहं तदा ।
सौभाच्छूरसुतं वीर ततो मां मोह आविशत् ॥ २२
तस्य रूपं प्रपततः पितुर्मम नराधिप ।
ययातेः क्षीणपुण्यस्य स्वर्गादिव महीतलम् ॥ २३
विशीर्णगलितोष्णीषः प्रकीर्णाम्बरमूर्धजः ।
प्रपतन्दृश्यते ह स्म क्षीणपुण्य इव ग्रहः ॥ २४
ततः शार्ङ्गं धनुःश्रेष्ठं करात्प्रपतितं मम ।
मोहात्सन्नश्च कौन्तेय रथोपस्थ उपाविशम् ॥ २५
ततो हाहाकृतं सर्वं सैन्यं मे गतचेतनम् ।
मां दृष्ट्वा रथनीडस्थं गतासुमिव भारत ॥ २६
प्रसार्य बाहू पततः प्रसार्य चरणावपि ।
रूपं पितुरपश्यं तच्छकुनेः पततो यथा ॥ २७
तं पतन्तं महाबाहो शूलपट्टिशपाणयः ।
अभिघ्नन्तो भृशं वीरा मम चेतो व्यकम्पयन् ॥ २८
ततो मुहूर्तात्प्रतिलभ्य संज्ञा-
मह्ं तदा वीर महाविमर्दे ।
न तत्र सौभं न रिपुं न शाल्वं
पश्यामि वृद्धं पितरं न चापि ॥ २९
ततो ममासीन्मनसि मायेयमिति निश्चितम् ।
प्रबुद्धोऽस्मि ततो भूयः शतशो विकिरञ्शरान् ॥ ३०

इति श्रीमहाभारते आरण्यकपर्वणि द्वाविंशोऽध्यायः ॥ २२ ॥

---

**21** [a]) $D_1$ $T_2$ $G_3$ तु, $T_1$ $M_1$ च (for तं) — [c]) $K_3$ $D_3$ सविह्वलो, S अवि° — [d]) $M_2$ सौभम् (for शाल्वम्)

**22** [b]) Dc रथं, $D_3$ रथात् (for अहं), T $G_{2-4}$ $M_1$ नृप (for तदा) $G_1$ प्रपपात महानृप° — [c]) $Ś_1$ $D_{1\ 3}$ $T_1$ $G_2$ $M_1$ वीरं — [d]) $S_1$ $M_2$ मा (for मां) $D_3$ ततो मोहश्च माविशत्

**24** [a]) $Ś_1$ $K_3$ $D_{1-3\ 5}$ $M_2$ विकीर्ण° $Ś_1$ रणित ; $K_2$ B Dn $D_{3\ 4\ 6}$ °मलिन (for °गलित ) $K_3$ $B_1$ Dn °उष्णीष — [b]) $M_1$ स्रस्तकुण्डलभूषण° — [c]) $K_3$ $D_3$ भस्म, S (except $M_2$) पार्थ (for ह स्म)

**25** $T_2$ $G_3$ om 25 — [a]) $K_3$ Dc Dn $D_{1\ 4}$ $T_1$ $G_4$ शार्ङ्ग — [b]) $T_1$ $G_{1\ 2\ 4}$ $M_1$ करात्प्रात् प्रा($G_{1\ 2}$ प्र)पतन्मम — [c]) $Ś_1$ $K_3$ मोहात्सनश्च ; $K_2$ B Dc Dn $D_{4-6}$ °पन्नश्च ; $D_1$ °त्सन्नस्य, $D_3$ °त्सर्वत्र $T_1$ $G_{1\ 2\ 4}$ तु (for च)

**26** [b]) $K_3$ Dc $D_3$ गतचेतस, $D_1$ समपद्यत ; $G_2$ हत चेतन — [c]) $M_1$ च रथोपस्थे (for रथनी°)

**27** [c]) $S_1$ $T_1$ $G_4$ $M_1$ अपश्यत, $K_2$ B D (except $D_{1-3}$) मे विवर्मौ, $K_3$ अपश्यति, $T_2$ $G_3$ अपश्य तु, $G_1$ $M_2$ अपश्यत°, $G_2$ अपश्यस्तु

**28** [b]) S °पट्टस° — [c]) $K_2$ B D (except $D_{1-3\ 5}$) $M_2$ भृश वीर, $T_1$ $G_1$ $M_1$ भृश वीर, $G_4$ महावीर — [d]) $K_2$ $B_{1\ 3}$ Dn $D_{4\ 6}$ ह्यकंपयन्, $B_2$ व्यमोह , $B_4$ स्वकप°, $D_1$ व्यचित°

**29** [a]) $G_{2\ 4}$ उप° (for प्रति ) — [b]) $D_3$ °विमोहात्, $T_2$ $G_{3\ 4}$ विमर्दने — [c]) $Ś_1$ न पुर, $K_3$ $D_{1\ 2}$ नगर, $T_2$ $G_{3\ 4}$ न पुन° (for न रिपु) $K_2$ B (except $B_3$) Dn $D_{4\ 6}$ $T_2$ $G_3$ च (for the third न)

**30** [a]) $D_3$ ततोसुराणा विज्ञाय — [b]) $B_2$ [ए]वम् (for [इ]यम्) $T_1$ $G_1$ निश्चय°, $T_2$ $G_{2-4}$ निश्चित — In $D_1$, the portion of the text from 30[c] up to 3 36 20[c] is lost on a missing fol — [c]) $B_2$ तदा (for ततो) — [d]) $K_2$ $B_{2\ 4}$ Dn $D_{4\ 6}$ $M_1$ [ऽ]वाकिरन्, $B_1$ [ऽ]भ्यकिरन्, $B_3$ $M_2$ व्यकिरन्, $D_3$ विसृजन् (for विकिरन्) $D_2$ विकिरञ्शतश° शरान्

Colophon om in $K_3$ $K_{1\ 4}$ $D_1$ missing — *Major parvan* $Ś_1$ T $G_{2-4}$ आरण्य — *Sub parvan* $Ś_1$ $B_2$ $D_{2\ 3}$ (all om sub parvan name) mention only सौभवध, $K_2$ $B_{1\ 3\ 4}$ $Dn_1$ $n_3$ $D_{4\ 6}$ likewise only सौभवधोपाख्यान ; and $D_5$ only शाल्ववध — *Adhy name* $D_2$ श्रीकृष्णशाल्वयुद्धे मायासदर्शने मायावसुदेववध°, $M_1$ मायायुद्ध — *Adhy no* (figures, words or both) Dn S 21 — *Śloka no* Dn 30, $D_6$ 31

## 23

☞ This adhy is missing in $K_{1\ 4}$ (cf. v l 3 1 1), and in $D_1$ (cf v l 3 22 30), the MSS are mostly ignored here

**1** $B_2$ $D_{2\ 5}$ श्रीकृष्ण°, $T_1$ $M_1$ श्रीभगवान् (for वासु°

# २३

वासुदेव उवाच ।
ततोऽहं भरतश्रेष्ठ प्रगृह्य रुचिरं धनुः ।
शरैरपातयं सौभाच्छिरांसि विबुधद्विषाम् ॥ १
शरांश्चाशीविषाकारानूर्ध्वगांस्तिग्मतेजसः ।
अप्रैषं शाल्वराजाय शार्ङ्गमुक्तान्सुवाससः ॥ २
ततो नादृश्यत तदा सौभं कुरुकुलोद्वह ।
अन्तर्हितं माययाभूत्ततोऽहं विस्मितोऽभवम् ॥ ३
अथ दानवसंघास्ते विकृताननमूर्धजाः ।
उदक्रोशन्महाराज विष्ठिते मयि भारत ॥ ४
ततोऽस्त्रं शब्दसाहं वै त्वरमाणो महाहवे ।
अयोजयं तद्वधाय ततः शब्द उपारमत् ॥ ५
हतास्ते दानवाः सर्वे यैः स शब्द उदीरितः ।
शरैरादित्यसंकाशैर्ज्वलितैः शब्दसाधनैः ॥ ६
तस्मिन्नुपरते शब्दे पुनरेवान्यतोऽभवत् ।
शब्दोऽपरो महाराज तत्रापि प्राहरं शरान् ॥ ७
एवं दश दिशः सर्वास्तिर्यगूर्ध्वं च भारत ।
नादयामासुरसुरास्ते चापि निहता मया ॥ ८
ततः प्राग्ज्योतिषं गत्वा पुनरेव व्यदृश्यत ।
सौभं कामगमं वीर मोहयन्मम चक्षुषी ॥ ९
ततो लोकान्तकरणो दानवो वानराकृतिः ।
शिलावर्षेण सहसा महता मां समावृणोत् ॥ १०
सोऽहं पर्वतवर्षेण वध्यमानः समन्ततः ।
वल्मीक इव राजेन्द्र पर्वतोपचितोऽभवम् ॥ ११
ततोऽहं पर्वतचितः सहयः सहसारथिः ।
अप्रख्यातिमियां राजन्सध्वजः पर्वतैश्चितः ॥ १२
ततो वृष्णिप्रवीरा ये ममासन्सैनिकास्तदा ।

---

देव॰). — $^{c}$) T2 G (except G1) सर्व- (for सौभात्)

**2** $^{a}$) Ś1 D3 M2 om च — $^{b}$) M2 सुपितान् (for ऊर्ध्वगान्) — $^{c}$) S1 B1 2 4 Dn1 n3 D2 3 M2 प्रेषय, K2 3 B3 Dc Dn3 D4 6 M1 प्रैषय, D5 प्रेषयन् (for अप्रैष) T2 G (except G1) साल्वराजस्य, M1 सौभराजाय

**3** $^{a}$) S रणे (for तदा) — $^{b}$) T2 G सौभ॰; M1 साल्व — $^{c}$) T2 G (except G4) M1 अतर्हितो

**4** $^{d}$) K2 3 B (except B3) Dn D2 3 5 6 धिष्ठिते, Cnp विष्ठिते (as in text)

**5** T1 om 5-6 — $^{b}$) K3 B Dn D4 6 महारणे (for ॰हवे)

**6** T1 om 6 (of v l 5) — $^{b}$) K3 D5 T2 G3 शब्द स (by transp) G1 इतीरित॰ G2 4 M2 यै॰ शब्द॰ समुदी॰ — $^{c}$) B3 शस्त्रैर् (for शरैर्) — $^{d}$) Ś1 K3 D3 ज्वलद्भि॰ (for ज्वलितै) K3 इव पन्नगै॰, B2 शब्दशातनै॰, D2 शत्रुवेधनै, G1 शब्दपातनै

**7** $^{b}$) Ś1 महत् (for ऽभवत्) D5 विकृताननमूर्धजा (= 4$^{b}$) — K2 om 7$^{c}$–8$^{b}$ — $^{c}$) T1 G (except G3) M1 यतो (for ऽपरो) — $^{d}$) K3 D2 तत्राह Ś1 चरान्, B Dc Dn D4–6 G1 M1 शरै॰ (for शरान्)

**8** K2 om 8$^{ab}$ (of v.l 7) — $^{a}$) S नादैर् (for दश) — After 8, B3 ins

87* शरैर्नानाविधाकारैर्दिव्यास्त्रप्रतिमन्त्रितैः ।
अस्त्रैः शस्त्रैश्च विविधैः खस्था ह्यन्तर्हिता अपि ।

**9** $^{a}$) S1 D2 M1 कृत्वा (for गत्व) — $^{b}$) S (except M2) [अ]पि (for वि) — $^{c}$) T1 G4 स सौभ कामग वीर

**10** $^{a}$) Ś1 D2 3 देवात॰ (for लोकान्त॰) — $^{b}$) K2 B D (except D2 3, D1 missing) दारुणा॰, T G [ऽ]थ नरा॰ (G1 धनुरा॰) (for वानरा॰) — $^{cd}$) M शैल॰ (for शिला॰) K2 3 B D (D1 missing) T1 G1 M महता सहसा (by transp) T G3 4 समवा॰ (for मा समा)

**11** $^{b}$) T2 G3 4 वार्यमाण॰ (for वध्य॰) K2 B D (except D2 3, D1 missing) पुन पुन (for समन्तत॰) — $^{d}$) Ś1 K3 B (except B2) Dc D3 5 सर्वतो॰ (for पर्वतो॰) D2 ततोह पर्वतोभव (of 12$^{a}$)

**12** $^{b}$) S1 K3 D2 3 ॰रथ॰ (for ॰हय॰) — $^{c}$) M2 गतो (for इया) D3 धीर॰ (for राजन्) — $^{d}$) K2 3 B D (except D2 5, D1 missing) सर्वत॰ (for सध्वज) D2 सायुध॰, M2 सर्वत॰ (for पर्वतै) D2 तथा, M2 तद (for चित)

**13** $^{c}$) K2 B D (except D2 3, D1 missing) सर्वे (for सर्वा॰) — $^{d}$) S1 च वि॰ (for विप्र॰)

ते भयार्ता दिशः सर्वाः सहसा विप्रदुद्रुवुः ॥ १३
ततो हाहाकृतं सर्वमभूत्किल विशां पते ।
द्यौश्च भूमिश्च खं चैवादृश्यमाने तथा मयि ॥ १४
ततो विषण्णमनसो मम राजन्सुहृज्जनाः ।
रुरुदुश्चुक्रुशुश्चैव दुःखशोकसमन्विताः ॥ १५
द्विषतां च प्रहर्षोऽभूदार्तिश्चाद्विषतामपि ।
एवं विजितवान्वीर पश्चादश्रौषमच्युत ॥ १६
ततोऽहमस्त्रं दयितं सर्वपाषाणभेदनम् ।
वज्रमुद्यम्य तान्सर्वान्पर्वतान्समशातयम् ॥ १७
ततः पर्वतभारार्ता मन्दप्राणविचेष्टिताः ।
हया मम महाराज वेपमाना इवाभवन् ॥ १८
मेघजालमिवाकाशे विदार्याभ्युदितं रविम् ।
दृष्ट्वा मां बान्धवाः सर्वे हर्षमाहारयन्पुनः ॥ १९
ततो मामब्रवीत्सूतः प्राञ्जलिः प्रणतो नृप ।
साधु संपश्य वार्ष्णेय शाल्वं सौभपतिं स्थितम् ॥ २०
अलं कृष्णावमन्यैनं साधु यत्नं समाचर ।
मार्दवं सखितां चैव शाल्वादद्य व्यपाहर ॥ २१
जहि शाल्वं महाबाहो मैनं जीवय केशव ।
सर्वैः पराक्रमैर्वीर वध्यः शत्रुरमित्रहन् ॥ २२
न शत्रुरवमन्तव्यो दुर्बलोऽपि बलीयसा ।
योऽपि स्यात्पीठगः कश्चित्किं पुनः समरे स्थितः ॥ २३
स त्वं पुरुषशार्दूल सर्वयत्नैरिमं प्रभो ।
जहि वृष्णिकुलश्रेष्ठ मा त्वां कालोऽत्यगात्पुनः ॥ २४
नैष मार्दवसाध्यो वै मतो नापि सखा तव ।
येन त्वं योधितो वीर द्वारका चावमर्दिता ॥ २५
एवमादि तु कौन्तेय श्रुत्वाहं सारथेर्वचः ।
तत्त्वमेतदिति ज्ञात्वा युद्धे मतिमधारयम् ॥ २६
वधाय शाल्वराजस्य सौभस्य च निपातने ।
दारुकं चाब्रुवं वीर मुहूर्तं स्थीयतामिति ॥ २७
ततोऽप्रतिहतं दिव्यममेद्यमतिवीर्यवत् ।

**14** $^{ab}$) $K_3$ B D (except $D_{2\ 3}$, $D_1$ missing) transp सर्वम् and अभूत् $K_3$ अभूज्जगत्सर्वं (for सर्वमभूत्किल) — $^{c}$) S द्यौरन्तरिक्षं भूश्चैव ($M_2$ दिशो भूश्चैव ख चैवम्) — $^{d}$) $D_2$ $M_1$ तदा (for तथा) $M_2$ अदृश्ये मयि भारत
**16** $^{a}$) $T_1$ G (except $G_3$) $M_1$ स, $M_2$ तु (for च) — $^{b}$) $T_1$ सुहृदाम् (for [अ]द्विषताम्) — $^{c}$) S अज्ञात° (for विजित°) — $^{d}$) $D_3$ अद्भुत; $D_6$ $G_1$ अच्युत°
**17** $^{a}$) $T_2$ G (except $G_1$) महास्त्र (for ऽहमस्त्र) $K_3$ $B_3$ Dn $D_{4\ 6}$ इन्द्र (for अस्त्र) — $^{d}$) $K_3$ समतात् (for पर्वतान्) $K_3$ $B_3$ ताडय (for °शातयम्)
**18** For $18^{ab}$, cf v.l 19 — $^{b}$) $T_2$ G (except $G_1$) $M_1$ °प्राणा (for °प्राण) $B_2$ विचेतस°, $T_2$ G (except $G_1$) विचेतना° (for विचेष्टिता°) — $^{c}$) S हया मे सहसा राजन् — $^{d}$) $Ś_1$ महाहवे, $K_3$ $D_{2\ 3}$ इवावहन्
**19** $^{a}$) $K_3$ $B_4$ Dn $D_{3\ 4\ 6}$ °जाल (for °जालम्) $T_2$ $G_3$ आकाश — $^{b}$) $M_2$ विपाट्या (for विदार्य°) $S_1$ $D_{2\ 3}$ [अ]भ्युत्थित $D_3$ चिर (for रविम्) — $^{c}$) $M_2$ मामका° (for बान्धवा) — After 19, $K_3$ B D (except $D_{2\ 3}$, $D_1$ missing) *repeat* $18^{ab}$, with v l भारार्तान् and विचेष्टितान् ($B_1$ विचेतस°)
**20** $^{ab}$) $K_3$ B D (except $D_{2\ 3}$, $D_1$ missing) हयान्सदृश्य मा सूत प्राह तात्कालिकं वच
**21** $^{a}$) $Ś_1$ $K_3$ $D_2$ अवमन्यैव ($D_2$ °च), S (except $G_1$) अवमत्यैन, $D_3$ अवमानेन — $^{b}$) $T_2$ $G_3$ साल्वे, $G_{2\ 4}$ साल्व (for साधु) — $^{c}$) $T_2$ G (except $G_1$) मुच (for चैव) — $^{d}$) $Ś_1$ $D_3$ रम, $M_2$ नुद (for हर) $T_2$ G (except $G_1$) साल्वादुत्थम्य भारत
**22** $T_2$ G (except $G_1$) भीम° साल्वो (for जहि शाल्व) (in $^{a}$), and स वध्य° परवीरहा ($G_4$ °हन्) (for $^{d}$)
**23** $23^{ab}$ = (var) 5 9 $21^{cd}$ — $^{a}$) $M_2$ शत्रुर्हि नावमन्तव्यो — $^{b}$) $Ś_1$ $K_3$ $D_{2\ 3}$ प्राकृतो° (for दुर्बलो°) — $^{c}$) $T_1$ M पीठक, $T_2$ $G_{3-4}$ क्षुल्लक, $G_1$ पीडित° (for पीठग°)
**24** $^{b}$) $T_2$ $G_{3\ 4}$ सर्वैर्यत्नैर् — $^{d}$) $Ś_1$ $K_3$ त्वा, S स्म ($M_2$ न°) (for त्वा) S (except $M_2$) अय (for पुन) — After 24, $G_1$ ins

88* जितवाञ्जामदग्न्य य° कोटिवर्षगणान्बहून् ।
स एष नान्यैर्वध्यो हि त्वामृते नैव कैश्चन ।

**25** $^{b}$) S (except $M_2$) नैष (for नापि)
**28** $T_2$ $G_3$ om 28 (with 27) In $D_3$, the portion of the text from -हत up to 3 33 $7^{a}$ is lost on a missing fol The MS is ignored up to the end of the lacuna — $^{b}$) S ($T_2$ $G_3$ om) अच्छेद्यम् $K_{2\ 3}$ $B_1$ $Dn_1$ $n_3$ $D_{2\ 5\ 6}$ °वान्, $B_{3\ 4}$ °मत् (for वत्) — $^{d}$) $G_4$

आग्नेयमस्त्रं दयितं सर्वसाहं महाप्रभम् ॥ २८
यक्षाणां राक्षसानां च दानवानां च संयुगे ।
राज्ञां च प्रतिलोमानां भस्मान्तकरणं महत् ॥ २९
क्षुरान्तममलं चक्रं कालान्तकयमोपमम् ।
अभिमन्त्र्याहमतुलं द्विषतां च निबर्हणम् ॥ ३०
जहि सौभं स्ववीर्येण ये चात्र रिपवो मम ।
इत्युक्त्वा भुजवीर्येण तस्मै प्राहिणवं रुषा ॥ ३१
रूपं सुदर्शनस्यासीदाकाशे पततस्तदा ।
द्वितीयस्येव सूर्यस्य युगान्ते परिविष्यतः ॥ ३२
तत्समासाद्य नगरं सौभं व्यपगतत्विषम् ।
मध्येन पाटयामास क्रकचो दार्विवोच्छ्रितम् ॥ ३३
द्विधा कृतं ततः सौभं सुदर्शनबलाद्धतम् ।
महेश्वरशरोद्धूतं पपात त्रिपुरं यथा ॥ ३४
तस्मिन्निपतिते सौभे चक्रमागात्करं मम ।
पुनश्चोद्धूय वेगेन शाल्वायेत्यहमब्रुवम् ॥ ३५
ततः शाल्वं गदां गुर्वीमाविध्यन्तं महाहवे ।
द्विधा चकार सहसा प्रजज्वाल च तेजसा ॥ ३६
तस्मिन्निपतिते वीरे दानवास्त्रस्तचेतसः ।
हाहाभूता दिशो जग्मुरर्दिता मम सायकैः ॥ ३७
ततोऽहं समवस्थाप्य रथं सौभसमीपतः ।
शङ्खं प्रध्माप्य हर्षेण सुहृदः पर्यहर्षयम् ॥ ३८
तन्मेरुशिखराकारं विध्वस्ताट्टालगोपुरम् ।
दह्यमानमभिप्रेक्ष्य स्त्रियस्ताः संप्रदुद्रुवुः ॥ ३९
एवं निहत्य समरे शाल्वं सौभं निपात्य च ।
आनर्तान्पुनरागम्य सुहृदां प्रीतिमावहम् ॥ ४०
एतस्मात्कारणाद्राजन्नागमं नागसाह्वयम् ।
यद्यगां परवीरघ्न न हि जीवेत्सुयोधनः ॥ ४१

वैशंपायन उवाच ।

एवमुक्त्वा महाबाहुः कौरवं पुरुषोत्तमः ।
आमन्त्र्य प्रययौ धीमान्पाण्डवान्मधुसूदनः ॥ ४२

---

°भय (for °प्रभम्) — After 28, K2 B D (except D2, D1 3 missing) ins

89* योजय तत्र धनुषा दानवान्तकरं रणे ।

**29** b) T2 G संयुगे नाशकृत्तदा

**30** cd) N (K1 4 D1 3 missing) अनु° (for अभि°) The same MSS with M2 वि- (for च)

**32** d) Ś1 परिवेशिन°, K2 B1 4 D5 प्रपतिष्यत°, K3 D2 परिवेषिण°, B2 Dc Dn D4 6 G3 प्रतपिष्यत°, B3 प्रभविष्यत°, T1 (corrupt) परिलेक्ष्यत°; T2 (by corr) परिपिष्यत°, G1 M1 परिवेष्यत°, M2 परिधक्ष्यत°; text as in G2 4 only !

**33** T2 G3 om 33–34 — c) T1 चक्रं विदारया°, G (G3 om) मध्येन दारया° — d) S (T2 G3 om) महामेरु (G2 4 °घ)मिवोच्छ्रित

**34** T2 G3 om 34 (cf v l 33) — a) K3 D2 तु तत्; M2 तदा (for तत°) Ś1 द्विधाकृतेत्र तत्सौभ — b) G1 2 4 M °बलाहत — c) G2 °शरैर्ध्वस्त, G4 M2 °शरैर्धूत — d) G1 M1 अपतत्; G2 4 M2 अपर (for पपात)

**35** c) Ś1 आधूय, K2 B Dc Dn D4–6 आदाय, K3 आह्वाय, D3 आधाय (for उद्धूय) — d) Dc अच्युत (for अब्रुवम्)

**37** a) K2 B2 m 3 4 D (except D2, D1 3 missing) विनिहते (for निपतिते) Ś1 K3 D2 पापे, M2 साल्वे (for वीरे)

**38** S transp 38 and 39 — c) K3 प्रध्माय Ś1 K3 D2 वेगेन (for हर्षेण) — d) T1 M2 समहर्षय, T2 G (except G1) चाप्यह°

**39** S transp 38 and 39 — c) G4 मर्हीं प्रेक्ष्य, M2 समुद्वीक्ष्य (for अभि°)

**40** b) Ś1 K2 B (except B4) Dn D4 6 transp शाल्वं and सौभ — c) K3 B (except B3) D (except D5 6, D1 3 missing) S (except M1) आनर्ताद् B2 पुनरागत्य — d) T1 प्रियम् (for प्रीतिम्)

**41** a) N (K1 4 D1 3 missing) तदेतत् (Ś1 एतद्धे; K3 त एतत्, Dc D3 एतत्तत्, D5 एतत्तु) कारण राजन् — b) Ś1 M2 येनाह, K2 3 B D (D1 3 missing) यदह (for नागम) S1 हस्तिनापुर, T1 G1 3 गजसाह्वय — c) N (K1 4 D1 3 missing) M2 नागम, G1 यथाग, G2 यथागा — d) G2 जीयेत् M2 शासितुं त सुयोधन — After 41, Dn2 ins

90* मय्यागतेऽथवा वीर द्यूत न भविता तथा ।

On the other hand, K2 B Dc Dn ins after 41 (Dn2, after 90*)

91* अथाह किं करिष्यामि भिन्नसेतुरिवोदकम् ।

अभिवाद्य महाबाहुर्धर्मराजं युधिष्ठिरम् ।
राज्ञा मूर्धन्युपाघ्रातो भीमेन च महाभुजः ॥ ४३
सुभद्रामभिमन्युं च रथमारोप्य काञ्चनम् ।
आरुरोह रथं कृष्णः पाण्डवैरभिपूजितः ॥ ४४
सैन्यसुग्रीवयुक्तेन रथेनादित्यवर्चसा ।
द्वारकां प्रययौ कृष्णः समाश्वास्य युधिष्ठिरम् ॥ ४५
ततः प्रयाते दाशार्हे धृष्टद्युम्नोऽपि पार्षतः ।
द्रौपदेयानुपादाय प्रययौ स्वपुरं तदा ॥ ४६
धृष्टकेतुः स्वसारं च समादायाथ चेदिराट् ।
जगाम पाण्डवान्दृष्ट्वा रम्यां शुक्तिमतीं पुरीम् ॥ ४७
केकयाश्चाप्यनुज्ञाताः कौन्तेयेनामितौजसा ।
आमन्त्र्य पाण्डवान्सर्वान्प्रययुस्तेऽपि भारत ॥ ४८
ब्राह्मणाश्च विशश्चैव तथा विषयवासिनः ।
विसृज्यमानाः सुभृशं न त्यजन्ति स्म पाण्डवान् ॥ ४९
समवायः स राजेन्द्र सुमहाद्भुतदर्शनः ।
आसीन्महात्मनां तेषां काम्यके भरतर्षभ ॥ ५०
युधिष्ठिरस्तु विप्रांस्ताननुमान्य महामनाः ।
शशास पुरुषान्काले रथान्योजयतेति ह ॥ ५१

इति श्रीमहाभारते आरण्यकपर्वणि त्रयोविंशोऽध्यायः ॥ २३ ॥

# २४

वैशंपायन उवाच ।
तस्मिन्दशार्हाधिपतौ प्रयाते
युधिष्ठिरो भीमसेनार्जुनौ च ।
यमौ च कृष्णा च पुरोहितश्च
रथान्महार्हान्परमाश्वयुक्तान् ॥ १
आस्थाय वीराः सहिता वनाय

---

**42** $^c$) K2 3 B Dc1 Dn D2 4-6 T1 श्री(T1 सी)-मान्, T2 G (except G1) वीरान् (for भीमान्)

**43** $^c$) Ś1 B3 4 उपघ्रातो T1 G (except G3) M1 राज्ञा च मूर्ध्न्युपाघ्रातो (T1 °य) — $^d$) T1 ततो भीमो (for भीमेन च) D2 महाबल° — After 43, Ś1 K2 3 B2 4 D (D1 3 missing) ins

92* परिष्वक्तश्चार्जुनेन यमाभ्यां चाभिवादितः ।
समानितश्च धौम्येन द्रौपद्या चार्चितोऽश्रुभिः ।

**44** G2 om 44, D2 om (hapl.) 44$^d$–45$^c$ — $^d$) T2 G (except G1) प्रयातु द्वारका प्रति

**45** D2 om 45$^{abc}$ (cf. v.l. 44) — $^a$)=1.212.3$^c$, 3.21.12$^a$, etc. K2 3 B D (D1 3 missing, D2 om.) शै(B1 सै)ब्य (for सैन्य°)

**46** $^a$) M2 प्रति° (for तत°) Dc दुर्धर्षे (for दाशार्हे) — $^d$) S (except G4 M2) transp. प्रययौ and स्वपुरं

**47** $^b$) Dc Dn2 n3 समादाय चेदि°

**48** K3 om. 48 — $^a$) Ś1 K3 B4 Dc Dn D5 6 केकेयाश्च, B1-3 D4 कैकयाश्च. Ś1 D2 T2 G (except G4) M1 अभि (for अपि). D2 °ज्ञसा, D5 °गता° (for °ज्ञाता°) — $^b$) D5 T1 M °सौजसः — $^d$) T2 G (except G1) चापि (for तेऽपि)

**49** $^a$) S महाभागास् (T1 °बाहो) (for विशश्चैव)

**50** $^b$) Dc D5 M2 महानद्भुत° (om. सु)

**51** $^a$) M तान्विप्रान् (by transp.) — $^b$) Dc D6 T1 महात्मन ; T2 G3 4 महायशाः — $^d$) D2 रथ संयोजयेति K2 B Dn D4 6 वै, S स° (M2 च) (for ह)

Colophon. K1 4 D1 3 missing. — *Major parvan*: Ś1 T G2-4 आरण्य. — *Sub-parvan*: Ś1 K3 D2 T G3 4 M (all om. sub-parvan name) mention only सौभवध, K2 likewise only सौभवधाख्यान ; B Dc Dn D4 6 only सौभवधोपाख्यान, and D5 only शाल्ववध ; to these Ś1 K2 3 B3 4 Dc Dn D2 4 5 M2 add समाप्त. — *Adhy. name*: D2 श्रीकृष्णशाल्वयुद्ध. — *Adhy. no.* (figures, words or both): Dn1 n3 S 22. — *Śloka no.*: Dn D6 53.

## 24

☞ This adhy. is missing in K1 4 D1 3 (cf. v.l. 3.1.1, 22.30, 23.28); the MSS. are mostly ignored here.

**2** $^d$) B1 Dc1 Dn1 n3 D4-6 T2 G3 प्रादाय

प्रतस्थिरे भूतपतिप्रकाशाः ।
हिरण्यनिष्कान्वसनानि गाश्च
प्रदाय शिक्षाक्षरमन्त्रविद्भ्यः ॥ २
प्रेष्याः पुरो विंशतिरात्तशस्त्रा
धनूंषि वर्माणि शरांश्च पीतान् ।
मौर्वीश्च यन्त्राणि च सायकांश्च
सर्वे समादाय जघन्यमीयुः ॥ ३
ततस्तु वासांसि च राजपुत्र्या
धात्र्यश्च दास्यश्च विभूषणं च ।
तदिन्द्रसेनस्त्वरितं प्रगृह्य
जघन्यमेवोपययौ रथेन ॥ ४
ततः कुरुश्रेष्ठमुपेत्य पौराः
प्रदक्षिणं चक्रुरदीनसत्त्वाः ।
तं ब्राह्मणाश्चाभ्यवदन्प्रसन्ना
मुख्याश्च स  कुरुजाङ्गलानाम् ॥ ५
स चापि तानभ्यवदत्प्रसन्नः
सहैव तैर्भ्रातृभिर्धर्मराजः ।
तस्थौ च तत्राधिपतिर्महात्मा
दृष्ट्वा जनौघं कुरुजाङ्गलानाम् ॥ ६
पितेव पुत्रेषु स तेषु भावं
चक्रे कुरूणामृषभो महात्मा ।
ते चापि तस्मिन्भरतप्रबर्हे
तदा बभूवुः पितरीव पुत्राः ॥ ७
ततः समासाद्य महाजनौघाः
कुरुप्रवीरं परिवार्य तस्थुः ।
हा नाथ हा धर्म इति ब्रुवन्तो
ह्रिया च सर्वेऽश्रुमुखा बभूवुः ॥ ८
वरः कुरूणामधिपः प्रजानां
पितेव पुत्रानपहाय चास्मान् ।
पौरानिमाञ्जानपदांश्च सर्वा-
न्हित्वा प्रयातः क्व नु धर्मराजः ॥ ९
धिग्धार्तराष्ट्रं सुनृशंसबुद्धिं
ससौबलं पापमतिं च कर्णम् ।
अनर्थमिच्छन्ति नरेन्द्र पापा
ये धर्मनित्यस्य सतस्तवोग्राः ॥ १०
स्वयं निवेश्याप्रतिमं महात्मा
पुरं महद्देवपुरप्रकाशम् ।
शतक्रतुप्रस्थममोघकर्मा

---

**3** a) S परे (for पुरो) — b) S1 K3 B1.4 D2.5 चित्राणि, K2 B2 Dc Dn D4.6 शस्त्राणि, B3 दीप्तानि, T1 चर्माणि (for वर्माणि) K2 B Dc Dn D4–6 T2 G3 दीप्तान् (for पीतान्) — c) S (except M2) सु- (for the first च) T1 G1 कलापकाश्च, T2 G2–4 सुसायकाश्च (for च साय°)

**4** b) S विभूषण यत् (M2 °षणानि) — c) K2.3 B (except B3) Dn1 n3 G1 त्वरित° K3 G1 नि- (for प्र) M2 परिगृह्य राजन् (for त्वरित प्र°)

**5** b) T1 M1 °सत्त्व, T2 G (except G1) °चेतस (for °सत्त्वा) — c) B2 (m as in text) प्रहृष्टा, T1.2 (before corr) G4 प्रपन्ना — d) Ś1 (*sup lin* as in text) K3 D2.5 °पुंगवानां, B (except B3) Dc1 D4 °जंगलानां

**6** a) T G3.4 प्रपन्न° — d) Dc1 D2 °जंगलानां

**7** a) B (except B3) T2 G3 सुतेषु (for स तेषु) — b) D2 T2 G (except G1) M1 अधिपो (for ऋषभो) — c) B2 D5 T2 G (except G1) M2 °वीरे (for °बर्हे) — d) T G (except G1) तथा (for तदा)

**8** ab) K3 B Dc Dn D2.4.6 T2 G3 तम् (for सम्) Ś1 transp महाजनौघा° and कुरुप्रवीर — c) B2 (repeating) नाथ (m as in text), T1 M1 कष्टं (for धर्म) K2.3 B D (D1.3 missing) ब्रुवाणा (for ब्रुवन्तो) — d) K2.3 B Dc Dn D4 ह्रीताश्च, D2 दीनाश्च; D5.6 भीताश्च (for ह्रिया च) Cnp भीता° K2 B (B2 marg) Dc Dn D4.6 च राजन् (B2 orig च तस्थु°) (for बभूवु°)

**9** a) K3 पति°, Dc ऊचु°, D2 T2 G (except G1) तत°, T1 M1 हृत°, M2 कुत° (for वर°) — $9^d = 11^d$, $12^d$

**10** a) K2 B3.4 Dc D4–6 सुनृशसमस्तु, D2 सुभृश कुबुद्धिं; S सुनृशंसवृत्त — b) K3 Dn D2 धिक्सौबल — d) K2.3 B3 Dn T2 (by corr) G3 तवैव (K3 °व), B2.4 D4.6 तवेम (D6 °मे), G4 तवाग्र्या (for तवोग्रा°)

हित्वा प्रयातः क्व नु धर्मराजः ॥ ११
चकार यामप्रतिमां महात्मा
सभां मयो देवसभाप्रकाशाम् ।
तां देवगुप्तामिव देवमायां
हित्वा प्रयातः क्व नु धर्मराजः ॥ १२
तान्धर्मकामार्थविदुत्तमौजा
बीभत्सुरुच्चैः सहितानुवाच ।
आदास्यते वासमिमं निरुष्य
वनेषु राजा द्विषतां यशांसि ॥ १३
द्विजातिमुख्याः सहिताः पृथक्च
भवद्भिरासाद्य तपस्विनश्च ।
प्रसाद्य धर्मार्थविदश्च वाच्या
यथार्थसिद्धिः परमा भवेन्नः ॥ १४
इत्येवमुक्ते वचनेऽर्जुनेन
ते ब्राह्मणाः सर्ववर्णाश्च राजन् ।
मुदाभ्यनन्दन्सहिताश्च चक्रुः
प्रदक्षिणं धर्मभृतां वरिष्ठम् ॥ १५
आमन्त्र्य पार्थं च वृकोदरं च
धनंजयं याज्ञसेनीं यमौ च ।
प्रतस्थिरे राष्ट्रमपेतहर्षा
युधिष्ठिरेणानुमता यथास्वम् ॥ १६

इति श्रीमहाभारते आरण्यकपर्वणि चतुर्विंशोऽध्यायः ॥ २४ ॥

# २५

वैशंपायन उवाच ।
ततस्तेषु प्रयातेषु कौन्तेयः सत्यसंगरः ।
अभ्यभाषत धर्मात्मा भ्रातॄन्सर्वान्युधिष्ठिरः ॥ १
द्वादशेमाः समास्माभिर्वस्तव्यं निर्जने वने ।
समीक्षध्वं महारण्ये देशं बहुमृगद्विजम् ॥ २
बहुपुष्पफलं रम्यं शिवं पुण्यजनोचितम् ।
यत्रेमाः शरदः सर्वाः सुखं प्रतिवसेमहि ॥ ३
एवमुक्ते प्रत्युवाच धर्मराजं धनंजयः ।
गुरुवन्मानवगुरुं मानयित्वा मनस्विनम् ॥ ४
अर्जुन उवाच ।

---

**11** $K_3$ $T_2$ $G_3$ om (hapl.) $11^b$–$12^a$ — $^b$) B (except $B_3$) Dn $D_{4-6}$ $T_1$ $G_1$ महादेव° — $^c$) $K_2$ B Dn $D_{4\ 6}$ अमेय° ($B_2$ अजेय°) (for अमोघ°) — $11^d = 9^d$, $12^d$
**12** $K_3$ $T_2$ $G_3$ om $12^a$ (cf v l 11) — $^c$) $Ś_1$ $K_3$ $D_{2\ 5}$ ता देवमायामिव देवकल्पो ($D_5$ °गुप्ता) — $12^d = 9^d$, $11^d$
**14** $^c$) S (except $M_2$) पृथक्पृथक् (for पृथक्च)
**16** $^d$) $B_1$ यथार्थं; $D_5$ °सुख, $T_2$ G (except $G_1$) स्वय

Colophon $K_{1\ 4}$ $D_{1\ 3}$ missing — *Major parvan* $Ś_1$ T G आरण्य — *Sub parvan* $K_2$ B Dc Dn $D_{4-6}$ (all om sub parvan name) mention only द्वैतवनप्रवेश — *Adhy name* $B_4$ $D_2$ पौरनिवर्तन, $T_2$ $G_{3\ 4}$ $M_1$ पौरजनविसर्ग — *Adhy no* (figures, words or both) Dn S 23 — *Śloka no* Dn 16

## 25

☞ This adhy is missing in $K_{1\ 4}$ $D_{1\ 3}$ (cf v.l 3 1 1, 22 30, 23 28), the MSS are mostly ignored here

**1** $^d$) $T_1$ G (except $G_3$) $M_1$ सर्वान्भ्रातॄन् (by transp)
**2** $^a$) $M_2$ [द्वा]द (for [द्वा]मा°) $K_3$ $Dn_2$ सहा° (for समा) T G $M_1$ द्वादशेमानि वर्षाणि (= 4 1 5$^a$), but cf $11^a$ — $^b$) $T_1$ $G_{2\ 4}$ $M_2$ विजने वने
**3** $^a$) = $10^c$ Dc $D_5$ °मूल° (for °पुष्प°) — $^b$) $K_2$ B D (except $D_2$, $D_{1\ 3}$ missing) पुण्यजनावृत — $^c$) $T_1$ द्वादशाब्दासु; $T_2$ G $M_1$ द्वादश समा° (for शरदः सर्वा°)
**4** $^c$) $T_2$ $G_{3\ 4}$ गुरु स (for गुरुवन्) $T_2$ G (except $G_1$) मानवचर — $^d$) $Ś_1$ $Dc_2$ $D_2$ यशस्विन; $T_1$ तपस्विन

भवानेव महर्षीणां वृद्धानां पर्युपासिता ।
अज्ञातं मानुषे लोके भवतो नास्ति किंचन ॥ ५
त्वया ह्युपासिता नित्यं ब्राह्मणा भरतर्षभ ।
द्वैपायनप्रभृतयो नारदश्च महातपाः ॥ ६
यः सर्वलोकद्वाराणि नित्यं संचरते वशी ।
देवलोकाद्ब्रह्मलोकं गन्धर्वाप्सरसामपि ॥ ७
सर्वा गतीर्विजानासि ब्राह्मणानां न संशयः ।
प्रभावांश्चैव वेत्थ त्वं सर्वेषामेव पार्थिव ॥ ८
त्वमेव राजञ्जानासि श्रेयःकारणमेव च ।
यत्रेच्छसि महाराज निवासं तत्र कुर्महे ॥ ९
इदं द्वैतवनं नाम सरः पुण्यजनोचितम् ।
बहुपुष्पफलं रम्यं नानाद्विजनिषेवितम् ॥ १०
अत्रेमा द्वादश समा विहरेमेति रोचये ।
यदि तेऽनुमतं राजन्किं वान्यन्मन्यते भवान् ॥ ११

युधिष्ठिर उवाच ।

ममाप्येतन्मतं पार्थ त्वया यत्समुदाहृतम् ।
गच्छाम पुण्यं विख्यातं महद्द्वैतवनं सरः ॥ १२

वैशंपायन उवाच ।

ततस्ते प्रययुः सर्वे पाण्डवा धर्मचारिणः ।
ब्राह्मणैर्बहुभिः सार्धं पुण्यं द्वैतवनं सरः ॥ १३
ब्राह्मणाः साग्निहोत्राश्च तथैव च निरग्नयः ।
स्वाध्यायिनो भिक्षवश्च सजपा वनवासिनः ॥ १४
बहवो ब्राह्मणास्तत्र परिवव्रुर्युधिष्ठिरम् ।
तपस्विनः सत्यशीलाः शतशः संशितव्रताः ॥ १५
ते यात्वा पाण्डवास्तत्र बहुभिर्ब्राह्मणैः सह ।
पुण्यं द्वैतवनं रम्यं विविशुर्भरतर्षभाः ॥ १६
तच्छालतालाम्रमधूकनीप-
कदम्बसर्जार्जुनकर्णिकारैः ।
तपात्यये पुष्पधरैरुपेतं
महावनं राष्ट्रपतिर्ददर्श ॥ १७
महाद्रुमाणां शिखरेषु तस्थु-
र्मनोरमां वाचमुदीरयन्तः ।
मयूरदात्यूहचकोरसंघा-
स्तस्मिन्वने काननकोकिलाश्च ॥ १८

---

**5** [cd]) $T_2$ G (except $G_1$) transp मानुषे and भवतो

**6** [a]) T G [अ]भि- (for हि) — [b]) S (except $M_2$) वेदपारगा॰ (for भर॰)

**8** [a]) $K_2$ $B_{1-3}$ D (except $D_2$, $D_{1}$ ₃ missing) अनुभावान्, $B_4$ $T_2$ G (except $G_1$) सर्वां गतिं, $T_1$ सद्वाग्गतिं $K_2$ B (except $B_4$) Dn $D_{4-6}$ च जानासि, $K_3$ विजानीत — [c]) $T_2$ G (except $G_1$) आवासांश्चैव

**10** [b]) $K_2$ $B_3$ Dn $D_{4,5}$ ॰जलो॰ (for ॰जनो॰), cf 3[b] — 10[c] = 3[a]

**11** [a]) $K_3$ $B_3$ Dn $D_{4,6}$ $T_1$ यत्र (for अत्र) $K_2$ $Dn_3$ $D_{4,5}$ [इ]मे, $B_2$ [ए]व (for [इ]मा) — [b]) $B_3$ $T_1$ $G_1$ विहरामे॰, $T_2$ $G_{2-4}$ विचरे($G_{3,4}$ ॰रा)मे॰ $Ś_1$ $D_2$ नराधिप; $K_3$ Dc $D_5$ [इ]ति मे मति॰, $B_2$ [इ]ति रोचते — [c]) $K_3$ [ऽ]नुमतिं, $D_2$ रोचते — [d]) $Ś_1$ $K_3$ Dc $D_{2,5}$ कथ वा, $K_2$ B (except $B_4$) Dn $D_{4,6}$ $G_1$ किमन्यन् (for किं वान्यन्)

**12** [a]) $Ś_1$ $K_3$ Dc $D_{2,5}$ सर्वं (for पार्थ) — [b]) $S_1$ $K_3$ Dc $D_{2,5}$ यत्त्वया (by transp) — [c]) $K_2$ $B_{1,4}$ Dn $D_{2,4,6}$ गच्छाम॰ $K_2$ B (except $B_3$) Dn $D_{2,4,6}$ पुण्यवि॰; $K_3$ पुण्य द्वैतवन (hypermetric!) — [d]) $K_3$ सुविख्यात महत्सर॰

**14** [d]) $K_{2,3}$ B Dc Dn $D_{4-6}$ तथैव; $G_1$ सद्वैत- (for सजपा) $K_3$ $B_2$ Dc $D_5$ वनचारिण $S_1$ जपाश्च वनवासिन॰ (*sup lin* प्रजाश्च वन॰ and जपाध्ययनचारिण॰), $D_2$ जपस्वाध्यायचारिण॰

**15** [c]) $K_2$ B Dn $D_{4,6}$ तप॰($K_2$ $Dn_1$ व्रत॰)सिद्धा महात्मान — [d]) $Ś_1$ $K_3$ Dc $D_{2,5}$ $G_2$ सतत (for शतश॰) MSS संश्रित॰, शंसित॰ also (as usual)

**16** [a]) $Ś_1$ ते प्राप्य, $Dn_3$ प्रयाता॰, $G_4$ ते याता॰ T G (except $G_1$) ब्राह्मणैस्तत्र — [b]) $K_2$ $B_3$ Dn $D_{4,6}$ $T_1$ ब्राह्मणैर्बहुभि॰ सह, $T_2$ G (except $G_1$) पांडवा बहुभि॰ सह — [c]) $T_2$ G (except $G_1$) सर्वे (for रम्य) — [d]) Some N MSS ॰र्षभ

**17** [a]) $Ś_1$ $B_{1,4}$ Dn $D_{2,4}$ तत्साल॰; $K_3$ corrupt — [c]) $Ś_1$ Dc ॰वरै॰, S ॰फलै॰ (for ॰धरै) — [d]) $K_2$ $Dn_2$ महाबल; S (except $T_2$ $G_3$) महद्वन $M_2$ द्वैतवन प्रपेदु॰ (for राष्ट्रपतिर्ददर्श)

**18** [b]) $T_1$ $G_{3,4}$ M मनोरमा वाच उदी॰ — [c]) $T_1$ $G_1$ $M_3$ ॰नत्यूह॰ (for ॰दात्यूह॰) — [d]) $K_2$ B Dc Dn $D_{4-6}$ $T_2$ $G_3$ बर्हिण॰, $D_2$ सारस॰, $G_1$ शारिका॰ को॰, $M_1$ कोकिला॰

करेणुयूथैः सह यूथपानां
　मदोत्कटानामचलप्रमाणाम् ।
महान्ति यूथानि महाद्विपानां
　तस्मिन्वने राष्ट्रपतिर्ददर्श ॥ १९
मनोरमां भोगवतीमुपेत्य
　धृतात्मनां चीरजटाधराणाम् ।
तस्मिन्वने धर्मभृतां निवासे
　ददर्श सिद्धर्षिगणाननेकान् ॥ २०
ततः स यानादवरुह्य राजा
　सभ्रातृकः सजनः काननं तत् ।
विवेश धर्मात्मवतां वरिष्ठ-
　स्त्रिविष्टपं शक्र इवामितौजाः ॥ २१
तं सत्यसंधं सहिताभिपेतु-
　र्दिदृक्षवश्चारणसिद्धसंघाः ।
वनौकसश्चापि नरेन्द्रसिंहं
　मनस्विनं संपरिवार्य तस्थुः ॥ २२
स तत्र सिद्धानभिवाद्य सर्वा-
　न्प्रत्यर्चितो राजवद्देववच्च ।
विवेश सर्वैः सहितो द्विजाग्र्यैः
　कृताञ्जलिर्धर्मभृतां वरिष्ठः ॥ २३
स पुण्यशीलः पितृवन्महात्मा
　तपस्विभिर्धर्मपरैरुपेत्य ।
प्रत्यर्चितः पुष्पधरस्य मूले
　महाद्रुमस्योपविवेश राजा ॥ २४
भीमश्च कृष्णा च धनंजयश्च
　यमौ च ते चानुचरा नरेन्द्रम् ।
विमुच्य वाहानवरुह्य सर्वे
　तत्रोपतस्थुर्भरतप्रबर्हाः ॥ २५
लतावतानावनतः स पाण्डवै-
　र्महाद्रुमः पञ्चभिरुग्रधन्विभिः ।
बभौ निवासोपगतैर्महात्मभि-
　र्महागिरिर्वारणयूथपैरिव ॥ २६

इति श्रीमहाभारते आरण्यकपर्वणि पञ्चविंशोऽध्यायः ॥ २५ ॥

---

शारिका च

**19** $D_3$ om $19^a$–$20^b$ — $^{ab}$) $T_2$ G (except $G_1$) °यूथवर्तिना (for यूथपाना), and अमल° (for अचल°) — $^c$) $Ś_1$ वृंदानि (for यूथानि)

**20** $D_3$ om $20^{ab}$ (cf v l 19) — $^a$) $D_5$ मनोहरा $Ś_1$ $K_3$ मोघ° ($Ś_1$ corr to मेघ°, $K_3$ corr to भोग° as in text) — $^b$) $K_2$ B Dc Dn $D_{4-6}$ पूतात्मना, $T_2$ $G_{3.4}$ जिता°, $M_2$ महा°, $S_1$ corrupt

**21** $^a$) $Ś_1$ $K_3$ $D_2$ वीर° (for राजा) — $^b$) Dc $D_{2.5}$ $T_2$ $G_{2-4}$ सज्जन°, $T_1$ $M_1$ स्वजन°, $G_1$ सुजन° (for सजन°) — $^c$) $B_2$ $M_1$ धर्मात्मभृता; $B_3$ Dc $D_2$ धर्मार्थव($D_2$ भृ)ता

**22** $^a$) $T_2$ $G_{3.4}$ सहसा (for सहिता°) $Ś_1$ [अ]भ्यपेतु°, $B_3$ Dc $D_6$ T $G_{2-4}$ M निपेतु — $^d$) $K_3$ युधिष्ठिर, $D_2$ $T_1$ मनस्विन° $K_2$ B Dn $D_{4.6}$ $T_2$ $G_{2.3}$ त (for स)

**23** $^a$) $S_1$ $K_3$ $Dc_2$ वृद्धान् (for सिद्धान्) $K_3$ वृद्धान् (for सर्वान्) $T_1$ $G_{1.2}$ M transp सिद्धान् and सर्वान् — $^b$) $G_{2.4}$ °वर्चा° (for °वच्च)

**24** $^a$) $K_{2.3}$ सु (for स) S (except $T_1$) पुण्यशीलैः S (except $M_2$) सहितो (for पितृवन्) — $^b$) $T_1$ $G_{2.4}$ °भृतैर् (for परैर्) $K_3$ $T_1$ $G_{2.4}$ उपेत°

**25** $^b$) MSS नरेंद्र, °द्र°, °द्रा° also — $^c$) $G_{3.4}$ $M_1$ विमोच्य; $G_1$ विमोह्य — $K_3$ om from अवरुह्य up to °पगतै° (in $26^c$) $K_2$ B Dn $D_{4.6}$ अवशा($K_2$ °शा)श्च; Dc $D_5$ अनुगाश्च, $D_2$ $T_1$ $G_1$ M अव($D_2$ °वि)गाह्य (for अवरुह्य) — $^d$) $T_2$ G (except $G_1$) तत्रैव (for तत्रोप) MSS °बर्हं, °बर्हान् also

**26** $K_3$ om up to °पगतै° (cf v l 25) — $^a$) $T_1$ M °वितान, $G_{2.4}$ °प्रतान (for वतान) $Ś_1$ $Dn_3$ $M_2$ [अ]वतत° (for [अ]वनत°) — $^b$) $K_2$ B Dn $D_{4-6}$ एव (for उग्र)

Colophon $K_{1.4}$ $D_{1.2}$ missing — *Major parvan* $Ś_1$ T $G_{2-4}$ आरण्य; $Dn_2$ वन (!) — *Sub parvan* $Ś_1$ $K_{2.3}$ B Dn Dc $D_{2.4-6}$ $T_2$ $G_{2-4}$ M (all om sub parvan name) mention only द्वैतवनप्रवेश — *Adhy name* $D_2$ ब्राह्मणानुव्रजन — *Adhy no* (figures, words or both) Dn S 24 — *Śloka no* Dn 26

# २६

वैशंपायन उवाच ।

तत्काननं प्राप्य नरेन्द्रपुत्राः
सुखोचिता वासमुपेत्य कृच्छ्रम् ।
विजह्रुरिन्द्रप्रतिमाः शिवेषु
सरस्वतीशालवनेषु तेषु ॥ १

यतींश्च सर्वान्स मुनींश्च राजा
तस्मिन्वने मूलफलैरुदग्रैः ।
द्विजातिमुख्यानृषभः कुरूणां
संतर्पयामास महानुभावः ॥ २

इष्टीश्च पित्र्याणि *तथाग्रियाणि
महावने वसतां पाण्डवानाम् ।
पुरोहितः सर्वसमृद्धतेजा-
श्चकार धौम्यः पितृवत्कुरूणाम् ॥ ३

अपेत्य राष्ट्राद्वसतां तु तेषा-
मृषिः पुराणोऽतिथिराजगाम ।
तमाश्रमं तीव्रसमृद्धतेजा
मार्कण्डेयः श्रीमतां पाण्डवानाम् ॥ ४

स सर्वविद् द्रौपदीं प्रेक्ष्य कृष्णां
युधिष्ठिरं भीमसेनार्जुनौ च ।
संस्मृत्य रामं मनसा महात्मा
तपस्विमध्येऽस्मयतामितौजाः ॥ ५

तं धर्मराजो विमना इवाब्रवी-
त्सर्वे ह्रिया सन्ति तपस्विनोऽमी ।
भवानिदं किं स्मयतीव हृष्ट-
स्तपस्विनां पश्यतां मामुदीक्ष्य ॥ ६

मार्कण्डेय उवाच ।

न तात हृष्यामि न च स्मयामि
प्रहर्षजो मां भजते न दर्पः ।
तवापदं त्वद्य समीक्ष्य रामं
सत्यव्रतं दाशरथिं स्मरामि ॥ ७

---

## 26

☞ This adhy is missing in $K_{1, 4}$ $D_{1, 3}$ (cf. v l 3 1 1, 22 30, 23 28), the MSS are mostly ignored here

**1** $^{a}$) Cnp तत्कारण (for तत्कानन) । — $^{b}$) S (except $M_3$) दुःखम् (for वासम्) — $^{c}$) T G °प्रतिमप्रकाशाः — $^{d}$) S भागीरथीसाल° ($T_2$ $G_{1, 3, 4}$ °साल्व°)

**2** $^{a}$) $K_3$ $B_3$ Dn $D_{4, 6}$ transp सर्वान् and राजा — $^{c}$) $Ś_1$ नृपति° (for ऋषभ°)

**3** $^{a}$) $M_1$ मुख्याश्च (for पित्र्याणि) N ($K_{1, 4}$ $D_{1, 3}$ missing) M तथा क्रियाश्च, T $G_{3, 4}$ तथाग्रयाणि; $G_1$ तथाश्रयाणि, $G_2$ तथा क्रियाणि (for *तथाग्रियाणि) — $^{b}$) S (except $T_2$ $G_3$) तस्मिन् (for महा) — $^{c}$) $K_3$ B (except $B_1$) D (except $D_2$, $D_{1, 3}$ missing) तत्र (for सर्व°) $Ś_1$ पुरोहितः सत्यसमिद्धतेजाः — $^{d}$) $K_2$ B Dc Dn $D_{4, 5}$ नृपाणा, S महात्मा (for कुरूणाम्)

**4** $^{a}$) $Ś_1$ B (except $B_4$) च (for तु) — $^{b}$) $B_1$ Dc मुनिः (for ऋषिः) $T_1$ [ऽ]तिचरो जगाम, $M_3$ [ऽ]भिजगाम राजन् (for ऽतिथिरा°) — $^{c}$) $S_1$ $D_2$ तिग्म°, $B_1$ प्रीति°; $G_1$ सर्व° (for तीव्र°) — $^{d}$) Here and below (generally) $Ś_1$ मार्कंडेय° । — After 4, N (except $K_3$, $K_{1, 4}$ $D_{1, 3}$ missing) $T_2$ $G_{2-4}$ ins

93* तमागत ज्वलितहुताशनप्रभ
महामनाः कुरुनृषभो युधिष्ठिरः ।
अपूजयत्सुरऋषिमानवार्चित
महामुनिं ह्यनुपमसत्त्ववीर्यवान् ।

[(L 1) = (var) 1 17 21$^{a}$ $Ś_1$ B (except $B_3$) °त्विष (for °प्रभ) — (L 4) $Ś_1$ °वीर्यसत्ववान्, $G_{2, 4}$ °सत्यवीर्यवान्) ]

**5** $^{a}$) $Ś_1$ $K_2$ $B_2$ D (except $D_2$, $D_{1, 3}$ missing) T $G_3$ वीक्ष्य, $G_1$ प्राप्य (for प्रेक्ष्य) $K_3$ दीना (for कृष्णा) — $^{d}$) T G स्मयते (for ऽस्मयत) $T_2$ $G_{1-3}$ महौजाः (for [अ]मितौजाः)

**6** $^{b}$) S (except $T_2$ $G_3$) याति (for सन्ति) $K_3$ [ऽ]पि, S (except $T_1$) मा (for ऽमी) — $^{c}$) Dc $D_2$ $G_4$ $M_2$ स्मयते प्र, $T_2$ $G_3$ स्मयतेव (for °तीव)

**7** $^{b}$) $T_2$ $G_{3, 4}$ प्रहर्षतो $K_3$ $M_2$ मा (for मा) — $^{c}$)

स चापि राजा सह लक्ष्मणेन
वने निवासं पितुरेव शासनात् ।
धन्वी चरन्पार्थ पुरा मयैव
दृष्टो गिरेर्ऋष्यमूकस्य सानौ ॥ ८

सहस्रनेत्रप्रतिमो महात्मा
मयस्य जेता नमुचेश्च हन्ता ।
पितुर्निदेशादनघः स्वधर्मं
वने वासं दाशरथिश्चकार ॥ ९

स चापि शक्रस्य समप्रभावो
महानुभावः समरेष्वजेयः ।
विहाय भोगानचरद्वनेषु
नेशे बलस्येति चरेदधर्मम् ॥ १०

नृपाश्च नाभागभगीरथादयो
महीमिमां सागरान्तां विजित्य ।
सत्येन तेऽप्यजयंस्तात लोका-
न्नेशे बलस्येति चरेदधर्मम् ॥ ११

अलर्कमाहुर्नरवर्य सन्तं
सत्यव्रतं काशिकरूषराजम् ।
विहाय राष्ट्राणि वसूनि चैव
नेशे बलस्येति चरेदधर्मम् ॥ १२

धात्रा विधिर्यो विहितः पुराण-
स्तं पूजयन्तो नरवर्य सन्तः ।
सप्तर्षयः पार्थ दिवि प्रभान्ति
नेशे बलस्येति चरेदधर्मम् ॥ १३

महाबलान्पर्वतकूटमात्रा-
न्विषाणिनः पश्य गजान्नरेन्द्र ।
स्थितान्निदेशे नरवर्य धातु-
र्नेशे बलस्येति चरेदधर्मम् ॥ १४

सर्वाणि भूतानि नरेन्द्र पश्य
यथा यथावद्विहितं विधात्रा ।
स्वयोनितस्तत्कुरुते प्रभावा-
न्नेशे बलस्येति चरेदधर्मम् ॥ १५

सत्येन धर्मेण यथार्हवृत्त्या
ह्रिया तथा सर्वभूतान्यतीत्य ।

---

S (except $T_2$ $G_3$) तात (for स्वय)

**8** $^a$) $G_2$ M राम° (for राजा) — $^{cd}$) $K_2$ $B_2$ Dn $D_4$ $_6$ मयैव दृष्टो (for पुरा मयैव), and गिरे पुरा (with hiatus !) (for दृष्टो गिरेर्)

**9** $^b$) $K_2$ B Dn $D_4$ T $G_1$ $_3$ यमस्य नेता, $D_2$ रणे विजेता, $D_5$ $_6$ $G_2$ $_4$ $M_1$ यमस्य जेता  $Ś_1$ $K_3$ $B_1$ $_2$ Dc $D_8$ निहता, $D_3$ यथेंद्र° (for च हन्ता) — $^c$) $M_2$ अनयत् (for अनघ) — $^d$) $Dn_3$ $D_4$ वास वने (by transp), $D_2$ रामो वने  Some N MSS चचार (for चकार)

**10** $^a$) $M_2$ शक्रप्रतिमप्रभावो — $^c$) G (except $G_3$) M ह्यच° (for अच°) — $^d$) = $11^d$, $12^d$, $13^d$, etc  $D_3$ $_5$ $T_2$ G (except $G_1$) नेशो (for नेशे)

**11** $B_3$ om (hapl) 11–12 — $^a$) B ($B_3$ om) $Dn_3$ $n_3$ भूपा (for नृपा) — $G_2$ om $11^{cd}$ — $^c$) $G_1$ $_4$ ऽय (for ऽप्य°) — $^d$) = $10^d$, $12^d$, $13^d$, etc  $D_8$ $T_2$ $G_3$ $_4$ नेशो (for नेशे)

**12** $B_3$ om 12 (cf v l 11), $T_1$ $M_2$ om (hapl) 12 — $^a$) $G_1$ $M_1$ °देव (for °वर्य)  $B_1$ नरधर्मसेतु, $G_1$ $M_1$ नरदेववर्यं, $G_2$ $_4$ नरवर्यमुत्तम (for नरवर्य सन्त)  $Ś_1$ $K_3$ $D_2$ सिद्ध, $T_2$ $G_3$ मुक्त (for सन्त) — $^b$) S ($T_1$ $M_2$ om) °करूश° — $^c$) B ($B_3$ om) Dn $D_4$ G $M_1$ राज्यानि (for राष्ट्राणि) — $^d$) = $10^d$, $11^d$, etc  $K_2$ $D_2$ $_5$ $T_2$ $G_{2-4}$ नेशो — After 12, $T_2$ $G_{2-4}$ read 15

**13** $B_1$ om (hapl) 13 — $^a$) $Ś_1$ $K_2$ $B_3$ $_4$ Dn $D_6$ पुराणैस्; $M_2$ पुरस्तात् — $^b$) $T_2$ $G_3$ $_4$ °वीर; $G_2$ °देव (for °वर्य) — $^c$) $T_2$ G (except $G_1$) भ्रमति (for प्रभान्ति) — $^d$) = $10^d$, $11^d$, etc  Some MSS नेशो (for नेशे)

**14** $^c$) $T_1$ G (except $G_3$) बलिनश्च सर्वान्  M नरदेव यत्तुर् (for नरवर्य धातुर्) — $^d$) = $10^d$, $11^d$, etc  Some MSS नेशो

**15** $T_1$ $G_1$ om (hapl) 15  $T_2$ $G_{2-4}$ read 15 after 12 — $^b$) $K_2$ B Dn $D_4$ $_6$ तथा (for the first यथा) M यथास्व (for यथावद्) — $^c$) $Ś_1$ $K_3$ $D_5$ $M_1$ कुर्वते न ($M_1$ तत्), $K_2$ $B_1$ $_3$ Dn $D_4$ $_6$ कर्म सदा (for तत्कुरुते) $B_2$ कर्म समाचरति (for तत्कुरुते प्र°)  $B_1$ $_3$ Dn $D_4$ $_6$ [आ]चरति, Dc स्वभावात्, $D_2$ प्रभाव; M स्वभाव (for प्रभावात्) — $^d$) = $10^d$, $11^d$, etc  Some MSS नेशो

**16** $^a$) $Ś_1$ (*sup lin*) $D_2$ यथार्थ°; $K_3$ तथार्थ°; B

11

यशश्च तेजश्च तवापि दीप्तं
विभावसोर्भास्करस्येव पार्थ ॥ १६
यथाप्रतिज्ञं च महानुभाव
कृच्छ्रं वने वासमिमं निरुष्य ।
ततः श्रियं तेजसा स्वेन दीप्ता-
मादास्यसे पार्थिव कौरवेभ्यः ॥ १७

वैशंपायन उवाच ।
तमेवमुक्त्वा वचनं महर्षि-
स्तपस्विमध्ये सहितं सुहृद्भिः ।
आमन्त्र्य धौम्यं सहितांश्च पार्था-
स्ततः प्रतस्थे दिशमुत्तरां सः ॥ १८

इति श्रीमहाभारते आरण्यकपर्वणि षड्विंशोऽध्यायः ॥ २६ ॥

## २७

वैशंपायन उवाच ।
वसत्स्वथ द्वैतवने पाण्डवेषु महात्मसु ।
अनुकीर्णं महारण्यं ब्राह्मणैः समपद्यत ॥ १
ईर्यमाणेन सततं ब्रह्मघोषेण सर्वतः ।
ब्रह्मलोकसमं पुण्यमासीद्द्वैतवनं सरः ॥ २
यजुषामृचां च साम्नां च गद्यानां चैव सर्वशः ।
आसीदुच्चार्यमाणानां निस्वनो हृदयंगमः ॥ ३
ज्याघोषः पाण्डवेयानां ब्रह्मघोषश्च धीमताम् ।
संसृष्टं ब्रह्मणा क्षत्रं भूय एव व्यरोचत ॥ ४
अथाब्रवीद्बको दाल्भ्यो धर्मराजं युधिष्ठिरम् ।
संध्यां कौन्तेयमासीनमृषिभिः परिवारितम् ॥ ५
पश्य द्वैतवने पार्थ ब्राह्मणानां तपस्विनाम् ।
होमवेलां कुरुश्रेष्ठ संप्रज्वलितपावकाम् ॥ ६
चरन्ति धर्मं पुण्येऽस्मिंस्त्वया गुप्ता धृतव्रताः ।

---

(except T2 G3) यथानु° — b) S (except T2 G3) श्रिया यथा (for ह्रिया तथा) — c) Ś1 तव प्रदीप्त, B2 तथातिदीप्त

**17** a) G2 4 M तु (for च) — c) K3 B2 Dn D4 T2 G3 तेन (for स्वेन) — d) D5 T2 G (except G1) कौरव पार्थिवेभ्य: (by transp)

**18** T1 om 18 — b) S1 D2 G2 4 सहित: सु°; K3 D5 नृप धर्मनदन — c) G1 2 समभ्य (for आ°)

Colophon om in T1 : K1 4 D1 3 missing — *Major parvan* Ś1 T2 G3–5 M2 आरण्य — *Sub parvan* Ś1 B2 3 Dc Dn1 n3 D2 4 5 (all om sub parvan name) mention only द्वैतवनप्रवेश, likewise B4 D5 only द्वैतवन, and G1 only द्वैतवननिवास — *Adhy name* B4 T2 G M1 मार्कंडेयदर्शन, Dc D2 मार्कंडेयवाक्य — *Adhy no* (figures, words or both) Dn T2 G M 25 — *Śloka no* Dn1 n3 18, Dn2 19

**27**

☞ This adhy is missing in K1 4 D1 3 (cf v.l 3 1 1, 22 30, 23 28), the MSS are mostly ignored here

**1** a) Ś1 D2 [अ]थो, Dn D4 6 वै (for [अ]थ)

**2** a) K3 D5 पूर्य° (for ईर्य°) — b) K3 D5 ब्राह्मणौ°वेन K2 B3 4 Dc Dn D4–6 सर्वश: — K3 om (hapl) 2c–3b

**3** K2 om 3ab (cf v l 2) — a) Hypermetric! K3 B Dc Dn D4 6 om the *first* च — b) Ś1 भापाणा चैव, Dc D2 भाप्याणा चैव, T2 G (except G1) निगमाना च S भारत (for सर्वश) B1 भाप्याणा च सहस्रश:

**4** a) K2 B2 Dn D4 6 चैव पार्थाना, Dc D2 पांडवाना च (for पाण्डवे°) — 4c = 1 76 18a — d) K3 व्यरोचयत्, B1 G1 M व्यवर्धत, T1 [अ]भिवर्धत, T2 G3–4 M2 [अ]भ्यवर्तत

**5** a) G (except G3) तथा° (for अथा°) T1 G1 M [अ]भ्येत्य (for दाल्भ्यो)

**6** b) Ś1 K3 B1 D3 महात्मना (for तप°) — d) Ś1 K3 Dc2 °पावक

**7** b) K3 महावने, S (except T2 G3) महायना° (for

भृगवोऽङ्गिरसश्चैव वासिष्ठाः काश्यपैः सह ॥ ७
आगस्त्याश्च महाभागा आत्रेयाश्चोत्तमव्रताः ।
सर्वस्य जगतः श्रेष्ठा ब्राह्मणाः संगतास्त्वया ॥ ८
इदं तु वचनं पार्थ शृण्वेकाग्रमना मम ।
भ्रातृभिः सह कौन्तेय यत्त्वा वक्ष्यामि कौरव ॥ ९
ब्रह्म क्षत्रेण संसृष्टं क्षत्रं च ब्रह्मणा सह ।
उदीर्णौ दहतः शत्रून्वनानीवाग्निमारुतौ ॥ १०

नाब्राह्मणस्तात चिरं बुभूषे-
दिच्छन्निमं लोकममुं च जेतुम् ।
विनीतधर्मार्थमपेतमोहं
लब्ध्वा द्विजं नुदति नृपः सपत्नान् ॥ ११

चरन्नैःश्रेयसं धर्मं प्रजापालनकारितम् ।
नाध्यगच्छद्बलिर्लोके तीर्थमन्यत्र वै द्विजात् ॥ १२

अनूनमासीदसुरस्य कामै-
र्वैरोचनेः श्रीरपि चाक्षयासीत् ।
लब्ध्वा महीं ब्राह्मणसंप्रयोगा-
त्तेष्वाचरन्दुष्टमतो व्यनश्यत् ॥ १३

नाब्राह्मणं भूमिरियं सभूति-
र्वर्णं द्वितीयं भजते चिराय ।
समुद्रनेमिर्नमते तु तस्मै
यं ब्राह्मणः शास्ति नयैर्विनीतः ॥ १४

कुञ्जरस्येव संग्रामेऽपरिगृह्याङ्कुशग्रहम् ।
ब्राह्मणैर्विप्रहीणस्य क्षत्रस्य क्षीयते बलम् ॥ १५
ब्रह्मण्यनुपमा दृष्टिः क्षात्रमप्रतिमं बलम् ।
तौ यदा चरतः सार्धमथ लोकः प्रसीदति ॥ १६
यथा हि सुमहानग्निः कक्षं दहति सानिलः ।
तथा दहति राजन्यो ब्राह्मणेन समं रिपून् ॥ १७
ब्राह्मणेभ्योऽथ मेधावी बुद्धिपर्येषणं चरेत् ।
अलब्धस्य च लाभाय लब्धस्य च विवृद्धये ॥ १८

अलब्धलाभाय च लब्धवृद्धये

---

घत ) — [d]) $K_2$ $D_c$ $D_5$ $T_2$ $G_3$ कश्यपै॰ सह, $K_3$ कश्यप॰ सह, $B_1$ काश्यपास्तथा

**8** [b]) $T_2$ G (except $G_1$) ॰प्रभा॰ (for ॰व्रता॰)

**9** [b]) $Ś_1$ शृणुष्वैकमना; $K_2$ B $D_c$ $D_n$ $D_{4-6}$ शृणुष्व गदतो — [c]) $Ś_1$ $K_3$ $D_{2\ 5}$ सभ्रातृभृत्य॰ ($Ś_1$ $D_2$ ॰भार्य॰) कौंतेय — [d]) $K_{2\ 3}$ B D (except $D_2$, $D_{1\ 3}$ missing) $T_1$ $G_4$ त्वा

**10** [c]) $K_2$ B D (except $D_5$, $D_{1\ 3}$ missing) $T_2$ $G_3$ $M_2$ उदीर्णे, $G_1$ र्णं

**11** [b]) $K_2$ ईक्षन् (for इच्छन्) $B_1$ $D_c$ $G_4$ इम (for अमु) $T_2$ $G_{2\ 3}$ transp इम and अमु, $T_2$ $G_{3\ 4}$ transp लोक and जेतुम् — [c]) S (except $G_1$) ॰दोष (for ॰मोह) — [d]) $K_2$ जयति, $K_2$ $B_{1\ 3}$ $D_c$ $D_5$ S हति, $B_2$ m $D_6$ तुदति; $B_4$ भूति (for नुदति) $Ś_1$ $B_1$ $D_2$ सदा, $B_2$ भूप (for नृप)

**12** [a]) G (except $G_3$) निश्रेयस — [b]) $T_1$ $G_{2\ 4}$ राज्य, $G_1$ राज॰ (for प्रजा) — [c]) $B_1$ $D_2$ T G नाभ्यगच्छद्

**13** [a]) $D_c$ $D_5$ $M_2$ अन्यूनम्, T G (except $G_1$) $M_1$ मानूनम् $K_2$ विक्रमैर्, S राजन् ($M_2$ कामो) (for कामैर्) — [b]) $K_{2\ 3}$ $D_c$ $D_{n1}$ $D_5$ विरोचने $T_{1\ 2}$ (before corr) G (except $G_3$) $M_1$ श्रीरभिकाक्षिता या — [d]) $K_3$ नष्टाचारो, $T_1$ $G_{1\ 2}$ M तेषां चरन् ($G_1$ चिर) S (except $M_2$) दुःखम् (for दुष्टम्) $K_2$ $B_2$ $D_n$ $D_{2\ 4-6}$ $M_2$ अथो (for अतो)

**14** [a]) $K_3$ सहेत, $G_4$ सहैति — [d]) $K_2$ B $D_n$ $D_{4-6}$ नयैर्विनीत, T $G_{2-4}$ नयेरितात्मा

**15** [b]) $D_2$ -त्यज्या॰, $M_2$ -हाया॰ (for -गृह्या॰) — [c]) $T_1$ $G_1$ M ब्र($T_1$ $M_2$ ब्रा)ह्मणा विप्रहीणस्य; $T_2$ (before corr) $G_{2\ 4}$ ब्राह्मणाभिप्र॰ — [d]) $Ś_1$ हीयते (for क्षी॰)

**16** [a]) $B_{2\ 3\ 4}$ (m as in text) $D_5$ $T_2$ (by corr) $G_3$ ब्राह्मणास्त्र($B_3$ $D_5$ क्ष)परा, $D_c$ ब्राह्मणानुपरा — [b]) $K_3$ $D_6$ $T_1$ $M_2$ क्षत्रम् $G_1$ $M_1$ क्षत्रे $S_1$ अनुपम, $G_1$ $M_1$ चाप्रतिम — [d]) $K_2$ B D (except $D_2$, $D_{1\ 3}$ missing) $T_2$ $G_3$ तदा (for अथ)

**17** [a]) $T_1$ $G_{1\ 4}$ M तु, $G_2$ [अ]ति- (for हि) — [c]) $K_3$ S (except $G_3$, $T_2$ before corr) चर॰ (for दह॰) — [d]) $K_2$ B D ($D_{1\ 3}$ missing) सम रिपु, $K_3$ M सहा-रिपु T G ब्राह्मणै सहितो रिपून् ($T_1$ $G_1$ सहचारिभि॰; $G_{2\ 4}$ सहितोरिपु)

**18** [a]) $Ś_1$ $K_3$ $D_5$ ब्राह्मणो ह्येव, $K_2$ B $D_c$ $D_n$ $D_{2\ 4\ 6}$ ॰णेष्वेव, $M_2$ ॰णस्यैव (for ॰णेभ्योऽथ) — [b]) $B_3$ बुद्धे॰, T $G_{3\ 4}$ बुद्ध्या (for बुद्धि॰) — [d]) $K_2$ B $D_n$ $D_{4-6}$ परिवृद्धये, $T_2$ $G_{2-4}$ [अ]थ विवृ

यथार्हतीर्थप्रतिपादनाय ।
यशस्विनं वेदविदं विपश्चितं
बहुश्रुतं ब्राह्मणमेव वासय ॥ १९
ब्राह्मणेषूत्तमा वृत्तिस्तव नित्यं युधिष्ठिर ।
तेन ते सर्वलोकेषु दीप्यते प्रथितं यशः ॥ २०
ततस्ते ब्राह्मणाः सर्वे बकं दाल्भ्यमपूजयन् ।
युधिष्ठिरे स्तूयमाने भूयः सुमनसोऽभवन् ॥ २१
द्वैपायनो नारदश्च जामदग्न्यः पृथुश्रवाः ।
इन्द्रद्युम्नो भालुकिश्च कृतचेताः सहस्रपात् ॥ २२
कर्णश्रवाश्च मुञ्जश्च लवणाश्वश्च काश्यपः ।
हारीतः स्थूणकर्णश्च अग्निवेश्योऽथ शौनकः ॥ २३
ऋतवाक्च सुवाक्चैव बृहदश्व ऋतावसुः ।
ऊर्ध्वरेता वृषामित्रः सुहोत्रो होत्रवाहनः ॥ २४
एते चान्ये च बहवो ब्राह्मणाः संशितव्रताः ।
अजातशत्रुमानर्चुः पुरंदरमिवर्षयः ॥ २५

इति श्रीमहाभारते आरण्यकपर्वणि सप्तविंशोऽध्यायः ॥ २७ ॥

# २८

वैशंपायन उवाच ।
ततो वनगताः पार्थाः सायाह्ने सह कृष्णया ।
उपविष्टाः कथाश्चक्रुर्दुःखशोकपरायणाः ॥ १
प्रिया च दर्शनीया च पण्डिता च पतिव्रता ।
ततः कृष्णा धर्मराजमिदं वचनमब्रवीत् ॥ २
न नूनं तस्य पापस्य दुःखमस्मासु किंचन ।

---

**19** [a]) G1 °भावाय (for °लाभाय) — [b]) K3 यथावदर्हप्र°, D6 यथार्हवृद्धप्र°, T1 G1 °पादनाय च — [cd]) Ś1 M1 तपस्विन (for यश°) B1 transp विप° and बहु° S वासयेत् (for °य)

**20** [c]) G2 4 भक्तिः (for वृत्ति॰) — [d]) K3 प्रथम, T1 G3 4 [S]प्रतिम (for प्रथित)

**21** Before 21, K2 B (except B1) Dn D4 6 G2 M1 ins वैश° उ° (K2 Dn1 G2 om उ°) — [d]) Ś1 K3 B1 D3 सर्वे, T1 G1 3 M पुन॰ (for भूय॰)

**22** [c]) Ś1 वालकिश्च, K2 भालक°, B2 भालुकि°, T G3 दालुक°, G4 दालुकि° G1 3 M1 °द्युम्नो (M1 °द्युम्नौ) हालुकिश्च — Ś1 om (hapl) 22[d]–23[c] — [d]) K2 D6 हृतचेता॰, S कृतमेधा॰

**23** Ś1 om 23[abc] (cf v l 22) — [ab]) K3 B1 Dc मौंज° (for मुञ्ज°) S कण्वश्च लवणाश्वश्च (T2 G2–4 °णश्चैव) काश्यपश्च महातपा॰ — [c]) K3 Dc D3 तृण°, D5 G2 M1 स्थूल°, T1 G4 M3 स्थल° (for स्थूण°) — [d]) Ś1 K3 B1 Dc D3 ins अपि before अग्नि° (to avoid the hiatus!) Dc °होत्रो° (for °वेश्यो°) S कौशिक॰ (for शौन°)

**24** [a]) K3 Dn D4 6 कृत° (for ऋत°) Dc कृतवाक्सुवहश्चैव, T1 ऋतवाग्वसुवाक्चैव — [b]) Ś1 K3 B Dc Dn D4–6 T2 (by corr) G3 विभा° (for ऋता°). — [c]) S बृहन् (for वृषा-)

**25** [b]) S (except M3) मुनय॰ (for ब्राह्मणा॰) MSS सश्रित°, शसित° etc also (as usual) B1 मुनयो ब्राह्मणास्तथा — [c]) Ś1 मान्यत, K3 Dc D3 G1 M1 अर्चत॰, D5 आर्छत (for आनर्चु॰)

Colophon K1 4 D1 3 missing — *Major parvan* Ś1 Dn2 T G2–4 M3 आरण्य — *Sub parvan* K3 B1 3 Dc D3 M3 (all om sub parvan name) mention only द्वैतवनप्रवेश, likewise B4 D5 only द्वैतवन, and G1 only द्वैतवननिवास — *Adhy name* D3 ब्राह्मणमाहात्म्य, T3 G M1 दाल्भ्यवचन — *Adhy no* (figures, words or both) Dn S 26 — *Śloka no* Dn 25

## 28

☞ This adhy is missing in K1 4 D1 3 (cf v l 3 1 1, 22 30, 23 28), the MSS are mostly ignored here

**1** [c]) T G3 4 कथा चक्रुर्

**2** [c]) K3 B Dn D4 6 M3 अथ (for तत॰) — [d]) T2 G (except G1) वचन चेदमब्रवीत्

**3** Before 3, most MSS ins द्रौपद्युवाच (resp.

विद्यते धार्तराष्ट्रस्य नृशंसस्य दुरात्मनः ॥ ३
यस्त्वां राजन्मया सार्धमजिनैः प्रतिवासितम् ।
भ्रातृभिश्च तथा सर्वैर्नाभ्यभाषत किंचन ।
वनं प्रस्थाप्य दुष्टात्मा नान्वतप्यत दुर्मतिः ॥ ४
आयसं हृदयं नूनं तस्य दुष्कृतकर्मणः ।
यस्त्वां धर्मपरं श्रेष्ठं रूक्षाण्यश्रावयत्तदा ॥ ५
सुखोचितमदुःखार्हं दुरात्मा ससुहृद्गणः ।
ईदृशं दुःखमानीय मोदते पापपूरुषः ॥ ६
चतुर्णामेव पापानामश्रु वै नापतत्तदा ।
त्वयि भारत निष्क्रान्ते वनायाजिनवाससि ॥ ७
दुर्योधनस्य कर्णस्य शकुनेश्च दुरात्मनः ।
दुर्भ्रातुस्तस्य चोग्रस्य तथा दुःशासनस्य च ॥ ८
इतरेषां तु सर्वेषां कुरूणां कुरुसत्तम ।
दुःखेनाभिपरीतानां नेत्रेभ्यः प्रापतज्जलम् ॥ ९
इदं च शयनं दृष्ट्वा यच्चासीत्ते पुरातनम् ।
शोचामि त्वां महाराज दुःखानर्हं सुखोचितम् ॥ १०
दान्तं यच्च सभामध्ये आसनं रत्नभूषितम् ।
दृष्ट्वा कुशबृसीं चेमां शोको मां रुन्धयत्ययम् ॥ ११
यदपश्यं सभायां त्वां राजभिः परिवारितम् ।
तच्च राजन्नपश्यन्त्याः का शान्तिर्हृदयस्य मे ॥ १२
या त्वाहं चन्दनादिग्धमपश्यं सूर्यवर्चसम् ।
सा त्वा पङ्कमलादिग्धं दृष्ट्वा मुह्यामि भारत ॥ १३
या वै त्वा कौशिकैर्वस्त्रैः शुभ्रैर्बहुधनैः पुरा ।
दृष्टवत्यस्मि राजेन्द्र सा त्वा पश्यामि चीरिणम् ॥ १४
यच्च तद्रुक्मपात्रीभिर्ब्राह्मणेभ्यः सहस्रशः ।
ह्रियते ते गृहादन्नं संस्कृतं सार्वकामिकम् ॥ १५
यतीनामगृहाणां ते तथैव गृहमेधिनाम् ।
दीयते भोजनं राजन्नतीव गुणवत्प्रभो ।

---

द्रौपदी)

**4** $^{a}$) $M_3$ स्वा (for त्वां) — $^{b}$) S परिवारित ($T_2$ $G_3$ °वासित, $G_1$ °वारित°) — $K_2$ $B_3$ Dn $D_{4-6}$ om $4^{cd}$ — $^{c}$) $Ś_1$ $D_2$ सहित° (for च तथा) — $Ś_1$ $K_3$ $D_2$ om $4^{ef}$ $B_{1\ 2\ 4}$ Dc $T_2$ $G_3$ transp $4^{cd}$ and $4^{ef}$ — $^{e}$) S (except $G_1$) दुर्मेधा (for दुष्टात्मा) — $^{f}$) Dc S नानुतप्यति (Dc °त)

**5** $^{b}$) S तस्यासीत्क्रूरकर्मण° — $K_2$ om (hapl) $5^{c}$–$6^{b}$ — $^{c}$) $T_1$ $M_2$ स्वा (for त्वा) $Ś_1$ ज्येष्ठ (for श्रेष्ठ) — After 5, $B_1$ $Dc_2$ ins

94* वचनान्यमनोज्ञानि दुर्वाच्यानि च ससदि ।

**7** $K_3$ om 7 (with 6) — $^{b}$) $Ś_1$ $D_{2\ 5}$ असूया दृश्य($D_5$ विद्य)ते त्वयि, $K_2$ B Dc Dn $D_4$ अस्र न पतित तदा (Dc भुवि)

**8** $G_2$ transp $8^{b}$ and $8^{d}$ — $^{c}$) $B_2$ दुर्दान्तस्, $T_2$ G (except $G_1$) दुर्हृदस् (for दुर्भ्रातुस्) M तव (for तस्य) — $^{d}$) $K_2$ B (except $B_1$) Dc Dn $D_{4\ 6}$ राजन् (for तथा) $B_4$ Dc वै, $T_2$ $G_{3\ 4}$ तु (for च)

**9** $^{a}$) $S_1$ $T_2$ G (except $G_2$) च (for तु) $K_{2\ 3}$ $B_1$ अथेतरेषां स° — $^{c}$) $T_1$ G (except $G_3$) [अ]पि (for [अ]भि)

**10** $^{c}$) $S_1$ $K_3$ $M_2$ स्वा (for त्वा) $T_2$ $G_2$ °बाहो (for °राज) — $^{d}$) S दृष्ट्वा भूतलशायिन

**11** $^{c}$) $S_1$ $K_{2\ 3}$ B $Dc_1$ $Dn_2$ $n_3$ $D_4$ °बृषीं, $Dc_2$ $D_{5\ 6}$ °बृशीं $Ś_1$ एता, $T_2$ $G_{2\ 3}$ चैता (for चेमां) — $^{d}$) $Ś_1$ $K_3$ $G_2$ $M_2$ मा (for मां) $Ś_1$ $K_3$ मथय°, $B_1$ प्रदह°, $D_{2\ 5}$ B वारय° (for रुन्धय°)

**13** $T_1$ om (hapl) 13–16 — $^{a}$) $T_2$ G त्वा त्वक्-, $M_1$ त्वा सप्- (for त्वाह) — $^{c}$) $K_{2\ 3}$ B D ($D_{1\ 3}$ missing) $G_{1\ 4}$ त्वां (for त्वा)

**14** $T_1$ om 14 (cf v.l 13) — $^{a}$) $K_2$ $B_{2-4}$ Dc Dn $D_{4-6}$ $T_2$ $G_3$ या त्वाहं, $K_3$ या त्वा वै; $B_1$ $D_2$ $G_4$ या वै त्वां, M या वीत — $^{b}$) $K_3$ Dc $D_2$ G (except $G_3$) M शुभ्रैर् (for शुभ्रैर्) $K_2$ B Dc Dn $D_{4-6}$ $T_2$ $G_3$ आच्छादित ($B_1$ बहुविधै°), $K_3$ $G_{1\ 2\ 4}$ बहुशतै° (for बहुधनै°) — $^{d}$) $K_{2\ 3}$ B $Dc_1$ Dn $D_{4-6}$ $G_1$ सा त्वां, $D_2$ $M_1$ साद्य, $M_2$ साहं

**15** $T_1$ om 15 (cf v l 13) — $^{a}$) $T_2$ G $M_2$ ते (for तद्) — $^{c}$) $D_6$ $M_3$ दीयते (for ह्रि°) $B_2$ च; $T_2$ G (except $G_1$) त्वद्-, $M_2$ वै (for ते) — $^{d}$) $T_2$ G (except $G_1$) सार्वकालिक

**16** $T_1$ om 16 (cf v l 13) — $^{a}$) $S_1$ $K_3$ $D_2$ $M_2$ च, $B_1$ Dc तु (for ते) — After $16^{ab}$, $M_2$ reads line 1 of 95* — $^{c}$) S ($T_1$ om) यतीना (for दीयते) — N ($K_{1\ 4}$ $D_{1\ 3}$ missing, $Ś_1$ $K_3$ $D_{2\ 5}$ om line 1) ins after $16^{cd}$ $M_2$ ins line 1 after $16^{ab}$ and line 2 after $16^{cd}$ (!)

तच्च राजन्नपश्यन्त्याः का शान्तिर्हृदयस्य मे ॥ १६
यांस्ते भ्रातॄन्महाराज युवानो मृष्टकुण्डलाः ।
अभोजयन्त मृष्टान्नैः सूदाः परमसंस्कृतैः ॥ १७
सर्वांस्तानद्य पश्यामि वने वन्येन जीवतः ।
अदुःखार्हान्मनुष्येन्द्र नोपशाम्यति मे मनः ॥ १८
भीमसेनमिमं चापि दुःखितं वनवासिनम् ।
ध्यायन्तं किं न मन्युस्ते प्राप्ते काले विवर्धते ॥ १९
भीमसेनं हि कर्माणि स्वयं कुर्वाणमच्युत ।
सुखार्हं दुःखितं दृष्ट्वा कस्मान्मन्युर्न वर्धते ॥ २०
सत्कृतं विविधैर्यानैर्वस्त्रैरुच्चावचैस्तथा ।
तं ते वनगतं दृष्ट्वा कस्मान्मन्युर्न वर्धते ॥ २१
कुरूनपि हि यः सर्वान्हन्तुमुत्सहते प्रभुः ।
त्वत्प्रसादं प्रतीक्षंस्तु सहतेऽयं वृकोदरः ॥ २२
योऽर्जुनेनार्जुनस्तुल्यो द्विबाहुर्बहुबाहुना ।
शरातिसर्गे शीघ्रत्वात्कालान्तकयमोपमः ॥ २३
यस्य शस्त्रप्रतापेन प्रणताः सर्वपार्थिवाः ।
यज्ञे तव महाराज ब्राह्मणानुपतस्थिरे ॥ २४
तमिमं पुरुषव्याघ्रं पूजितं देवदानवैः ।
ध्यायन्तमर्जुनं दृष्ट्वा कस्मान्मन्युर्न वर्धते ॥ २५
दृष्ट्वा वनगतं पार्थमदुःखार्हं सुखोचितम् ।
न च ते वर्धते मन्युस्तेन मुह्यामि भारत ॥ २६
यो देवांश्च मनुष्यांश्च सर्पांश्चैकरथोऽजयत् ।
तं ते वनगतं दृष्ट्वा कस्मान्मन्युर्न वर्धते ॥ २७
यो यानैरद्भुताकारैर्हयैर्नागैश्च संवृतः ।
प्रसह्य वित्तान्यादत्त पार्थिवेभ्यः परंतपः ॥ २८
क्षिपत्येकेन वेगेन पञ्च बाणशतानि यः ।
तं ते वनगतं दृष्ट्वा कस्मान्मन्युर्न वर्धते ॥ २९
श्यामं बृहन्तं तरुणं चर्मिणामुत्तमं रणे ।

---

95* सत्कृतानि सहस्राणि सर्वकामैः पुरा गृहे ।
सर्वकामैः सुविहितैर्यदपूजयथा द्विजान् ।
— 16^f = 12^d

**17** ^a) N (K1 4 D1 3 missing) M2 यत्ते (for यांस्ते) — ^b) B3 4 Dc2 D2 4 5 °कुण्डलान् — ^c) S (except G1 4) अभोजयश्च K3 Dc D5 मिष्टान्नैः, T1 M निष्टान्नैः — ^d) B2m 4 M2 °सत्कृताः

**18** ^a) S पश्यन्त्या (for पश्यामि) — ^b) Dn D4 6 जीविनः, M2 जीवितान् (for जीवतः)

**19** ^a) K3 श्रुत्वा, Dc D5 M1 दृष्ट्वा (for चापि) — ^c) K3 B (except B3) Dn D4 6 ध्यायतः S (except T2 G3) नु (for न) — ^d) G2 4 प्राप्तकाले T1 G2 4 M न (for वि-)

**20** Dc1 M2 om (hapl.) 20 — ^b) Ś1 K3 B1 3 Dn D5 T2 G3 4 °मच्युत — ^c) S (M2 om.) असुख (for दुःखित) — ^d) = 21^d, 25^d, 27^d, 29^d, 30^d, 31^d, 32^d S1 कथं (for कस्मान्); cf. v.l. 21 S (M2 om.) कस्माद्राजन्नुपेक्षसे

**21** K2 B2 D6 M2 om. (hapl.) 21 — ^a) K3 M1 ज्ञानैर्, T1 2 (before corr.) G3 4 मान्यैर्, G1 मानैर् (for यानैर्) — ^b) K3 T1 2 (before corr.) G (except G3) M1 वाक्यैर् (for वस्त्रैर्) — ^d) Ś1 कथं (for कस्मान्); cf. v.l. 20

**22** ^a) S1 K3 B4 Dc D2 5 ह्यय (for हि यः) K3 B (except B4) Dn D4 6 अय कुरूञ्शेषे सर्वान् — ^b) S1 K3 D2 5 भृश (for प्रभुः) — ^c) N (K1 4 D1 3 missing) M2 त्वत्प्रतिज्ञा — ^d) Ś1 K3 B1 Dc D2 5 M2 क्षम° (for सह°)

**23** ^a) Ś1 K3 B2-4 Dc D2 4-6 शरावसर्गे, K3 B1 Dn शरावमर्दे, M2 शरान्विसर्गे K3 शीघ्रास्त्रो, T G °स्त्रे, M °स्त्र°

**25** ^d) = 20^d, 21^d, etc. N (K1 4 D1 3 missing) M2 कस्माद्राजन्न कुप्यसि (M3 °से)

**26** M1 om. (hapl.) 26–27 G1 reads 26 after 29 — ^b) M2 दुःखानर्हं (for अदुःखार्हं) — ^c) Ś1 K3 D2 विव° (for वर्ध°) T2 G (except G1) न वर्धते च मन्युस्ते

**27** 27^ab = (var.) 4 18 9^ab M1 om. 27 (cf. v.l. 26) — ^b) B Dn D2 4 6 सर्पान् (as in text), Dc यक्षान्, the rest सर्वान् T1 om. च — 27^d = 20^d, 21^d, etc.

**28** T1 om. (hapl.) 28–29 — ^b) G1 2 M हय-नागै° — ^c) T2 G2-4 रत्न योगृह्णात्, G1 M1 वित्त गृह्णी यात् — ^d) T2 G M1 पार्थिवानां K3 B (except B3) Dn D2 परतप

**30** ^b) B1 S (except G1) धन्विनाम्, B3 धर्मिणाम्, D3 5 6 वर्मि° (for चर्मि°) — T1 om. 30^cd, G1 om. (hapl.) 30^c–31^d

नकुलं ते वने दृष्ट्वा कस्मान्मन्युर्न वर्धते ॥ ३०
दर्शनीयं च शूरं च माद्रीपुत्रं युधिष्ठिर ।
सहदेवं वने दृष्ट्वा कस्मान्मन्युर्न वर्धते ॥ ३१
द्रुपदस्य कुले जातां स्नुषां पाण्डोर्महात्मनः ।
मां ते वनगतां दृष्ट्वा कस्मान्मन्युर्न वर्धते ॥ ३२
नूनं च तव नैवास्ति मन्युर्भरतसत्तम ।
यत्ते भ्रातॄंश्च मां चैव दृष्ट्वा न व्यथते मनः ॥ ३३
न निर्मन्युः क्षत्रियोऽस्ति लोके निर्वचनं स्मृतम् ।
तदद्य त्वयि पश्यामि क्षत्रिये विपरीतवत् ॥ ३४
यो न दर्शयते तेजः क्षत्रियः काल आगते ।
सर्वभूतानि तं पार्थ सदा परिभवन्त्युत ॥ ३५
तत्त्वया न क्षमा कार्या शत्रून्प्रति कथंचन ।
तेजसैव हि ते शक्या निहन्तुं नात्र संशयः ॥ ३६
तथैव यः क्षमाकाले क्षत्रियो नोपशाम्यति ।
अप्रियः सर्वभूतानां सोऽमुत्रेह च नश्यति ॥ ३७

इति श्रीमहाभारते आरण्यकपर्वणि अष्टाविंशोऽध्यायः ॥ २८ ॥

# २९

द्रौपद्युवाच ।
अत्राप्युदाहरन्तीममितिहासं पुरातनम् ।
प्रह्लादस्य च संवादं बलेर्वैरोचनस्य च ॥ १
असुरेन्द्रं महाप्राज्ञं धर्माणामागतागमम् ।
बलिः पप्रच्छ दैत्येन्द्रं प्रह्लादं पितरं पितुः ॥ २
क्षमा स्विच्छ्रेयसी तात उताहो तेज इत्युत ।

---

**31** G1 om 31 (cf v l 30) — After 31^c, N (K1.4 D1.3 missing) M3 ins

96* कस्मात्क्षमसि पार्थिव ।
नकुलं सहदेवं च दृष्ट्वा ते दुःखितावुभौ ।
अदुःखार्हौ मनुष्येन्द्र
[ (L 2) K3 D5 दृष्ट्वा दुःखवशानुगौ ]

— After 31, M3 *repeats* 26 (using the plural instead of the singular in 26^ab)

**32** T1 om (hapl ) 32 — After 32^ab, K2 B Dc Dn D4-6 ins

97* धृष्टद्युम्नस्य भगिनीं वीरपत्नीमनुव्रताम् ।

— ^c) K2 B Dc Dn D4-6 वै (for ते) — ^d) K2 B (except B1) Dn D4.6 कस्मात्क्षमसि पार्थिव (cf 96*)

**33** ^a) Dn D6 T2 G3 वै नास्ति (for नैवास्ति) — After 33^ab, T1 G1 ins

98* त्यक्तवास्त्र विनाशाय व्यक्त भृगुपतिर्यथा ।
[ T1 त्यक्त्वा (for व्यक्त) ]

— ^d) D5 व्यथित (for व्यथते)

**34** ^a) M3 नामन्यु क्षत्रियोस्तीति — ^b) Ś1 K3 Dc D3.5 महत् (for स्मृतम्)

**36** ^a) S (for M3 see below) न (for तत्), and तु (for न) M3 न च क्षमा त्वया कार्या — ^c) Ś1 K3 D3 शक्यास्ते (by transp ) — ^d) Ś1 K3 D3.5 M1 नियतु (for निहन्तु)

**37** ^d) D6 S (except M1) वि- (for च)

Colophon om in K3 K1.4 D1.3 missing — *Major parvan* Ś1 T G2-4 आरण्य — *Sub parvan* B2.3 Dc Dn1 n3 D4.6 (all om sub parvan name) mention only द्वैतवनप्रवेश, likewise B4 D5 only द्वैतवन; and D2 only द्वैतवनवास — *Adhy name* B4 Dc T2 G M1 द्रौपदीवाक्य, D2 द्रौपदीविलाप — *Adhy no* (figures, words or both) Dn S 27 — *Śloka no* Dn 40

## 29

☞ This adhy is missing in K1.4 D1.3 (cf v l 3 1 1, 22 30, 23 28), the MSS are mostly ignored here

**1** ^c) B Dc2 Dn3 D5.6 प्रह्रादस्य (see below)

**2** ^a) B1 S (except M3) °त्मान (for °प्राज्ञ) — ^b) T2 G (except G1) अश्रुता° (for आगता ) — ^c) T1 G1.2 M1 दैतेन्द्र° — ^d) B Dc2 D5.6 प्रह्राद

**3** Before 3, B Dc Dn D4-6 M3 ins बलिरुवाच

एतन्मे संशयं तात यथावद् ब्रूहि पृच्छते ॥ ३
श्रेयो यदत्र धर्मज्ञ ब्रूहि मे तदसंशयम् ।
करिष्यामि हि तत्सर्वं यथावदनुशासनम् ॥ ४
तस्मै प्रोवाच तत्सर्वमेवं पृष्टः पितामहः ।
सर्वनिश्चयवित्प्राज्ञः संशयं परिपृच्छते ॥ ५

प्रह्लाद उवाच ।

न श्रेयः सततं तेजो न नित्यं श्रेयसी क्षमा ।
इति तात विजानीहि द्वयमेतदसंशयम् ॥ ६
यो नित्यं क्षमते तात बहून्दोषान्स विन्दति ।
भृत्याः परिभवन्त्येनमुदासीनास्तथैव च ॥ ७
सर्वभूतानि चाप्यस्य न नमन्ते कदाचन ।
तस्मान्नित्यं क्षमा तात पण्डितैरपवादिता ॥ ८
अवज्ञाय हि तं भृत्या भजन्ते बहुदोषताम् ।
आदातुं चास्य वित्तानि प्रार्थयन्तेऽल्पचेतसः ॥ ९
यानं वस्त्राण्यलंकाराञ्शयनान्यासनानि च ।
भोजनान्यथ पानानि सर्वोपकरणानि च ॥ १०
आददीरन्नधिकृता यथाकाममचेतसः ।
प्रदिष्टानि च देयानि न दद्युर्भर्तृशासनात् ॥ ११
न चैनं भर्तृपूजाभिः पूजयन्ति कदाचन ।
अवज्ञानं हि लोकेऽस्मिन्मरणादपि गर्हितम् ॥ १२
क्षमिणं तादृशं तात ब्रुवन्ति कटुकान्यपि ।
प्रेष्याः पुत्राश्च भृत्याश्च तथोदासीनवृत्तयः ॥ १३
अप्यस्य दारानिच्छन्ति परिभूय क्षमावतः ।
दाराश्चास्य प्रवर्तन्ते यथाकाममचेतसः ॥ १४
तथा च नित्यमुदिता यदि स्वल्पमपीश्वरात् ।
दण्डमर्हन्ति दुष्यन्ति दुष्टाश्चाप्यपकुर्वते ॥ १५
एते चान्ये च बहवो नित्यं दोषाः क्षमावताम् ।
अथ वैरोचने दोषानिमान्विद्ध्यक्षमावताम् ॥ १६
अस्थाने यदि वा स्थाने सततं रजसावृतः ।
क्रुद्धो दण्डान्प्रणयति विविधान्स्वेन तेजसा ॥ १७
मित्रैः सह विरोधं च प्राप्नुते तेजसावृतः ।
प्राप्नोति द्वेष्यतां चैव लोकात्स्वजनतस्तथा ॥ १८

---

— $^{c}$) K3 [अ]स्ति, S वा (for स्वित्) Ś1 K3 तेज° (for तात) — $^{b}$) S1 K3 चात्र मे सशयो महान्, S तेजो वासुरसत्तम — $^{c}$) S (except M2) यथा (for एतन्), and सशयस् (for °य) Ś1 K3 तन्मेपरिमितप्रज्ञ — $^{d}$) S (except M2) तथा स्व (for यथावद्) S1 सशय परिपृच्छत°, K3 सम्यकप्रब्रूहि पृच्छते

6 S1 om the ref B Dc2 D5 प्रह्लाद उ° — $^{b}$) M2 श्रेयसे मया (for °सी क्षमा) G4 यो नित्य य° स्वय क्षमी — $^{d}$) T2 G3 यद् द्वय तदसशय

7 K3 om (hapl) $7^{b}$–$8^{c}$ — $^{c}$) Ś1 भूता (for भृत्या°) — $^{d}$) B (except B1) Dc Dn D4 6 तथारय° (for तथैव च)

8 K3 om $8^{abc}$ (cf v l 7) — $^{b}$) Dc D5 S नमति — $^{d}$) K3 परिवर्जिता, B1 G2 अपि वर्जिता (for अपवादिता)

9 $^{a}$) S च (for हि) — $^{b}$) T1 °दोषवान्, G1 M1 °दोषत° — $^{d}$) D3 G2 4 °तेजस° (for °चेतस°)

10 $^{a}$) B2m 3 M2 वस्त्रम् S (except G1) अलकार — $^{b}$) D6 आसन शयनानि च — $^{c}$) T2 G (except G1) माल्या° (for पाना°)

11 $^{b}$) = $14^{d}$ G2 °तेजस° (for °चेतस°), cf v.l $9^{d}$

12 $^{a}$) Dc2 D5 तत्र (for भर्तृ) — $^{b}$) Ś1 K3 B1 Dc D2 5 M2 पूजयेयु° K2 3 B (except B1) Dc Dn D4–6 T2 G3 M2 कथंचन — $^{c}$) B4 Dc D2 G2 4 अवज्ञात

13 $^{a}$) T1 2 (before corr) G4 क्षमिणा तादृशा — $^{b}$) D5 च (for [अ]पि) — $^{c}$) K3 B (except B1) Dc D5 T2 G3 M2 transp पुत्रा° and भृत्या° D6 दासा° (for भृत्या°)

14 $^{a}$) K3 (marg *sec m*) Dn अथास्य, D6 अवाप्य (for अप्यस्य) — $^{b}$) K3 D6 °भोक्तु (for °भूय) — $^{c}$) T1 न निव°, G (except G3) M1 [अ]प्यतिव° (for [अ]स्य प्रव°) — $^{d}$) = $11^{b}$ G2 4 °तेजस° (for °चेतस°), cf v.l $9^{d}$, $11^{b}$

15 $^{b}$) K3 नाल्पाम्, B Dn D4 6 T2 G3 नाल्पम्; T1 G1 4 M1 स्वल्पाम् — $^{c}$) S (except T2 G3) हानिम् (for दण्डम्) K3 अर्हति, D2 G4 M ऋच्छति, D6 T1 G1 3 इच्छति (for अर्हन्ति) T G3 दूष्यति, M1 द्विष्यति — $^{d}$) T1 G (except G3) M1 स्वामिनश्चापि (M1 °प) कुर्वते

17 $^{a}$) S ह्य(T2 G3 [S]प्य)पि च (for यदि वा) — $^{b}$) S चानुगामिनि (T1 G4 °नी, T2 G3 °नीं) (for रज°) — D2 om (hapl) $17^{c}$–$18^{b}$ — $^{d}$) S विविधांस्तेजसावृत

18 D2 om $18^{ab}$ (cf v l 17) — $^{b}$) S (except

सोऽवमानादर्थहानिमुपालम्भमनादरम् ।
संतापद्वेषलोभांश्च शत्रूंश्च लभते नरः ॥ १९
क्रोधाद्दण्डान्मनुष्येषु विविधान्पुरुषो नयन् ।
भ्रश्यते शीघ्रमैश्वर्यात्प्राणेभ्यः स्वजनादपि ॥ २०
योऽपकर्तॄंश्च कर्तॄंश्च तेजसैवोपगच्छति ।
तस्मादुद्विजते लोकः सर्पाद्वेश्मगतादिव ॥ २१
यस्मादुद्विजते लोकः कथं तस्य भवो भवेत् ।
अन्तरं ह्यस्य दृष्ट्वैव लोको विकुरुते ध्रुवम् ।
तस्मान्नात्युत्सृजेत्तेजो न च नित्यं मृदुर्भवेत् ॥ २२
काले मृदुर्यो भवति काले भवति दारुणः ।
स वै सुखमवाप्नोति लोकेऽमुष्मिन्निहैव च ॥ २३
क्षमाकालांस्तु वक्ष्यामि शृणु मे विस्तरेण तान् ।
ये ते नित्यमसंत्याज्या यथा प्राहुर्मनीषिणः ॥ २४
पूर्वोपकारी यस्तु स्यादपराधेऽगरीयसि ।
उपकारेण तत्तस्य क्षन्तव्यमपराधिनः ॥ २५
अबुद्धिमाश्रितानां च क्षन्तव्यमपराधिनाम् ।
न हि सर्वत्र पाण्डित्यं सुलभं पुरुषेण वै ॥ २६
अथ चेद्बुद्धिजं कृत्वा ब्रूयुस्ते तदबुद्धिजम् ।
पापान्स्वल्पेऽपि तान्हन्यादपराधे तथानृजून् ॥ २७
सर्वस्यैकोऽपराधस्ते क्षन्तव्यः प्राणिनो भवेत् ।
द्वितीये सति वध्यस्तु स्वल्पेऽप्यपकृते भवेत् ॥ २८
अजानता भवेत्कश्चिदपराधः कृतो यदि ।
क्षन्तव्यमेव तस्याहुः सुपरीक्ष्य परीक्षया ॥ २९
मृदुना मार्दवं हन्ति मृदुना हन्ति दारुणम् ।

---

$T_2 G_3$) यो नित्य (for प्राप्नुते) Dc तमसा° — c) $K_3$ $B_1$ Dn $D_{4\ 6}$ आप्नोति S (except $M_2$) लोके (for चैव) — d) S (except $M_2$) मृत्यात् (for लोकात्) $Ś_1$ $K_3$ Dc $D_5$ लोकस्यात्मन एव च

**19** a) $K_3$ S °मानार्थलोपौ ($G_4$ $M_2$ °भौ) च, $B_1$ सावमानाच्च हानिं च, $B_4$ मानार्थहानिं च; Dc $D_5$ °मानाव लेपौ च, $D_2$ मानार्थलोपो वा — b) $Ś_1$ उपलभ, $K_3$ $D_2$ [अ]प्युपालभ, $B_3$ सोपालभ (for उपा°) S वाच्यता($T_1$ °च्युत)मेप्यतीति च — c) $K_2$ B (except $B_2$) Dn $D_{4\ 6}$ द्वेषमोहाश्च, S °लोभमोहाश्च ($T_1$ मोहलोभाश्च)

**20** a) $Ś_1$ उग्रान् (for दण्डान्) — b) $Ś_1$ अनयानय, $K_2$ $B_{1-3}$ $Dn_3$ (by corr) $D_{4\ 6}$ पुरुषोदयात्, $Dn_1$ $n_2$ $D_{2.5}$ °षोनयात् — d) $T_1$ G (except $G_3$) प्रजा (for प्राणे°)

**21** a) S सोपकर्तॄंश्च ($G_2$ सोपि क्रूराश्च) $Ś_1$ $K_2$ स्व (for the first च) $K_2$ B Dn $D_6$m $T_1$ $G_1$ हर्तॄं° ($B_3$ हर्तॄ), $T_2$ $G_{2-4}$ M शत्रू (for कर्तॄं°) — $M_2$ om (hapl.) $21^{d}$–$22^{a}$

**22** $M_2$ om $22^{a}$ (cf v l. 21) — a) $S_1$ $K_3$ $D_{2\ 5}$ ins च before उद्विजते — b) $K_3$ सुख (for कथं) $K_3$ कथ, S रतिर् (for भवो) — c) $K_2$ B Dc Dn $D_{5\ 6}$ $T_2$ $G_3$ तस्य; $D_4$ स्व° (for ह्य) — d) $G_4$ क्रम (for कुरु) — e) $K_3$ M [अ]भि (for [अ]ति) — f) $S_1$ $K_3$ [अ]पि (for च) — After 22, N ($K_{1\ 4}$ $D_{1\ 3}$ missing) $M_2$ ins

99* काले काले तु सम्प्राप्ते मृदुस्तीक्ष्णोऽपि वा भवेत् ।
[$S_1$ $K_2$ $D_{2\ 5}$ [ऽ]पि (for तु) $B_2$ [ऽ]थ (for ऽपि)]

**23** c) $T_1$ $G_{1\ 2}$ M स तु वै सुखमाप्नोति — d) S लोकेस्मिंश्च परत्र च

**24** $K_3$ om 24 — a) $T_2$ G (except $G_1$) च (for तु) — b) S (except $M_2$) वै (for तान्) — c) $B_1$ ते तु, $G_2$ M एते (for ये ते) $T_1$ एते न नित्य सत्याज्या°

**25** $B_4$ om $25^{ab}$ — a) $K_2$ $B_{1\ 3}$ Dc Dn $D_{4-6}$ ते स्यात्, $T_2$ G (except $G_1$) स्वस्य (for तु स्यात्) — b) T G (except $G_1$) स्वापराधे — $B_2$ om $25^{c}$–$28^{d}$ — c) $B_4$ पूर्वोपकारी (m रे) (for उपकारेण) — d) $T_1$ $G_{2\ 4}$ $M_2$ अपराधित (cf v l 26), $G_1$ °न

**26** $B_2$ om. 26 (cf v l 25), $G_1$ om $26^{ab}$ — a) $K_2$ $B_{3\ 4}$ Dc Dn $D_{4-6}$ तु, T G ($G_1$ om) हि (for च) — b) $G_{2\ 4}$ °राधित (cf v l 25) — c) $T_2$ G (except $G_1$) तु (for हि) — d) S पुरुषैरिह

**27** $B_2$ om 27 (cf v l 25) — c) $T_1$ $G_2$ पापे स्वल्पे, $T_2$ $G_{3\ 4}$ पापेत्यल्पे, $G_1$ पापेष्वल्पे, M पापे स्वल्पे (for पापान्स्वल्पे) $T_1$ तु (for ऽपि) — d) $T_1$ अपरास्ते, $G_4$ अपारो ये (for अपराधे) $T_1$ $G_{2\ 4}$ $M_1$ ततो° (for तथा°). $G_1$ अपराधकृते यदि

**28** $B_2$ om 28 (cf v l 25), $G_1$ om $28^{a}$–$29^{b}$ — a) $D_2$ $T_1$ $G_{2\ 4}$ M तु (for ते) — $D_5$ om $28^{cd}$ — c) $Ś_1$ द्वितीयस्त्वथ वध्योसौ

**29** $G_1$ om $29^{ab}$ (cf v l 28) — d) $Ś_1$ परीक्ष्य वा, $T_1$ $M_1$ °क्षका°, $T_2$ $G_{2-4}$ °क्षकै°, $G_1$ °क्षितान् $K_3$ सेषा वै (both words in marg sec m) सुपरीक्षया

**30** ab) $K_2$ B (except $B_1$) Dc Dn $D_{4\ 6}$ दारुण (for

12

नासाध्यं मृदुना किंचित्तस्मात्तीक्ष्णतरो मृदुः ॥ ३०
देशकालौ तु संप्रेक्ष्य बलाबलमथात्मनः ।
नादेशकाले किंचित्स्याद्देशः कालः प्रतीक्ष्यते ।
तथा लोकभयाच्चैव क्षन्तव्यमपराधिनः ॥ ३१
एत एवंविधाः कालाः क्षमायाः परिकीर्तिताः ।
अतोऽन्यथानुवर्तत्सु तेजसः काल उच्यते ॥ ३२

द्रौपद्युवाच ।

तदहं तेजसः कालं तव मन्ये नराधिप ।
धार्तराष्ट्रेषु लुब्धेषु सततं चापकारिषु ॥ ३३
न हि कश्चित्क्षमाकालो विद्यतेऽद्य कुरून्प्रति ।
तेजसश्चागते काले तेज उत्स्रष्टुमर्हसि ॥ ३४
मृदुर्भवत्यवज्ञातस्तीक्ष्णादुद्विजते जनः ।
काले प्राप्ते द्वयं ह्येतद्यो वेद स महीपतिः ॥ ३५

इति श्रीमहाभारते आरण्यकपर्वणि एकोनत्रिंशोऽध्यायः ॥ २९ ॥

# ३०

युधिष्ठिर उवाच ।

क्रोधो हन्ता मनुष्याणां क्रोधो भावयिता पुनः ।
इति विद्धि महाप्राज्ञे क्रोधमूलौ भवाभवौ ॥ १
यो हि संहरते क्रोधं भावस्तस्य सुशोभने ।
यः पुनः पुरुषः क्रोधं नित्यं न सहते शुभे ।
तस्याभावाय भवति क्रोधः परमदारुणः ॥ २

मार्दव), and the same MSS except $K_2$ [अ]दारुण (for दारुणम्) — $^d$) $K_3$ B (except $B_1$) Dn $D_{4\ 6}$ M तीव्र (M °क्ष्ण)तर मृदु, Dc $D_5$ $G_1$ तीक्ष्णतर मृदु°

**31** After $31^{ab}$, S ins

100* अन्वीक्ष्य कारण चैव कार्यं तेज क्षमापि वा ।
[$T_2$ $G_{3\ 4}$ क्षमावता (for क्षमापि वा)]

— $B_3$ $D_{4\ 6}$ om $31^{cd}$ — $^d$) $K_{2\ 3}$ $B_1$ $D_2$ $T_1$ $M_1$ देश-काल ($K_2$ $T_1$ °लौ) प्रतीक्ष्यते, $B_{2\ 4}$ Dc $D_5$ देशकाल° ($B_2$ $D_5$ °ल) समीक्षते, Dn देशकालौ प्रतीक्षता (!), $T_2$ $G_{2-4}$ देश ($G_{2\ 4}$ °श-) काल समीक्ष्य वै — $^e$) Ś1 S (except $G_2$) चापि (for चैव) — $^f$) S अपराधित ($G_1$ $M_2$ °न)

**32** $^a$) Ś1 एवमेवविधा°, $K_3$ (by corr) Dc एव बहुविधा°, $B_{3\ 4}$ अत एवविधा — $^c$) T $G_3$ $M_1$ तु (for [अ]नु) Ś1 $K_3$ [अ]नुवर्तस्व, $K_2$ °वर्तन्ये, Dc प्रवर्तत्सु, Dn $D_4$ [अ]न्यन्नर्तत्सु (!), $D_2$ विवृत्तस्तु, $G_2$ सुवर्तते, $M_2$ तु वर्तस्तु — $^d$) Ś1 आगते, $B_1$ $D_2$ इष्य° (for उच्य°)

**33** All MSS except $T_1$ ($K_1$ $_4$ $D_1$ $_3$ missing) om the ref — $^b$) Ś1 $K_3$ $D_2$ जना° (for नरा°)

**34** $^a$) Dc तेद्य, $T_1$ $G_3$ $M_2$ किंचित् (for कश्चित्) — $^b$) Dc तान्, $T_1$ $G_{3\ 4}$ [ऽ]त्र, $G_1$ च (for ऽद्य) — $^c$) $G_{2\ 4}$ तेजसामागते — $^d$) Dc तदुत्स्रष्टुमिहार्हसि

**35** $^a$) Ś1 B $Dn_1$ $D_6$ अनु°, $K_2$ $T_1$ अवि° (for अव°) — $^b$) $T_2$ G (except $G_1$) नर (for जन) — $^c$) Ś1 $D_2$ कालप्राप्त, $K_3$ काले प्राप्त, $D_5$ दाने प्राप्ते, $M_2$ (by transp) प्राप्ते काले $D_5$ क्षमा (for द्वय) $K_2$ B Dn $D_{4\ 6}$ चैतद्, $D_5$ चैव (for ह्येतद्) — $^d$) $T_1$ $G_1$ $M_1$ वेत्ति (for वेद)

Colophon om in $K_3$ $K_1$ $_4$ $D_1$ $_3$ missing — *Major parvan* Ś1 $B_1$ T G आरण्य — *Sub parvan* $B_4$ $D_6$ (both om sub-parvan name) mention only द्वैतवन, likewise $B_3$ only द्वैतवनप्रवेश — *Adhy name* $B_4$ $T_2$ $G_{1\ 3\ 4}$ द्रौपदीवाक्य, Dc $D_2$ बलिप्रह्ला(Dc2 °हा)दसंवाद°; $M_1$ द्रौपदीमत — *Adhy no* (figures, words or both) Dn S 28 — *Śloka no* Dn 36

## 30

☞ This adhy is missing in $K_1$ $_4$ $D_1$ $_3$ (cf v l 3 1 1, 22 30, 23 28), the MSS are mostly ignored here

**1** Before 1, $Dc_1$ $D_2$ ins

101* वैशंपायन उवाच ।
द्रौपद्या वचन श्रुत्वा श्लक्ष्णाक्षरपद शुभम् ।
उवाच द्रौपदीं राजा स्मयमानो युधिष्ठिर ।
कारणे भवती क्रुद्धा धार्तराष्ट्रस्य दुर्मते ।
येन क्रोध महाप्राज्ञे बहुधा बहु मन्यसे ।
क्रोध मूलहर शत्रु कारणं शृणु त मम ।

— $^c$) A few MSS महाप्रज्ञे

**2** $^a$) Ś1 $K_3$ $B_{3\ 4}$ Dc $D_{2\ 5}$ मम्पदते — $^b$) $K_{2\ 3}$ B

क्रोधमूलो विनाशो हि प्रजानामिह दृश्यते ।
तत्कथं मादृशः क्रोधमुत्सृजेल्लोकनाशनम् ॥ ३
क्रुद्धः पापं नरः कुर्यात्क्रुद्धो हन्याद्गुरूनपि ।
क्रुद्धः परुषया वाचा श्रेयसोऽप्यवमन्यते ॥ ४
वाच्यावाच्ये हि कुपितो न प्रजानाति कर्हिचित् ।
नाकार्यमस्ति क्रुद्धस्य नावाच्यं विद्यते तथा ॥ ५
हिंस्यात्क्रोधादवध्यांश्च वध्यान्संपूजयेदपि ।
आत्मानमपि च क्रुद्धः प्रेषयेद्यमसादनम् ॥ ६
एतान्दोषान्प्रपश्यद्भिर्जितः क्रोधो मनीषिभिः ।
इच्छद्भिः परमं श्रेय इह चामुत्र चोत्तमम् ॥ ७
तं क्रोधं वर्जितं धीरैः कथमस्मद्विधश्चरेत् ।
एतद् द्रौपदि संधाय न मे मन्युः प्रवर्धते ॥ ८
आत्मानं च परं चैव त्रायते महतो भयात् ।
क्रुध्यन्तमप्रतिक्रुध्यन्द्वयोरेष चिकित्सकः ॥ ९
मूढो यदि क्लिश्यमानः क्रुध्यतेऽशक्तिमान्नरः ।
बलीयसां मनुष्याणां त्यजत्यात्मानमन्ततः ॥ १०
तस्यात्मानं संत्यजतो लोका नश्यन्त्यनात्मनः ।
तस्माद् द्रौपद्यशक्तस्य मन्योर्नियमनं स्मृतम् ॥ ११
विद्वांस्तथैव यः शक्तः क्लिश्यमानो न कुप्यति ।
स नाशयित्वा क्लेष्टारं परलोके च नन्दति ॥ १२
तस्माद्बलवता चैव दुर्बलेन च नित्यदा ।
क्षन्तव्यं पुरुषेणाहुरापत्स्वपि विजानता ॥ १३
मन्योर्हि विजयं कृष्णे प्रशंसन्तीह साधवः ।
क्षमावतो जयो नित्यं साधोरिह सतां मतम् ॥ १४
सत्यं चानृततः श्रेयो नृशंसाच्चानृशंसता ।
तमेवं बहुदोषं तु क्रोधं साधुविवर्जितम् ।

---

Dn $D_{2\,4-6}$ $M_2$ भव°, $T_1$ भवा (for भाव°) $S_1$ transp भाव° and तस्य S शुभानने (but cf 102*) — After $2^{ab}$, S (except $M_2$) ins

102* यो न सहरते क्रोध तस्याभावो भवस्युत ।
अभावकरण तस्माक्रोधो भवति शोभने ।

— $D_5$ om $2^{cd}$ — $^c$) $T_1$ कोप (for क्रोध) — $^d$) S विसृजते ($M_2$ सहर ) (for न सह°) — $^e$) Dc $M_2$ तस्याभवाय

**3** $^d$) $Ś_1$ $K_3$ $B_1$ Dc $D_{2\,5}$ विस°(for उत्स°)

**4** $^a$) $T_1$ न कुर्यात्क°; G (except $G_3$) न क° कुर्यात् — $M_2$ transp $4^{cd}$ and $5^{ab}$

**5** $K_3$ $D_2$ om $5^{ab}$ $M_2$ transp $4^{cd}$ and $5^{ab}$ — $^a$) $B_{2\,3}$ वाच्यो, Dn $D_5$ $G_2$ °वाच्यौ, $G_4$ $M_2$ °वाच्य (for °वाच्ये) — $^d$) $S_1$ नावध्य (for वाच्य)

**6** $^a$) $K_2$ Dn Dc तु (for च) — $^b$) $S_1$ $B_{1\,2}$ सपूजयेत च; $K_3$ $B_{3\,4}$ Dc Dn $D_{4\,6}$ यीत च, $D_5$ °येत्तत° — $^c$) S (except $G_4$) वा (for च)

**8** $^a$) $B_{3\,4}$ $G_{1\,3}$ M निर्जित, $D_2$ $T_1$ विजि°; $G_4$ निक्षि° (for वर्जि°), cf $15^d$ $S_1$ $K_3$ $D_{5\,6}$ $G_{2\,4}$ वीरै° (for धीरै) Cnp त क्रोध विक्रमं धीरै — $^c$) S सस्मृ($G_1$ °हृ)त्य (for संधाय) — $^d$) $K_{2\,3}$ B Dc $D_{2\,4-6}$ $G_1$ $M_2$ प्रवर्तते

**9** $^a$) $K_2$ $B_{1\,4}$ Dc Dn $D_{4-6}$ च परान्, $B_3$ अपरान् (for च पर) — $9^b$ = Gītā (Vulg ) 2 $40^d$ — $M_2$ om $9^c$–$20^d$ — $^d$) $Ś_1$ $K_3$ $B_1$ $D_2$ जयेल्लोकांश्च शाश्वतान्

**10** $M_2$ om 10 (cf. v l. 9) — $^b$) $Ś_1$ कुरुते, $K_3$ $B_1$ $D_2$ कुप्य°; $B_{2\,4}$ Dn $D_{4\,6}$ T $G_3$ क्लिश्य° (for क्रुध्य°) — $^d$) $K_2$ $B_{2-4}$ Dc Dn $D_{4-6}$ आत्मना (for अन्तत°) $Ś_1$ $K_3$ $B_1$ $D_2$ आत्मनैव विपद्यते

**11** $M_2$ om 11 (cf v.l. 9) — $^a$) S ($M_2$ om ) परित्यज्य (for सत्य ) — $^b$) $Ś_1$ $K_3$ $D_2$ अचेतस° (for अनात्मन )

**12** $M_2$ om 12 (cf v l 9) — $^a$) $T_2$ G (except $G_1$) तु चैव (for तथैव) — $^b$) $Ś_1$ $K_3$ क्लेश्यमानो S ($M_2$ om ) प्र- (for न) — $^c$) $K_2$ B Dc Dn $D_{2\,4-6}$ अ- ($B_2$ वि ) (for स) $Ś_1$ नाशयति $B_2$ $G_1$ द्वेष्टार, $G_2$ क्षेप्तार — $^d$) $K_3$ परलोक स, $B_1$ परलोकेषु $B_4$ स, $T_1$ $G_1$ न, $M_2$ तु (for च) $K_3$ $B_4$ विंदति, $T_1$ विंदते, $T_2$ G (except $G_1$) $M_1$ निंद्यते (for नन्दति)

**13** $M_2$ om 13 (cf v l 9) — $^b$) $T_2$ $G_3$ नित्यश°, $G_4$ °त — $^d$) $Ś_1$ $K_3$ $D_{2\,5}$ विपश्चिता (for विजानता)

**14** $M_2$ om 14 (cf v l. 9) — $^b$) $T_1$ [इ]व, $G_2$ हि (for [इ]ह) — $^d$) $S_1$ इति (for इह) $B_4$ Dc $D_5$ मत° (for मतम्)

**15** $M_2$ om 15 (cf v l 9) — $^a$) $S_1$ $D_2$ चैवानृतात् (for चानृतत°) $G_{2\,4}$ सत्याच्चानृतमश्रेयो — $^b$) $Ś_1$ $Dc_2$ $D_5$ नृशस्याच्चा°; $K_3$ नृशसायान्नृशसता, $G_{2\,4}$ योनृशस्यो नृशसत° — $^c$) $T_1$ $G_{2\,4}$ तदेव — $^d$) $T_1$ G (except $G_3$) $M_1$ सद्भिर् (for साधु ) — $^e$) $B_4$ S ($M_2$ om ) वि° (for प्र ) $Ś_1$ को वै (for कस्मात्) — $^f$) $K_3$ °भयाद् (for °वधाद्) S ($M_2$ om ) सर्वलोकविनाशन

माद्दशः प्रसृजेत्कस्मात्सुयोधनवधादपि ॥ १५
तेजस्वीति यमाहुर्वै पण्डिता दीर्घदर्शिनः ।
न क्रोधोऽभ्यन्तरस्तस्य भवतीति विनिश्चितम् ॥ १६
यस्तु क्रोधं समुत्पन्नं प्रज्ञया प्रतिबाधते ।
तेजस्विनं तं विद्वांसो मन्यन्ते तत्त्वदर्शिनः ॥ १७
क्रुद्धो हि कार्यं सुश्रोणि न यथावत्प्रपश्यति ।
न कार्यं न च मर्यादां नरः क्रुद्धोऽनुपश्यति ॥ १८
हन्त्यवध्यानपि क्रुद्धो गुरून्रूक्षैस्तुदत्यपि ।
तस्मात्तेजसि कर्तव्ये क्रोधो दूरात्प्रतिष्ठितः ॥ १९
दाक्ष्यं ह्यमर्षः शौर्यं च शीघ्रत्वमिति तेजसः ।
गुणाः क्रोधाभिभूतेन न शक्याः प्राप्तुमञ्जसा ॥ २०
क्रोधं त्यक्त्वा तु पुरुषः सम्यक्तेजोऽभिपद्यते ।
कालयुक्तं महाप्राज्ञे क्रुद्धैस्तेजः सुदुःसहम् ॥ २१
क्रोधस्त्वपण्डितैः शश्वत्तेज इत्यभिधीयते ।
रजस्तल्लोकनाशाय विहितं मानुषान्प्रति ॥ २२
तस्माच्छश्वत्त्यजेत्क्रोधं पुरुषः सम्यगाचरन् ।
श्रेयान्स्वधर्मानपगो न क्रुद्ध इति निश्चितम् ॥ २३
यदि सर्वमबुद्धीनामतिक्रान्तममेधसाम् ।
अतिक्रमो मद्विधस्य कथं स्वित्स्यादनिन्दिते ॥ २४
यदि न स्युर्मनुष्येषु क्षमिणः पृथिवीसमाः ।
न स्यात्संधिर्मनुष्याणां क्रोधमूलो हि विग्रहः ॥ २५
अभिषक्तो ह्यभिषजेदाहन्याद्गुरुणा हतः ।
एवं विनाशो भूतानामधर्मः प्रथितो भवेत् ॥ २६
आक्रुष्टः पुरुषः सर्वः प्रत्याक्रोशेदनन्तरम् ।
प्रतिहन्याद्धतश्चैव तथा हिंस्याच्च हिंसितः ॥ २७
हन्युर्हि पितरः पुत्रान्पुत्राश्चापि तथा पितॄन् ।

---

**16** M$_2$ om 16 (cf v l 9) — [a]) Ś$_1$ D$_2$ S (M$_2$ om ) तेजस्विन (for °स्वीति) Ś$_1$ D$_5$ यदाहुर्, K$_3$ तदाहुर् K$_3$ B (except B$_1$) Dc D$_2$ T$_1$ G (except G$_3$) M$_1$ हि (for वै) K$_3$ om (hapl ) 16[c]–17[d] — [c]) G$_2$ $_4$ ह्यतर, M$_1$ [ऽ]भ्यतर Ś$_1$ B$_1$ $_4$m तत्र (for तस्य)
**17** K$_3$ M$_2$ om 17 (cf v l 9, 16) — [b]) S (M$_2$ om ) परि (for प्रति ) — [c]) T$_1$ G$_1$ $_4$ विदुषो (for विद्वासो)
**18** M$_2$ om 18 (cf v l 9) — [a]) Ś$_1$ Dc क्रोधो, T$_1$ G$_2$ $_4$ क्रोधी (for क्रुद्धो) K$_2$ om ( hapl ) 18[cd] — [c]) B D$_2$ $_5$ M$_1$ नाकार्यं
**19** M$_2$ om 19 (cf v l 9) — [b]) Ś$_1$ K$_2$ $_3$ B D (D$_1$ $_3$ missing) क्रुद्धस् (Dc वृद्ध) (for रूक्षैस्) — [c]) T G$_3$ $_4$ श्रेयसि (for तेज°) K$_2$ B Dn D$_4$ $_6$ कर्तव्य° (for °व्ये) Ś$_1$ K$_3$ B$_4$m Dc D$_2$ $_5$ तस्मात्तेजस्विभिर्नित्य — [d]) K$_2$ B$_2$ $_3$ Dn D$_4$ दूरे, B$_1$ $_4$ D$_6$ दूर- (for दूरात्) Ś$_1$ K$_3$ Dc D$_2$ $_5$ विवर्जित° (for प्रति°)
**20** M$_2$ om 20 (cf v l 9) — [a]) T$_1$ दाक्षिण्यमर्षं, G$_1$ दाक्ष्य मर्षं च, M$_1$ दाक्ष्यमक्षश्च (for दाक्ष्य ह्यमर्ष°) T$_2$ G$_{2-4}$ ह्यमर्षं शौंडीर्यं (for °र्ष° शौर्यं च) — [b]) Ś$_1$ शीघ्रत्वाद् Ś$_1$ G$_1$ अति , T$_1$ असि, T$_2$ G$_{2-4}$ अपि (for इति) T$_2$ G (except G$_1$) चेतसि (for तेजस )
**21** [c]) D$_4$ $_6$ °प्रज्ञे, T$_1$ G$_2$ $_4$ °प्राज्ञै°, G$_1$ °प्राज्ञ° (for °प्राज्ञे) — [d]) B$_4$ सम्यक् (for क्रुद्धैस्) B$_4$ Dc D$_5$ तु (for सु ) S °दुर्लभ (for °दुःसहम्)
**22** [a]) B$_{2-4}$ Dn D$_4$ $_6$ T$_2$ G$_3$ M$_2$ पण्डितै°, T$_1$ पुरुषै°, Cnp [अ]पण्डितै° (as in text) Ś$_1$ पुमास° पण्डिता क्रोध°, K$_2$ $_3$ B$_1$ Dc D$_2$ $_5$ पुमांसो(B$_1$ °स )पण्डिता° क्रोध — [b]) K$_2$ B$_{2-4}$ Dn D$_4$ $_6$ M$_2$ °निश्चित, K$_3$ B$_1$ Dc D$_2$ $_5$ °जानते (for °धीयते) Ś$_1$ क्रोध इत्यवजायते (sic) — [c]) Ś$_1$ राशि, K$_3$ राज्ञ°, D$_2$ तेज°, T$_1$ राजन् (for रज°) B$_2$ $_4$ Dc D$_5$ $_6$ T$_2$ G तु (G$_1$ ते) (for तल्) — [d]) K$_2$ B Dc Dn D$_{4-6}$ मानुष प्रति
**23** [a]) K$_3$ नित्य त्यजेत्, B$_1$ शक्तस्त्यजेत्, Dc D$_5$ समुत्सृजेत् (for शश्वत्त्यजेत्) — [c]) Ś$_1$ Dc D$_5$ M$_2$ स्वधर्मादपगो, K$_3$ °र्मादपि यो, B$_1$ °र्मणि रतो, T$_1$ G$_1$ °र्मानुवशो, T$_2$ G$_{2-4}$ °र्मानुचरो
**24** [a]) B$_1$ यत°, Dc D$_2$ G$_2$ इति (for यदि) S (except T$_2$ G$_3$) अबुद्धानाम् — [b]) K$_2$ $_3$ B$_2$ Dn D$_4$ $_6$ T$_2$ G अचेतसा (for अमेधसाम्) — [d]) S$_1$ K$_3$ B$_1$ हि स्याद्, B$_2$ (by transp ) स्यात्स्विद्, Dc Dn$_2$ n$_3$ D$_2$ -चित्स्याद्
**25** [a]) K$_3$ Dn D$_4$ $_6$ T$_2$ G$_3$ मानुषेषु — [c]) K$_3$ T$_2$ G सिद्धिर् (for संधिर्)
**26** Ś$_1$ om 26[ab] — [d]) Ś$_1$ B$_1$ अधर्म(B$_1$ °र्मं°)प्रतिमो, K$_3$ अधर्मप्रभवो
**27** [a]) T$_2$ G (except G$_1$) क्रुधित° (for पुरुष°) B$_1$ Dn T$_2$ G$_3$ सर्वं
**28** [a]) B (except B$_2$) S (except T$_2$ G$_3$) च (for हि)

न्समानयाद्धि व्यसनं व आगात् ॥ १
अहं ह्यक्षानन्वपद्यं जिहीर्ष-
न्राज्यं सराष्ट्रं धृतराष्ट्रस्य पुत्रात् ।
तन्मा शठः कितवः प्रत्यदेवी-
त्सुयोधनार्थं सुबलस्य पुत्रः ॥ २
महामायः शकुनिः पार्वतीयः
सदा सभायां प्रवपन्नक्षपूगान् ।
अमायिनं मायया प्रत्यदेवी-
त्ततोऽपश्यं वृजिनं भीमसेन ॥ ३
अक्षान्हि दृष्ट्वा शकुनेर्यथाव-
त्कामानुलोमानयुजो युजश्च ।
शक्यं नियन्तुमभविष्यदात्मा
मन्युस्तु हन्ति पुरुषस्य धैर्यम् ॥ ४
यन्तुं नात्मा शक्यते पौरुषेण
मानेन वीर्येण च तात नद्धः ।
न ते वाचं भीमसेनाभ्यसूये
मन्ये तथा तद्भवितव्यमासीत् ॥ ५
स नो राजा धृतराष्ट्रस्य पुत्रो
न्यपातयद्व्यसने राज्यमिच्छन् ।
दास्यं च नोऽगमयद्भीमसेन
यत्राभवच्छरणं द्रौपदी नः ॥ ६
त्वं चापि तद्वेत्थ धनंजयश्च
पुनर्द्यूतायागतानां सभां नः ।
यन्माब्रवीद्धृतराष्ट्रस्य पुत्र
एकग्लहार्थं भरतानां समक्षम् ॥ ७
वने समा द्वादश राजपुत्र
यथाकामं विदितमजातशत्रो ।
अथापरं चाविदितं चरेथाः
सर्वैः सह भ्रातृभिश्छद्मगूढः ॥ ८
त्वां चेच्छ्रुत्वा तात तथा चरन्त-
मवभोत्स्यन्ते भारतानां चराः स्म ।
अन्यांश्चरेथास्तावतोऽब्दांस्ततस्त्वं

---

मा) T G °शरै° (for °शल्यै°) — $^{c}$) $K_{2\,3}$ B D ($D_{1\,3}$ missing) $T_2$ G त्वा (for त्वा) $K_{2\,3}$ $B_{2\,3}$ Dn $D_{4\,6}$ एव (for एतन्) — $^{d}$) $Ś_1$ om हि $K_1$ वै, $D_5$ ते (for हि) $B_1$ $D_5$ समागात्, S (except $M_2$) समागा° (for व आगात्) $D_2$ मसानयाद्व्यसन यत्तदागात्

2 $^{a}$) S अन्वपद्ये $D_5$ जिहीर्षु — $^{b}$) $Ś_1$ $D_2$ $T_2$ $G_{3\,4}$ $M_2$ °राष्ट्र (for °राष्ट्रस्य) $M_2$ °पुत्रे° — $^{c}$) $K_{1-3}$ B Dn $D_{2\,4-6}$ $T_2$ G तन्मा, $T_1$ M त मा

3 $^{b}$) $Ś_1$ सदा सद°, $K_1$ सभासद°, $K_{2\,3}$m B D ($D_{1\,3}$ missing) सभामध्ये ($K_3$ orig सत्य सदा), $M_2$ स वै सर्वान् (for सदा सभाया) $K_3$ प्रक्षिपन् — $^{c}$) N ($K_4$ $D_{1\,3}$ missing) °जैषीत् (for °देवीत्)

4 $^{a}$) $K_3$ B Dn $D_{4\,6}$ $G_1$ च, T $G_{2-4}$ M तु (for हि) — $^{b}$) $Ś_1$ $K_1$ Dc कामानु($Ś_1$ °च)लोभान्, $K_2$ Dn $D_4$ कामानुकूलान्, $K_3$ जयानुलोमान् $Ś_1$ $K_1$ Dc नयुजो (for अयुजो) $K_3$ जये च, Dn3 च तत्र (for युजश्च) — $^{c}$) $D_3$ S (except $M_2$) शक्यो (for शक्य) $B_4$ S (except $M_2$) न भविष्यद् $M_2$ एनान् (for आत्मा) — $^{d}$) $K_2$ B Dn $D_{4\,6}$ हन्यात्, $T_2$ $G_3$ हते (for हन्ति) $K_3$ Dc $D_5$ मन्युस्तु ($D_5$ °श्च) धैर्यं पुरुषस्य हति

5 $^{a}$) $Ś_1$ $K_1$ $D_{2\,5}$ मानुषेण, $T_1$ पूरुषेण — $^{c}$) $Ś_1$ $K_{1\,2}$ B Dn $D_{4-6}$ वाचो (for वाच) — $^{d}$) $Ś_1$ $D_2$ भवितेति सत्य (for भवितव्यमासीत्)

6 $^{a}$) $K_3$ $D_2$ °राष्ट्र° सपुत्रो

7 $^{b}$) $G_2$ द्यूत च (for द्यूताय) $K_2$ Dn $T_1$ आगतास्त्वा ($T_1$ °स्तान्) $D_2$ सभायां, $M_1$ सभाया (for सभा न°) — $^{c}$) $K_3$ D ($D_{1\,3}$ missing) $G_4$ यन्मा ब्रवीद् $Ś_1$ $K_1$ °राष्ट्र° सपुत्र — $^{d}$) $Ś_1$ $M_2$ एकग्लहाद्, $K_{1\,3}$ $D_2$ °ग्लहार्थे, $T_2$ $G_{2-4}$ एतद्ग्लहार्थं $S_1$ $K_1$ $T_1$ $G_2$ $M_2$ भारताना, $D_5$ भवता (for भरताना)

8 $^{b}$) B $M_2$ विजितम्, $D_2$ विहितम् (for विदितम्) — $^{c}$) $K_3$ B (except $B_4$) Dc $D_5$ तथा° (for अथा°) $Ś_1$ विदितै°, $K_1$ अविदित° (om च), $K_{2\,3}$ Dn $D_{2\,4}$ $T_1$ M चाविदित° $S_1$ च तैरथ, $M_2$ चरेस्त्व (for चरेथा°) — $^{d}$) $T_2$ $G_{2-4}$ सहैतया (for सर्वैं सह) $Ś_1$ छद्मरूढ, $T_1$ $G_{1\,3}$ छद्मरूप, $T_2$ $G_{3\,4}$ $M_1$ छन्नरूप

9 $^{a}$) $T_1$ त चेन्मुक्त्वा, $G_1$ त चेत्यक्त्वा, $G_{2\,4}$ $M_2$ त वै त्वा ($M_2$ स्वा), $M_1$ त चेत्तु त्वा (for त्वा चेच्छ्रुत्वा) — $^{b}$) $Ś_1$ $K_1$ एव भोत्स्यते, $K_3$ अवज्ञास्यति; $D_2$ अवगच्छते, $T_1$ विबोध्यते, $T_2$ $G_{2-4}$ बुध्येरन्वै, $G_1$ $M_2$ अवबोध्यते, $M_1$ अनु

निश्चित्य तत्प्रतिजानीहि पार्थ ॥ ९
चरैश्चेम्नोऽविदितः कालमेतं
युक्तो राजन्मोहयित्वा मदीयान् ।
ब्रवीमि सत्यं कुरुसंसदीह
तवैव ता भारत पञ्च नद्यः ॥ १०
वयं चैवं भ्रातरः सर्व एव
त्वया जिताः कालमपास्य भोगान् ।
वसेम इत्याह पुरा स राजा
मध्ये कुरूणां स मयोक्तस्तथेति ॥ ११
तत्र द्यूतमभवन्नो जघन्यं
तस्मिञ्जिताः प्रव्रजिताश्च सर्वे ।
इत्थं च देशाननुसंचरामो
वनानि कृच्छ्राणि च कृच्छ्ररूपाः ॥ १२
सुयोधनश्चापि न शान्तिमिच्छ-
न्भूयः स मन्योर्वशमन्वगच्छत् ।
उद्योजयामास कुरूंश्च सर्वा-
न्ये चास्य केचिद्वशमन्वगच्छन् ॥ १३
तं संधिमास्थाय सतां सकाशे
को नाम जह्यादिह राज्यहेतोः ।
आर्यस्य मन्ये मरणाद्गरीयो
यद्धर्ममुत्क्रम्य महीं प्रशिष्यात् ॥ १४
तदैव चेद्वीरकर्माकरिष्यो
यदा द्यूते परिघं पर्यमृक्षः ।
बाहू दिधक्षन्वारितः फल्गुनेन
किं दुष्कृतं भीम तदाभविष्यत् ॥ १५
प्रागेव चैवं समयक्रियायाः
किं नाब्रवीः पौरुषमाविदानः ।
प्राप्तं तु कालं त्वभिपद्य पश्चा-

---

चेत्स्यते (for अवभोत्स्यन्ते)　$K_3$ $D_5$ $M_1$ भरताना　$K_{2\ 3}$ $B_1$ Dn $D_4$ च, S वै (for स्म) — [c]) $K_1$ चेरे° (for चरे था) Ś1 समास्तथा, $K_{1\ 2}$ $B_1$ Dn $D_4$ तथा स्व, $K_3$ यथा स्व, $D_2$ तदा मे (for ततस्त्व) — [d]) $T_1$ om तत्　$B_3$ $D_2$ $M_2$ [ए]तत्; $T_2$ $G_{2-4}$ स्व (for तत्)　$D_2$ प्रब्रवीहि (for प्रतिजानीहि)

**10** [a]) Ś1 चेरश्च नो; $K_{1\ 2}$ चरैश्च नो, $K_3$ चरेश्चैनो, $B_2$ चरे श्छन्नो, $D_2$ नरैस्त्व नो, T $G_{1-3}$ चा($T_2$ $G_3$ च)रैश्छन्नो, $G_4$ चरे-श्छन्नो, $M_1$ चारैश्चेन्नो, $M_2$ चारैश्च नो (for चरैश्चेन्नो)　$K_3$ $T_1$ $G_1$ $M_1$ अविदित — [b]) $K_2$ $D_6$ मुक्तो, $T_1$ व्यक्तो (for युक्तो) — [c]) $T_2$ $G_{2-4}$ ब्रवीहि — [d]) $K_3$ तदैव; $D_6$ तथैव (for तवैव)　$D_2$ $G_1$ M [ए]ता (for ता)

**11** $T_1$ om $11^a$–$12^b$ — [a]) Ś1 $K_{1\ 3}$ Dc $D_5$ $M_2$ चैव, $K_2$ B Dn $D_4$ $_6$ चैतद्, $D_2$ वै ते (for चैव)　$K_2$ B Dn $D_4$ $M_2$ भारत, $T_2$ G $M_1$ कौरवा° (for भ्रातर°) — [c]) S (except $M_2$, $T_1$ om) चरेम (for वसेम)　S1 $K_1$ पुनश्च, $D_5$ पुरा स्म, $T_2$ G पुन° स (for पुरा स)

**12** $T_1$ om $12^{ab}$ (cf v l 11) — [b]) $T_2$ G $M_1$ यस्मिन् (for तस्मिन्)　$M_1$ om from प्रव्रजिता° (in $12^b$) up to चापि न (in $13^a$)　Ś1 $K_{1\ 3}$ Dc $D_{2\ 5}$ स्म (for च) — [c]) $K_3$ Dn $D_4$ $_6$ $T_1$ $G_1$ तु (for च) — [d]) S ($M_1$ om) दुर्गाणि (for कृच्छ्रा°)　T G घोर° (for कृच्छ्र°)

**13** $M_1$ om सुयोधनश्चापि न (cf v l 12) — [a]) Ś1 $K_{1\ 3}$ ऐच्छद् (for इच्छन्) — [b]) $T_1$ $G_{1\ 2\ 4}$ $M_1$ च (for स)　Ś1 $K_2$ $D_2$ अभ्यगाच्छत्, $T_1$ अद्य ग — $B_1$ om $13^{cd}$ — [d]) $K_1$ $D_{2\ 5}$ अभ्य° (for अन्व°)

**14** [a]) Ś1 सास्तान्, $K_1$ त सत्यम्, T G ता ($G_1$ स) सिद्धिम् (for त संधिम्)　S1 अवस्थाय (for आस्थाय) — [b]) S कस्य (for राज्य) — [d]) $T_2$ $G_{2-4}$ $M_2$ उत्सृज्य (for उत्क्रम्य)　$K_1$ प्रशासे, $K_2$ B Dn $D_4$ $_6$ $M_2$ प्रशासेत् (for प्रशिष्यात्)

**15** [a]) Ś1 $B_1$ Dc -कर्माकरिष्ये, $T_1$ $G_{1\ 2\ 4}$ तथा ($T_1$ $G_1$ °दा) करिष्ये, $M_1$ तथाकरिष्यो — [c]) Ś1 $K_1$ फल्गुणेन, $K_2$ B D ($D_{1\ 3}$ missing) $T_2$ $G_3$ फाल्गुनेन　$K_3$ बाहून् विधक्षन् वारितमर्जुनेन — [d]) S (except $G_4$ $M_2$) को (for किं)　$G_2$ दुष्कर (for दुष्कृत)　Ś1 T $G_{2-4}$ भीम तथा, $K_2$ $D_5$ भीमसेन (for भीम तदा)　T G [अ]करिष्यस्, M [अ]करिष्य° (for [अ]भविष्यत्)

**16** [a]) $K_2$ B Dn $D_5$ (by corr) $_6$ क्रियाया — [b]) Ś1 नाब्रवीत्, $T_2$ $G_{2-3}$ नोब्रवीत्, $G_4$ नोब्रवी°; $M_2$ माब्रवी° S (except $G_4$ $M_2$) पुरुषम् (for पौरुषम्)　$K_3$ $B_2$ आददान°, $D_5$ (after corr) आदधान°, S मा विजानन् ($M_2$ मा तदानीं) (for आविदान) — [c]) $K_1$ प्रतिपद्य; Dc अभिपद्य; $D_2$ अभिपत्य; S (except $T_2$ $G_3$) अतिपात्य (for त्वभिपद्य) — [d]) $T_1$ $G_{1\ 2\ 4}$ $M_1$ वा स्विदानीम् (for मामिदानीम्)　Dc मात्र स्वम् (for °येत्मम्)

त्किं मामिदानीमतिवेलमात्थ ॥ १६
भूयोऽपि दुःखं मम भीमसेन
दूये विषस्येव रसं विदित्वा ।
यद्याज्ञसेनीं परिकृष्यमाणां
संदृश्य तत्क्षान्तमिति स्म भीम ॥ १७
न त्वद्य शक्यं भरतप्रवीर
कृत्वा यदुक्तं कुरुवीरमध्ये ।
कालं प्रतीक्षस्व सुखोदयस्य
पक्तिं फलानामिव बीजवापः ॥ १८
यदा हि पूर्वं निकृतो निकृत्या
वैरं सपुष्पं सफलं विदित्वा ।
महागुणं हरति हि पौरुषेण
तदा वीरो जीवति जीवलोके ॥ १९
श्रियं च लोके लभते समग्रां
मन्ये चास्मै शत्रवः संनमन्ते ।
मित्राणि चैनमतिरागाद्भजन्ते
देवा इवेन्द्रमनुजीवन्ति चैनम् ॥ २०
मम प्रतिज्ञां च निबोध सत्यां
वृणे धर्मममृताज्जीविताच्च ।
राज्यं च पुत्राश्च यशो धनं च
सर्वं न सत्यस्य कलामुपैति ॥ २१

इति श्रीमहाभारते आरण्यकपर्वणि पञ्चत्रिंशोऽध्यायः ॥ ३५ ॥

## ३६

भीमसेन उवाच ।
संधिं कृत्वैव कालेन अन्तकेन पतत्रिणा ।
अनन्तेनाप्रमेयेन स्रोतसा सर्वहारिणा ॥ १
प्रत्यक्षं मन्यसे कालं मर्त्यः सन्कालबन्धनः ।

---

**17** $^a$) K3 भूयो हि, Dc2 दूये हि (for भूयोऽपि) B3 4 वीर्य° (for भीम°) — $^b$) K3 Dc2 M1 भूयो, K3 जात, D5 (before corr) भूये (for दूये) K2 3 B D (D1 3 missing) T2 G3 हि पीत्वा (for विदित्वा), cf 19$^b$ — $^c$) K3 B Dn D4 6 G1 परिक्लिश्यमाना — $^d$) Ś1 अमृष्य, K1 अवीक्ष्य (for संदृश्य) K3 ते, T1 G (except G3) M1 ता, M2 न (for तत्) T2 G (except G1) अपीह (for इति स्म)

**18** $^b$) Dc D5 कर्तुं (for कृत्वा) T2 G3 यदथ (for यदुक्त) Dc D5 मिथ्या (for मध्ये) — $^c$) T2 G (except G1) सुखोदयाय

**19** $^a$) Ś1 K1 निकृतो निकर्ते, K2 B Dc Dn D4 6 निकृतो निकृतेद्, K3 निकृतौ हि कर्णे, D2 corrupt, D5 निकृतानि कर्तुं — $^b$) K3 वैर च निर्यातयितु समर्थः — $^c$) B (except B3) om हि

**20** $^b$) K1 Dc D5 S सनमति — $^c$) K2 B D (except D3, D1 3 missing) अचिराद् (for अतिरागाद्) — $^d$) B1 दिवीव चंद्रम्, D4 6 देवा दिवीवेंद्रम् K3 B Dn D4 6 उप° (for अनु°)

**21** $^b$) Ś1 K1 वृणोमि (for वृणे) K1 सत्याद्, D5 न धर्मम्, G2 4 सत्यम् (for धर्मम्) S1 K1 3 Dc D5 हि (for च)

Colophon K4 D1 3 missing — *Major parvan* Ś1 K1 T G2-4 आरण्य — *Sub parvan* B4 D5 M1 (all om sub-parvan name) mention only द्वैतवन — *Adhy name* B4 Dc D2 G1 युधिष्ठिरवाक्य, T2 G2 3 M1 युधिष्ठिरस्वा(M1 °स्या)भिप्रायकथन — *Adhy no* (figures, words or both) Dn1 n3 S 34 — *Śloka no* Dn 22

### 36

☞ This adhy is missing in D3 (cf v l 3 34 51), the MS is mostly ignored here — 1$^a$-20$^c$ is missing in D1 (cf v l 3 22 30), D1 is ignored up to 20$^c$

**1** K4 begins from 1 (cf v l 3 1 1) — $^a$) T1 मत्वा (for कृत्वा) Ś1 [ण]क, K3 Dc T2 G2 3 M [इ]न (for [ण]न)

फेनधर्मा महाराज फलधर्मा तथैव च ॥ २
निमेषादपि कौन्तेय यस्यायुरपचीयते ।
सूच्येवाञ्जनचूर्णस्य किमिति प्रतिपालयेत् ॥ ३
यो नूनममितायुः स्यादथ वापि प्रमाणवित् ।
स कालं वै प्रतीक्षेत सर्वप्रत्यक्षदर्शिवान् ॥ ४
प्रतीक्षमाणान्कालो नः समा राजंस्त्रयोदश ।
आयुषोऽपचयं कृत्वा मरणायोपनेष्यति ॥ ५
शरीरिणां हि मरणं शरीरे नित्यमाश्रितम् ।
प्रागेव मरणात्तस्माद्राज्यायैव घटामहे ॥ ६
यो न याति प्रसंख्यानमस्पष्टो भूमिवर्धनः ।
अयातयित्वा वैराणि सोऽवसीदति गौरिव ॥ ७
यो न यातयते वैरमल्पसत्त्वोद्यमः पुमान् ।
अफलं तस्य जन्माहं मन्ये दुर्जातजायिनः ॥ ८
हैरण्यौ भवतो बाहू श्रुतिर्भवति पार्थिव ।
हत्वा द्विषन्तं संग्रामे भुक्त्वा बाह्वर्जितं वसु ॥ ९
हत्वा चेत्पुरुषो राजन्निकर्तारमरिंदम ।
अह्नाय नरकं गच्छेत्स्वर्गेणास्य स संमितः ॥ १०
अमर्षजो हि संतापः पावकाद्दीप्तिमत्तरः ।
येनाहमभिसंतप्तो न नक्तं न दिवा शये ॥ ११
अयं च पार्थो बीभत्सुर्वरिष्ठो ज्याविकर्षणे ।
आस्ते परमसंतप्तो नूनं सिंह इवाशये ॥ १२
योऽयमेकोऽभिमनुते सर्वाँल्लोके धनुर्भृतः ।
सोऽयमात्मजमूष्माणं महाहस्तीव यच्छति ॥ १३
नकुलः सहदेवश्च वृद्धा माता च वीरसूः ।
तवैव प्रियमिच्छन्त आसते जडमूकवत् ॥ १४
सर्वे ते प्रियमिच्छन्ति बान्धवाः सह सृञ्जयैः ।
अहमेकोऽभिसंतप्तो माता च प्रतिविन्ध्यतः ॥ १५
प्रियमेव तु सर्वेषां यद्ब्रवीम्युत किंचन ।

---

$G_1$ विशालेन (for [ए]व कालेन) $M_3$ वदसि (for कालेन) — $^b$) $S_1$ $K_{1\,2}$ B D ($D_{1\,3}$ missing) घातकेन (to avoid hiatus!) — $^c$) $D_5$ हरति ना° (for अनन्तेना°)

3 $^c$) Cnp शून्येव (for सूच्येव) $Ś_1$ °मूलस्य; $K_{3\,4}$ °पूर्णाया, $D_2$ चूर्णाय, $D_5$ Cnp पूर्णस्य, S (except $T_2 G_3$) °चूर्णानि ❀ Cn पूर्णस्येत्यपपाठ । ❀

4 $B_1$ om $4^{ab}$ — $^b$) $K_4$ B ($B_1$ om) $T_2$ $G_3$ $M_2$ वा स्यात्, $T_1$ $G_{1\,2\,4}$ $M_1$ वायु- (for वापि) — $^c$) $D_2$ स च कालं (for स कालं वै)

5 $^a$) $Ś_1$ $K_{1\,2}$ B D (except $D_2$, $D_{1\,3}$ missing) $T_2$ $G_3$ प्रतीक्षमाण $Ś_1$ $K_1$ $D_2$ कालेन (for कालो न॰)

6 $^a$) $Ś_1$ $K_{3\,4}$ Dc $D_{2\,5}$ आस्थित (for आश्रितम्) — $K_3$ om (hapl.) from $6^c$ up to सोऽव- (in $7^d$) — $^d$) Dc यता° (for घटा°) — After 6, $Ś_1$ $K_1$ ins
132* कालो नून मनुष्यस्य नित्य सनिहितोऽमृत॰ ।

7 $K_3$ om up to सोऽव (cf v l 6) — $^a$) $K_4$ यो नायाति, $T_1$ यो न यातो $T_1$ न (for प्र) — $^b$) $K_1$ अस्फुटो, B Dc $D_5$ सस्पृष्टो; $D_4$ सस्पष्टो, $D_6$ सस्पृष्टे $S_1$ $G_{2\,4}$ $M_3$ भूति, $K_4$ भूत° (for भूमि)

8 $^b$) $T_2$ $G_{3-4}$ अप° (for अल्प°) — $^c$) $K_2$ $B_{2\,4}$ Dn $D_{4\,5}$ transp तस्य and जन्म — $^d$) $K_{3\,4}$ $D_{5\,6}$ दुर्या (K4 *sup lin* °र्जा)त-, $T_2$ $G_{2\,3}$ दुर्जीव- (for दुर्जात-) $K_{1\,4}$ $B_3$ $D_{2\,5\,6}$ -यायिन॰, T $G_{2-4}$ जीविन॰ (for जायिन॰)

9 $^b$) $S_1$ $K_3$ भवतु $K_{2-4}$ B D (except $D_2$, $D_{1\,3}$ missing) पार्थिवी. — $^d$) $K_{2\,3}$ B (except $B_2$) D ($D_{1\,3}$ missing) $T_2$ $G_3$ भुक्ष्व (for भुक्त्वा) $K_{1\,2}$ $B_2$ बाहुजित, $T_1$ बहुमत, $T_2$ G (except $G_4$) M बाह्वार्जित

10 $^a$) $K_3$ Dn $D_4$ वै (for चेत्) — $^b$) S (except $M_2$) अरिं ($G_4$ °रीन्) नृप (for अरिंदम) — $^d$) $Ś_1$ $D_5$ स्वर्गेणापि $Ś_1$ [अ]समन्वित ; $K_3$ समस्मित॰, $K_4$ समतत॰, $T_1$ सुसमति॰, $G_1$ सुनिर्मित, $G_{2\,4}$ $M_1$ सुसमित, $M_2$ सम स्मृत

11 $^a$) $M_2$ अमर्षिणो हि — $^c$) T G अपि; $M_1$ अस्मि (for अभि) — $^d$) $B_2$ (? gloss) रात्रौ (for नक्त)

12 $^b$) Dc $D_5$ विशिष्टो, $M_2$ वर्षिष्टो (for वरिष्ठो) — $^d$) $S_1$ $K_{1\,4}$ m नुम॰, $K_3$ क्षिप्त॰, $K_4$ $D_2$ सप्त॰ (for नून) Dc $D_5$ इवावटे

13 $^a$) $B_{1-3}$ Dc $D_{5\,6}$ न, $B_4$ $M_2$ [ऽ]नु- (for ऽभि) $S_1$ [ऽ]भिमन्येत ; T $G_{1-3}$ $M_1$ नुदेत्सर्वान्, $G_4$ जयेद्राजन् (for ऽभिमनुते) — $^b$) $S_1$ $D_2$ राजन्लोके, $T_1$ $G_{1-3}$ $M_1$ लोके राजन्, $M_2$ सर्वान्लोक

14 $^c$) $K_4$ B (except $B_1$) $D_{4\,6}$ $M_2$ तवैते (for तवैव) $K_4$ वल्लभ् (for प्रियम्) $K_4$ $B_2$ $D_6$ (with hiatus!) इच्छति (for इच्छन्त)

15 $^b$) $D_{2\,4\,6}$ सृजयै॰ सह (by transp) — $^c$) $K_2$ $B_{2\,4}$ Dc Dn च, $K_4$ [ऽ]ति ; $B_3$ $D_2$ [ऽ]पि (for ऽभि-) S (except $M_2$) इयमेका च सतसा

सर्वे हि व्यसनं प्राप्ताः सर्वे युद्धाभिनन्दिनः ॥ १६
नेतः पापीयसी काचिदापद्राजन्भविष्यति ।
यन्नो नीचैरल्पबलै राज्यमाच्छिद्य भुज्यते ॥ १७
शीलदोषाद्घृणाविष्ट आनृशंस्यात्परंतप ।
क्लेशांस्तितिक्षसे राजन्नान्यः कश्चित्प्रशंसति ॥ १८
घृणी ब्राह्मणरूपोऽसि कथं क्षत्रे *अजायथाः ।
अस्यां हि योनौ जायन्ते प्रायशः क्रूरबुद्धयः ॥ १९
अश्रौषीस्त्वं राजधर्मान्यथा वै मनुरब्रवीत् ।
क्रूरान्निकृतिसंयुक्तान्विहितानशमात्मकान् ॥ २०
कर्तव्ये पुरुषव्याघ्र किमास्से पीठसर्पवत् ।
बुद्ध्या वीर्येण संयुक्तः श्रुतेनाभिजनेन च ॥ २१
तृणानां मुष्टिनैकेन हिमवन्तं तु पर्वतम् ।
छन्नमिच्छसि कौन्तेय योऽस्मान्संवर्तुमिच्छसि ॥ २२
अज्ञातचर्या गूढेन पृथिव्यां विश्रुतेन च ।
दिवीव पार्थ सूर्येण न शक्या चरितुं त्वया ॥ २३
बृहच्छाल इवानूपे शाखापुष्पपलाशवान् ।
हस्ती श्वेत इवाज्ञातः कथं जिष्णुश्चरिष्यति ॥ २४
इमौ च सिंहसंकाशौ भ्रातरौ सहितौ शिशू ।
नकुलः सहदेवश्च कथं पार्थ चरिष्यतः ॥ २५
पुण्यकीर्ती राजपुत्री द्रौपदी वीरसूरियम् ।
विश्रुता कथमज्ञाता कृष्णा पार्थ चरिष्यति ॥ २६
मां चापि राजञ्जानन्ति आकुमारमिमाः प्रजाः ।
अज्ञातचर्यां पश्यामि मेरोरिव निगूहनम् ॥ २७
तथैव बहवोऽस्मामी राष्ट्रेभ्यो विप्रवासिताः ।
राजानो राजपुत्राश्च धृतराष्ट्रमनुव्रताः ॥ २८
न हि तेऽप्युपशाम्यन्ति निकृतानां निराकृताः ।

---

**17** [a]) K2 B3 Dc Dn D2 T2 G3 M2 नात॰, D5 तत॰ (for नेत॰) K1 4 D2 राजन् (for काचिद्) — [b]) K1 D2 काचिदापद्, K4 आपत्काचित्, D4 6 अवस्था स॰ (for आपद्राजन्) — [c]) Dc ॰प्राणै (for ॰बलै) — [d]) K3 युद्धे नाच्छिद्य भु॰

**18** [a]) D5 ॰दोष (for ॰दोषाद्) — [d]) M2 नाद्य (for नान्य॰) S1 प्रशस्यति, T2 G2–4 प्रशास्ति हि (for प्रशंसति) — After 18, K2 4 B Dc Dn D4–6 ins

133* श्रोत्रियस्येव ते राजन्मन्दकस्याविपश्चितः ।
अनुवाकहता बुद्धिर्नैषा तत्त्वार्थदर्शिनी ।

[ = (var) 5 130 6 — (L 1) K4 B Dc D5 [अ]ल्पमेधस (for [अ]विपश्चित) — (L 2) K4 D5 सूक्ष्मार्थदर्शिनी ]

**19** [b]) Ś1 K1 3 4 Dc D2 5 क्षत्रेन्वजायथा॰, K2 B Dn क्षत्रेषु जा॰ (B2 क्षत्रे स्वजा॰), D4 क्षत्रे तु जा॰, D6 क्षत्रे नु जा॰, T G3 क्षत्रे ह्यजा॰, G1 2 4 M2 क्षत्रे व्यजा॰, M1 क्षत्रेभ्यजा॰ (for क्षत्रे *अजा॰) Some MSS ॰जायिथा॰ — [c]) B2 G1 यस्या G2 4 योनौ हि (by transp)

**20** [a]) K4 तान् (for त्वं) — [b]) Ś1 K1 D2 [ए]व (for वै) — [c]) G1 2 विकृति॰ (for निकृति॰) K2 B2 4 Dn ॰सपत्नान् (for ॰संयुक्तान्) — D1 resumes from 20[d] — [d]) Ś1 न समात्मकान्, M2 निश्चयात्मकान् (for अशमात्मकान्) — After 20, K1 2 4 B D (except D1, D3 missing) ins

134* धार्तराष्ट्रान्महाराज क्षमसे किं दुरात्मन ।,

while K3 ins

135* ज्ञाने तपसि शौर्ये वा यस्य न प्रथितं यशः ।
विद्यायामथ लाभे वा मातुरुच्चार एव सः ।

**21** [a]) Ś1 मन्वाह, K1 नस्त्वैव (for कर्तव्ये) Ś1 K1 3 Dc D1 2 5 पुरुषश्रेष्ठ, K4 सति राजेंद्र — [b]) T1 G1 4 समास्से (T1 ॰से), G2 समान (for किमास्से)

**22** [b]) Ś1 M1 नु, K1 2 B D (except D2 5, D3 missing) T2 G3 च, M2 हि (for तु) — [c]) M2 भेत्तुम् (for छन्नम्) — [d]) T1 संहर्तुम्, T2 G2–4 संयन्तुम्, G1 संयातुम् (for संवर्तुम्)

**24** [a]) K1–3 Dc D4 S (except T2 G3) साल (for शाल) S [अ]नूप॰ (M2 ॰प्य॰) — [b]) Ś1 K1 D1 2 शाखी पुष्प॰, K3 साक्षी पुष्प॰, K4 बहुपुष्पफलैश्चित, D5 शाखा पुष्प इवासवान्, G1 ॰फलान्विता

**25** [a]) T1 G (except G3) M1 हि (for च) Dc सिंहविक्रान्तौ — [b]) Ś1 K1 3 Dc2 D1 2 सदृशौ (for सहितौ)

**27** [b]) Ś1 ह्याकुमारा, K1 2 B Dc Dn D4 T2 G3 M1 ह्याकुमारम्, K3 4 D1 6 आकुमारा, D2 5 ॰र, G1 ॰रान् T1 G1 इव (for इमा॰) — [c]) N (D3 missing) M2 ना॰ (K1 न)ज्ञात॰ (for अज्ञात॰) Dc शक्यामि, T G पश्यति (for पश्यामि) — [d]) G1 विनिग्रह (for निगूहनम्)

**28** [b]) K4 राज्याद्धि, Dc राष्ट्राच्च (for राष्ट्रेभ्यो) — [d]) S धार्त॰ (for धृत)

**29** [a]) K4 D2 ह्युप, Dc D1 न्युप (for ऽप्युप) Ś1

अवश्यं तैर्निकर्तव्यमस्माकं तत्प्रियैषिभिः ॥ २९
तेऽप्यस्मासु प्रयुञ्जीरन्प्रच्छन्नान्सुबहूञ्जनान् ।
आचक्षीरंश्च नो ज्ञात्वा तन्नः स्यात्सुमहद्भयम् ॥ ३०
अस्माभिरुषिताः सम्यग्वने मासास्त्रयोदश ।
परिमाणेन तान्पश्य तावतः परिवत्सरान् ॥ ३१
अस्ति मासः प्रतिनिधिर्यथा प्राहुर्मनीषिणः ।
पूतिकानिव सोमस्य तथेदं क्रियतामिति ॥ ३२
अथ वानडुहे राजन्साधवे साधुवाहिने ।
सौहित्यदानादेकस्मादेनसः प्रतिमुच्यते ॥ ३३
तस्माच्छत्रुवधे राजन्क्रियतां निश्चयस्त्वया ।
क्षत्रियस्य तु सर्वस्य नान्यो धर्मोऽस्ति संयुगात् ॥ ३४

इति श्रीमहाभारते आरण्यकपर्वणि षट्त्रिंशोऽध्यायः ॥ ३६ ॥

# ३७

वैशंपायन उवाच ।
भीमसेनवचः श्रुत्वा कुन्तीपुत्रो युधिष्ठिरः ।
निःश्वस्य पुरुषव्याघ्रः संप्रदध्यौ परंतपः ॥ १
स मुहूर्तमिव ध्यात्वा विनिश्चित्येतिकृत्यताम् ।

---

$K_1$ Dc $D_1$ °शाम्येरन्, $D_2$ (m as in text) °शाम्येव (for °शाम्यन्ति) — b) $K_{1-3}$ B Dc Dn $D_{4-6}$ $T_2$ $G_3$ निकृता वा, $K_4$ अस्माभिस्तु; $M_1$ निराकारे (for निकृतानां) — c) $K_2$ निवर्तव्य; $K_3$ तु क; Dc न क, $D_{1\ 3\ 5}$ विक° (for निक°) $K_4$ ततस्तै प्रतिकर्तव्य — d) $K_3$ विप्रियैषिभि

30 a) $D_6$ ये (for ते) $S_1$ पाप्मासु; $K_1$ चास्मासु, $T_1$ [ऽ]भ्यस्मासु, $K_1$ $M_1$ ह्यस्मासु (for ऽप्यस्मासु) — b) $K_3$ युगपज् (for सुबहून्) $K_2$ $B_{1\ 3}$ Dn $D_{1\ 4\ 6}$ $M_2$ °चरान् (for जनान्) — d) $Ś_1$ तन्न स्यात्; $D_2$ Dc Dn $D_4$ $G_4$ तत स्यात् $K_3$ सुमहास्यय

31 b) $Ś_1$ समा°, $T_1$ $G_{1\ 3}$ वासा (for मासा°) $K_1$ त्रयोदश समा वने — c) $Ś_1$ $K_4$ $D_1$ $T_2$ G (except $G_1$) परिणामेन $K_3$ परिमाणीकृतान्पश्य — d) $D_5$ $M_2$ तावत्त (for तावत°) $K_4$ त्रयोदश समा इव

32 a) $Ś_1$ $K_{1\ 4}$ $Dc_1$ $Dn_3$ $D_{1\ 5\ 6}$ T G (except $G_1$) $M_1$ मास (for मास) — c) $Ś_1$ $K_4$m $D_2$ प्रतीकानीव; $K_1$ पूतिक इव; $K_3$ पुत्तिका इव; $K_4$ Dc पूतिकानीव, $B_{2\ 3}$ पूतिकामिव, $D_4$ पूतकानिव, $M_2$ पूतिकमिव — d) $T_1$ तदेत, $T_2$ G (except $G_1$) तथैव (for तथेद) $T_2$ G (except $G_1$) इद (for इति)

33 a) $K_1$ वानर्नहो (sic), $K_3$ $D_{2\ 5}$ $G_2$ $M_2$ वानड्डहो, $B_3$ वानन्वहो — b) $Ś_1$ $B_1$ साधवो; $K_1$ मधवो, $D_2$ माधवे $Ś_1$ K (except $K_2$) $B_2$ $D_2$ साधुवाहिन; $B_1$ °वासिन°; $D_1$ °वाहित — c) K (except $K_4$) B Dc Dn $D_{4\ 6}$ $T_1$ $G_1$ M एतस्माद् (for एक) — d) $K_3$ Dc $D_4$ एनसा $Ś_1$ $D_2$ प्रवि, $K_3$ Dc विप्र, $D_{1\ 5}$ $T_1$ $M_1$ परि (for प्रति)

34 a) $K_4$ भूत°, S (except $G_4$) रिपु° (for शत्रु°) — c) $K_2$ $B_2$ Dn $D_4$ हि (for तु) — d) $T_1$ $M_1$ धर्मो नान्योस्ति (by transp)

Colophon $D_3$ missing — *Major parvan* $Ś_1$ $K_1$ $Dn_3$ $D_2$ T $G_{3\ 4}$ आरण्य, $D_1$ वन, $G_2$ अरण्य — *Sub parvan* $D_6$ (om sub parvan name) mentions only द्वैतवन; likewise $G_1$ only द्वैतवननिवास — *Adhy name* $K_4$ $B_4$ $D_1$ $T_2$ $G_3$ भीमवाक्य, Dc $D_2$ भीमसेनवाक्य — *Adhy no* (figures, words or both) Dn S 35, $D_1$ 36 (as in text) — *Śloka no* Dn 35, $D_1$ 33

## 37

☞ $1^a$–$32^b$ is missing in $D_3$ (cf v l 3 34 51), the MS is ignored up to $32^b$

1 After 1, $K_2$ B D (except $D_{1\ 3}$, $D_3$ missing) S ins

136* श्रुता मे राजधर्माश्च वर्णानां च पृथक्पृथक् ।
आयत्यां च तदात्वे च य पश्यति स पश्यति ।
धर्मस्य जानमानोऽहं गतिमग्र्यां सुदुर्विदाम् ।
कथं बलात्करिष्यामि मेरोरिव विमर्दनम् ।

[(L 1) Dc वर्ण (for राज) Dc $D_5$ राज्ञां चैव (for वर्णानां च) $K_2$ B Dc Dn $D_{4-6}$ वि($D_5$ सु)निश्चया (for पृथक्पृथक्) — (L 3) $T_2$ $G_3$ ज्ञायमानेन, $G_{3\ 4}$ ज्ञायमानोह (for जानमानोऽहं) $M_2$ °मिदां (for °विदाम्) — (L 4) $T_1$ माल्यात्, $G_1$ मथात् (for बलात्) S विवर्तन (for विमर्दनम्) ]

2 a) $K_{3\ 4}$ $D_{5\ 6}$ (before corr) $T_1$ $M_2$ सु (for स)

भीमसेनमिदं वाक्यमपदान्तरमब्रवीत् ॥ २

एवमेतन्महाबाहो यथा वदसि भारत ।
इदमन्यत्समाधत्स्व वाक्यं मे वाक्यकोविद ॥ ३

महापापानि कर्माणि यानि केवलसाहसात् ।
आरभ्यन्ते भीमसेन व्यथन्ते तानि भारत ॥ ४

सुमन्त्रिते सुविक्रान्ते सुकृते सुविचारिते ।
सिध्यन्त्यर्था महाबाहो दैवं चात्र प्रदक्षिणम् ॥ ५

त्वं तु केवलचापल्याद्बलदर्पोच्छ्रितः स्वयम् ।
आरब्धव्यमिदं कर्म मन्यसे शृणु तत्र मे ॥ ६

भूरिश्रवाः शलश्चैव जलसंधश्च वीर्यवान् ।
भीष्मो द्रोणश्च कर्णश्च द्रोणपुत्रश्च वीर्यवान् ॥ ७

धार्तराष्ट्रा दुराधर्षा दुर्योधनपुरोगमाः ।
सर्व एव कृतास्त्राश्च सततं चाततायिनः ॥ ८

राजानः पार्थिवाश्चैव येऽस्माभिरुपतापिताः ।
संश्रिताः कौरवं पक्षं जातस्नेहाश्च सांप्रतम् ॥ ९

दुर्योधनहिते युक्ता न तथास्मासु भारत ।
पूर्णकोशा बलोपेताः प्रयतिष्यन्ति रक्षणे ॥ १०

सर्वे कौरवसैन्यस्य सपुत्रामात्यसैनिकाः ।
संविभक्ता हि मात्राभिर्भोगैरपि च सर्वशः ॥ ११

दुर्योधनेन ते वीरा मानिताश्च विशेषतः ।
प्राणांस्त्यक्ष्यन्ति संग्रामे इति मे निश्चिता मतिः ॥ १२

समा यद्यपि भीष्मस्य वृत्तिरस्मासु तेषु च ।
द्रोणस्य च महाबाहो कृपस्य च महात्मनः ॥ १३

अवश्यं राजपिण्डस्तैर्निर्वेश्य इति मे मतिः ।
तस्मात्त्यक्ष्यन्ति संग्रामे प्राणानपि सुदुस्त्यजान् ॥ १४

सर्वे दिव्यास्त्रविद्वांसः सर्वे धर्मपरायणाः ।
अजेयाश्चेति मे बुद्धिरपि देवैः सवासवैः ॥ १५

अमर्षी नित्यसंहृष्टस्तत्र कर्णो महारथः ।
सर्वास्त्रविदनाधृष्य अभेद्यकवचावृतः ॥ १६

अनिर्जित्य रणे सर्वानेतान्पुरुषसत्तमान् ।
अशक्यो ह्यसहायेन हन्तुं दुर्योधनस्त्वया ॥ १७

न निद्रामधिगच्छामि चिन्तयानो वृकोदर ।
अति सर्वान्धनुर्ग्राहान्सूतपुत्रस्य लाघवम् ॥ १८

एतद्वचनमाज्ञाय भीमसेनोऽत्यमर्षणः ।

---

**3** Before 3, K (except $K_3$) B D (except $D_2$, $D_3$ missing) ins युधिष्ठिर उ — $M_2$ om (hapl) $3^c$–$4^d$ — $^c$) $D_6$ एतत् (for अन्यत्) $K_3$ स्वम् (for सम्) $K_1$ B Dc Dn $D_1$ $G_4$ $M_1$ दस्व (for धत्स्व)

**4** $M_2$ om 4 (cf v l 3) — $^a$) $K_3$ महोपायानि, $K_4$m महामात्राणि, $T_1$ °पथानि, $G_3$ $_4$ $M_3$ °पायानि $S_1$ K (except $K_2$) Dc $D_1$ $_5$ कार्याणि

**6** $^a$) $K_2$ B Dn $D_4$–$_6$ $M_3$ यत्तु, Dc यत्र, $T_2$ G (except $G_1$) तत्तु (for त्व तु) $M_3$ कार्पण्यात् (for °चापल्यात्) — $^b$) $K_2$ $B_1$ Dn °दर्पोत्थित — $^c$) $S_1$ K D (except $D_6$ $D_3$ missing) $M_3$ कार्यं (for कर्म)

**7** $D_4$ om (hapl) $7^{cd}$ — $^c$) B $D_6$ transp द्रोण and कर्ण — $^d$) $D_1$ तथैव च, T G (except $G_1$) प्रताप वान् (for च वीर्य°)

**9** $D_2$ om $9^a$–$10^b$ — $^a$) $K_4$ राजानो राजपुत्राश्च — $^b$) $K_4$ ये चास्मद् (for येऽस्माभिर्) — $^c$) $K_4$ मत्स्थिता, $D_6$ साश्रिता, G (except $G_3$) $M_3$ ते श्रिता — $^d$) $S_1$ $K_1$ $_3$ Dc $D_1$ सप्रति, $K_2$ Dn त प्रति, $M_3$ तान्प्रति (for साम्प्रतम्)

**10** $D_3$ om $10^{ab}$ (cf v l 9) — $^d$) $K_2$ Dn समरे (for रक्षणे)

**11** $K_4$ om 11 — $^a$) Dc $D_2$ $_6$ $M_1$ सर्व॰ (for सर्वे) — $^c$) $S_1$ $K_1$ $_3$ सविभक्तानि॰, $D_1$ $_2$ °नि, $T_1$ $G_1$ °भि $K_2$ मात्रा हि; $D_6$ महता (for मात्राभिर्) — $^d$) $D_1$ $_2$ भागैर् (for भोगैर्) $K_1$ नित्यश॰ (for सर्व°)

**14** $S_1$ $D_4$ om (hapl) $14^{ab}$ (along with 13) — $^a$) $K_4$ (marg sec m) $D_1$ $_2$ भर्तृ° (for राज°) $K_3$ अवश्य राज्यकामैस्ते — $^b$) $K_1$ $_3$ $Dn_3$ $D_1$ $T_1$ $G_1$ $_2$ निर्वेश्य इति, $M_1$ निर्वेश्यामीति — $^d$) S (except $T_1$ $M_1$) च (for सु) $K_4$ ब्राह्मणा अपि जीवित

**15** $Ś_1$ om 15 — $^a$) $K_4$ सर्वास्त्र°, T G °विदुष $M_1$ दिव्यास्त्रविदुष सर्वे — $^d$) $K_4$ इति सर्वे, $B_1$ $_3$ $_4$ $D_6$ $M_2$ अपि सर्वै, $B_2$ सर्वैरपि $K_4$ B Dc $D_4$–$_6$ $M_3$ सुरासुरै (for सवासवै)

**16** $^a$) $K_1$ प्रमि; $K_3$ सत्र (for नित्य) $Ś_1$ K (except $K_4$) $B_2$ D (except $D_4$ $_6$, $D_3$ missing) °संरब्ध; $M_3$ सरभी — $^d$) To avoid hiatus N (except $B_3$ $D_4$, $D_3$ missing) $T_2$ $G_3$ $M_2$ ह्यभेद्य°, $G_1$ स्वभेद्य° (for अभेद्य°)

**19** Before 19, all MSS except $T_2$ $G_2$ ($D_3$ miss

बभूव विमनास्त्रस्तो न चैवोवाच किंचन ॥ १९
तयोः संवदतोरेवं तदा पाण्डवयोर्द्वयोः ।
आजगाम महायोगी व्यासः सत्यवतीसुतः ॥ २०
सोऽभिगम्य यथान्यायं पाण्डवैः प्रतिपूजितः ।
युधिष्ठिरमिदं वाक्यमुवाच वदतां वरः ॥ २१
युधिष्ठिर महाबाहो वेद्मि ते हृदि मानसम् ।
मनीषया ततः क्षिप्रमागतोऽस्मि नरर्षभ ॥ २२
भीष्माद् द्रोणात्कृपात्कर्णाद् द्रोणपुत्राच्च भारत ।
यत्ते भयममित्रघ्न हृदि संपरिवर्तते ॥ २३
तत्तेऽहं नाशयिष्यामि विधिदृष्टेन हेतुना ।
तच्छ्रुत्वा धृतिमास्थाय कर्मणा प्रतिपादय ॥ २४
तत एकान्तमुन्नीय पाराशर्यो युधिष्ठिरम् ।
अब्रवीदुपपन्नार्थमिदं वाक्यविशारदः ॥ २५
श्रेयसस्ते परः कालः प्राप्तो भरतसत्तम ।
येनाभिभविता शत्रूनृणे पार्थो धनंजयः ॥ २६
गृहाणेमां मया प्रोक्तां सिद्धिं मूर्तिमतीमिव ।
विद्यां प्रतिस्मृतिं नाम प्रपन्नाय ब्रवीमि ते ।
यामवाप्य महाबाहुरर्जुनः साधयिष्यति ॥ २७
अस्त्रहेतोर्महेन्द्रं च रुद्रं चैवाभिगच्छतु ।
वरुणं च धनेशं च धर्मराजं च पाण्डव ।
शक्तो ह्येष सुरान्द्रष्टुं तपसा विक्रमेण च ॥ २८
ऋषिरेष महातेजा नारायणसहायवान् ।
पुराणः शाश्वतो देवो विष्णोरंशः सनातनः ॥ २९
अस्त्राणीन्द्राच्च रुद्राच्च लोकपालेभ्य एव च ।
समादाय महाबाहुर्महत्कर्म करिष्यति ॥ ३०
वनादस्माच्च कौन्तेय वनमन्यद्विचिन्त्यताम् ।
निवासार्थाय यद्युक्तं भवेद्वः पृथिवीपते ॥ ३१
एकत्र चिरवासो हि न प्रीतिजननो भवेत् ।
तापसानां च शान्तानां भवेदुद्वेगकारकः ॥ ३२
मृगाणामुपयोगश्च वीरुदोषधिसंक्षयः ।

---

ing) ins वैश॰ उ॰ (resp वैश ) — c) K2 तस्थौ; K3 स्वस्थो (for त्रस्तो) S (except M2) बभूव शांतियुक्तो — d) D5 न वै प्रो (for न चैवो॰) S (except M2) गुरोर्वचनवारित — After 19, B3 ins an addl colophon

20 a) G2 4 तत (for तयो ) D4 T1 G2 4 M1 एव (for एव) — b) T2 G (except G4) M1 तथा (for तदा) S (except M2) राजन्ययोर् (for पाण्डवयोर्)

21 b) K1 S (except T2 G3) अभि॰ (for प्रति॰)

22 Before 22, all MSS except G1 (D3 missing) ins व्यास उ (resp व्यास ) — b) Ś1 K1 4 (by marg corr ) D1 2 हृदि सस्थित; K2 Dn हृदयस्थित (for हृदि मानस ) — d) K4 D1 भरतर्षभ (for ऽस्मि नर )

23 a) D1 तथा (for कृपात्) — b) D1 तथैव च (for च भारत) — After 23ab, K3 B Dc Dn D4-6 ins
137* दुर्योधनान्नृपसुतात्तथा दुःशासनादपि ।
— cd) M2 सप्रति (for सपरि ) Dc यत्ते हृदि तु शत्रुघ्न भय स

24 a) S (except M2) प्रशम (for ऽहं नाश॰ ) — b) K2 3 B Dn D5 6 कर्मणा (for हेतुना) — After 24, K2 B D (except D2, D3 missing) ins
138* प्रतिपाद्य तु राजेन्द्र ततः क्षिप्र ज्वर जहि ।
[B1 D5 प्रतिपद्य, Dc अभिपद्य Dc रिपु (for ज्वर) ]

25 a) K1 3 B1 Dc D5 6 आनीय, K2 उत्तीर्य, K4 S आनाय्य (for उन्नीय)

26 Before 26, B4 D1 ins व्यास उ॰ — d) K2 Dn धनुर्धर॰, K3 युधिष्ठिर (for धन )

27 b) T2 G (except G1) मयीम् (for ॰मतीम्)

28 c) Ś1 K1 कुबेर; K2 3 Dn D1 4 कुबेर (for धनेश) D3 इन्द्र चैव वरुण च — d) B2 D5 6 T2 G3 4 पांडव॰ (for पाण्डव)

29 d) Ś1 K2 Dn स्व(S1 अ)जेयो जिष्णुरच्युत , K1 D1 2 अजेयो (K1 हि जयो) वि(D2 जि)ष्णुरच्युत , G1 विष्णुरीश सना

30 a) T1 देवा (for रुद्रा॰) B (except B1) D6 M2 अस्त्राणि रुद्रादिन्द्राच्च — c) K3 आदाय स (for समादाय)

31 c) K4 B3 D1 6 S नि(T1 वि)वासार्थं तु (G4 प्रवासार्थाय) — d) K4 (marg *sec m* as in text) वेत्थ त्व; Dc D5 भवेयु॰, G1 भवेश्च (for भवेद्व )

32 32a=1 156 8a — D3 resumes from ॰नो भवेत् (in b) — c) K3 हि, K4 D2 तु (for च) Ś1 K B1 D (except D4 6) सर्वेषां (for शान्ताना)

33 a) Ś1 K1 उपसभोग , K3 B2 D3 ॰भोगश्च; S रोधश्च — b) MSS वीरुदौ, वीरुधौ etc — c) K2 B Dn D1-6 विमर्दि च; T2 G (except G1) स्व विमर्दि

विभर्षि हि बहून्विप्रान्वेदवेदाङ्गपारगान् ॥ ३३
एवमुक्त्वा प्रपन्नाय शुचये भगवान्प्रभुः ।
प्रोवाच योगतत्त्वज्ञो योगविद्यामनुत्तमाम् ॥ ३४
धर्मराज्ञे तदा धीमान्व्यासः सत्यवतीसुतः ।
अनुज्ञाय च कौन्तेयं तत्रैवान्तरधीयत ॥ ३५
युधिष्ठिरस्तु धर्मात्मा तद्ब्रह्म मनसा यतः ।
धारयामास मेधावी काले काले समभ्यसन् ॥ ३६
स व्यासवाक्यमुदितो वनाद् द्वैतवनात्ततः ।
ययौ सरस्वतीतीरे काम्यकं नाम काननम् ॥ ३७
तमन्वयुर्महाराज शिक्षाक्षरविदस्तथा ।
ब्राह्मणास्तपसा युक्ता देवेन्द्रमृषयो यथा ॥ ३८
ततः काम्यकमासाद्य पुनस्ते भरतर्षभाः ।
न्यविशन्त महात्मानः सामात्याः सपदानुगाः ॥ ३९
तत्र ते न्यवसन्राजन्कंचित्कालं मनस्विनः ।
धनुर्वेदपरा वीराः शृण्वाना वेदमुत्तमम् ॥ ४०
चरन्तो मृगयां नित्यं शुद्धैर्बाणैर्मृगार्थिनः ।
पितृदैवतविप्रेभ्यो निर्वपन्तो यथाविधि ॥ ४१

इति श्रीमहाभारते आरण्यकपर्वणि सप्तत्रिंशोऽध्यायः ॥ ३७ ॥

# ३८

वैशंपायन उवाच ।
कस्यचित्त्वथ कालस्य धर्मराजो युधिष्ठिरः ।
संस्मृत्य मुनिसंदेशमिदं वचनमब्रवीत् ॥ १
विविक्ते विदितप्रज्ञमर्जुनं भरतर्षभम् ।

— $^d$) K4 वेदाध्ययनतत्परान्.

**34** Before 34, N (K4 D6 marg) ins वैश° उ° (resp वैश°) — $^b$) B (except B3) Dc D4 M3 विभु°; T G M1 शुचि (for प्रभु) — $^c$) Ś1 योगत कृष्णो; K2 Dn D4 लोकतत्त्वज्ञो; K4 योगशास्त्रज्ञो — $^d$) K2 B1 Dn योगी (for योग)

**35** $^a$) B3 D5 T G °राज, Dc D4 6 °राजे (for °राज्ञे) T1 M तथा, T2 G (except G1) ततो (for तदा) S1 K1 2 Dn D1-3 धर्मराजाय धीमान्स — 35$^b$=1 157 1$^d$ — $^c$) T1 G (except G3) M1 अनुज्ञाप्य K4 M3 स (for च)

**36** $^{ab}$) K4m तद्ब्रह्म धर्मात्मा (by transp) — $^d$) Ś1 K B3 4 Dn D1-6 G1 सदाभ्य°; B1 2 Dc M3 तदाभ्य°

**37** $^a$) K4 व्यासवाक्यप्रमुदितो — $^b$) S1 K1 वन (for वनाद्) — $^c$) K2 B Dn D2-4 6 M3 °कूले; Dc D5 °कूल (for °तीरे) — $^d$) K4 (m as in text) S (except M3) कानन महत् (for नाम काननम्)

**38** $^a$) Ś1 K1 B2 °राज (for °राज) — $^b$) K2 Dn °विशारदा

**39** $^a$) T2 G (except G1) तत° काम्य समासाद्य — After 39$^a$, K4 ins

139* र्षयो देवपतिं यथा।
समप्राप्य तद्वनं रम्य

— $^b$) T1 G1 यत्तास्ते, T2 G2-4 M1 वन ते (for पुनस्ते) K2 4 B1 2 Dn T1 G1 M1 भरतर्षभ — $^c$) K3 अवसत; K4 B2 D1 न्यवसत, D2 निवसतो; M3 प्रविशत (for न्यविशन्त) — $^d$) Ś1 K1-3 Dn सपरिच्छदा ; D1 सपुरोहिता

**40** $^b$) K1 3 4 Dn D1-3 5 6 T2 G3 किंचित् (for कं°) — $^c$) Ś1 K1 M3 धीना°, K3 4 D2 3 धीरा ; T1 शूरा (for वीरा) — $^d$) K2 3 Dn T1 M3 शृण्वतो B D4 6 M3 वेदनि (B4 D6 M3 °नि)स्वन

Colophon — *Major parvan* Ś1 K1 Dn1 T G2-4 आरण्य; D1 वन (!) — *Adhy name* K2 Dn1 काम्यक गमन, B4 काम्यक, Dc व्यासदर्शने प्रतिस्मृतिप्राप्ति, Dn2 काम्यकवनागमन, D1 व्यासवाक्य; D2 व्यासगमने विद्याप्रदान (sic), D3 प्रवेश ; D5 काम्यकवन; T2 G2 3 काम्यकवन प्रवेश ; G1 व्यासागमननिवर्तन — *Adhy no* (figures, words or both) K1 Dn S 36, D1 37 (as in text) — *Śloka no* Dn 45, D1 43

**38**

**2** $^a$) K4 विधिना ; D5 विविक्त K3 B4 D3 विदित प्राज्ञम्, T2 G3 त्रिदिताप्रज्ञम्, G2 वितत°, G4 वितथ° — $^b$)

सान्त्वपूर्वं स्मितं कृत्वा पाणिना परिसंस्पृशन् ॥ २
स मुहूर्तमिव ध्यात्वा वनवासमरिंदमः ।
धनंजयं धर्मराजो रहसीदमुवाच ह ॥ ३
भीष्मे द्रोणे कृपे कर्णे द्रोणपुत्रे च भारत ।
धनुर्वेदश्चतुष्पाद एतेष्वद्य प्रतिष्ठितः ॥ ४
ब्राह्मं दैवमासुरं च सप्रयोगचिकित्सितम् ।
सर्वास्त्राणां प्रयोगं च तेऽभिजानन्ति कृत्स्नशः ॥ ५
ते सर्वे धृतराष्ट्रस्य पुत्रेण परिसान्त्विताः ।
संविभक्ताश्च तुष्टाश्च गुरुवत्तेषु वर्तते ॥ ६
सर्वयोधेषु चैवास्य सदा वृत्तिरनुत्तमा ।
शक्तिं न हापयिष्यन्ति ते काले प्रतिपूजिताः ॥ ७
अद्य चेयं मही कृत्स्ना दुर्योधनवशानुगा ।
त्वयि व्यपाश्रयोऽस्माकं त्वयि भारः समाहितः ।
तत्र कृत्यं प्रपश्यामि प्राप्तकालमरिंदम ॥ ८
कृष्णद्वैपायनात्तात गृहीतोपनिषन्मया ।
तया प्रयुक्तया सम्यग्जगत्सर्वं प्रकाशते ॥ ९
तेन त्वं ब्रह्मणा तात संयुक्तः सुसमाहितः ।
देवतानां यथाकालं प्रसादं प्रतिपालय ॥ १०
तपसा योजयात्मानमुग्रेण भरतर्षभ ।
धनुष्मान्कवची खड्गी मुनिः सारसमन्वितः ।
न कस्यचिद्ददन्मार्गं गच्छ तातोत्तरां दिशम् ॥ ११
इन्द्रे ह्यस्त्राणि दिव्यानि समस्तानि धनंजय ।
वृत्राद्भीतैस्तदा देवैर्बलमिन्द्रे समर्पितम् ।
तान्येकस्थानि सर्वाणि ततस्त्वं प्रतिपत्स्यसे ॥ १२
शक्रमेव प्रपद्यस्व स तेऽस्त्राणि प्रदास्यति ।
दीक्षितोऽद्यैव गच्छ त्वं द्रष्टुं देवं पुरंदरम् ॥ १३
एवमुक्त्वा धर्मराजस्तमध्यापयत प्रभुः ।
दीक्षितं विधिना तेन यतवाक्कायमानसम् ।

---

$K_3$ B $D_5$ Dn $D_{1-6}$ $T_2$ $G_{1,3}$ M पुरुषर्षभ ($B_{3,4}$ $D_8$ $M_2$ °भ ; $Dn_2$ $D_{1,2}$ $T_2$ $G_{1,3}$ $M_1$ भ), $B_{3,4}$ $D_6$ भरतर्षभ

**4** Before 4, most N MSS ins युधिष्ठिर उ° — [a]) $Ś_1$ पक्षे कर्णे ; $K_4$ च कर्णे च (for कृपे कर्णे) — [b]) $K_4$ विदोपत (for च भारत)

**5** [a]) $Ś_1$ K $B_2$ D (except $D_{4,6}$) दैवं ब्राह्मं (by transp) N मानुषं ($S_1$ °ष्य), $G_{3,4}$ चासुरं (for आसुरं) $T_2$ $G_3$ ब्राह्मं दैवासुरं चैव — [b]) $Ś_1$ K Dn $D_{1,2}$ सयक्षं सचिकित्सितं ; B $D_{4-6}$ वायव्यं सचि°, $D_5$ स[र]हस्यं चि°, $D_8$ मन्त्रसक[? read समन्त्रक]चि°, T G (except $G_1$) स($T_2$ $G_3$ स)प्रयोगं चि° — [c]) $K_2$ Dn तम् ($Dn_2$ ते) (for च) — [d]) $K_2$ Dn अभिजा° ; $K_4$ ते वै जा° ; T $G_{1-3}$ ते विजा° ; $G_4$ विजानति हि (for तेऽभि°)

**6** [d]) $B_3$ भृत्य° (for गुरु°) $K_3$ $T_1$ $G_{2-4}$ $M_2$ °वेषु (for °तेषु) $G_1$ गुरुवत्तेषु प्रवर्तते — After 6, $K_4$ $D_2$ ins

140* ऐकात्म्यं च गता सर्वे धार्तराष्ट्रेण भारत ।

**7** [b]) $K_4$ $D_2$ समा (for सदा) $K_2$ Dn प्रीतिर् ; $K_3$ धृतिर् (for वृत्तिर्) — After $7^{ab}$, $K_{1,2}$ B D (except $D_{1-3}$) ins

141* आचार्या मानितास्तुष्टाः शान्तिं व्यवहरन्त्युत ।

**8** After $8^{ab}$, $K_2$ $Dc_2$ Dn ins

142* सग्रामनगरा पार्थ ससागरवनाकरा ।

— [c]) $M_1$ त्वं हि (for त्वयि) $K_{1,3,4}$ $D_5$ त्वपा ; $D_{1,2}$ तृपा (for व्यपा°) $Ś_1$ अयि त्वमाश्रयोस्माकं, $K_2$ Dn भवान्नेव प्रियोस्माकं — [d]) $Ś_1$ समाश्रितः, $K_4$ समर्पितः (for समाहितः) — $Ś_1$ om (hapl) $8^e$–$10^b$ — [e]) $K_2$ $B_2$ Dn अत्र, $K_4$ $D_2$ तत्ते (for तत्र) $K_4$ B $D_{4,6}$ प्रवक्ष्यामि

**9** $S_1$ om 9 (cf v l 8) — [c]) $K_4$ $M_2$ तया गृहीतया स°, T G $M_1$ गृहीतया तया स°

**10** $Ś_1$ om $10^{ab}$ (cf v l 8) — [a]) $G_{3,4}$ भ्रात (for तात) — [b]) $K_{1,3,4}$ $D_{2,3}$ $M_2$ सम्प्रयुक्तः ; Dc $D_5$ सुसंयुक्त° (for संयुक्त सु°) — $K_1$ om (hapl) $10^c$–$11^d$ — [d]) $K_{3,4}$ $D_{2,3}$ प्रतिपालयन् ; $D_1$ परिपालयन्, $D_6$ S (except $M_1$) परिपालय

**11** $K_1$ om $11^{abcd}$ (cf v l 10) — [d]) $Ś_1$ $K_{2-4}$ B D $T_2$ $M_2$ साधु ($D_{1-3}$ मौन°) (for सार°) $K_2$ Dn व्रते स्थितः, $B_{1-3}$ Dc $D_{1,4-6}$ $T_2$ (after corr) समाहितः (for समन्वितः) — [f]) $B_2$ $D_{4,6}$ transp गच्छ and तात

**12** [cd]) $T_1$ transp भीतै° and देवै° $Ś_1$ $K_1$ $B_{1,2}$ तथा ; S (except $M_2$) पुरा (for तदा) $K_2$ Dn transp सदा and बलं $K_2$ Dn शक्रे (for इन्द्रे) — [e]) $T_2$ G (except $G_1$) एवास्त्राणि (for एकस्थानि) $K_4$ $B_1$ $T_2$ G (except $G_1$) दिव्यानि (for सर्वाणि) — After 12, S ins

143* अनेन ब्रह्मणा तात सर्वं संप्रतिपद्यते ।
[ $M_2$ स सर्वं प्रतिपत्स्यसे (for the posterior half) ]

**13** [a]) $K_3$ शक्रमेवाभिवीक्षस्व — After $13^{ab}$, $K_4$ $D_{2,3}$ ins a passage given in App I (No 3)

**14** [a]) $K_4$ तु धर्मज्ञस् (for धर्मराजस्) — [b]) $G_{3,4}$ तद्

अनुजज्ञे ततो वीरं भ्राता भ्रातरमग्रजः ॥ १४
निदेशाद्धर्मराजस्य द्रष्टुं देवं पुरंदरम् ।
धनुर्गाण्डीवमादाय तथाक्षय्यौ महेषुधी ॥ १५
कवची सतलत्राणो बद्धगोधाङ्गुलित्रवान् ।
हुत्वाग्निं ब्राह्मणान्निष्कैः स्वस्ति वाच्य महाभुजः ॥ १६
प्रातिष्ठत महाबाहुः प्रगृहीतशरासनः ।
वधाय धार्तराष्ट्राणां निःश्वस्योर्ध्वमुदीक्ष्य च ॥ १७
तं दृष्ट्वा तत्र कौन्तेयं प्रगृहीतशरासनम् ।
अब्रुवन्ब्राह्मणाः सिद्धा भूतान्यन्तर्हितानि च ।
क्षिप्रं प्राप्नुहि कौन्तेय मनसा यद्यदिच्छसि ॥ १८
तं सिंहमिव गच्छन्तं शालस्कन्धोरुमर्जुनम् ।
मनांस्यादाय सर्वेषां कृष्णा वचनमब्रवीत् ॥ १९
यत्ते कुन्ती महाबाहो जातस्यैच्छद्धनंजय ।
तत्तेऽस्तु सर्वं कौन्तेय यथा च स्वयमिच्छसि ॥ २०
मास्माकं क्षत्रियकुले जन्म कश्चिदवाप्नुयात् ।
ब्राह्मणेभ्यो नमो नित्यं येषां युद्धे न जीविका ॥ २१
नूनं ते भ्रातरः सर्वे त्वत्कथाभिः प्रजागरे ।
रंस्यन्ते वीरकर्माणि कीर्तयन्तः पुनः पुनः ॥ २२
नैव नः पार्थ भोगेषु न धने नोत जीविते ।
तुष्टिर्बुद्धिर्भवित्री वा त्वयि दीर्घप्रवासिनि ॥ २३
त्वयि नः पार्थ सर्वेषां सुखदुःखे समाहिते ।
जीवितं मरणं चैव राज्यमैश्वर्यमेव च ।

---

(for तम्) D1 उपाध्यापयत्, T1 अध्यापयति T2 G3 प्रभुम् — c) Ś1 K2 3 D (except D1 2 5) [अ]नेन (for तेन) — d) Ś1 K Dn D1-3 5 T1 G1 M1 छत° (for यत°) — e) K2 3 B Dn D4 5 T2 G3 4 तदा (for ततो) T2 G3 धीर (for वीर)

15 b) Ś1 K1-3 Dn D1-3 द्रष्टुकाम ; D4 5 देव द्रष्टु (by transp) — c) K4 Dc2 D2 गांजीवम्. — d) K3 B Dn D3-6 T1 अक्षय्ये

16 a) K4 B3 4 Dc D1 5 °तनु° (for °तल°) — b) =1 212 5b, 216 16b T G1-3 खड्गी, G4 M खड्ग (for बद्ध) — c) B2 4 T2 G (except G1) हुत्वाग्नीन्, M हुताग्निर्

17 K2 M1 om (hapl) 17c-18b — d) Ś1 [ए]वम् (for [ऊ]र्ध्वम्) S1 K1 अवेक्ष्य च; T2 G (except G1) उदैक्षत; M2 निरीक्ष्य च (for उदीक्ष्य च)

18 K2 M1 om 18ab (cf v l 17) — After 18cd, K4 D2 5 S ins a passage given in App I (No 4) — S om 18ef — e) K2 3 Dn D3-6 क्षिप्रमाप्नुहि — f) Dc ध्रुवोस्तु विजयस्तव (cf 145*), Dn1 यद्यदिच्छसि भारत — After 18, N (except Dc) ins

144* अब्रुवन्ब्राह्मणाः पार्थमिति कृत्वा जयाशिषः ।
[K4 B D4 6 इति कृत्वा जयाशीस्ते ब्राह्मणा वाक्यमब्रुवन् ]
K1 2 B Dn D4-6 cont

145* ससाधयस्व कौन्तेय ध्रुवोऽस्तु विजयस्तव ।

19 S transp 19ab and 19cd — a) K2 B Dn D4 6 त तथा (B1 2 4 D4 6 तदा) प्रस्थित वीर. — b) S सिंहस्कधोरस तदा — d) S प्रयातः पुरुषर्षभः

☞ For stanzas 20-25, S subst a passage given below as 153* (cf v l 25)

20 a) Dc यद्यत्, D4 यत्तत् (for यत्ते)

21 a) K3 मा स्माह; K4 मा चाह — b) K3 4 D3 पुनर्जन्मभवा(D3 समा)प्नुयात्. — c) Ś1 K1 [ऽ]पि वा नित्य — d) K2 B Dn D4-6 भैक्ष्येण (for युद्धे न) — After 21, N (K1 om lines 2-4) ins

146* इदं च मे परं दुःखं यत्त्वां पार्थ सुयोधनः ।
दृष्ट्वा मां गौरिति प्राह प्रहसन्राजसंसदि ।
तस्माद्दुःखादिदं दुःखं गरीय इति मे मतिः ।
यदस्मान्प्रति सभ्येषु बह्वयुक्तमभाषत ।

[(L 1) K2 B Dn D4 6 मे परम, D2 5 च प म (for च मे पर) K1 यद्वा पार्थ, K2 B D (except D1-3) य स पाप, K3 यत्तदा वै (for यत्त्वां पार्थ) — (L 2) B3 4 जन°, D3 कुरु° (for राज°) — (L 4) K3 B Dc Dn D4-6 यत्तत्परिषदो मध्ये, K4 यस्मादस्मान्प्रहस्यैष, D1 यस्मादन्यत्प्रहस्यैव (for the prior half) ]

22 d) K2 B Dc Dn D4 6 कथ (for कीर्त°)

23 b) K3 नोत्र; Dc D2 5 6 नोप (for नोत) — c) K3 भूतिर्; D2 पुष्टिर् (for तुष्टिर्)

24 e) K4 [ऽ]सि हि (for मेऽसि) — f) Ś1 K3 D1-3 5 कौरव, K1 2 4 B Dc Dn D4 6 भारत (for पाण्डव) — After 24, N (Ś1 K1 2 4 D1-3 om line 2) ins

147* बलवद्भिर्विरुद्धेन कार्यमेतत्त्वयानघ ।
प्रयाह्यविघ्नेनैवाशु विजयाय महाबल ।

[(L 1) K1 विरोधोत्थ, K2 Dn1 n2 विरुद्ध न, K4 (m as above) विरुद्धो न, D2 विरोधेन (for विरुद्धेन) B1 D4 6 बलवद्भिर्विरोधो वै न कार्यस्ते कदाचन — (L 2) K2 B D4 6

आपृष्टो मेऽसि कौन्तेय स्वस्ति प्राप्नुहि पाण्डव ॥ २४
नमो धात्रे विधात्रे च स्वस्ति गच्छ ह्यनामयम् ।
स्वस्ति तेऽस्त्वान्तरिक्षेभ्यः पार्थिवेभ्यश्च भारत ।
दिव्येभ्यश्चैव भूतेभ्यो ये चान्ये परिपन्थिनः ॥ २५
ततः प्रदक्षिणं कृत्वा भ्रातॄन्धौम्यं च पाण्डवः ।
प्रातिष्ठत महाबाहुः प्रगृह्य रुचिरं धनुः ॥ २६
तस्य मार्गादपाक्रामन्सर्वभूतानि गच्छतः ।
युक्तस्यैन्द्रेण योगेन पराक्रान्तस्य शुष्मिणः ॥ २७

चाशु, Dc [प्र]वास्तु (for [प्र]वाशु) ]

**25** Ś1 K1 3 D1 5 om 25ab — b) K4 D2 वनाद्वन, B4 ह्यनामय — After 25ab, K4 D2 ins

148* धर्मस्त्वा द्विषत पातु भास्करश्च विभावसु ।

— K4 D2 cont K3 B (B1 om line 2) Dc Dn D4-6 ins after 25ab

149* ह्री श्री कीर्तिर्धृति पुष्टिरुमा लक्ष्मी सरस्वती ।
इमा वै तव पान्थस्य पालयन्तु धनजय ।
[(L 1) K2 B1 Dn D1 5 धुति (for धृति) ]

— K3 4 B (B1 om line 1) D (except D1 5) cont after 149*

150* ज्येष्ठापचायी ज्येष्ठस्य भ्रातुर्वचनकारक ।
प्रपद्येऽह वसून्रुद्रानादित्यान्समरुद्गणान् ।
विश्वेदेवांस्तथा साध्याञ्शान्त्यर्थं भरतर्षभ ।
[(L 1) D4 6 Cup ज्येष्ठोपचायी K4 B4 Dc D4 °मास्थित (for कारक) ]

— c) K3 त्वाम् (for तेऽस्तु) K3 B1 3 तु (for ऽस्तु) Ś1 K3 4 B1 3 Dc D2 3 6 अत (for आन्त) — d) Ś1 K1 3 D1-3 सर्वश ; B3 पार्थिव (for भारत) — e) Ś1 देवेभ्यश्चैव, K4 पार्थिवेभ्यश्च — After 25, K3 B Dc Dn D4-6 ins

151* एवमुक्त्वाशिष कृष्णा विरराम यशस्विनी ।;
while G4 ins after 25ef (transposed)

152* अवरोधाद्वने वासात्सर्वस्वहरणादपि ।
इद दु खतर मन्ये पुत्रेभ्यश्च विवासनम् ।

☞ For stanzas 20-25, S subst the foll passage of 33 lines (with some v l which have been ignored)

153* प्राञ्जलि पाण्डव कृष्णा देवानां कुर्वती नम ।
वाग्भि परमशस्ताभिर्मङ्गलाभिरभाषत ।
(25ab) नमो धात्रे विधात्रे च स्वस्ति गच्छ वनाद्वनम् ।
धर्मस्त्वां पातु पार्थ भास्करश्च विभावसु ।
ब्रह्मा त्वां ब्राह्मणाश्चैव पालयन्तु धनंजय । [5]
ज्येष्ठापचायी ज्येष्ठस्य भ्रातुर्वचनमास्थित ।
प्रपद्येथा वसून्रुद्रानादित्यान्समरुद्गणान् ।
विश्वेदेवांस्तथादित्याञ्शान्त्यर्थं भरतर्षभ ।
(25cd) स्वस्ति तेऽस्त्वान्तरिक्षेभ्यो दिव्येभ्यो भरतर्षभ ।
(25ef) पार्थिवेभ्यश्च सर्वेभ्यो ये केचित्परिपन्थिन । [10]
अवरोधाद्वने वासात्सर्वस्वहरणादपि ।
इद दु खतर मन्ये पुत्रेभ्यश्च विवासनात् ।
(21ab) मा स्माह क्षत्रियकुले जातु चित्पुनराभवम् ।
(21cd) ब्राह्मणेभ्यो नमस्यामि येषां नायुधजीविका ।
प्रवसित स्वगृहेभ्यश्च राष्ट्राच्च भरतर्षभ । [15]
वने प्रतिष्ठितो भूत्वा सौहार्दादवतिष्ठसे ।
जेता च सर्वशत्रूणां च पावकमतर्पयत् ।
जनस्त्वा पश्यतीदानीं गच्छन्त भरतर्षभ ।
अस्मिन्नून महारण्ये भ्रातर सुहृदश्च ते ।
त्वत्कथा कथयिष्यन्ति चारणा ऋषयस्तथा । [20]
(20ab) यत्तत्कुन्ती महाबाहो जातस्यैच्छद्धनजय ।
(20cd) तत्ते सर्वं तथैवास्तु यथा च मनसेच्छसि ।
वसुदेवस्वसा देवी त्वामार्या पुनरागतम् ।
सा पश्यतु पृथा पार्थं सहस्राक्षमिवादिति ।
(22ab) नून ते भ्रातर सर्वे त्वत्कथाभि प्रजागरे । [25]
(22cd) रस्यन्ते तव कर्माणि कीर्तयन्त पुन पुन ।
(23ab) नैव न पार्थ भोगेषु न धने नोत जीविते ।
(23cd) तुष्टा बुद्धिर्भवित्री वा त्वयि दीर्घप्रवासिनि ।
आशा सजायते वीर त्वय्यरण्य प्रपद्यति ।
(24ab) त्वयि न पार्थ सर्वेषां सुखदु खे प्रतिष्ठिते । [30]
(24cd) जीवित मरण चैव स्वर्गोऽथ नरकस्तथा ।
(24ef) आपृष्टो मेऽसि कौन्तेय स्वस्ति प्राप्नुहि पाण्डव ।
कृतास्त्र स्वस्तिमन्त त्वां द्रक्ष्यामि पुनरागतम् ।

— *After 25, K3 B Dc Dn D4-6 ins*

154* एवमुक्त्वाशिष कृष्णा विरराम यशस्विनी ।

**26** a) T G3 4 M1 प्रदक्षिण तत (by transp), G1 प्रदक्षिण पुन — After 26ab, K1 B4 Dc D1-3 5 ins

155* कृष्णाकटाक्षपाथेय हृदि कृत्वा ततोऽर्जुन ।

— d) S सुमना प्रीतिसंस्तरा — After 26, T G1 3 4 M1 ins

156* शनैरिव दिश वीर उदीचीं भरतर्षभ ।
सहरस्तरसा वृक्षाँल्लतावल्लीश्च भारत ।
असज्जमानो वृक्षेषु जगाम सुमहायल ।

**27** a) A few MSS अप (for अपा) — T2 G3 om 27cd — After 27, K3 B D (except D1-3) ins

157* सोऽगच्छत्पर्वतांस्तात तपोधननिषेवितान् ।

सोऽगच्छत्पर्वतं पुण्यमेकाह्नैव महामनाः ।
मनोजवगतिर्भूत्वा योगयुक्तो यथानिलः ॥ २८
हिमवन्तमतिक्रम्य गन्धमादनमेव च ।
अत्यक्रामत्स दुर्गाणि दिवारात्रमतन्द्रितः ॥ २९
इन्द्रकीलं समासाद्य ततोऽतिष्ठद्धनंजयः ।
अन्तरिक्षे हि शुश्राव तिष्ठेति स वचस्तदा ॥ ३०
ततोऽपश्यत्सव्यसाची वृक्षमूले तपस्विनम् ।
ब्राह्म्या श्रिया दीप्यमानं पिङ्गलं जटिलं कृशम् ॥ ३१
सोऽब्रवीदर्जुनं तत्र स्थितं दृष्ट्वा महातपाः ।
कस्त्वं तातेह संप्राप्तो धनुष्मान्कवची शरी ।
निबद्धासितलत्राणः क्षत्रधर्ममनुव्रतः ॥ ३२

नेह शस्त्रेण कर्तव्यं शान्तानामयमालयः ।
विनीतक्रोधहर्षाणां ब्राह्मणानां तपस्विनाम् ॥ ३३
नेहास्ति धनुषा कार्यं न संग्रामेण कर्हिचित् ।
निक्षिपैतद्धनुस्तात प्राप्तोऽसि परमां गतिम् ॥ ३४
इत्यनन्तौजसं वीरं यथा चान्यं पृथग्जनम् ।
तथा वाचमथाभीक्ष्णं ब्राह्मणोऽर्जुनमब्रवीत् ।
न चैनं चालयामास धैर्यात्सुदृढनिश्चयम् ॥ ३५
तमुवाच ततः प्रीतः स द्विजः प्रहसन्निव ।
वरं वृणीष्व भद्रं ते शक्रोऽहमरिसूदन ॥ ३६
एवमुक्तः प्रत्युवाच सहस्राक्षं धनंजयः ।
प्राञ्जलिः प्रणतो भूत्वा शूरः कुरुकुलोद्वहः ॥ ३७

---

दिव्य हैमवत पुण्य देवजुष्ट परतप ।
[ Cf 28, 29 ]

**28** T₂ G₃ om 28ᵃ–29ᵇ — ᵃ) Ś₁ स गच्छन्, K₁ Dn₁ आगच्छत्; K₂ B₂ ₃ Dn₂ n₃ D₄–₆ अगच्छत् K₄ D₁ रम्यम् (for पुण्यम्) — ᵇ) B (T₂ G₃ om) सु (for [ए]व) K₄ °बल (for °मना) — ᶜ) K₄ स तत्र जवगो भूत्वा — ᵈ) S₁ K₁ महाबला, D₆ महा(m यथा as in text)निल

**29** T₂ G₃ om 29ᵃᵇ (cf v l 28) — ᶜᵈ) Ś₁ अनु°, K₃ अत्यक्रामत (om स), K₄ अस्य° (for अत्य°) K₁ Dc Dn₁ D₅ T₁ G₁ M सु (for स) T₂ G₂–₄ दिवारात्र (for स दुर्गाणि), and ध्यायन्नस्त्राणि (for दिवारात्रम्) T₁ अरिंदम (for अतन्द्रित)

**30** ᵃ) B (except B₁) इन्द्रकीलकमासाद्य — ᵇ) K₁ Dn₃ M₂ तत्रा° (for ततो) — ᶜ) K₂ ₃ Dn D₄–₆ °रिक्षेति, B °रि(B₂ ₃ °री)क्षे च (for °रिक्षे हि) D₃ इ; T₁ सु°, T₂ G₃ ₄ [स]थ, G₁ ₂ M स (for हि) — ᵈ) D₁ तिष्ठ तिष्ठ (for तिष्ठेति स) D₃ सा, S च (for स) — After 30, K₃ ₄ B D (except D₁ ₃) ins

158* तच्छ्रुत्वा सर्वतो दृष्टिं चारयामास पाण्डवः ।

— K₄ D₃ (both om lines 3–4) cont S (except G₃ M₃) ins after 30

159* गत्वा स षडहोरात्रान्सप्तमेऽहनि पाण्डव ।
प्रस्थेन्द्रकीलस्य शुभे तपोयोगपरोऽभवत् ।
ऊर्ध्वबाहुर्न चाङ्गानि प्रास्पन्दयत किंचन ।
समाहितात्मा नियत सहस्राक्षसुतोऽच्युत ।

[(L 4) T₂ G₃ सहस्राक्ष सरन्स्थित (for the posterior half) ]

**31** ᵃ) K₁ इति, K₃ B Dn D₄–₆ अथ (for ततो) G₄ सव्यसाची तपोपश्यद्

**32** ᶜ) Ś₁ K₁ B₃ ₄ निबद्धासितनु°, M₃ बद्धासि° सतल°

**33** ᵇ) K₃ B₃ Dn D₄ ₆ एष (for अयम्)

**34** ᵃ) G₂ ₄ नेहाम्र — ᵇ) K₃ ₃ B Dc Dn D₄–₆ न सग्रामोत्र (B₃ °स्ति), D₁–₃ न च युद्धेन.

**35** M₂ om 35ᵃᵇ — ᵃ) Ś₁ K₁ ₃ ₄ D₆ अनन्या (K₁ D₄ °नता)मोजसा, K₃ Dn ओजसा तेजसा, B Dc D₆ अनतमोजसा (B₄ अनिंद्यनौजसा), D₁ ₃ अनन्य(D₅ °न्या) मोजसा; D₂ अनन्याश्चोजसा, D₃ अलस्पमोजसा, T₂ G₃ इत्यल्क तेजसा (for इत्यनन्तौजस) N T₁ वीर (Dc वीरो) — ᵇ) N नान्य°; T₁ चान्य (for चान्य) Ś₁ K₁–₃ Dc Dn D₁–₆ पुमान्कश्चित्, K₄ B D₆ T₁ पृथग्जन — ᶜᵈ) K₁ ₄ Dc₁ D₃ ₃ यथा Ś₁ K₁ ₃ ₄ D₁–₃ तत्वम्, K₃ B Dc Dn D₄–₆ हसन् (for वाचम्) N इवाभीक्ष्ण (Ś₁ °क्ष्णो), T G₃ ₄ अभीक्ष्ण स; M₃ तथाभीक्ष्ण (for अथा भीक्ष्ण) G₂ न चोवाच ततोभीक्ष्ण ब्राह्मणोत्तममर्जुन — ᶠ) D₆ वीर्यात् (for धैर्यात्) Ś₁ सुकृति°, K₁ ₂ ₄ B Dn D₁ ₄ ₆ सुधृत, K₃ सुधृति°; D₂ ₃ सुकृत°, G₁ सुदृढनिश्चय, M₁ °निश्चित

**36** ᵃ) S₁ K₁ ₃ Dc D₁–₃ उवाच त (by transp) — Ś₁ om 36ᵇ–37ᵃ — After 36ᵃᵇ, K₃ B D₄ ₆ read 39ᶜᵈ, *repeating* it in its proper place — ᶜᵈ) B₃ कामान्वृणीष्व लोकास्त्व प्राप्तोसि परमां गतिं (cf 39ᵉᶠ)

**37** Ś₁ om 37ᵃ (cf v l 36) — ᵃᵇ) K₃ B (except B₄) Dn D₄ ₆ transp प्रत्युवाच and सहस्राक्ष K₁ महा

ईप्सितो ह्येष मे कामो वरं चैनं प्रयच्छ मे ।
त्वत्तोऽद्य भगवन्नस्त्रं कृत्स्नमिच्छामि वेदितुम् ॥ ३८
प्रत्युवाच महेन्द्रस्तं प्रीतात्मा प्रहसन्निव ।
इह प्राप्तस्य किं कार्यमस्त्रैस्तव धनंजय ।
कामान्वृणीष्व लोकांश्च प्राप्तोऽसि परमां गतिम् ॥ ३९
एवमुक्तः प्रत्युवाच सहस्राक्षं धनंजयः ।
न लोकान्न पुनः कामान्न देवत्वं कुतः सुखम् ॥ ४०
न च सर्वामरैश्वर्यं कामये त्रिदशाधिप ।
भ्रातृंस्तान्विपिने त्यक्त्वा वैरमप्रतियात्य च ।
अकीर्तिं सर्वलोकेषु गच्छेयं शाश्वतीः समाः ॥ ४१
एवमुक्तः प्रत्युवाच वृत्रहा पाण्डुनन्दनम् ।
सान्त्वयञ्श्लक्ष्णया वाचा सर्वलोकनमस्कृतः ॥ ४२
यदा द्रक्ष्यसि भूतेशं त्र्यक्षं शूलधरं शिवम् ।
तदा दातास्मि ते तात दिव्यान्यस्त्राणि सर्वशः ॥ ४३
क्रियतां दर्शने यत्नो देवस्य परमेष्ठिनः ।
दर्शनात्तस्य कौन्तेय संसिद्धः स्वर्गमेष्यसि ॥ ४४
इत्युक्त्वा फल्गुनं शक्रो जगामादर्शनं ततः ।
अर्जुनोऽप्यथ तत्रैव तस्थौ योगसमन्वितः ॥ ४५

इति श्रीमहाभारते आरण्यकपर्वणि अष्टात्रिंशोऽध्यायः ॥ ३८ ॥

## ३९

जनमेजय उवाच ।
भगवञ्श्रोतुमिच्छामि पार्थस्याक्लिष्टकर्मणः ।
विस्तरेण कथामेतां यथास्त्राण्युपलब्धवान् ॥ १
कथं स पुरुषव्याघ्रो दीर्घबाहुर्धनंजयः ।
वनं प्रविष्टस्तेजस्वी निर्मनुष्यमभीतवत् ॥ २
किं च तेन कृतं तत्र वसता ब्रह्मवित्तम ।

---

भुज° (for धन) — $^{c}$) Ś$_1$ K$_4$ B$_3$ Dc D$_{1-3}$ T$_1$ प्रयतो (for °ण)

**38** $^{a}$) K$_2$ B Dn D$_{1\ 4\ 6}$ वै (for मे) — $^{b}$) K$_4$ B$_4$ S चैव (M$_3$ स्वेन), B$_2$ चेम; D$_5$ श्रेष्ठ (for चैन) Ś$_1$ K$_{1\ 3}$ D$_{1-3}$ वरश्चैष प्रदीयता, Dc वरश्रेष्ठ प्रयच्छति

**39** K$_4$ D$_1$ om (hapl) 39$^{c}$–40$^{b}$ — 39$^{f}$ = 34$^{d}$ — $^{ef}$) B$_2$ Dn D$_{4\ 6}$ त्व (for च) For 39$^{ef}$, K$_2$ subst a v l of 36$^{cd}$

**40** K$_4$ D$_1$ om 40$^{ab}$ (cf v l 39), T$_1$ om 40–41 — 40$^{c}$ = 42$^{c}$ — $^{c}$) Ś$_1$ K$_2$ B$_4$ Dn D$_{3-6}$ लोभाश्च (for लोकान्न) — $^{d}$) B$_1$ Dn पुन (for कुत)

**41** T$_1$ om 41 (cf v l 40) — $^{c}$) G (except G$_3$) M विजने (for विपिने)

**43** $^{b}$) Ś$_1$ K$_1$ रुद्र; K$_3$ (? gloss) त्र्यम्बक (for त्र्यक्ष) B$_2$ हर (for शिवम्) B$_4$ त्र्यम्बकं शूलपाणिन — $^{c}$) K$_3$ कौंतेय (for ते तात)

**44** $^{c}$) Ś$_1$ K$_{1\ 3}$ Dc Dn$_3$ D$_{1-3\ 5}$ M$_1$ देवस्य (for कौन्तेय)

**45** $^{a}$) N G$_1$ फाल्गुन (Ś$_1$ K$_1$ भगवान्, K$_3$ अर्जुन [? gloss]) (for फल्गुन) — $^{b}$) K$_2$ B Dc Dn D$_{4-6}$ T$_2$ G$_3$ पुन, D$_1$ गत° (for तस°) — $^{c}$) Dc एकस् (for एव) — $^{d}$) Ś$_1$ K$_1$ D$_{1-3}$ योगबलान्वित

Colophon om in B$_1$ D$_{4\ 6}$ G$_4$ partly broken — *Major parvan* Ś$_1$ K$_1$ Dn$_2$ T G$_{2\ 3}$ आरण्य, M$_2$ अरण्यक — *Sub-parvan* K$_1$ कैरात, T$_2$ G$_{1\ 3}$ M$_2$ किरातार्जुनीय — *Adhy name* K$_4$ अर्जुनयोगाश्रय°, Dc इन्द्रकीलानुगमने इन्द्रदर्शन, D$_{1\ 3\ 5}$ इन्द्रकीलगमन (D$_3$ °गम), D$_2$ इन्द्रकीलगमने इन्द्रागमन° (sic), T$_1$ G$_1$ M शक्र(T$_1$ इन्द्र)-दर्शन, G$_2$ इन्द्रार्जुनसमागम — *Adhy no* (figures, words or both) Dn S 37, D$_1$ 38 (as in text) — *Śloka no* Dn 59, D$_1$ 53

**39**

**2** D$_3$ om 2 — $^{a}$) K$_2$ B Dn D$_{4-6}$ T$_2$ G$_3$ यथा च (for कथं स)

**3** $^{a}$) S [अ]नेन (for तेन) K$_4$ तात, D$_{3\ 5}$ कर्म (for तत्र) — Ś$_1$ om (hapl) 3$^{c}$–4$^{b}$ — $^{c}$) S रुद्रो (for स्थाणुर्)

कथं च भगवान्स्थाणुर्देवराजश्च तोषितः ॥ ३
एतदिच्छाम्यहं श्रोतुं त्वत्प्रसादाद्द्विजोत्तम ।
त्वं हि सर्वज्ञ दिव्यं च मानुषं चैव वेत्थ ह ॥ ४
अत्यद्भुतं महाप्राज्ञ रोमहर्षणमर्जुनः ।
भवेन सह संग्रामं चकाराप्रतिमं किल ।
पुरा प्रहरतां श्रेष्ठः संग्रामेष्वपराजितः ॥ ५
यच्छ्रुत्वा नरसिंहानां दैन्यहर्षातिविस्मयात् ।
शूराणामपि पार्थानां हृदयानि चकम्पिरे ॥ ६
यद्यच्च कृतवानन्यत्पार्थस्तदखिलं वद ।
न ह्यस्य निन्दितं जिष्णोः सुसूक्ष्ममपि लक्षये ।
चरितं तस्य शूरस्य तन्मे सर्वं प्रकीर्तय ॥ ७

वैशंपायन उवाच ।

कथयिष्यामि ते तात कथामेतां महात्मनः ।
दिव्यां कौरवशार्दूल महतीमद्भुतोपमाम् ॥ ८
गात्रसंस्पर्शसंबन्धं त्र्यम्बकेण सहानघ ।
पार्थस्य देवदेवेन शृणु सम्यक्समागमम् ॥ ९
युधिष्ठिरनियोगात्स जगामामितविक्रमः ।
शक्रं सुरेश्वरं द्रष्टुं देवदेवं च शंकरम् ॥ १०
दिव्यं तद्धनुरादाय खड्गं च पुरुषर्षभः ।
महाबलो महाबाहुरर्जुनः कार्यसिद्धये ।
दिशं ह्युदीचीं कौरव्यो हिमवच्छिखरं प्रति ॥ ११
ऐन्द्रिः स्थिरमना राजन्सर्वलोकमहारथः ।
त्वरया परया युक्तस्तपसे धृतनिश्चयः ।
वनं कण्टकितं घोरमेक एवान्वपद्यत ॥ १२
नानापुष्पफलोपेतं नानापक्षिनिषेवितम् ।
नानामृगगणाकीर्णं सिद्धचारणसेवितम् ॥ १३
ततः प्रयाते कौन्तेये वनं मानुषवर्जितम् ।
शङ्खानां पटहानां च शब्दः समभवद्दिवि ॥ १४
पुष्पवर्षं च सुमहन्निपपात महीतले ।
मेघजालं च विततं छादयामास सर्वतः ॥ १५

---

**4** S1 om 4ab (cf. v l 3) — c) Ś1 K1 हि (for च) K3 Dn1 n8 त्व हि सर्वं भविष्यति — d) Ś1 K1 मानुष्य Ś1 K1 किं न; T2 G2–4 चापि (for चैव) T2 G2–4 हि (for ह)
**5** a) Ś1 K1 3 4 महाप्रज्ञन्, B4 Dc D1–3 5 6 इव (B4 अह, D1 3 5 इह) ब्रह्मन् (for महाप्राज्ञ) K3 B1–3 Dn D4 अत्यद्भुततमं ब्रह्मन् — b) K3 4 (by corr) B Dc D1 4–6 लोम° (for रोम°)
**6** a) B3 Dc D5 S (except T2 G3 M2) तच्छ्रुत्वा — c) K4 D1 शूराणा पार्थिवाना च
**7** a) Ś1 K1 3 4 Dc D1–3 5 यच्चापि कृ° — b) S1 K1 3 Dc D1–3 5 अपि मे (for अखिल) — c) M1 कर्म (for जिष्णो) — e) K4 शौर्यं च (for शूरस्य) — f) T1 transp तन्मे and सर्वं Ś1 K1 3 4 Dc D1–3 5 तस्मात्त्वमपि कीर्तय
**8** a) Ś1 K1 3 Dc D1–3 5 राजन् (for तात) K4 अह ते कथयिष्यामि — c) K3 Dn D4 6 T2 G3 पौरव° (for कौ°)
**9** a) N (K4 marg) G1 M1 °संस्पर्शसंबद्धा (Ś1 B2 D2 °बद्ध, Dc M1 °बधा), K4 M3 °स्पर्शनसभाष (M3 बधा) — b) K3 B Dn S (except T1 G1 M1) त्र्यबकेण (as in text), the rest °न K3 Dc1 D5 महानघ, S (except G4) महाहवे — d) Dc D5 राजन् (for सम्यक्)
**10** S1 K1 om 10ab — a) K3 D1 T2 G (except G1) च, M3 तु (for स)
**11** a) G2 4 च (for तद्) — b) K3 B Dn D4 6 कनकत्सरु, K3 4 Dc2 D1 3 T2 G1 3 पुरुषर्षभ — d) Ś1 K3 Dc D5 प्रागुदीचीमरिंदम, K1 D1–3 प्रागुदीचीं धनंजय — e) Ś1 K1 3 Dc D1–3 5 प्रतस्थे (for ह्युदीचीं)
**12** T2 G (except G1) ऐन्द्रि स्थिरो महाराज (for a), श्रिया परमया युक्तः (for c), and कृत° (for धृत° in d) — e) Ś1 K2 3 B (except B3) D5 कटकिन Ś1 K (except K3) Dc D2 3 5 दुर्गं (for घोरं) — f) G2 M3 एकमेकोन्व°
**13** b) S °नि(G1 M1 2 °वि)नादित — After 13, M1 ins

160* गन्धर्वैरप्सरोभिश्च क्रीडद्भिरुपशोभितम् ।
मत्तैः किंपुरुषैश्चैव पानभूमिगतैस्तथा ।
तत्प्रियाभि° समन्ताच्च व्यावृत्य परिवीक्षित° ।
जगाम नरशार्दूलो देवं द्रष्टुं पिनाकिनम् ।

— 13c = 1 173 6c
**14** Ś1 K1 om (hapl) 14ab — a) S बीभत्सौ (for कौन्तेये)
**15** a) K2 4 B3 Dn D1 6 [अ]नु (for सु-) — c)

अतीत्य वनदुर्गाणि संनिकर्षे महागिरेः ।
शुशुभे हिमवत्पृष्ठे वसमानोऽर्जुनस्तदा ॥ १६
तत्रापश्यद् द्रुमान्फुल्लान्विहगैर्वल्गु नादितान् ।
नदीश्च बहुलावर्ता नीलवैडूर्यसंनिभाः ॥ १७
हंसकारण्डवोद्गीताः सारसाभिरुतास्तथा ।
पुंस्कोकिलरुताश्चैव क्रौञ्चबर्हिणनादिताः ॥ १८
मनोहरवनोपेतास्तस्मिन्नतिरथोऽर्जुनः ।
पुण्यशीतामलजलाः पश्यन्प्रीतमनाभवत् ॥ १९
रमणीये वनोद्देशे रममाणोऽर्जुनस्तदा ।
तपस्युग्रे वर्तमान उग्रतेजा महामनाः ॥ २०
दर्भचीरं निवस्याथ दण्डाजिनविभूषितः ।
पूर्णे पूर्णे त्रिरात्रे तु मासमेकं फलाशनः ।
द्विगुणेनैव कालेन द्वितीयं मासमत्यगात् ॥ २१
तृतीयमपि मासं स पक्षेणाहारमाचरन् ।
शीर्णं च पतितं भूमौ पर्णं समुपयुक्तवान् ॥ २२
चतुर्थे त्वथ संप्राप्ते मासि पूर्णे ततः परम् ।
वायुभक्षो महाबाहुरभवत्पाण्डुनन्दनः ।
ऊर्ध्वबाहुर्निरालम्बः पादाङ्गुष्ठाग्रविष्ठितः ॥ २३
सदोपस्पर्शनाच्चास्य बभूवुरमितौजसः ।
विद्युदम्भोरुहनिभा जटास्तस्य महात्मनः ॥ २४
ततो महर्षयः सर्वे जग्मुर्देवं पिनाकिनम् ।
शितिकण्ठं महाभागं प्रणिपत्य प्रसाद्य च ।
सर्वे निवेदयामासुः कर्म तत्फल्गुनस्य ह ॥ २५
एष पार्थो महातेजा हिमवत्पृष्ठमाश्रितः ।
उग्रे तपसि दुष्पारे स्थितो धूमाययन्दिशः ॥ २६
तस्य देवेश न वयं विद्मः सर्वे चिकीर्षितम् ।

---

S सतत (for वि°) — $^{d}$) Ś1 K1 B4 D1–3 सर्वेश°
**16** $^{a}$) K3 4 B Dn D4 6 T1 G1 4 M सोतीत्य
**17** $^{a}$) T1 G1 पुण्य, T2 G2–4 M2 तत्र, M1 पुण्यान् (for [अ]पश्यद्) — $^{b}$) Dc1 D1 3 विहगैर् K4 corrupt — $^{c}$) K2 Dn D4 S विपुलावर्ता — $^{d}$) Ś1 K1 3 Dc D1–3 5 सप्रभा, K3 4 B Dn D4 6 वैदू(or °ड्ड)र्यविम(K4 सलि)लप्रभा°
**18** $^{d}$) Ś1 K1 हस°
**20** S1 om 20$^{ab}$ (along with 19$^{cd}$) — $^{b}$) T2 G (except G1) रयस्तत°
**21** After 21$^{ab}$, K3 B Dn D4 6 read 22$^{cd}$ — $^{e}$) Ś1 K1 3 4 Dc D1 3 5 तु, K2 B2 Dn D2 4 6 हि, B1 3 4 T1 च (for [ए]व) — $^{f}$) Ś1 K1 3 4 B1 4 Dc Dn3 D1–3 5 अभ्यगात्, B3 Dn1 अत्ययात्, Dn2 D4 6 अभ्ययात् K3 द्वितीय च समभ्ययात्
**22** $^{b}$) T2 G (except G1) क्रमेण (for पक्षेण) Ś1 B D5 T1 G1 आचरत् — K3 B Dn D4 6 read 22$^{cd}$ after 21$^{ab}$ — $^{c}$) S जीर्णं (for शी ) — $^{d}$) Ś1 K1 T2 G (except G1) °मुक्तवान्
**23** $^{a}$) S1 K3 Dc1 D1–3 5 [ऽ]पि, M2 हि (for तु) S1 अथ, T1 अति (for अथ) K1 चतुर्थे प्रथम प्राप्तौ — $^{b}$) K3 4 B Dn D4 6 मासे भरतसत्तम° (K2 B2 3 °म) — $^{cd}$) K4 निराहार° (for महा°), and स तदा (for अभवत्) — $^{f}$) B2 Dc2 D3 G4 पदाङ्गुष्ठाग्र Ś1 -निष्ठित°, K B Dn1 n2 D3 5 6 -धिष्ठित, T2 G3 पीडिता
**24** $^{a}$) S1 K1 Dc2 D5 चैव, K3 तस्य, K4 D1–3 तत्र, M2 चापि (for चास्य) — $^{c}$) Ś1 Dc °दर, K1 3 D1–3 5 °धर° (for °रुह°)
**25** $^{b}$) S1 K1 transp जग्मु° and देव — After 25$^{ab}$, K (except K3) B Dn D4 6 M1 (most of which om 25$^{cd}$) ins

161* निवेदयिषव° पार्थं तपस्युग्रे समास्थितम् ।
[K4 व्यवस्थित, B2 समाहित ]

— K3 4 B Dn D4 6 om 25$^{cd}$ — $^{c}$) T2 G नीलकठ S महादेव — $^{d}$) Dc D5 S अ(Dc D5 ते)भिवाद्य प्रणम्य च — $^{ef}$) Dc D1–3 5 फाल्गुनस्य K2 4 B Dn D4 6 त (K2 B2–4 ते) प्रणम्य महादेव शशसु° पार्थकर्म तत्
**26** $^{a}$) S (except M1) एक (for एष) — $^{b}$) B3 G4 °पार्श्वम् (for °पृष्ठम्) K1 2 B4 Dn D4 G4 आस्थित°, K4 आगत (for आश्रित°) — $^{d}$) K4 Dc1 Dn3 D1 3 S धूमापयन् K4m धूममुत्पादयन्दिश
**27** $^{b}$) Dc D5 कर्म (for सर्वे) S (except T1 M) विजानीमो मनीषित — After 27, K1 2 B D (except D1–3) ins

162* तेषा तद्वचन श्रुत्वा मुनीना भावितात्मनाम् ।
उमापतिर्भूतपतिर्वाक्यमेतदुवाच ह ।

**28** Ś1 देवदेव आह, K1 2 Dn महादेव उ°, K3 4 D1 ईश्वर उ, D2 G4 श्रीमहेश्वर उ (G4 om उ°) — After

संतापयति नः सर्वानसौ साधु निवार्यताम् ॥ २७
महेश्वर उवाच ।
शीघ्रं गच्छत संहृष्टा यथागतमतन्द्रिताः ।
अहमस्य विजानामि संकल्पं मनसि स्थितम् ॥ २८
नास्य स्वर्गस्पृहा काचिन्नैश्वर्यस्य न चायुषः ।
यत्त्वस्य काङ्क्षितं सर्वं तत्करिष्येऽहमद्य वै ॥ २९
वैशंपायन उवाच ।
ते श्रुत्वा शर्ववचनमृषयः सत्यवादिनः ।
प्रहृष्टमनसो जग्मुर्यथास्वं पुनराश्रमान् ॥ ३०

इति श्रीमहाभारते आरण्यकपर्वणि एकोनचत्वारिंशोऽध्यायः ॥ ३९ ॥

# ४०

वैशंपायन उवाच ।
गतेषु तेषु सर्वेषु तपस्विषु महात्मसु ।
पिनाकपाणिर्भगवान्सर्वपापहरो हरः ॥ १
कैरातं वेषमास्थाय काञ्चनद्रुमसंनिभम् ।
विभ्राजमानो वपुषा गिरिर्मेरुरिवापरः ॥ २
श्रीमद्धनुरुपादाय शरांश्चाशीविषोपमान् ।
निष्पपात महार्चिष्मान्दहन्कक्षमिवानलः ॥ ३
देव्या सहोमया श्रीमान्समानव्रतवेषया ।
नानावेषधरैर्हृष्टैर्भूतैरनुगतस्तदा ॥ ४
किरातवेषप्रच्छन्नः स्त्रीभिश्चानु सहस्रशः ।
अशोभत तदा राजन्स देवोऽतीव भारत ॥ ५
क्षणेन तद्वनं सर्वं निःशब्दमभवत्तदा ।

---

the ref, K1 2 B D (except D1–3) T2 G (except G1) ins

163* न वो विषादः कर्तव्यः फल्गुन प्रति सर्वशः ।
[Some MSS फाल्गुन T2 G (except G1) सर्वथा ]

**29** a) Ś1 D8 T1 स्वर्गे (for स्वर्ग) — b) K2 B Dn D4 6 तथा°, D1–3 च ना° (for न चा°) — c) K2 B1 3 4 Dn D4 6 T2 G M2 तस्य, B2 M1 अस्य (for त्वस्य) T1 2 (before corr) G2 4 M1 प्राप्तु, G1 M2 प्राप्त (for सर्वं) — d) Ś1 K1 3 4 Dc D1–3 5 तदद्य (Dc तदस्य, D5 तत्सर्वं) करवाण्यह

**30** S1 om 30 Most MSS om वैश° उ° — a) K2 4 B Dn D1 4–6 तच्छ्रुत्वा K1 4 Dc D1–3 5 भगवद्वाक्यं, K2 तस्य वचनं, K3 ऋषयो वाक्यं, M1 सत्यवचनं — d) N (except K1 Dc, S1 om) यथास्वान् K1 Dc T G पुनराश्रमं (T1 G1 °मात्), K2 B Dn D4 6 °लयान्

Colophon — *Major parvan* S1 K1 Dn2 T2 G2–4 आरण्य — *Sub parvan* K1 3 B4 Dc कैरात, K2 B2 Dn1 n2 D4 6 T G1 3 किरातार्जुनीय, D3 कैरातार्जुन — *Adhy name* B4 D5 शंभु(D5 महादेव)वाक्य, D1 G3 M1 अर्जुनतपश्चरण (D1 °श्चर्या), D2 इन्द्रकील अर्जुनतपश्चर्या, D3 तपश्चर्या, T2 G3 तपश्चरण — *Adhy no* (figures, words or both) K1 Dn T2 G M 38, D1 39 (as in text), T1 36 — *Śloka no* Dn 35, D1 33

## 40

**2** Ś1 om 2 — a) D2 T1 G2 4 रूपम् (for वेषम्) — b) Dc T G2 3 M2 °सनिभ° — c) K2 B1 4 Dn D4 6 विपुलो (for वपुषा)

**3** a) S1 K1 D1–3 चित्र, K4 D5 श्रीमान् (for श्रीमद्) — 3b = 9b — c) S1 K3 Dn D1–3 महावेगो (for महार्चिष्मान्) — d) Ś1 K1 3 D1 3 T1 दहन् कक्षवानिव; K2 B Dc Dn D4–6 दहनो देहवानिव

**4** a) Ś1 K3 Dc (before corr) दिव्या (for देव्या) — c) T1 नानाचराचरैर्हृष्टै — d) B1 4 D1 6 अनुगतैस K1 3 B1 4 D4 6 तथा, Dc D5 प्रभुः, D1 सदा (for तदा)

**5** a) K1 2 B Dn D4 6 T2 G3 °सछन्न° — b) K1 4 B D (except D5) T1 अपि (for अनु) — c) S1 M1 महाराज (for तदा राजन्) — d) N (except Ś1 K1) M2 देवो (for देवो)

**6** a) K3 D1 वल (for वन) — d) D1 om च K1 D1 3 5 च व्युपारमत्, K3 चाथ सारसान् (for चाप्युपा°) — After 6, K4 D2 ins

नादः प्रस्रवणानां च पक्षिणां चाप्युपारमत् ॥ ६
स संनिकर्षमागम्य पार्थस्याक्लिष्टकर्मणः ।
मूकं नाम दितेः पुत्रं ददर्शाद्भुतदर्शनम् ॥ ७
वाराहं रूपमास्थाय तर्कयन्तमिवार्जुनम् ।
हन्तुं परमदुष्टात्मा तमुवाचाथ फल्गुनः ॥ ८
गाण्डीवं धनुरादाय शरांश्चाशीविषोपमान् ।
सज्यं धनुर्वरं कृत्वा ज्याघोषेण निनादयन् ॥ ९
यन्मां प्रार्थयसे हन्तुमनागसमिहागतम् ।
तस्मात्त्वां पूर्वमेवाहं नेष्यामि यमसादनम् ॥ १०
तं दृष्ट्वा प्रहरिष्यन्तं फल्गुनं दृढधन्विनम् ।
किरातरूपी सहसा वारयामास शंकरः ॥ ११
मयैष प्रार्थितः पूर्वं नीलमेघसमप्रभः ।
अनादृत्यैव तद्वाक्यं प्रजहाराथ फल्गुनः ॥ १२
किरातश्च समं तस्मिन्नेकलक्ष्ये महाद्युतिः ।
प्रमुमोचाशनिप्रख्यं शरमग्निशिखोपमम् ॥ १३

तौ मुक्तौ सायकौ ताभ्यां समं तत्र निपेततुः ।
मूकस्य गात्रे विस्तीर्णे शैलसंहनने तदा ॥ १४
यथाशनिविनिष्पेषो वज्रस्येव च पर्वते ।
तथा तयोः संनिपातः शरयोरभवत्तदा ॥ १५
स विद्धो बहुभिर्बाणैर्दीप्तास्यैः पन्नगैरिव ।
ममार राक्षसं रूपं भूयः कृत्वा विभीषणम् ॥ १६
ददर्शाथ ततो जिष्णुः पुरुषं काञ्चनप्रभम् ।
किरातवेषप्रच्छन्नं स्त्रीसहायममित्रहा ।
तमब्रवीत्प्रीतमनाः कौन्तेयः प्रहसन्निव ॥ १७
को भवानटते शून्ये वने स्त्रीगणसंवृतः ।
न त्वमस्मिन्वने घोरे बिभेषि कनकप्रभ ॥ १८
किमर्थं च त्वया विद्धो मृगोऽयं मत्परिग्रहः ।
मयाभिपन्नः पूर्वं हि राक्षसोऽयमिहागतः ॥ १९
कामात्परिभवाद्वापि न मे जीवन्विमोक्ष्यसे ।
न ह्येष मृगयाधर्मो यस्त्वयाद्य कृतो मयि ।

164* प्रेषयित्वा नु दितिज मूक वा पार्थनिश्चितम् ।
मयेप्सित मदीयैस्तु वस्तु सह महाचल ।
तस्मादर्जुनबाणैस्त्व निर्विद्धो हि ममैव च ।
देह त्यक्त्वा महाबाहो मामेवैष्यसि दानव ।

**7** $^a$) Ś$_1$ K$_1$ T$_2$ G$_3$ आगत्य — $^c$) K$_2$ B Dc$_3$ Dn D$_{4-6}$ दनो (for दिते॰) — $^d$) K$_1$ T G (except G$_1$) अद्भुतविक्रम; D$_6$ अमितविक्रमं

**8** $^b$) D$_2$ S (except T$_2$ G$_3$ M$_2$) तर्जं (for तर्क॰) — $^c$) B$_2$ $_3$ तूर्णं (for हन्तु) — $^d$) N (except Ś$_1$ K$_1$) फाल्गुन॰

**9** $^a$) K$_4$ D$_2$ गाजीव — $9^b = 3^b$ — S$_1$ om $9^{cd}$ — $^d$) K$_{1.3}$ B$_3$ Dc$_3$ D$_{1-3.5}$ T$_1$ M$_2$ विनादयन्

**10** $^b$) S$_1$ K$_3$ मनागपि मृगाधम; D$_{1-3}$ मृगाधमनिरागस — $^d$) Ś$_1$ नयामि, K B D नेतास्य (K$_4$ D$_5$ ॰स्मि) (for नेष्यामि)

**11** $^a$) K$_2$ B$_2$ Dn D$_{4.6}$ transp स and दृष्ट्वा — $^b$) K$_1$ अर्जुन; K$_{2-4}$ B D फाल्गुन — $^c$) S$_1$ K$_{1.3}$ Dc D$_{1-3.5}$ M$_2$ भगवान् (for सहसा)

**12** $^a$) Ś$_1$ सर्वं (for पूर्वं) — $^b$) K$_2$ B Dn D$_{4.6}$ इन्द्रकी(B$_{2-4}$ नी)लसमप्रभ॰ — $^c$) S$_1$ K$_{1.4}$ B$_4$ Dc D$_5$ तु, K$_2$ $_3$ B$_{1-3}$ Dn D$_{1-4.6}$ च (for [ए]व) — $^d$) Ś$_1$ K$_{3.4}$ Dc D$_{1-3}$ [ए]व (for [अ]थ) K$_{2-4}$ B D फाल्गुन॰ K$_1$ फल्गुन परवीरहा — After 12, K$_1$ ins

165* मुमोच निशित बाण वज्राशनिसम बलम् ।

**13** $^b$) S$_1$ K$_4$ B (except B$_3$) D$_5$ T$_1$ G$_{2.4}$ M एकलक्षे, Dc लक्ष्य॰ — $^c$) Ś$_1$ K$_3$ Dc D$_{1-3.5}$ प्रजहारा॰

**14** $^c$) K$_1$ (? gloss) सनिपात॰ अभिघात (of 15$^c$) — $^d$) S शैलपृष्ठनिभे तदा

**15** $^a$) S$_1$ K$_{1.3}$ B$_4$ Dc D$_{1.5}$ यथा(K$_3$ महा)शनिविनिर्घोषो, K$_{2.4}$ B$_{1-3}$ Dn D$_{3.4.6}$ यथाशनेर्विनिर्घोषो (B$_3$ निष्पेषो), D$_2$ अशनेरिव निर्घोषो — $^c$) Ś$_1$ Dc D$_{2.5}$ स निर्घात, D$_1$ $_3$ विनिर्घात (for संनिपात) — $^d$) Ś$_1$ K$_{1.3}$ Dc D$_{1-3.5}$ श्रूयते शरयोर्भुवि

**16** $^d$) S सुदारुण (for विभी॰)

**17** $^a$) K$_2$ B Dn D$_{4.6}$ स ददर्श (for ददर्शाथ) — $^c$) Cf 5$^a$ S$_1$ K$_1$ B$_1$ Dn D$_1$ ॰सछन्न; K$_4$ किरातं धर्मवत वै

**18** $^a$) D$_3$ रमते, M$_2$ आगत (for अटते) — $^b$) Ś$_1$ K$_1$ वने स्त्रीगणसेवित॰, Dc वारस्त्रीगणसवृत॰ — $^d$) MSS ॰प्रभ॰, ॰प्रभ also

**19** $^b$) K$_2$ B Dc Dn D$_{4.6}$ वराहो मत्॰, D$_5$ मृगोऽस्मत्॰

**20** $^a$) K$_4$ Dc S चापि (for वापि) — $20^b = 23^d$ — $^c$) Ś$_1$ T$_2$ G$_{2.3}$ त्वा (for त्वां) K$_4$ एव च ते वधिष्यामि, and marg तेन त्वा ध्वंसयिष्यामि — $^f$) MSS

तेन त्वां भ्रंशयिष्यामि जीवितात्पर्वताश्रय ॥ २०
इत्युक्तः पाण्डवेयेन किरातः प्रहसन्निव ।
उवाच श्लक्ष्णया वाचा पाण्डवं सव्यसाचिनम् ॥ २१
ममैवायं लक्ष्यभूतः पूर्वमेव परिग्रहः ।
ममैव च प्रहारेण जीविताद्व्यवरोपितः ॥ २२
दोषान्स्वान्नार्हसेऽन्यस्मै वक्तुं स्वबलदर्पितः ।
अभिषक्तोऽस्मि मन्दात्मन्न मे जीवन्विमोक्ष्यसे ॥ २३
स्थिरो भवस्व मोक्ष्यामि सायकानशनीनिव ।
घटस्व परया शक्त्या मुञ्च त्वमपि सायकान् ॥ २४
ततस्तौ तत्र संरब्धौ गर्जमानौ मुहुर्मुहुः ।
शरैराशीविषाकारैस्ततक्षाते परस्परम् ॥ २५
ततोऽर्जुनः शरवर्षं किराते समवासृजत् ।
तत्प्रसन्नेन मनसा प्रतिजग्राह शंकरः ॥ २६
मुहूर्तं शरवर्षं तत्प्रतिगृह्य पिनाकधृक् ।
अक्षतेन शरीरेण तस्थौ गिरिरिवाचलः ॥ २७
स दृष्ट्वा बाणवर्षं तन्मोघीभूतं धनंजयः ।
परमं विस्मयं चक्रे साधु साध्विति चाब्रवीत् ॥ २८
अहोऽयं सुकुमाराङ्गो हिमवच्छिखरालयः ।
गाण्डीवमुक्तान्नाराचान्प्रतिगृह्णात्यविह्वलः ॥ २९
कोऽयं देवो भवेत्साक्षाद्रुद्रो यक्षः सुरेश्वरः ।

---

°श्रय, °श्रय°, °श्रयात् also

**21** $T_1$ om 21–22 — After 21, $K_1$ (om lines 5–8) $_2$ B D (except $D_{1-3}$) ins

166* न मत्कृते त्वया वीर भी कार्या वनमन्तिकात् ।
इय भूमि॰ सदास्माकमुचिता वसता वने ।
त्वया तु दुष्कर कस्मादिह वास॰ प्ररोचित॰ ।
वय तु बहुसत्त्वेऽस्मिन्निवसामस्तपोधन ।
भवास्तु कृष्णवर्त्माभ सुकुमार सुखोचित । [5]
कथ शून्यमिम देशमेकाकी विचरिष्यति ।
अर्जुन उवाच ।
गाण्डीवमाश्रय क्रुत्वा नाराचांश्चाग्निसनिभान् ।
निवसामि महारण्ये द्वितीय इव पावकि॰ ।
एष चापि मया जन्तुर्मृगरूप समाश्रित ।
राक्षसो निहतो घोरो हन्तु मामिह चागत॰ । [10]
किरात उवाच ।
मयैष धनुनिर्मुक्तैस्ताडित॰ पूर्वमेव हि ।
बाणैरभिहत॰ शेते नीतश्च यमसादनम् ।

[(L 3) $B_2$ $_3$ प्रचोदित, Dc $D_5$ प्रयोजित (for प्ररो°) — (L 4) Dc $Dn_3$ $D_5$ °स्तपोवने — (L 7) $B_2$ शराश्चाग्निसमप्रभान् — (L 8) B (except $B_2$) Dc $D_4$ $_5$ पावक — (L 9) $B_3$ $_4$ Dc $D_5$ °स्थित (for °श्रित) — (L 11) $Dn_2$ धन्व° (for धनु°) $B_4$ Dc $D_5$ मयैवैष धनुर्मुक्तैस् ]

**22** $T_1$ om 22 (cf v l 21) — $^a$) $Ś_1$ $K_2$ $_3$ Dc $D_{1-3}$ $_5$ ममैष लक्ष्य(*or* °क्ष)भूतो वै, $K_1$ ममैष लक्ष्यते भूतो, B Dn $D_4$ $_6$ ममैष लक्ष्य(*or* °क्ष)भूतो हि — $^b$) B Dn $D_4$ $_6$ मम पूर्वपरिग्रह — $^c$) $S_1$ $K_1$ मम चैक, $K_2$ $_3$ $D_{1-3}$ मम चैव, Dc $D_5$ मम चैष (for ममैव च) — $^d$) $K_3$ $_4$ $D_2$ अव°, B (except $B_4$) Dn $D_1$ $_3$ $_4$ $_6$ $G_1$ व्यप° (for व्यव°)

**23** $^a$) $Ś_1$ $K_1$ [ऽ]न्यस्य (for ऽन्यस्मै) — $^c$) $K_1$ B Dc Dn $D_{4-6}$ भवलिप्तोसि, $K_4$ अभिपन्नोसि, $D_{1-3}$ $G_1$ $_2$ $_3$ (before corr) $M_1$ अभिषिक्तोस्मि ($D_{1-3}$ °पि), $T_2$ $G_3$ (after corr) अधिक्षिप्तोस्मि — $23^d = 20^b$

**24** $^a$) $Ś_1$ स्थितो (for स्थिरो) $S_1$ भव त्वं, $K_3$ $_4$ $D_2$ $T_2$ $G_2$ $_3$ $M_1$ भव वि॰ (for भवस्व) — $^b$) $K_2$ $_3$ $D_{1-3}$ $_5$ $M_2$ अशनीरिव, $K_4$ अशनिप्रभान् — After 24, $K_1$ B D (except $D_{1-3}$) $T_2$ $G_3$ (both latter om lines 3–6) ins

167* तस्य तद्वचन श्रुत्वा किरातस्यार्जुनस्तदा ।
रोषमाहारयामास ताडयामास चेषुभि॰ ।
ततो हृष्टेन मनसा प्रतिजग्राह सायकान् ।
भूयो भूय इति प्राह मन्द मन्देत्युवाच ह ।
प्रहरस्व शरैरेतान्नाराचान्मर्मभेदिन॰ । [5]
इत्युक्तो बाणवर्षं स मुमोच सहसार्जुन॰ ।

[(L 5) $K_1$ $Dn_1$ $n_2$ शरान् (for शरैर्) ]

**25** $^b$) $B_1$ Dn $D_4$ $_6$ राज° (for गर्ज°) — $^c$) $K_4$ °विषप्रख्यै° (for °विषाकारै) — $^d$) $K_4$ $D_5$ युयुधाते (for ततक्षाते)

**26** $^a$) $K_1$ $D_5$ बाणवर्षं, $Dc_1$ $T_2$ (before corr) शरवर्षं, $T_2$ (by corr) $G_3$ शरान्घोरान् — $^c$) B (except $B_2$) स (for तत्)

**27** $^a$) $Ś_1$ K (except $K_4$) Dc $D_{1-3}$ $_5$ बाण° (for शर°) $K_3$ S (except $G_2$) तु, $K_4$ त, $B_1$ च (for तत्) — $^b$) $K_2$ प्रगृह्य च (for प्रति°) $S_1$ °मृत्, $K_1$ °धृत् (for °धृक्) — $27^d$ = 1 179 $14^d$, 181 $4^d$ 4 54 $13^d$

**28** $^a$) $K_4$ $B_1$ $_3$ $T_2$ G $M_2$ त, $B_2$ $_4$ Dn $D_4$ $_6$ $T_1$ $M_1$ तु (for तन्)

**29** $^b$) $Ś_1$ $K_{1-3}$ Dc $D_{1-3}$ $_5$ °वत्पर्वताश्रय°, $K_4$ B (except $B_2$) Dn $D_4$ $_6$ °वच्छिखराश्रय — $^d$) $S_1$ $K_4$ $B_4$

विद्यते हि गिरिश्रेष्ठे त्रिदशानां समागमः ॥ ३०
न हि मद्बाणजालानामुत्सृष्टानां सहस्रशः ।
शक्तोऽन्यः सहितुं वेगमृते देवं पिनाकिनम् ॥ ३१
देवो वा यदि वा यक्षो रुद्रादन्यो व्यवस्थितः ।
अहमेनं शरैस्तीक्ष्णैर्नयामि यमसादनम् ॥ ३२
ततो हृष्टमना जिष्णुर्नाराचान्मर्मभेदिनः ।
व्यसृजच्छतधा राजन्मयूखानिव भास्करः ॥ ३३
तान्प्रसन्नेन मनसा भगवाँल्लोकभावनः ।
शूलपाणिः प्रत्यगृह्णाच्छिलावर्षमिवाचलः ॥ ३४
क्षणेन क्षीणबाणोऽथ संवृत्तः फल्गुनस्तदा ।
वित्रासं च जगामाथ तं दृष्ट्वा शरसंक्षयम् ॥ ३५
चिन्तयामास जिष्णुस्तु भगवन्तं हुताशनम् ।
पुरस्तादक्षयौ दत्तौ तूणौ येनास्य खाण्डवे ॥ ३६
किं नु मोक्ष्यामि धनुषा यन्मे बाणाः क्षयं गताः ।
अयं च पुरुषः कोऽपि बाणान्ग्रसति सर्वशः ॥ ३७
अहमेनं धनुष्कोट्या शूलाग्रेणेव कुञ्जरम् ।
नयामि दण्डधारस्य यमस्य सदनं प्रति ॥ ३८
संप्रायुध्यद्धनुष्कोट्या कौन्तेयः परवीरहा ।
तदप्यस्य धनुर्दिव्यं जग्रास गिरिगोचरः ॥ ३९
ततोऽर्जुनो ग्रस्तधनुः खड्गपाणिरतिष्ठत ।
युद्धस्यान्तमभीप्सन्वै वेगेनाभिजगाम तम् ॥ ४०
तस्य मूर्ध्नि शितं खड्गमसक्तं पर्वतेष्वपि ।
मुमोच भुजवीर्येण विक्रम्य कुरुनन्दनः ।
तस्य मूर्धानमासाद्य पफालासिवरो हि सः ॥ ४१
ततो वृक्षैः शिलाभिश्च योधयामास फल्गुनः ।
यथा वृक्षान्महाकायः प्रत्यगृह्णादथो शिलाः ॥ ४२
किरातरूपी भगवांस्ततः पार्थो महाबलः ।
मुष्टिभिर्वज्रसंस्पर्शैर्धूममुत्पादयन्मुखे ।

---

$D_8$ विव्यथ , $D_1$ $_5$ निर्विष॰ , $D_2$ चाव्यथ (for [अ]विह्वल॰)

**30** $^a$) $G_2$ $_4$ भव॰ (for भवेत्) — $^b$) $D_2$ देव॰ , $M_2$ इन्द्र॰ (for यक्ष॰) Ś$_1$ $K_1$ [अ]थ वासुर॰ ; $K_2$ $_3$ Do $D_{1-3}$ $_5$ [अ]थ वा पुन॰ , $K_4$ [अ]सुरोपि वा, $Dn_1$ $n_2$ $D_4$ सुरोसुर॰, $B_1$ रुद्रो यक्षेश्वरेश्वर॰ — $^c$) Do $D_5$ [ऽ]त्र , $G_1$ च (for हि)

**32** $^a$) Do कुबेरो (for देवो वा) $K_1$ transp वा and यक्ष $K_2$ शोटशक्तो(sic)तिदेवो वा, $K_4$ देवो वा दानवो वापि — $^b$) S रुद्रो वान्यो ($T_1$ रक्षो) (for रुद्रा दन्यो) Ś$_1$ $K_{1-3}$ Do $D_2$ $_3$ $_5$ यदि (for व्यव ) $K_4$ रुद्रो वापि स्वय स्थित॰

**33** $^a$) Ś$_1$ $K_1$ प्रीत (for हृष्ट॰) — $^c$) $K_3$ व्यसृज्य, $T_2$ $G_3$ असृजत् $K_4$ $M_2$ शतश (for ॰धा) Ś$_1$ K Do $D_{1-3}$ $_5$ तत्र (for राजन्) $G_2$ असृजच्च महाराज , $G_4$ अवा॰ सृजत्तथा राजन्

**35** $^b$) N (except Ś$_1$ $K_1$) फाल्गुन॰ $T_1$ $_2$ (before corr ) $G_2$ $_4$ तथा (for तदा) — $^c$) $K_3$ विषाद (for वित्रास) $K_1$ $_2$ $D_{1-3}$ तु; $K_4$ वि (for च) Ś$_1$ स वित्रास जगामाथ , B Dn $D_4$ $_6$ भीश्चैनमाविशत्तीव्रा — $^d$) $K_4$ (m as in text) यन्मे बाणा॰ क्षय गता॰ ( = $37^b$)

**36** $^c$) Ś$_1$ K Do $D_{1-3}$ $_5$ पुरा तावक्षयौ — $^d$) S मे येन (for येनास्य)

**37** $^d$) $K_4$ गृह्णाति (for ग्रसति)

**38** $^a$) Ś$_1$ K (except $K_3$) $D_8$ $M_2$ अयमेन , B Dn $D_4$ $_6$ हत्वा चैन ; $K_4$m $D_1$ अयमेव — $K_1$ om (hapl ) $38^b$–$39^a$ — $^b$) Ś$_1$ तोत्रा॰ (for शूला॰) — After 38, B D (except $D_{1-3}$) ins

168* प्रगृह्याथ धनुष्कोट्या ज्यापाशेनावकृष्य च ।
मुष्टिभिश्चापि हतवान्वज्रकल्पैर्महाद्युति॰ ।

**39** $K_1$ om $39^a$ (cf v l 38) — $^a$) Ś$_1$ $B_2$ स प्रयुक्तो ; $K_3$ $_4$ $B_3$m स ($K_4$ $B_3$ स) प्रबुद्धो ; $K_4$m $B_1$ $_4$ D सम्प्रयुक्तो ($Do_1$ $D_1$ $_5$ ॰क्तो ) ; $G_1$ $M_1$ स($M_1$ स)प्राविध्यद् — $^d$) $K_4$ Do $D_1$ $_3$ $_6$ M जग्रास (as in text), the rest जग्राह (cf $40^a$) $K_4$ वनगोचर

**40** $^a$) Ś$_1$ $K_1$ त्यक्त॰ (for ग्रस्त॰) — $^b$) $K_1$ व्यदृश्यत, $K_4$ (m as in text ) $D_1$ अदृश्यत (for अतिष्ठत) — $D_1$ om $40^{cd}$ — $^c$) K (except $K_1$) $D_2$ $_3$ $G_1$ M स (for वै)

**41** $^e$) $K_3$ $G_1$ तस्य मूर्ध्नि ($G_1$ ॰र्धा) समासाद्य — $^f$) $M_1$ विलीनोसिवरो, $M_2$ विफलोसिवरो $K_3$ Do T G (except $G_2$) $M_2$ [ऽ]थ , $M_1$ [ऽ]पि (for हि)

**42** $^b$) N (except Ś$_1$) फाल्गुन॰ — $^c$) N (except S$_1$) $T_2$ (by corr ) $G_1$ $_3$ M य( $Dn_2$ त )दा (for यथा) $K_2$ $D_1$ $T_1$ $G_2$ $_4$ M महाकायान् — $^d$) Ś$_1$ K Do $D_{1-3}$ $_5$ $_6$ प्रतिगृह्णात्यथो

**43** $^c$) Ś$_1$ $K_1$ $_4$ B Dn $D_1$, $_4$ $_5$ ॰सकाशैर् (for ॰संस्प

प्रजहार दुराधर्षे किरातस्वरूपिणि ॥ ४३
ततः शक्राशनिसमैर्मुष्टिभिर्भृशदारुणैः ।
किरातरूपी भगवानर्दयामास फल्गुनम् ॥ ४४
ततश्चटचटाशब्दः सुघोरः समजायत ।
पाण्डवस्य च मुष्टीनां किरातस्य च युध्यतः ॥ ४५
सुमुहूर्तं महद्युद्धमासीत्तल्लोमहर्षणम् ।
भुजप्रहारसंयुक्तं वृत्रवासवयोरिव ॥ ४६
जहाराथ ततो जिष्णुः किरातमुरसा बली ।
पाण्डवं च विचेष्टन्तं किरातोऽप्यहनद्बलात् ॥ ४७
तयोर्भुजविनिष्पेषात्संघर्षेणोरसोस्तथा ।
समजायत गात्रेषु पावकोऽङ्गारधूमवान् ॥ ४८
तत एनं महादेवः पीड्य गात्रैः सुपीडितम् ।
तेजसा व्याक्रमद्रोषाच्चेतस्तस्य विमोहयन् ॥ ४९
ततो निपीडितैर्गात्रैः पिण्डीकृत इवाबभौ ।
फल्गुनो गात्रसंरुद्धो देवदेवेन भारत ॥ ५०
निरुच्छ्वासोऽभवच्चैव संनिरुद्धो महात्मना ।

---

शैर्)
**44** $^{a}$) K$_3$ °स्पर्शैर्, Dc D$_5$ °प्रख्यैर् (for °समैर्) — $^{d}$) Ś$_1$ K$_1$ धर्ष°, K$_4$ G$_1$ मर्द°, Dc$_2$ D$_1$ दर्श°, G$_4$ ताड° (for अर्द°) N (except Ś$_1$ K$_1$) फाल्गुन
**45** $^{b}$) K$_4$ B Dn D$_{4\ 6}$ समपद्यत — $^{cd}$) K$_4$ transp पाण्ड° and किरा° Ś$_1$ K$_1$ युध्यतो
**46** $^{a}$) K$_4$ B$_{1\ 3\ 4}$ Dn D$_{4\ 6}$ तु (K$_4$ हि) तद्युद्ध, Dc D$_5$ अभूद्युद्ध, S तयोर्युद्ध (for महद्युद्ध) K$_2$ D$_{1\ 3}$ मुहूर्त सुमहद्युद्ध, B$_3$ मुहूर्तमिव तद्युद्ध, D$_2$ मुहूर्त समभवद्युद्ध (hypermetric) — $^{b}$) D$_2$ आसीत्तु, K$_4$ B Dn D$_{4\ 6}$ अभवल् (for आसीत्तल्) S आसील्लोक(G$_1$ °द्रोम, M$_3$ °ल्लोम)-प्रहर्षण — Dc$_2$ om 46$^{cd}$ — $^{c}$) K$_3$ Dc$_1$ D$_5$ भुजाभ्यामेव ससक्त, K$_4$ भुजप्रहारान्सरब्ध, T$_2$ G M$_2$ भुजप्रहारससक्त (M$_2$ °भूत)
**47** $^{a}$) K$_{1\ 3}$ B D (except D$_{2\ 3\ 5}$) M$_1$ जघानाथ, T G$_{1-3}$ महाराज, G$_4$ अताडयत्, M$_2$ प्रजहार (for जहाराथ) — $^{c}$) K$_2$ स, K$_4$ Dc$_2$ G$_1$ त, Dc$_1$ तु (for च) K$_1$ पाडव चापि निष्टत, D$_{2\ 3}$ पाडव चैव चेष्टत — $^{d}$) Ś$_1$ K$_1$ [ऽ]प्यहरद्, Dc$_2$ S (except M$_1$) [ऽ]भ्य(G$_2$ द्य)हनद्, D$_2$ व्यहरद्; D$_3$ [ऽ]थ हरद्, K$_2$ B Dn D$_{1\ 4-6}$ M$_1$ बली
**48** $^{a}$) T$_2$ G (except G$_1$) युद्ध° (for भुज°) — $^{b}$) Ś$_1$ K$_1$ Dc D$_{1-3}$ [उ]रसस (D$_1$ °सान्), T$_1$ [उ]रसा K$_4$ T$_2$ G$_{3-4}$ तदा, T$_1$ तयो° (for तथा)
**49** $^{a}$) K$_1$ ततस्त च, T$_1$ तत एत; G$_4$ ततोर्जुन — $^{b}$) K$_2$ B$_{1-4}$ Dc D$_5$ गात्रै॰ प्रपी(B$_4$ सुता)डित, K$_3$ T$_2$ G (except G$_1$) गात्रेषु पीडित — $^{c}$) K$_2$ D$_3$ T$_1$ [अ]त्याक्रमत्, B Dn D$_{4\ 6}$ व्यक्रमत्, T$_2$ G M [अ]त्यक्रमत्. — $^{d}$) T$_2$ G$_3$ तेजस्तस्य Ś$_1$ K$_{1\ 4}$ व्यमोहयत्
**50** $^{a}$) B$_{1\ 2}$ Dn [ऽ]भि, B$_{3\ 4}$ D$_6$ T$_2$ G$_3$ [ऽ]ति (for नि॰) — After 50$^{ab}$, K$_2$ ins

169* सुमुहूर्तं तथा ध्यात्वा सचेता॰ पुनरुत्थित॰ ।
तत प्रीतो भवस्तस्य भगवान्कामनाशन ।
[Line 1 = (var) line 1 of 171* ]

— $^{c}$) N (except K$_1$) फाल्गुनो — $^{d}$) Ś$_1$ K Dc$_2$ D$_{1-3\ 5}$ महा° (for देव°)
**51** $^{a}$) D$_1$ पार्थ, G$_1$ M$_1$ चैष (for चैव) G$_4$ निरुच्छ्वास॰ कृत इव — $^{b}$) T$_1$ om from महात्मना up to भगवन्त in line 3 of 171* K$_2$ D$_{2\ 3}$ G$_{1\ 2}$ महामना॰ (for °त्मना) — After 51$^{ab}$, K$_1$ reads line 1 of 173* (*repeating it* after 54), while D$_1$ ins

170* आत्मान दर्शयामास फाल्गुन॰ परवीरहा ।
धृतिमास्थाय महतीं तोलयामास शकरम् ।
तावदास्थाय रूप स्वमुवाच भगवान्भव॰ ।

— K$_1$ reads 51$^{cd}$ first as in text and then as in B D (except D$_{2\ 3}$) — $^{cd}$) B D (except D$_{2\ 3}$) पपात भूम्या निश्चेष्टो गतसत्व इवाभवत् — After 51, K$_1$ B D (except D$_{2\ 3}$) S ins

171* स मुहूर्तं तथा भूत्वा सचेता॰ पुनरुत्थित ।
रुधिरेणाप्लुताङ्गस्तु पाण्डवो भृशदु॰खित॰ ।
शरण्य शरण गत्वा भगवन्त पिनाकिनम् ।
मृन्मय स्थण्डिल कृत्वा माल्येनापूजयद्भवम् ।
तच्च माल्य तदा पार्थ किरातशिरसि स्थितम् । [5]
अपश्यत्पाण्डवश्रेष्ठो हर्षेण प्रकृतिं गत ।
पपात पादयोस्तस्य तत प्रीतोऽभवद्भव॰ ।

[T$_1$ om up to भगवन्त in line 3 — (L 4) D$_6$ G$_{2\ 4}$ मृण्मय S (except T$_2$ G$_{3\ 4}$) सडिले T$_1$ हर (for भवम्) — (L 5) T$_2$ G (except G$_1$) तथा (for तदा) — (L 7) The posterior half = 51$^{d}$ ]
— K$_1$ (om line 2) B D (except D$_{2\ 3}$, D$_1$ om line 2) cont K$_3$ ins after 51

172* उवाच चैन वचसा मेघगम्भीरगीर्हर॰ ।
जातविस्मयमालोक्य तत॰ क्षीणाङ्गमाहनिम् ।

ततः पपात संमूढस्ततः प्रीतोऽभवद्भवः ॥ ५१
भगवानुवाच ।
भो भो फल्गुन तुष्टोऽस्मि कर्मणाप्रतिमेन ते ।
शौर्येणानेन धृत्या च क्षत्रियो नास्ति ते समः ॥ ५२
समं तेजश्च वीर्यं च ममाद्य तव चानघ ।
प्रीतस्तेऽहं महाबाहो पश्य मां पुरुषर्षभ ॥ ५३
ददानि ते विशालाक्ष चक्षुः पूर्वऋषिर्भवान् ।
विजेष्यसि रणे शत्रूनपि सर्वान्दिवौकसः ॥ ५४
वैशंपायन उवाच ।
ततो देवं महादेवं गिरिशं शूलपाणिनम् ।
ददर्श फल्गुनस्तत्र सह देव्या महाद्युतिम् ॥ ५५
स जानुभ्यां महीं गत्वा शिरसा प्रणिपत्य च ।
प्रसादयामास हरं पार्थः परपुरंजयः ॥ ५६
अर्जुन उवाच ।
कपर्दिन्सर्वभूतेश भगनेत्रनिपातन ।
व्यतिक्रमं मे भगवन्क्षन्तुमर्हसि शंकर ॥ ५७
भगवद्दर्शनाकाङ्क्षी प्राप्तोऽस्मीमं महागिरिम् ।
दयितं तव देवेश तापसालयमुत्तमम् ॥ ५८

---

[(L 1) K1 प्रणत, K2 मनसि, Dc2 भगवान् (for वचसा) — (L 2) K3 B (except B2) Dn आलक्ष्य (for आलोक्य) K3 B1 3 Dc D1 5 6 तप (for तत)]

52 K1 4 D2 M3 (!) श्रीभगवानुवाच, K2 3 रुद्र उ°, B (except B1) Dn D4 5 भव उ°, D1 ईश्वर उ°, T1 G1 4 महेश्वर° — a) N (except Ś1 K1) फाल्गुन

53 b) D1-3 5 मम चाद्य तवानघ — c) S प्रीतस्तेन (for °स्तेऽहं) — d) K4 B D (except D1-3 5) S (except T1 G1 M1) भरतर्षभ

54 T2 G3 4 om 54ab — a) N (except S1 K1 Dc1) T1 G2 ददामि — b) K2 दिव्यान्यस्त्राणि यैर्भवान्, K4 चक्षु पूर्वविमावन; S (T2 G3 4 om) चक्षु पूर्वं मुनिर्भवान् — c) T1 G1 °ष्यसे, G2 4 ष्यसे — d) T1 G2 देवा, T2 G1 3 4 M2 देवान् (for सर्वान्) — After 54, K2 reads 57ab, followed by line 2 of 174* — B D (except D1-3) ins after 54 K1 ins after 51ab (*repeating* line 1 only after 54)

173* प्रीत्या च तेऽहं दास्यामि यदस्त्रमनिवारितम् ।
त्वं हि शक्तो मदीयं तच्छस्त्रं धारयितुं क्षणात् ।

[(L 1) K1 B4 Dc D5 अवधा° (for अनिवा°) — (L 2) K1 Dn अस्त्र (for शस्त्र) K1 D6 क्षम (for क्षणात्)]

55 b) Many MSS गिरीशं — c) N (except Ś1 K1) फाल्गुनस् — d) D1 T G2 3 M2 महाद्युति°

56 a) D1 जानुभ्यां धरणीं गत्वा — b) Ś1 च प्रणम्य, K (except K4) Dc D1-3 5 [अ]भिप्रणम्य (for प्रणिपत्य) Ś1 K1 3 D2 3 वै (for च)

57 K2 reads 57ab (with line 2 of 174*) after 54 — a) K3 B (except B2) Dn D4 6 सर्वदेवेश — N T2 G3 4 ins after 57ab (Ś1 K2-4 D2 3 om line 1, K2 transp line 2, see above)

174* देवदेव महादेव नीलग्रीव जटाधर ।
कारणानां च परमं जाने त्वां त्र्यम्बकं विभुम् ।
देवानां च गतिं देव त्वत्प्रसूतमिदं जगत् ।
अजेयस्त्वं त्रिभिर्लोकैः सदेवासुरमानुषैः ।
शिवाय विष्णुरूपाय विष्णवे शिवरूपिणे । [5]
दक्षयज्ञविनाशाय हरिरुद्राय वै नमः ।
ललाटाक्षाय शर्वाय मीढुषे शूलपाणये ।
पिनाकगोप्त्रे सूर्याय मार्जालीयाय वेधसे ।
प्रसादये त्वां भगवन्सर्वभूतमहेश्वर ।
गणेशं जगतः शंभुं लोककारणकारणम् । [10]
प्रधानपुरुषातीतं परं सूक्ष्मतरं हरम् ।

[(L 1) K1 D5 °कण्ठ (for °ग्रीव) — (L 2) K2-4 Dc D1-3 5 अपि परं (for च परमं) Ś1 K1 कारणं च परं जाने Ś1 K1 हर (for जाने) D2 भुवि, T2 G2 3 प्रभु (for विभुम्) — (L 3) Ś1 K1 3 त्वं (for च) Ś1 K1 3 4 Dc D1-3 T2 G3 गतिर्देव, K2 B1 3 4 Dn1 n2 D4 6 गतिं देव — (L 4) Ś1 K2 3 D1 °मानवैः (for °मानुषैः) — (L 5) K (except K1) Dc D1-3 5 T2 G2 3 शिवरूपाय विष्णवे — (L 6) K4 (marg *sec m*) B1 हरिभद्राय वै, B2 Dc T2 G2 3 हरिरूपाय वै (T2 G2 3 ते) — D2 om lines 7-8 — (L 7) K3 D1 3 शूलपाणिने — (L 8) K3 B (except B2) D1 मार्जनीयाय, T2 G2 3 मगल्याय च — (L 9) Om in K4 D5 Ś1 K3 त्वा (for त्वां) — K2 om (hapl) from the posterior half of line 9 up to 57c S1 K1 3 Dc D1-3 सर्वभूत(Ś1 °देव)नमस्कृत (°त *or* °त), T2 G2 3 सर्वलोकमहेश्वर — (L 10) Dc महेश्वरमुमापतिं (for the posterior half) — (L 11) Ś1 K3 °पुरुषादित्य (K3 °त्य), K1 4 D1-3 °पादित्य ]

— d) Ś1 प्रसीद क्षन्तुमर्हसि

58 a) N (except K4 D1 3 5) भगवन् — b) G4

प्रसादये त्वां भगवन्सर्वभूतनमस्कृत ।
न मे स्यादपराधोऽयं महादेवातिसाहसात् ॥ ५९
कृतो मया यदज्ञानाद्विमर्दोऽयं त्वया सह ।
शरणं संप्रपन्नाय तत्क्षमस्वाद्य शंकर ॥ ६०

वैशंपायन उवाच ।
तमुवाच महातेजाः प्रहस्य वृषभध्वजः ।
प्रगृह्य रुचिरं बाहुं क्षान्तमित्येव फल्गुनम् ॥ ६१

इति श्रीमहाभारते आरण्यकपर्वणि चत्वारिंशोऽध्यायः ॥ ४० ॥

# ४१

भगवानुवाच ।
नरस्त्वं पूर्वदेहे वै नारायणसहायवान् ।
बदर्यां तप्तवानुग्रं तपो वर्षायुतान्बहून् ॥ १
त्वयि वा परमं तेजो विष्णौ वा पुरुषोत्तमे ।
युवाभ्यां पुरुषाग्र्याभ्यां तेजसा धार्यते जगत् ॥ २
शक्राभिषेके सुमहद्धनुर्जलदनिस्वनम् ।
प्रगृह्य दानवाः शस्तास्त्वया कृष्णेन च प्रभो ॥ ३
एतत्तदेव गाण्डीवं तव पार्थ करोचितम् ।
मायामास्थाय यद्ग्रस्तं मया पुरुषसत्तम ।
तूणौ चाप्यक्षयौ भूयस्तव पार्थ यथोचितौ ॥ ४

---

सम्प्राप्तोह महा° — c) Ś1 K1 देव- (for तव)

**59** a) Ś1 S (except G1) स्वा (for त्वा) — b) Ś1 K1 D1 सर्वभूतगुरुं विभु, K2 D2 3 °विभु गुरु, K3 °नमस्कृत; K4 Dc T1 °देवनमस्कृत (T1 °त), B Dn D4 6 G2 °लोकनमस्कृत (B2 G3 °त), D5 °भूतमहेश्वर

**60** ab) B Dn D4-6 [अ]यम् (for यद्), and यस् (for ऽय) — c) B Dn D4 6 प्रतिपन्नाय; G1 मे प्रप°, G4 M1 त्वा (M1 स-)प्रपन्नोस्मि — d) Ś1 K1 2 D1-3 प्रसीदस्वाद्य

**61** Dn3 om 61 — b) T G (except G1) प्रहसन् (for °स्य) — d) K2 D1-3 कौरव, K3 भारत, K4 B Dc Dn (Dn3 om) D4-6 फाल्गुन — After 61, all MSS except Ś1 K1 3 D1 3 ins

175* परिष्वज्य च बाहुभ्यां प्रीतात्मा भगवान्हरः ।
पुनः पार्थं सान्त्वपूर्वमुवाच वृषभध्वजः ।

[(L 1) D2 युज्य सात्वमिद वच (for the posterior half) — (L 2) Om in D2 K4 उवाचेद (for सान्त्वपूर्वम्) K4 सात्वपूर्वमिद वच , Dc D5 उवाचेद वृषध्वज ]

— S (except M1) cont

176* गङ्गाङ्कितजटः शर्वः पार्थस्यामिततेजसः ।
प्रगृह्य रुचिर बाहु वृत्त ताम्रतलाङ्गुलिम् ।
[(L 2) Prior half = 61c ]

Colophon K4 reads it in marg — *Major parvan* Ś1 K1 T G आरण्य. — *Sub parvan* K1 2 B3 4 Dc D3 5 कैरात, B2 Dn D4 6 T1 G2 किरातार्जुनीय, T2 G3 4 किरातार्जुन — *Adhy name* D1 शिवार्जुनयुद्ध, D2 M1 किरातार्जुनीययुद्ध (D2 ° युद्धे मूकवध) — *Adhy no* (figures, words or both) Dn S 39, D1 40 (as in text) — *Śloka no* Dn 84, D1 74

## 41

**1** Ś1 K1 M2 श्रीभगवान्, K2 D1 महादेव उ°, K3 Dc Dn D2-4 6 देवदेव उ°, K4 ईश्वर उ°, B देव (B2 शिव) उ ; T1 रुद्र°, T2 G शकर , M1 देव — $1^b$ = 3 37 $29^b$

**2** b) Ś1 Dc G1 पुरुषोत्तम — d) S1 K2 3 4m Dc D1-3 5 transp तेजसा and धार्यते K4 जगद्व्याप्यातितेजसा

**3** b) Some MSS नि·स्वन — c) Ś1 K1 (before corr) शासास, K2 B1 4 D3 शास्तास, K3 न्यस्तास, M1 शातास (for शस्तास)

**4** a) B1 3 Dn D4 6 transp एतत् and तत् B3 तदेव देवगाडीव, B4 T2 G3 4 एतत्ते देवगाडीव — c) K3 च, T2 G (except G4) तद् (for यद्) Ś1 K1 गुप्त (for ग्रस्त) K4 तदिद असित तात — d) Cnp त्वया (for मया) — Ś1 om 4ef — e) G (except G3) तूणी (for तूणौ) K4 चैव (for चापि) K2 तूणिरावक्षयौ भूय — f) K2 तथोचितौ, Do3 T2 G M1 करो , T1 यथो° — After 4, B D (except D1-3) S ins

177* भविष्यति शरीर च नीरुज कुरुनन्दन ।

प्रीतिमानस्मि वै पार्थ तव सत्यपराक्रम ।
गृहाण वरमस्मत्तः काङ्क्षितं यन्नरर्षभ ॥ ५
न त्वया सदृशः कश्चित्पुमान्मर्त्येषु मानद ।
दिवि वा विद्यते क्षत्रं त्वत्प्रधानमरिंदम ॥ ६

अर्जुन उवाच ।

भगवन्ददासि चेन्मह्यं कामं प्रीत्या वृषध्वज ।
कामये दिव्यमस्त्रं तद्घोरं पाशुपतं प्रभो ॥ ७
यत्तद्ब्रह्मशिरो नाम रौद्रं भीमपराक्रमम् ।
युगान्ते दारुणे प्राप्ते कृत्स्नं संहरते जगत् ॥ ८
दहेयं येन संग्रामे दानवान्राक्षसांस्तथा ।
भूतानि च पिशाचांश्च गन्धर्वानथ पन्नगान् ॥ ९
यतः शूलसहस्राणि गदाश्चोग्रप्रदर्शनाः ।
शराश्चाशीविषाकाराः संभवन्त्यनुमन्त्रिताः ॥ १०
युध्येयं येन भीष्मेण द्रोणेन च कृपेण च ।
सूतपुत्रेण च रणे नित्यं कटुकभाषिणा ॥ ११
एष मे प्रथमः कामो भगवन्भगनेत्रहन् ।
त्वत्प्रसादाद्विनिर्वृत्तः समर्थः स्यामहं यथा ॥ १२

भगवानुवाच ।

ददानि तेऽस्त्रं दयितमहं पाशुपतं महत् ।
समर्थो धारणे मोक्षे संहारे चापि पाण्डव ॥ १३
नैतद्वेद महेन्द्रोऽपि न यमो न च यक्षराट् ।
वरुणो वाथ वा वायुः कुतो वेत्स्यन्ति मानवाः ॥ १४
न त्वेतत्सहसा पार्थ मोक्तव्यं पुरुषे क्वचित् ।
जगद्विनिर्दहेत्सर्वमल्पतेजसि पातितम् ॥ १५

---

**5** $^{a}$) Ś$_1$ K$_{1, 2}$ D$_{1-3, 5}$ राजर्षे, K$_3$ Dc देवर्षे, B Dn D$_{4, 6}$ ते पार्थ K$_4$ प्रीतोह शौर्यभावेन — $^{b}$) B Dn D$_{4, 6}$ भवान् (for तव) N (except Ś$_1$ Dc$_2$ D$_{1, 2}$) M$_1$ °परा क्रम° — $^{c}$) Ś$_1$ K$_1$ वचन मत्त°; K$_2$ D$_{1-3}$ च वर मत्त, K$_3$ वरमस्म त (for वरमस्मत्त) K$_4$ वर गृहाण मत्तस्त्व, G$_4$ वर गृहाण चास्मत्त — $^{d}$) Ś$_1$ K Dc D$_{1-3, 5}$ पुरुषर्षभ (K$_4$ मुनिसत्तम), B Dn D$_{4, 6}$ पुरुषोत्तम (for यन्नरर्षभ)

**6** $^{a}$) B Dn D$_4$ पुरुष (for सदृश°) — $^{b}$) S भारत (for मानद) — $^{c}$) B (except B$_3$) Dn T$_2$ G$_3$ वर्तेते (for विद्यते)

**7** $^{a}$) Hypermetric! Ś$_1$ K$_1$ प्रभो, D$_{2, 5}$ S (except T$_1$ G$_1$ M$_2$) वर (for भगवन्) — $^{cd}$) T$_2$ G transp दिव्य and घोरं Ś$_1$ K$_1$ विभो (for प्रभो)

**8** $^{a}$) Ś$_1$ K$_1$ यत्ते, K$_2$ यत्र, B (except B$_3$) यत्तु (for यत्तद्) — After 8, K$_{1, 4}$ B D (except D$_{1-3}$) ins

178* कर्णभीष्मकृपद्रोणैर्भविता तु महाहव ।
त्वत्प्रसादान्महादेव जयेय तान्यथा युधि ।

[(L 1) B$_2$ सु-, B$_4$ Dc$_2$ D$_5$ मे (for तु) K$_4$ तथान्यैर्योधमत्तमै — After line 1, K$_4$ ins

179* ब्रह्मास्त्रज्ञानसपन्नैर्भविता मे महाहव ।]

**9** $^{a}$) S जयेय (for दहे) K$_4$ सग्रामे दानवाश्चैव — $^{b}$) G$_1$ transp दानवान् and राक्षसान् Ś$_1$ K$_1$ सदा (for तथा) K$_4$ राक्षसाश्च महाप्रभो — $^{c}$) K$_4$ यक्षाश्चापि, S राक्षश्चैव (for भूतानि च)

**10** $^{a}$) B Dn D$_{4, 6}$ M$_2$ यस्मिन्, T G M$_1$ यत्र (for यत) — $^{d}$) K$_1$ [उ]त मन्त्रिते, K$_2$ D$_2$ [अ]नुमन्त्रितान्, K$_4$ B Dn D$_{4, 6}$ M$_2$ [अ]नु(M$_2$ °भि)मन्त्रिते, Dc D$_5$ [अ]ग्निसनिभा°

**11** $^{a}$) Ś$_1$ K$_1$ यदि (for येन) G$_4$ दुर्योधनेन भी°

**12** $^{a}$) K$_3$ परम° (for प्रथम°) — $^{c}$) Ś$_1$ K$_{1, 3}$ Dc D$_5$ विमर्दे वै, K$_{2, 4m}$ B$_3$ D$_{1-3}$ विमर्देषु, B$_1$ विनिर्वृत्त, B$_{4m}$ रिपून्हन्तु; G$_4$ विनिर्मुक्त-, M$_2$ हि निर्वृत्ते

**13** Ś$_1$ T G$_{2-4}$ M$_2$ श्रीभगवान्, K$_{1, 4}$ G$_1$ श्रीभगवानुवाच, K$_2$ रुद्र उ°, K$_3$ D$_{2, 3}$ देवदेव उ°, B Dc$_1$ Dn D$_{4, 6}$ भव उ°, D$_1$ महादेव उ° — $^{a}$) N (except Ś$_1$ K$_1$) T$_1$ M$_2$ ददामि — $^{b}$) Ś$_1$ K$_2$ D$_1$ पर, K$_1$ D$_3$ वर, K$_3$ प्रभो, B Dc Dn D$_{4-6}$ विभो (for महत्) — $^{d}$) Ś$_1$ K$_1$ B (except B$_3$) D (except D$_{1-3, 5}$) M$_1$ चासि, G$_4$ [ऽ]पि च (for चापि)

**14** $^{a}$) K$_3$ S (except G$_4$) तद् (for [ए]तद्) Ś$_1$ K$_1$ सहस्राक्ष° (for महेन्द्रोऽपि) — $^{b}$) Ś$_1$ K$_1$ नापि (for न च) — $^{c}$) K$_{2, 3}$ D$_3$ च, B (except B$_3$) Dn D$_{4, 6}$ [अ]पि (for the first वा) Ś$_1$ K (except K$_4$) D$_{1-3}$ चापि देवाना, T$_1$ वासवो वायु (for वाथ वा वायु) — $^{d}$) T$_1$ न तद् (for कुतो) Ś$_1$ K (except K$_4$) D$_{1-3, 5}$ ज्ञास्यति, Dc ज्ञास्यसि (for वेत्स्यन्ति) K$_2$ D$_{2, 3}$ T$_2$ G मानुषा (for मानवा°),

**15** $^{a}$) T G$_{1-3}$ M त्वया (for त्वेतत्) Ś$_1$ K (except K$_4$) Dc D$_{2, 3, 5}$ वीर, D$_1$ तात (for पार्थ) G$_4$ नाल्पतेजसि वै पार्थ — K$_3$ om 15$^{c}$–16$^{b}$ — $^{c}$) M$_2$ एतद् (for जगद्) B Dn D$_{4, 6}$ M$_2$ वि(M$_2$ हि)नाशयेत्, T G हि निर्दहेत् Ś$_1$ K$_{1, 2}$ Dc D$_{1-3, 5}$ एतद् (for सर्वम्)

अवध्यो नाम नास्त्यस्य त्रैलोक्ये सचराचरे ।
मनसा चक्षुषा वाचा धनुषा च निपात्यते ॥ १६

वैशंपायन उवाच ।

तच्छ्रुत्वा त्वरितः पार्थः शुचिर्भूत्वा समाहितः ।
उपसंगृह्य विश्वेशमधीष्वेति च सोऽब्रवीत् ॥ १७
ततस्त्वध्यापयामास सरहस्यनिवर्तनम् ।
तदस्त्रं पाण्डवश्रेष्ठं मूर्तिमन्तमिवान्तकम् ॥ १८
उपतस्थे महात्मानं यथा त्र्यक्षमुमापतिम् ।
प्रतिजग्राह तच्चापि प्रीतिमानर्जुनस्तदा ॥ १९
ततश्चचाल पृथिवी सपर्वतवनद्रुमा ।
ससागरवनोद्देशा सग्रामनगराकरा ॥ २०
शङ्खदुन्दुभिघोषाश्च भेरीणां च सहस्रशः ।
तस्मिन्मुहूर्ते संप्राप्ते निर्घातश्च महानभूत् ॥ २१
अथास्त्रं जाज्वलद्घोरं पाण्डवस्यामितौजसः ।
मूर्तिमद्विष्ठितं पार्श्वे ददृशुर्देवदानवाः ॥ २२
स्पृष्टस्य च त्र्यम्बकेन फल्गुनस्यामितौजसः ।
यत्किंचिदशुभं देहे तत्सर्वं नाशमेयिवत् ॥ २३
स्वर्गं गच्छेत्यनुज्ञातस्त्र्यम्बकेन तदार्जुनः ।
प्रणम्य शिरसा पार्थः प्राञ्जलिर्देवमैक्षत ॥ २४

ततः प्रभुस्त्रिदिवनिवासिनां वशी
　महामतिर्गिरिश उमापतिः शिवः ।
धनुर्महद्दितिजपिशाचसूदनं
　ददौ भवः पुरुषवराय गाण्डिवम् ॥ २५

ततः शुभं गिरिवरमीश्वरस्तदा
　सहोमया सिततटसानुकन्दरम् ।
विहाय तं पतगमहर्षिसेवितं
　जगाम खं पुरुषवरस्य पश्यतः ॥ २६

इति श्रीमहाभारते आरण्यकपर्वणि एकचत्वारिंशोऽध्यायः ॥ ४१ ॥

---

**16** K$_{3}$ om $16^{ab}$ (cf v l 15), D$_{4}$ om $16^{a}$–$17^{b}$ — a) D (except D$_{1-3\ 6}$, D$_{4}$ om ) G$_{4}$ अत्र (for अस्य) — c) Ś$_{1}$ K$_{1}$ चैव (for वाचा) — d) K$_{3}$ B$_{4}$ D$_{6}$ निपात्तिते, some printed ed (erroneously) निपातयेत्

**17** D$_{4}$ om $17^{ab}$ (cf v l 16) — c) Ś$_{1}$ K$_{1\ 3}$ B D (except D$_{1-3}$) T$_{2}$ G$_{3}$ M$_{2}$ उपसगम्य　Ś$_{1}$ देवेशम् (for विश्वेशम्) — d) S$_{1}$ K$_{1\ 3}$ Dc T$_{2}$ G$_{3}$ वचो, K$_{2\ 4}$ B Dn D$_{1-4\ 6}$ [अ]थ सो (for च सो)

**19** a) K$_{4}$ (m as in text) B Dn D$_{4\ 6}$ च तत्पा(K$_{4}$ त पा)र्थं (for महा°) — b) K$_{4}$ (m as in text) तदस्त्रं त्र्यम्बके पुरा — cd) S$_{1}$ K (K$_{4}$ marg ) Dc D$_{1-3\ 6}$ पार्थ (for चापि), and अरिमर्दन (for अर्जुनस्तदा)

**21** a) S$_{1}$ B$_{3}$ Dn$_{2}$ D$_{1\ 6}$ °निर्घोषा, K$_{1\ 4}$ G$_{2}$ °निर्घोषो, Dc T G$_{1\ 3}$ M$_{1}$ °घोषश्च, D$_{3\ 4\ 6}$ °घोषाश्च — c) M$_{2}$ निर्घात (for संप्राप्ते) — d) K$_{4}$ भुवि (for अभूत्)　B Dn D$_{4\ 6}$ निर्घाताश्चापतन्मुहु°, M$_{2}$ तदा समभवद् भृश

**22** a) D$_{1\ 3}$ प्राज्वलद् — b) S$_{1}$ K$_{1}$ महात्मन , K$_{2\ 3}$ Dc D$_{1-3\ 5}$ महौजस° (for [अ]मितौजस ) — Ś$_{1}$ K$_{1}$ om (hapl.) $23^{c}$–$34^{b}$, K$_{3}$ om (hapl ) $22^{c}$–$23^{b}$ — c) B Dn D$_{4\ 6}$ वै स्थित, D$_{1-3,\ 5}$ धिष्ठित (for विष्ठित)　K$_{4}$ Dc$_{1}$ D$_{1\ 2}$ T$_{3}$ G$_{3}$ पार्थे (for पार्श्वे)　K$_{3}$ मूर्तिमतस्थित पार्श्वे.

**23** Ś$_{1}$ K$_{1}$ om 23, K$_{3}$ om $23^{ab}$ (cf v.l 22) — a) B Dn D$_{4\ 6}$ स्पृष्टस्य त्र्यम्बकेनाथ — b) N (Ś$_{1}$ K$_{1}$ om ) फाल्गुन° — d) K$_{3\ 4}$ Dc$_{2}$ Dn$_{3}$ T G$_{2\ 3}$ नाशमेयिवान्, B (except B$_{3}$) Dn$_{1}$ D$_{4}$ °मीयिवत् (Dn$_{1}$ °वान्), D$_{6}$ °मागत　G$_{4}$ तत्सर्वं द्राग्विनीनशत्

**24** Ś$_{1}$ K$_{1}$ om $24^{ab}$ (cf v l 22) — a) S (except M$_{3}$) स्वर्गंच्छेत्यभ्यनुज्ञात° — b) K$_{2\ 3}$ Dc D$_{1-3\ 5}$ T$_{1}$ महात्मना, B$_{3}$ T$_{2}$ G M$_{2}$ त(G$_{2\ 4}$ य)थार्जुन — c) K$_{4}$ Dn D$_{6\ 8}$ T G M$_{2}$ राजन्, B D$_{4}$ M$_{1}$ देव (for पार्थ ) — d) S भवम् (for देवम्)

**25** K$_{1}$ D$_{2}$ om 25 — a) K$_{4}$ B (except B$_{3}$) Dc D$_{1\ 4}$ G$_{1}$ त्रिदश° (for त्रिदिव°) — b) K$_{4}$ B$_{3}$ M °द्युतिर् (for °मतिर्) — c) T$_{2}$ G$_{3\ 4}$ दीप्त°, G$_{1}$ मत्त°, G$_{2}$ दैत्य° (for दितिज°) — d) K$_{4}$ B$_{2}$ हर , T$_{2}$ G$_{2-4}$ वर, G$_{1}$ M$_{1}$ पुन (for भव°)

**26** a) Ś$_{1}$ K (except K$_{4}$) D$_{2\ 3}$ अव्ययस्, D$_{1}$ अगात् (for ईश्वरस्) — c) S$_{1}$ K$_{1}$ प्रवर°, K$_{3}$ ज्वलन°, K$_{3\ 4}$ D$_{2\ 3}$ पवन° (for पतग°)

Colophon — *Major parvan*　Ś$_{1}$ K$_{1}$ Dn$_{3}$ T G$_{2-4}$ आरण्य — *Sub parvan*　K$_{1}$ B$_{1\ 3\ 4}$ Dc D$_{5}$ कैरात, B$_{3}$ Dn$_{1}$ n$_{3}$ D$_{4\ 6}$ T G$_{1-3}$ M$_{1}$ किरातार्जुनीय — *Adhy name*

# ४२

वैशंपायन उवाच ।

तस्य संपश्यतस्त्वेव पिनाकी वृषभध्वजः ।
जगामादर्शनं भानुर्लोकस्येवास्तमेयिवान् ॥ १
ततोऽर्जुनः परं चक्रे विस्मयं परवीरहा ।
मया साक्षान्महादेवो दृष्ट इत्येव भारत ॥ २
धन्योऽस्म्यनुगृहीतोऽस्मि यन्मया त्र्यम्बको हरः ।
पिनाकी वरदो रूपी दृष्टः स्पृष्टश्च पाणिना ॥ ३
कृतार्थं चावगच्छामि परमात्मानमात्मना ।
शत्रूंश्च विजितान्सर्वान्निर्वृत्तं च प्रयोजनम् ॥ ४
ततो वैडूर्यवर्णाभो भासयन्सर्वतो दिशः ।
यादोगणवृतः श्रीमानाजगाम जलेश्वरः ॥ ५
नागैर्नदैर्नदीभिश्च दैत्यैः साध्यैश्च दैवतैः ।
वरुणो यादसां भर्ता वशी तं देशमागमत् ॥ ६
अथ जाम्बूनदवपुर्विमानेन महार्चिषा ।
कुबेरः समनुप्राप्तो यक्षैरनुगतः प्रभुः ॥ ७
विद्योतयन्निवाकाशमद्भुतोपमदर्शनः ।
धनानामीश्वरः श्रीमानर्जुनं द्रष्टुमागतः ॥ ८
तथा लोकान्तकृच्छ्रीमान्यमः साक्षात्प्रतापवान् ।
मूर्त्यमूर्तिधरैः सार्धं पितृभिर्लोकभावनैः ॥ ९
दण्डपाणिरचिन्त्यात्मा सर्वभूतविनाशकृत् ।
वैवस्वतो धर्मराजो विमानेनावभासयन् ॥ १०
त्रीँल्लोकान्गुह्यकांश्चैव गन्धर्वांश्च सपन्नगान् ।
द्वितीय इव मार्तण्डो युगान्ते समुपस्थिते ॥ ११
भानुमन्ति विचित्राणि शिखराणि महागिरेः ।
समास्थायार्जुनं तत्र ददृशुस्तपसान्वितम् ॥ १२
ततो मुहूर्ताद्भगवानैरावतशिरोगतः ।
आजगाम सहेन्द्राण्या शक्रः सुरगणैर्वृतः ॥ १३
पाण्डुरेणातपत्रेण ध्रियमाणेन मूर्धनि ।

---

$K_2$ $B_1$ $D_1$ पाशुपतास्त्रप्राप्ति°, $K_4$ कैरातवरप्रदान, $D_2$ इन्द्रकीले देवदेवात्पाशुपतास्त्रप्राप्ति°, $D_3$ अर्जुनस्य पाशुपतास्त्रप्राप्ति°, $T_2$ $G_{1-3}$ M दिव्यास्त्रलाभ° ($M_1$ दिव्यास्त्रदान) — *Adhy no* figures, words or both) Dn S 40, $D_1$ 41 (as in text) — *Śloka no* $Dn_1$ $n_3$ 29, $Dn_2$ $D_1$ 28

## 42

**1** $^{a}$) $T_1$ $G_2$ त (for स) $Ś_1$ $K_1$ $D_{2\ 3}$ स्त्वेव; $K_3$ तत्र (for स्त्वेव) — $^{b}$) $T_{1\ 2}$ (before corr) $G_{3\ 4}$ M गोवृष° (for वृषभ) — $^{d}$) K B Dn $D_{4\ 6}$ ईयिवान् (for एयि)

**2** $^{d}$) S इत्यसकृत्प्रभु° ($G_4$ °कृद् भुवन्)

**4** $^{a}$) $K_{3\ 4}$ (*sup lin* as in text) कृतास्त्र — $^{b}$) B Dn $D_{4\ 6}$ आहवे (for आत्मना) $D_2$ यत्स्पृष्ट° परमात्मना — $^{c}$) $T_1$ विनिवृत्य तु तान्सर्वान् — $^{d}$) $K_1$ निसिर्द्धि (sic) $K_{3\ 4}$ $D_{1\ 2\ 4\ 6}$ $T_1$ $G_2$ M निवृत्त — After 4, $K_1$ B D (except $D_{1-3}$) $T_2$ (marg *sec m*) ins

180* इत्येव चिन्तयानस्य पार्थस्यामिततेजस ।

**5** $^{a}$) Some MSS वैदूर्य — $^{b}$) $S_1$ शम, S द्योत° (for भास°) $T_1$ $G_{2\ 4}$ $M_1$ दिश

**6** $^{b}$) S मरुद्गणै° (for च दैवतै) — $^{d}$) $Ś_1$ $K_1$ आगत; $B_3$ $D_1$ आगत (for आगमत्)

**7** $^{d}$) $K_4$ यक्षरक्षोगणैर्वृत°

**8** $^{c}$) $T_2$ G (except $G_1$) अधिप° (for ईश्वर) $K_4$ साक्षात् (for श्रीमान्) — $^{d}$) $T_1$ द्रुतम् (for द्रष्टुम्) $S_1$ $K_{2\ 3}$ $D_{1-3}$ आगमत्; $K_1$ आययौ (for आगत)

**9** $^{a}$) $K_{1\ 2}$ $D_3$ $M_2$ ततो (for तथा) $K_{2\ 3}$ $D_{1\ 3}$ $T_2$ G (except $G_1$) लोकान्तक (for °कृत्) — $^{c}$) $Ś_1$ $K_{1\ 2\ 4}$ $B_4$ Dn $D_{2\ 6}$ मर्त्यमूर्ति°; $K_3$ मूर्तामूर्त, $B_{1-3}$ मृत्युर्मूर्ति°, मूर्त्यमूर्ते°, $D_5$ मूर्त्यमूर्त्ये°

**10** $^{d}$) $D_2$ $T_2$ $G_{1\ 3\ 4}$ [ए]व (for [अ]व)

**11** $^{b}$) $K_{2\ 3}$ Dc अथ, T G चैव, $M_1$ अपि (for स) — $^{c}$) $Ś_1$ $K_1$ S (except $G_1$) मार्तंडो

**12** $^{a}$) $S_1$ च (for वि) $K_{3\ 4}$ B D (except $D_{1-3}$), M ते भानुमति चित्राणि.

**13** $^{b}$) $Ś_1$ $K_{1\ 2}$ $D_{2\ 3}$ ऐरावण° — $^{c}$) $Ś_1$ $D_1$ महेंद्राण्या

**14** $^{a}$) = 3 44 17$^{a}$ S पाडरेणा. — $^{c}$) $K_2$ तारकाराज°, $K_3$ इंदु, $K_4$ (marg *sec m*) °षद्र° (orig gloss)

शुशुभे तारकाराजः सितमभ्रमिवास्थितः ॥ १४
संस्तूयमानो गन्धर्वैर्ऋषिभिश्च तपोधनैः ।
शृङ्गं गिरेः समासाद्य तस्थौ सूर्य इवोदितः ॥ १५
अथ मेघस्वनो धीमान्व्याजहार शुभां गिरम् ।
यमः परमधर्मज्ञो दक्षिणां दिशमास्थितः ॥ १६
अर्जुनार्जुन पश्यास्माँल्लोकपालान्समागतान् ।
दृष्टिं ते वितरामोऽद्य भवानर्हो हि दर्शनम् ॥ १७
पूर्वर्षिरमितात्मा त्वं नरो नाम महाबलः ।
नियोगाद्ब्रह्मणस्तात मर्त्यतां समुपागतः ।
त्वं वासवसमुद्भूतो महावीर्यपराक्रमः ॥ १८
क्षत्रं चाग्निसमस्पर्शं भारद्वाजेन रक्षितम् ।
दानवाश्च महावीर्या ये मनुष्यत्वमागताः ।
निवातकवचाश्चैव संसाध्याः कुरुनन्दन ॥ १९
पितुर्ममांशो देवस्य सर्वलोकप्रतापिनः ।
कर्णः स सुमहावीर्यस्त्वया वध्यो धनंजय ॥ २०
अंशाश्च क्षितिसंप्राप्ता देवगन्धर्वरक्षसाम् ।
त्वया निपातिता युद्धे स्वकर्मफलनिर्जिताम् ।
गतिं प्राप्स्यन्ति कौन्तेय यथास्वमरिकर्शन ॥ २१
अक्षया तव कीर्तिश्च लोके स्थास्यति फल्गुन ।
त्वया साक्षान्महादेवस्तोषितो हि महामृधे ।
लघ्वी वसुमती चापि कर्तव्या विष्णुना सह ॥ २२
गृहाणास्त्रं महाबाहो दण्डमप्रतिवारणम् ।
अनेनास्त्रेण सुमहत्त्वं हि कर्म करिष्यसि ॥ २३
प्रतिजग्राह तत्पार्थो विधिवत्कुरुनन्दनः ।
समन्त्रं सोपचारं च समोक्षं सनिवर्तनम् ॥ २४
ततो जलधरश्यामो वरुणो यादसां पतिः ।
पश्चिमां दिशमास्थाय गिरमुच्चारयन्प्रभुः ॥ २५
पार्थ क्षत्रियमुख्यस्त्वं क्षत्रधर्मे व्यवस्थितः ।
पश्य मां पृथुताम्राक्ष वरुणोऽस्मि जलेश्वरः ॥ २६
मया समुद्यतान्पाशान्वारुणाननिवारणान् ।

S नागराजस्थ (M₂ तारकानाथ) — ᵈ) Ś1 K1 ₂ Dc1 D1–3 ₅ [आ]श्रित, B1 ₄ D4 ₆ T2 G3 M2 स्थित° (for [आ]स्थित°) K3 सितमभ्रश्रियान्वित, K4 सिताभ्रमिव चाश्रित

17 ᵇ) K (except K4) Dc D1–3 ₅ इहा° (for समा°) — ᵈ) K4 अर्होथ, B D (except D1–3) T2 G3 अर्हति (for अर्हो हि) K (except K3) D1 T2 (by corr) G3 दर्शने

18 ᶜ) K1 ₂ B Dn D4 ₆ G1 ₂ ₄ त्वया च (G1 ₂ ₄ स) वसुसभूतो, T1 त्व वा वसुपु सभूतो, T2 G3 त्वया वसुश्च सभूतो — ᶠ) K2 B Dn D4 ₆ T1 G M1 महावीर्य° (T1 M1 °र्यं) पितामह, K3 महाबलपराक्रम° — After 18, K1 ₂ B Dc Dn D4–6 T2 G (except G1) ins

181* भीष्म परमधर्मात्माससाध्यश्च रणेऽनघ ।
[G2 ₄ जेतव्य° (for ससाध्य°) Dc T2 (before corr) G4 त्वया (for रणे)]

On the other hand, K4 D1–3 ins after 18

182* त्वया सह समुद्भूतो महावीर्य° पितामह ।

19 ᵈ) K3 B4 मनुष्यत्वमुपागता°, D2 ये मानुष्यमुपागता° — ᶠ) S1 K1 ससख्या°, K2 B Dn D4 ₆ दानवा°, D3 त्वत्साध्या (for ससाध्या)

20 ᵃ) D1 ₃ पितुर्मम सुतश्चैव — ᶜ) K2 ₃ B Dn D4 ₆ च, T1 तु (for स) K4 Dc1 D1–3 तु (for सु) Dc2 D5 सु(D5 तु)महातेजास

21 ᵃ) Ś1 K1 ₃ Dc D1–3 ₅ T1 क्षितिसभूता° — ᵇ) K3 B2 Dn D4 ₆ °दानव° — ᵈ) D5 T G1 ₄ °निर्जिता°, G3 M2 °निर्जितान् — ᵉ) S1 K1 ₃ Dc D1–3 ₅ धर्मज्ञ, K4 दुर्धर्ष (for कौन्तेय) — ᶠ) K2 ₃ D (except D5) यथास्वाम् K4 अरिसर्दन, a few MSS °कर्षण

22 ᵃ) T1 G M1 अक्षया तावकी (T1 G4 °ती, G2 °का) कीर्ति — ᵇ) S1 K1 यास्यति (for स्था°) Ś1 K2 ₃ B D फाल्गुन, K4 पाडव — ᵈ) T2 G3 ₄ महाहवे

24 Before 24, most N MSS ins वैश° उ° — ᵃ) T2 G (except G4) पार्थोऽपि (for तत्पार्थो) — ᵇ) Some MSS °नदन — ᶜ) T2 (before corr) G (except G3) सोपरोध (for °चार) — ᵈ) K1 Dn1 विनिवर्तन, T2 G M2 स(G1 च)निवर्तन K2–4 B Dn2 D3 ₄ ₆ समोक्षवि (K3 ₄ D3 °स)निवर्तन

25 ᵈ) Ś1 उद्वारयत्, K3 चोदीरयत्, B3 M2 उच्चारयत् (for उच्चारयन्)

27 ᵇ) S1 K1 दारुणान्, K2 ₃ वरुणान् K2 ₃ B Dn D4 ₆ T2 G3 अ(B2 वि)निवारितान्, K4 अतिमन्त्रितान्, Dc

प्रतिगृह्णीष्व कौन्तेय सरहस्यनिवर्तनान् ॥ २७
एभिस्तदा मया वीर संग्रामे तारकामये ।
दैतेयानां सहस्राणि संयतानि महात्मनाम् ॥ २८
तस्मादिमान्महासत्त्व मत्प्रसादात्समुत्थितान् ।
गृहाण न हि ते मुच्येदन्तकोऽप्याततायिनः ॥ २९
अनेन त्वं यदास्त्रेण संग्रामे विचरिष्यसि ।
तदा निःक्षत्रिया भूमिर्भविष्यति न संशयः ॥ ३०
ततः कैलासनिलयो धनाध्यक्षोऽभ्यभाषत ।
दत्तेष्वस्त्रेषु दिव्येषु वरुणेन यमेन च ॥ ३१
सव्यसाचिन्महाबाहो पूर्वदेव सनातन ।
सहास्माभिर्भवाञ्श्रान्तः पुराकल्पेषु नित्यशः ॥ ३२
मत्तोऽपि त्वं गृहाणास्त्रमन्तर्धानं प्रियं मम ।
ओजस्तेजोद्युतिहरं प्रस्वापनमरातिहन् ॥ ३३
ततोऽर्जुनो महाबाहुर्विधिवत्कुरुनन्दनः ।
कौबेरमपि जग्राह दिव्यमस्त्रं महाबलः ॥ ३४
ततोऽब्रवीद्देवराजः पार्थमक्लिष्टकारिणम् ।
सान्त्वयञ्श्लक्ष्णया वाचा मेघदुन्दुभिनिस्वनः ॥ ३५
कुन्तीमातर्महाबाहो त्वमीशानः पुरातनः ।
परां सिद्धिमनुप्राप्तः साक्षाद्देवगतिं गतः ॥ ३६
देवकार्यं हि सुमहत्त्वया कार्यमरिंदम ।
आरोढव्यस्त्वया स्वर्गः सज्जीभव महाद्युते ॥ ३७
रथो मातलिसंयुक्त आगन्ता त्वत्कृते महीम् ।
तत्र तेऽहं प्रदास्यामि दिव्यान्यस्त्राणि कौरव ॥ ३८
तान्दृष्ट्वा लोकपालांस्तु समेतान्गिरिमूर्धनि ।
जगाम विस्मयं धीमान्कुन्तीपुत्रो धनंजयः ॥ ३९
ततोऽर्जुनो महातेजा लोकपालान्समागतान् ।

---

$D_5$ अतिदारुणान्, $D_{1-3}$ अरिवारणा($D_3$ °रिता)न् — [d]) $Ś_1$ $K_1$ $G_2$ $M_3$ °निवर्तन

**28** [d]) $K_4$ S महौजसा (for महात्मनाम्)

**29** [b]) $K_1$ समुद्धृत, $K_4$ समुद्यतान् (for समुत्थि ) $K_2$ B Dn $D_{1-4}$ $_6$ मत्प्रसादसमुत्थि($K_2$ Dn छ्रि ! )तान्, $K_3$ मत्प्रसादमुपस्थितान् — [c]) $T_1$ [इ]ह न, $T_2$ $G_3$ [ए]भिर्न; $G_2$ $_4$ [ए]हि न, $M_2$ (by transp ) हि न — [d]) $Ś_1$ $K_1$ $_4$ $D_{1-3}$ जरातिग , $K_3$ प्रजातक· (for [आ]ततायिन )

**30** After 30, T G ins

183* ततस्तान्वारुणान्दिव्यानस्त्रानस्त्रविदा वर· ।
प्रतिजग्राह विधिवद्वरुणाद्भासविस्तरा ।

**31** [d]) $Ś_1$ $K_1$ $_3$ Dc $D_{1-3}$ transp वरुणेन and यमेन — After 31, $K_2$ B D (except $D_{1-3}$) ins

184* प्रीतोऽहमपि ते प्राज्ञ पाण्डवेय महाबल ।
त्वया सह समागम्य अजितेन तथैव च ।

**32** $D_1$ om $32^c$–$33^b$ — After 32, $K_1$ $_2$ B D (except $D_{1-3}$) ins

185* दर्शनात्ते स्विद दिव्य प्रदिशामि नरर्षभ ।
अमनुष्यान्महाबाहो दुर्जयानपि जेष्यसि ।

**33** $D_1$ om $33^{ab}$ (cf v l. 32) — [a]) $K_2$ B Dn $D_4$ $_6$ मत्तश्चैव भवानाशु — $K_2$ B Dn $D_4$ $_6$ ins after $33^a$ $Dc_2$ (om line 1 and *repeating* $33^b$ after line 3) ins after $33^{ab}$

186* गृहाणत्वस्त्रमनुत्तमम् ।
अनेन त्वमनीकानि धार्तराष्ट्रस्य धक्ष्यसि ।
तदिद प्रतिगृह्णीष्व

— [c]) $K_2$ B D (except $D_{1-3}$ $_5$) °कर — [d]) $Ś_1$ पुरातन, $K_1$ अरातिन, $K_2$ B Dc Dn $D_4$ $_6$ अरातिनुत्, $D_5$ अमित्रहन् — After 33, $K_1$ $_2$ B D (except $D_{1-3}$) ins

187* महात्मना शंकरेण त्रिपुर निहत यदा ।
तदैतदस्त्र निर्मुक्त येन दग्धा महासुरा· ।
त्वदर्थमुद्यत चेद मया सत्यपराक्रम ।
त्वमर्हो धारणे चास्य मेरुप्रतिमगौरव ।

**34** [b]) Some MSS नदन — [c]) $K_2$ $B_2$ $_3$ $Dn_2$ $n_3$ $D_4$ $_6$ अभि·, $K_3$ $B_1$ $_4$ $Dn_1$ अधि (for अपि)

**35** [d]) $T_2$ G दिव्य , some MSS °नि·स्वन·

**36** Before 36, a few MSS *ins* इन्द्र उ° (resp इन्द्र·) — [b]) $Ś_1$ $K_1$ $_4$ $B_1$ $_4$ $D_3$ ईशो न (for ईशान·) $B_3$ प्रतापवान् (for पुरातन·) — [c]) $K_4$ त्व हि (for परा) — [d]) $K_3$ Dc $D_5$ तस्माद् (for साक्षाद्)

**37** [a]) $Ś_1$ $K_1$ च, $K_2$ B D (except $D_{1-3}$) तु (for हि) $K_2$ महता (for सुमहत्)

**38** [b]) $K_3$ G (except $G_3$) आगतस् S (except $M_2$) मम (for महीम्) — [d]) S सर्वाणि (for दिव्यानि) $K_3$ Dc $D_5$ सर्वश (for कौरव)

**40** $K_4$ om $40^{ab}$ — [a]) $K_3$ Dc $D_5$ तत· प्रणम्य तान्सर्वान्

पूजयामास विधिवद्वाग्भिरद्भिः फलैरपि ॥ ४०
ततः प्रतिययुर्देवाः प्रतिपूज्य धनंजयम् ।
यथागतेन विबुधाः सर्वे काममनोजवाः ॥ ४१
ततोऽर्जुनो मुदं लेभे लब्धास्त्रः पुरुषर्षभः ।
कृतार्थमिव चात्मानं स मेने पूर्णमानसः ॥ ४२

इति श्रीमहाभारते आरण्यकपर्वणि द्विचत्वारिंशोऽध्यायः ॥ ४२ ॥ समाप्तं कैरातपर्व ॥

## ४३

वैशंपायन उवाच ।
गतेषु लोकपालेषु पार्थः शत्रुनिबर्हणः ।
चिन्तयामास राजेन्द्र देवराजरथागमम् ॥ १
ततश्चिन्तयमानस्य गुडाकेशस्य धीमतः ।
रथो मातलिसंयुक्त आजगाम महाप्रभः ॥ २
नभो वितिमिरं कुर्वञ्जलदान्पाटयन्निव ।
दिशः संपूरयन्नादैर्महामेघरवोपमैः ॥ ३
असयः शक्तयो भीमा गदाश्चोग्रप्रदर्शनाः ।
दिव्यप्रभावाः प्रासाश्च विद्युतश्च महाप्रभाः ॥ ४
तथैवाशनयस्तत्र चक्रयुक्ता हुडागुडाः ।
वायुस्फोटाः सनिर्घाता बर्हिमेघनिभस्वनाः ॥ ५
तत्र नागा महाकाया ज्वलितास्याः सुदारुणाः ।
सिताभ्रकूटप्रतिमाः संहताश्च यथोपलाः ॥ ६
दश वाजिसहस्राणि हरीणां वातरंहसाम् ।
वहन्ति यं नेत्रमुषं दिव्यं मायामयं रथम् ॥ ७
तत्रापश्यन्महानीलं वैजयन्तं महाप्रभम् ।

---

**41** b) Ś1 K1 प्रतिमुच्य, K2 °मानं, K3 B3 D4 6 °गृह्य, Dc Dn D1-3 5 °मान्य — d) D1 2 G1 2 M2 काम (for काम)

**42** a) T2 G (except G1) महाराज (for मुद लेभे) — b) K3 लब्धार्थ° A few MSS °र्षभ — c) K1 3 कृतास्त्रम् Ś1 K1 3 Dc D2 3 5 एव, K2 4 B Dn D4 6 अथ, T1 G1 M2 इति (for इव) K1 om च — d) Ś1 K1 3 4 Dc D1-3 5 मेने स° (for स मेने) K2 B1 3 Dn D4 6 °मानसं

Colophon — *Major parvan* Ś1 K1 T G आरण्य — *Sub-parvan* Ś1 K B1 3 4 Dc Dn D2-6 कैरात (to it all MSS except B1 3 4 add समाप्त), B2 किरातार्जुनीय — *Adhy name* D1 वरप्रदान°, D3 इन्द्रवरुणधनदयमसमागमे अस्त्राणां लब्धि°, T2 G1-3 M1 लोकपालास्त्रदर्शन (G1 M1 °प्रदान) — *Adhy no* (figures, words or both) Dn S 41, D1 42 (as in text) — *Śloka no* Dn 49, D1 43

### 43

**1** d) K2 B (except B3) Dn D4 6 °रथ प्रति, K4 °समागम

**2** a) T2 G (except G1) तस्य (for ततश्च)

**3** a) B1 T G ततो (for नभो) — c) K1 च (for स°)

**4** a) K (except K2) D2 3 पाशाश्च D1 दिव्याश्च वारुणा पाशा°, G4 दिव्य° प्रसादात्पाशाश्च — d) T2 G3 ऋष्टयश्च, G2 4 शक्तयश्च

**5** a) K1 2 B2 Dn D4 6 T2 G (except G1) चैव (for तत्र) — b) T2 G3 शक्तियुक्ता K1 Dc2 हलागुडा°, K3 गुडागुला°, B Dn D4 6 T2 (after corr) G3 तुलागुडा, Dc1 D1 2 5 हुलागुडा°, T2 (before corr) G1 2 4 M हुलाहुला° — d) Cf 3 45 4d K2 B Dn D4 6 महामेघस्वनास्तथा, K3 वह्निज्वालाविभीषणा, K4 D3 बर्हिर्मेघनिभा° (K4 °स्वना)स्तथा, Dc D5 प्रावृण्मेघनिभस्वना°, S शक्रमेघनिभास्तथा (G1 2 °दा), text as in Ś1 K1 D1 — Cf Hopkins, *JAOS* 14 (1890) clxi

**6** d) S1 K1 D3 सहिताश्च Ś1 K1 4 B1 2 D1-3 महाबला°, K2 3 B3 Dc Dn D4-6 तथोपला°, M2 महोपला°

**7** c) N (except K1 Dc1) ये (for य) — d) Dc दिव्य च परम सुख

**8** a) K4 तदा पार्थ°, S महीपाल (for महानील) — d) S (except M2) कनकभूषित

ध्वजमिन्दीवरश्यामं वंशं कनकभूषणम् ॥ ८
तस्मिन्रथे स्थितं सूतं तप्तहेमविभूषितम् ।
दृष्ट्वा पार्थो महाबाहुर्देवमेवान्वतर्कयत् ॥ ९
तथा तर्कयतस्तस्य फल्गुनस्याथ मातलिः ।
संनतः प्रश्रितो भूत्वा वाक्यमर्जुनमब्रवीत् ॥ १०
भो भो शक्रात्मज श्रीमाञ्शक्रस्त्वां द्रष्टुमिच्छति ।
आरोहतु भवाञ्शीघ्रं रथमिन्द्रस्य संमतम् ॥ ११
आह माममरश्रेष्ठः पिता तव शतक्रतुः ।
कुन्तीसुतमिह प्राप्तं पश्यन्तु त्रिदशालयाः ॥ १२
एष शक्रः परिवृतो देवैर्ऋषिगणैस्तथा ।
गन्धर्वैरप्सरोभिश्च त्वां दिदृक्षुः प्रतीक्षते ॥ १३
अस्माल्लोकाद्देवलोकं पाकशासनशासनात् ।
आरोह त्वं मया सार्धं लब्धास्त्रः पुनरेष्यसि ॥ १४

अर्जुन उवाच ।

मातले गच्छ शीघ्रं त्वमारोहस्व रथोत्तमम् ।
राजसूयाश्वमेधानां शतैरपि सुदुर्लभम् ॥ १५
पार्थिवैः सुमहाभागैर्यज्वभिर्भूरिदक्षिणैः ।
दैवतैर्वा समारोढुं दानवैर्वा रथोत्तमम् ॥ १६
नातप्ततपसा शक्य एष दिव्यो महारथः ।
द्रष्टुं वाप्यथ वा स्प्रष्टुमारोढुं कुत एव तु ॥ १७
त्वयि प्रतिष्ठिते साधो रथस्थे स्थिरवाजिनि ।
पश्चादहमथारोक्ष्ये सुकृती सत्पथं यथा ॥ १८

वैशंपायन उवाच ।

तस्य तद्वचनं श्रुत्वा मातलिः शक्रसारथिः ।
आरुरोह रथं शीघ्रं हयान्येमे च रश्मिभिः ॥ १९
ततोऽर्जुनो हृष्टमना गङ्गायामाप्लुतः शुचिः ।
जजाप जप्यं कौन्तेयो विधिवत्कुरुनन्दनः ॥ २०
ततः पितॄन्यथान्यायं तर्पयित्वा यथाविधि ।
मन्दरं शैलराजं तमाप्रष्टुमुपचक्रमे ॥ २१
साधूनां धर्मशीलानां मुनीनां पुण्यकर्मणाम् ।
त्वं सदा संश्रयः शैल स्वर्गमार्गाभिकाङ्क्षिणाम् ॥ २२
त्वत्प्रसादात्सदा शैल ब्राह्मणाः क्षत्रिया विशः ।
स्वर्गं प्राप्ताश्चरन्ति स्म देवैः सह गतव्यथाः ॥ २३
अद्रिराज महाशैल मुनिसंश्रय तीर्थवन् ।

---

**9** [b]) Ś$_1$ K$_1$ मातलिं हेमभूषित, K$_3$ $_4$ Dc D$_5$ मातलिं हेम(K$_4$ स्वर्ण)भूषण; D$_1$ तप्तहेमविभूषण, S हेममाला(T$_1$ M °जाल)विभूषित — [d]) S देवराजमतर्क

**10** [b]) N (except Ś$_1$ K$_1$ $_3$) फाल्गुनस्य S (except M$_2$) स (for [अ]थ) — [c]) K$_2$ Dn$_3$ n$_3$ प्रस्थितो; K$_3$ $_4$ B$_1$ $_4$ D$_{1-3}$ G$_1$ °सृतो, D$_5$ यतो (for °श्रितो)

**11** Before 11, all MSS except D$_3$ T$_1$ G$_4$ ins मातलिरु (resp मातलि) — [a]) Ś$_1$ K$_1$ $_3$ $_4$ B$_3$ $_4$ Dc Dn D$_{1-3}$ T G$_3$ $_4$ श्रीमान् (as in text), the rest श्रीमन्

**12** [a]) Ś$_1$ K$_1$ Dc Dn$_3$ त्वाम् (for माम्) — [d]) Ś$_1$ K$_3$ M$_1$ त्रिदिवालया

**13** [b]) D$_1$ S (except T$_2$ G$_3$) सर्षि° (for ऋषि)

**14** [c]) K$_2$ B$_2$ $_3$ D$_5$ S आरोहस्व, D$_5$ हय (for ह त्व)

**15** [a]) K$_2$ B (except B$_3$) Dc$_1$ D$_1$ $_3$ शीघ्र त्वम् (for शीघ्रं त्वम्) — [b]) Ś$_1$ K$_1$ $_3$ Dc D$_{1-3}$ $_5$ आरोह रथमुत्तम; K$_2$ त्वमारोह रथोत्तमं

**16** [c]) Ś$_1$ K$_1$ दानवैश्च, K$_3$ D$_4$ T$_1$ G$_4$ देवसैर्वा T$_2$ G दुरारोह (for समारोढुं) — [d]) Ś$_1$ K$_1$ दैवतैर्वा S महारथ (M °थै°)

**17** M$_2$ om 17$^{ab}$ — [a]) Ś$_1$ K$_3$ D$_3$ शक्यम् — [b]) S (except T$_2$ G$_3$, M$_2$ om) ह्येष (for एष) Ś$_1$ K$_1$ $_3$ Dc D$_{1-3}$ $_5$ रथोत्तम (for महा°) — [d]) K$_2$ Dn D$_4$ M$_1$ च, B (except B$_2$) वा, T G हि (for तु)

**18** [b]) D$_4$ $_6$ T G$_2$ $_3$ स्थितवाजिनि, M$_2$ रथवाहिनि G$_1$ रथस्थे धृतवाहिन — [d]) G (except G$_3$) सत्फल (for सत्पथ) Ś$_1$ K$_1$ विमान सुकृती यथा

**19** [d]) K$_3$ D$_5$ सयम्य, K$_4$ योज्यैव, S (except M$_2$) जग्राह (for येमे च)

**21** [a]) K$_4$ पितॄन्पूज्य (for तत पितॄन्) — [b]) Ś$_1$ K$_1$ $_3$ Dc$_2$ D$_5$ च देवता (for यथा) — [c]) K$_4$ M$_2$ शैलराजान (for राज त)

**22** [a]) K$_2$ $_4$ Dn D$_2$ $_3$ T G पुण्य (for धर्म)

**23** [a]) K$_4$ D$_{1-3}$ S (except M$_2$) महा (for सदा) — [cd]) S (except M$_2$) अपि (for सह) K$_3$ प्राप्नुवन्ति गतिं पुण्यामिह तप्त्वा परं तप

**24** [b]) T$_1$ G$_1$ मुनिसश्रित Ś$_1$ K (except K$_1$) B$_1$ D$_3$ $_5$ $_6$ तीर्थवत्; D$_1$ G$_2$ $_4$ M$_2$ °वान् — [c]) Ś$_1$ K$_1$ $_2$ B$_1$ Dn D$_2$ $_3$ $_5$ $_6$ [आ]मन्त्रयित्वा Ś$_1$ T$_1$ M$_2$ त्वा (for त्वा) — [d])

गच्छाम्यामन्त्रयामि त्वां सुखमस्म्युषितस्त्वयि ॥
तव सानूनि कुञ्जाश्च नद्यः प्रस्रवणानि च ।
तीर्थानि च सुपुण्यानि मया दृष्टान्यनेकशः ॥ २५
एवमुक्त्वार्जुनः शैलमामन्त्र्य परवीरहा ।
आरुरोह रथं दिव्यं द्योतयन्निव भास्करः ॥ २६
स तेनादित्यरूपेण दिव्येनाद्भुतकर्मणा ।
ऊर्ध्वमाचक्रमे धीमान्प्रहृष्टः कुरुनन्दनः ॥ २७
सोऽदर्शनपथं यात्वा मर्त्यानां भूमिचारिणाम् ।
ददर्शाद्भुतरूपाणि विमानानि सहस्रशः ॥ २८
न तत्र सूर्यः सोमो वा द्योतते न च पावकः ।
स्वयैव प्रभया तत्र द्योतन्ते पुण्यलब्धया ॥ २९
तारारूपाणि यानीह दृश्यन्ते द्युतिमन्ति वै ।
दीपवद्विप्रकृष्टत्वादणूनि सुमहान्त्यपि ॥ ३०
तानि तत्र प्रभास्वन्ति रूपवन्ति च पाण्डवः ।
ददर्श स्वेषु धिष्ण्येषु दीप्तिमन्ति स्वयार्चिषा ॥ ३१
तत्र राजर्षयः सिद्धा वीराश्च निहता युधि ।
तपसा च जितस्वर्गाः संपेतुः शतसंघशः ॥ ३२
गन्धर्वाणां सहस्राणि सूर्यज्वलनतेजसाम् ।
गुह्यकानामृषीणां च तथैवाप्सरसां गणाः ॥ ३३
लोकानात्मप्रभान्पश्यन्फल्गुनो विस्मयान्वितः ।
पप्रच्छ मातलिं प्रीत्या स चाप्येनमुवाच ह ॥ ३४
एते सुकृतिनः पार्थ स्वेषु धिष्ण्येष्ववस्थिताः ।
यान्दृष्टवानसि विभो तारारूपाणि भूतले ॥ ३५
ततोऽपश्यत्स्थितं द्वारि सितं वैजयिनं गजम् ।
ऐरावतं चतुर्दन्तं कैलासमिव शृङ्गिणम् ॥ ३६
स सिद्धमार्गमाक्रम्य कुरुपाण्डवसत्तमः ।

---

G1 2 4 अस्युषितस् (for अस्म्यु°)

**25** After 25, K1 2 B D (except D1–3) S ins

188* फलानि च सुगन्धीनि भक्षितानि ततस्तत ।
सुसुगन्धाश्च वार्योवास्त्वच्छरीरविनिःसृता ।
अमृतास्वादनीया मे पीता प्रस्रवणोदका ।
शिशुर्यथा पितुरङ्के सुसुखं वर्तते नग ।
तथा तवाङ्के ललित शैलराज मया प्रभो । [5]
अप्सरोगणसंकीर्णे ब्रह्मघोषानुनादिते ।
सुखमस्म्युषित शैल तव सानुषु नित्यदा ।

[(L 2) G2 4 त्वच्छरीराद् (for त्वच्छरीर-) — (L 3) K2 Dc Dn1 अमृतस्वादनीया मे, D5 अमृत स्वादनीय मे, T G (except G1) अमृतास्वादसदृशा D6 पीत प्रस्रवणोदक, T G2–4 M1 पीता (G2 4 शैल)प्रस्रवणोद्भवा — (L 4) D6 मातुर् (for पितुर्) T1 चागे, T2 G2–4 चांके, G1 त्वके (for अङ्के) B1 Dc [s]नघ (for नग) S सुख शेते तटे तथा — (L 5) S मया (for तथा) T2 G3 लुलित, M1 शयित S (except G2 M2) महा- (for मया) — (L 6) Dc S °घोषनिनादिते — (L 7) T2 G (except G1) अध्यु° (for अस्म्यु°) M सानूनि (for सानुषु) T2 G सुसुखे तव सानुनि ]

**26** b) S आमन्त्रयत शत्रुहा (G4 °हन्)

**27** a) Ś1 K3 Dc D1–3 बहु°, K4 दिव्य°, D5 नर° (for [आ]दित्य°)

**28** a) Ś1 K1 3 4 Dc D1–3, 5 G2 गत्वा, K2 B (B1m as in text) Dn D4 6 यातो, T1 घत्वा (for यात्वा) — b) Dn धर्म° (for भूमि°)॥

**29** a) K1 D1 G1 (by transp) सोम (K1 म) सूर्यो, T2 G2–4 सोमसूर्यौ — b) T2 G3 4 द्योतेते S नोत (for न च) — cd) S युक्ता (for तत्र), and °लक्षणा (for °लब्धया)

**30** c) T G आकाशे, M1 अत्यत, M2 द्वीपवद् — d) K2 B D (except D1–3) तनूनि, G2 4 उडूनि (for अणूनि)

**31** a) Ś1 K1 D1–3 विमानानि, K3 4 सुभास्वति, S च भास्वति — b) Ś1 K1 D1–3 स्म (for च) — d) Ś1 K1 3 Dc D1 2 द्युतिमति; K2 Dn1 दीप्तिमत

**32** c) K4 D1–3 तापसाश्च S1 K1 B4 स्वर्जितस्वर्गा, K2 Dn च जित स्वर्गं, K3 चार्जित स्वर्गं — d) T2 G (except G1) समुपेताश्च स°

**33** b) K (except K1) B D (except Dc D1) T1 G1 M °ज्वलित° — d) K2 4 B4 Dn D1 2 4 6 T2 G3 गणान्

**34** b) N (except Ś1 K1 3) फाल्गुनो — c) Ś1 सपूज्य, K1 अपृच्छन् (for पप्रच्छ) — d) Ś1 K1 3 D1–3 चास्येदम् (for चाप्येनम्)

**35** b) S विष्ठिता (for [अ]वस्थिता) — c) K2 Dn तान् (for यान्) K3 Dc D5 दृष्टवानसि यानि (K3 °न्हि) त्व

**36** b) K2 B Dn D4 6 शुभ, K3 स्थिर, S (except M2) मत्त (for सित) K3 4m D1 3 S विजयिन, Dc D5 वैजयिक — c) Ś1 K1 3 D3 ऐरावण K4 Dc चतुर्दंष्ट्र — d) Ś1 K1 3 D1–3 स्तूयमान महर्षिभि

व्यरोचत यथा पूर्वं मान्धाता पार्थिवोत्तमः ॥ ३७
अतिचक्राम लोकान्स राज्ञां राजीवलोचनः ।
ततो ददर्श शक्रस्य पुरींताममरावतीम् ॥ ३८

इति श्रीमहाभारते आरण्यकपर्वणि त्रिचत्वारिंशोऽध्यायः ॥ ४३ ॥

# ४४

वैशंपायन उवाच ।
स ददर्श पुरीं रम्यां सिद्धचारणसेविताम् ।
सर्वर्तुकुसुमैः पुण्यैः पादपैरुपशोभिताम् ॥ १
तत्र सौगन्धिकानां स द्रुमाणां पुण्यगन्धिनाम् ।
उपवीज्यमानो मिश्रेण वायुना पुण्यगन्धिना ॥ २
नन्दनं च वनं दिव्यमप्सरोगणसेवितम् ।
ददर्श दिव्यकुसुमैराह्वयद्भिरिव द्रुमैः ॥ ३
नातप्ततपसा शक्यो द्रष्टुं नानाहिताग्निना ।
स लोकः पुण्यकर्तॄणां नापि युद्धपराङ्मुखैः ॥ ४
नायज्वभिर्नानृतकैर्न वेदश्रुतिवर्जितैः ।
नानाप्लुताङ्गैस्तीर्थेषु यज्ञदानबहिष्कृतैः ॥ ५
नापि यज्ञहनैः क्षुद्रैर्द्रष्टुं शक्यः कथंचन ।
पानपैर्गुरुतल्पैश्च मांसादैर्वा दुरात्मभिः ॥ ६
स तद्दिव्यं वनं पश्यन्दिव्यगीतनिनादितम् ।
प्रविवेश महाबाहुः शक्रस्य दयितां पुरीम् ॥ ७
तत्र देवविमानानि कामगानि सहस्रशः ।
संस्थितान्यभियातानि ददर्शायुतशस्तदा ॥ ८
संस्तूयमानो गन्धर्वैरप्सरोभिश्च पाण्डवः ।

---

38 a) K2 B1 3 Dn D5 T2 G3 अभि , K4 अनु (for अति ) — After 38ab, K2 B D (except D1–3) ins

189* एव स सक्रमस्तत्र स्वर्गलोके महायशा ।

— d) Ś1 K1 D1–3 नाम्ना (for ताम )

Colophon lost in B1 G1 partly broken — *Major parvan* Ś1 K1 Dn1 n3 T G2–4 आरण्य — *Sub parvan* K3 B3 4 Dc D1 3 5 इन्द्रलोकगमन, K4 अर्जुनस्येन्द्रलोकगमन, D2 अर्जुनइन्द्रलोकगमन, T2 G1–3 M2 इन्द्रलोकाभिगमन — *Adhy name* D2 अमरावतीदर्शन — *Adhy no* (figures, words or both) K1 Dn S 42, D1 43 (as in text) — *Śloka no* Dn 42, D1 38, D6 40

## 44

1 a) K2 B1 Dn D4 6 G1 transp स and ददर्श

2 a) K2 B Dn D4 6 T2 (by corr ) G3 च (for स) — b) K2 B D (except D1–3) T2 G3 पुष्पाणा (for द्रुमाणा) — D2 om (hapl ) 2cd — c) Hypermetric ! K2 B Dn D4 6 T2 G3 उद्वीज्यमानो; K3 उदीक्ष्यमाणो, K4 उपसेव्यमानो, Dc तद्वीज्य°, D5 तान्वीज्य

3 a) K3 Dc S पुण्यम् (for दिव्यम्) — c) Ś1 K1 3 D1–3 दिव्यविहगैर्

4 a) =3 43 17a Ś1 K1 4 D1–3 T1 M शक्य, G1 शक्त — b) S नापि चानाहिता° — c) K3 4 T G M2 पुण्यकृति (M2 कीर्ती)ना M1 स हि लोक पुण्यकृता — d) K2 B D (except D1 2) युद्धे (for युद्ध )

5 a) Ś1 नानृतिकैर्, K1 B Dn D4 6 नाव्रतिकैर्; K2 नाव्रतिकर् — b) K3 D1 T2 G2 3 वेदश्रुतिविवर्जितै (K3 °र्जकै ), T1 न वै श्रुतिविवर्जितै° — c) G4 नानाप्लुतैश्च (for प्लुताङ्गैस्) K1 सर्वै° (for तीर्थै° ) T1 नाप्लुताग्नै सुतीर्थेषु

6 a) Ś1 D2 यज्ञहवि , K2 B2 Dc D4 6 Cnp हरै , K3 जिह्मैरपि, K4 D1 यज्ञहभि° , D2 °हलि (for °हनै ) ❀ Cn यज्ञहरैरित्यपपाठः । ❀ Ś1 K1 D1–3 क्रुद्धै°, Dc द्रष्टु (for क्षुद्रै° ) — b) Ś1 K1 3 D1–3 5 शक्य (K3 D5 °क्यो) द्रष्टु; K2 G1 2 M द्रष्टु शक्य, Dc क्षुद्रै° शक्य° , T1 द्रष्टु यज्ञ° — c) K4 न पापैर्, D5 मानसैर्; G2 सुरापैर् (for पानपैर्) — d) Ś1 K (except K2) B2 3 Dc D1 3 5 च; D2 न (for वा)

7 b) K1 समन्वित, K3 B4 D2 3 T1 G2 4 M °विनादित, K4 °विभावित

8 a) K3 Dc D1–3 5 °तान्यभिजातानि, S स्थितान्यपि (T1 G1 भि ) प्रयातानि — d) K3 B3 Dc T1 M1 तथा (for सदा) K1 ददर्शायुतशोर्जुन°

पुष्पगन्धवहैः पुण्यैर्वायुभिश्चानुवीजितः ॥ ९
ततो देवाः सगन्धर्वाः सिद्धाश्च परमर्षयः ।
हृष्टाः संपूजयामासुः पार्थमक्लिष्टकारिणम् ॥ १०
आशीर्वादैः स्तूयमानो दिव्यवादित्रनिस्वनैः ।
प्रतिपेदे महाबाहुः शङ्खदुन्दुभिनादितम् ॥ ११
नक्षत्रमार्गं विपुलं सुरवीथीति विश्रुतम् ।
इन्द्राज्ञया ययौ पार्थः स्तूयमानः समन्ततः ॥ १२
तत्र साध्यास्तथा विश्वे मरुतोऽथाश्विनावपि ।
आदित्या वसवो रुद्रास्तथा ब्रह्मर्षयोऽमलाः ॥ १३
राजर्षयश्च बहवो दिलीपप्रमुखा नृपाः ।
तुम्बुरुर्नारदश्चैव गन्धर्वौ च हहाहुहू ॥ १४
तान्सर्वान्स समागम्य विधिवत्कुरुनन्दनः ।
ततोऽपश्यद्देवराजं शतक्रतुमरिंदमम् ॥ १५
ततः पार्थो महाबाहुरवतीर्य रथोत्तमात् ।
ददर्श साक्षाद्देवेन्द्रं पितरं पाकशासनम् ॥ १६

पाण्डुरेणातपत्रेण हेमदण्डेन चारुणा ।
दिव्यगन्धाधिवासेन व्यजनेन विधूयता ॥ १७
विश्वावसुप्रभृतिभिर्गन्धर्वैः स्तुतिवन्दनैः ।
स्तूयमानं द्विजाग्र्यैश्च ऋग्यजुःसामसंस्तवैः ॥ १८
ततोऽभिगम्य कौन्तेयः शिरसाभ्यनमद्बली ।
स चैनमनुवृत्ताभ्यां भुजाभ्यां प्रत्यगृह्णत ॥ १९
ततः शक्रासने पुण्ये देवराजर्षिपूजिते ।
शक्रः पाणौ गृहीत्वैनमुपावेशयदन्तिके ॥ २०
मूर्ध्नि चैनमुपाघ्राय देवेन्द्रः परवीरहा ।
अङ्कमारोपयामास प्रश्रयावनतं तदा ॥ २१
सहस्राक्षनियोगात्स पार्थः शक्रासनं तदा ।
अध्यक्रामदमेयात्मा द्वितीय इव वासवः ॥ २२
ततः प्रेम्णा वृत्रशत्रुरर्जुनस्य शुभं मुखम् ।
पस्पर्श पुण्यगन्धेन करेण परिसान्त्वयन् ॥ २३
परिमार्जमानः शनकैर्बाहू चास्यायतौ शुभौ ।

---

**9** After 9, Dc2 ins

190* पुष्पोत्करैः शुभैः सोऽथ कीर्यमाणो नरर्षभः ।

**13** b) K2 4 B (except B2) Dn D4 6 T1 G1 M तथा (for अपि) — 13d = 5 17 8d

**14** a) Ś1 K1 D1 2 बहुशो, G1 तत्रासन् (for बहवो) — b) K3 B1 Dc D5 G4 तथा (for नृपाः) Ś1 K1 D1–3 दिलीपनहुषादयः — c) A few MSS तुबरुर् — d) K3 M1 गधर्वांश्च Ś1 K2 B2 3 Dn3 D4 हाहाहुहू, K1 4 हहाहुहू, K3 D2 3 T2 G3 4 हहाहुहूः, B1 4 Dn1 n2 हाहाहुहूः (unmetrical !) Cf 1 59 49d, and PW s v हहा

**15** a) K1 2 4 B1 4 Dn1 n3 D2 3 5 T2 G3 transp सर्वान् and स K3 तांश्च सर्वान्समा°, D1 तान्स चान्यान्समागत्य — c) S1 K1 D1 3 तत्रा° (for ततो ) — d) K2 Dn S (except G4) अरिंदम

**16** c) K3 Dn देवेश (for देवेन्द्र)

**17** a) = 3 42 14a S (mostly) पाडरेणा° — c) S1 K1 B3 दिव्यगधादिवासेन, B1 2 4 दिव्य गधाधि°, T1 दिव्यगधसु°, M3 दिव्यगधाबु° — d) K3 Dc D5 च धूयता, S च (G4 [अ]पि) वीजित (for विधू°)

**18** b) K2 B2–4 Dn D4 6 स्तुतिवदिभिः, B1 Dc D5 °वादिभि, D1 °वदिकै — d) K2 4 B1 3 D (except D1–3) T2 G3 °सभवै

**19** b) K2 3 Dc Dn D3 4 6 [अ]भ्यगमद्, K4 D2 न्यपतद्, S प्राणमद् K4 D2 वशी (for बली) — cd) K2 4 B Dn D4 6 M1 वृत्तपीनाभ्या (for अनुवृत्ता°), and बाहु° (for भुजा°) S1 K1 3 Dc D1–3 5 भुजाभ्या पीनवृत्ताभ्या प्रत्यगृह्णात्स चापि त

**20** a) K2 3 Dc1 D1 5 तत्र (for ततः) — b) K2 B Dn D4 6 T1 देवर्षिगणसेविते (B4 T1 °पूजिते), T2 G देवराजर्षिसेविते

**21** b) G1 परिरभ्य दृढ हरि

**22** a) Ś1 K1 T1 च (for स) — b) K3 B Dn D4 6 गतः, D1 तथा (for तदा) — c) S1 D2 अध्याक्रामद्, K1 यथाक्रामद्, K3 अभ्या°, K4 D1 अध्याक्रमद्, B1 प्राध्यक्रामद्, T1 2 (before corr ) G2 4 आरुरुक्षुर्, M1 समारुक्षद् T2 G3 आरुरोहाप्रमेयात्मा

**23** a) T1 M1 प्रेम्णाग्रत शक्रः — b) K1 3 B2 D1–3 M2 transp शुभ and मुख — After 23ab, K1 ins

191* दिव्यकान्ताकराहूतवालव्यजनमारुतैः ।

— Ś1 om (hapl ) 23d–25a

**24** S1 om 24 (cf v l 23), K1 om 24a–25b.

ज्याशरक्षेपकठिनौ स्तम्भाविव हिरण्मयौ ॥ २४
वज्रग्रहणचिह्नेन करेण बलसूदनः ।
मुहुर्मुहुर्वज्रधरो बाहू संस्फालयञ्शनैः ॥ २५
स्मयन्निव गुडाकेशं प्रेक्षमाणः सहस्रदृक् ।
हर्षेणोत्फुल्लनयनो न चातृप्यत वृत्रहा ॥ २६
एकासनोपविष्टौ तौ शोभयांचक्रतुः सभाम् ।
सूर्याचन्द्रमसौ व्योम्नि चतुर्दश्यामिवोदितौ ॥ २७
तत्र स्म गाथा गायन्ति साम्ना परमवल्गुना ।
गन्धर्वास्तुम्बुरुश्रेष्ठाः कुशला गीतसामसु ॥ २८
घृताची मेनका रम्भा पूर्वचित्तिः स्वयंप्रभा ।
उर्वशी मिश्रकेशी च डुण्डुर्गौरी वरूथिनी ॥ २९
गोपाली सहजन्या च कुम्भयोनिः प्रजागरा ।
चित्रसेना चित्रलेखा सहा च मधुरस्वरा ॥ ३०
एताश्चान्याश्च ननृतुस्तत्र तत्र वराङ्गनाः ।
चित्तप्रमथने युक्ताः सिद्धानां पद्मलोचनाः ॥ ३१
महाकटितटश्रोण्यः कम्पमानैः पयोधरैः ।
कटाक्षहावमाधुर्यैश्चेतोबुद्धिमनोहराः ॥ ३२

इति श्रीमहाभारते आरण्यकपर्वणि चतुश्चत्वारिंशोऽध्यायः ॥ ४४ ॥

# ४५

वैशंपायन उवाच ।
ततो देवाः सगन्धर्वाः समादायार्घ्यमुत्तमम् ।
शक्रस्य मतमाज्ञाय पार्थमानर्चुरञ्जसा ॥ १
पाद्यमाचमनीयं च प्रतिगृह्य नृपात्मजम् ।

---

— [c]) Hypermetric! K₂ B Dn D₂ ₄ ₆ प्रमार्जमान , T₁ G₁ ₂ ₄ M₁ परिमार्जश्च ; T₂ G₃ परिमृज्याथ, M₂ परिमार्जयश्च — [b]) D₅ om च T₁ बाहू ज्याघातलाञ्छनै° — [c]) D₁ ₂ ज्याशरा°, D₃ आसना ; M₂ शरज्या°

**25** S₁ om 25[c], K₁ om 25[ab] (cf v l 23, 24) — [b]) K₂ B Dn D₄ ₆ परिसान्त्वयन्- (for बलसूदन ), cf 23[d] — [d]) Ś₁ ससारयन्, K₁ G₁ सस्पर्श°, K₂ B Dn D₄ ₆ चास्फोट°, K₄ सतोल°, D₅ सस्फोट Dc D₂ शुभौ (for शनै°)

**26** [a]) D₁ ₃ स्वयमेव (for स्मयन्निव ) — [c]) S (except M₂) विस्मयो — [d]) Ś₁ चातर्पत, D₁ ₃ S ततर्प च (for चातृप्यत) K₃ Dc D₅ नातृप्यद्बलवृत्रहा

**27** [b]) K₁ शोभयामासतु° — [c]) K₂ B D (except D₁₋₃) T₂ G₃ व्योम (for व्योम्नि) — [d]) S (except G₁) पौर्णमास्यामिवो°

**28** [c]) K (except K₃) Dc Dn₁ D₁ ₃ ₄ सुस्वर°

**29** [b]) Ś₁ K₁ ₃ D₁₋₃ ₅ विप्र (for पूर्व ) — [d]) K₁ ज्योत्स्ना गौरी, K₂ B Dn D₄ ₆ दद्गौरी, K₃ तार्क्ष्या गौरी; K₄ D₁₋₃ दद्दा गौरी, Dc D₅ वपुर्गौरी, T₁ सुस्सुगौरी; T₂ G₂ ₃ धूम्रगौरी, G₄ धूम्रकेशी (for डुण्डु°) Ś₁ K (except K₂) D₁₋₃ ₅ विभावरी (for वरू )

**30** [b]) Ś₁ K₁ B₄ (m as in text) D₁₋₃ ₅ पूर्वचित्ति°, K₃ विप्रचित्ति° (for कुम्भ°), cf 29[b] and v l Ś₁ K₁ ₄ D₁₋₃ तथैव च, K₃ प्रभावनी, B₄ (m as in text) सहामता, D₃ M₂ प्रभाकरी (for प्रजा°) — [d]) Ś₁ K₁ Dn₁ T₂ G₁ ₃ मधुरस्वना

**31** D₅ transp 31[ab] and 31[cd] — [b]) K₂ B₂ D (except D₁₋₃ ₅) सहस्रश , K₄ B₁ ₃ सुविस्मिता°, B₄ S शुचिस्मिता° (for वरा°) — [cd]) N चित्तप्रसादने G₁ चित्तप्रमथनार्थाय पुंसां च विधिना कृता°

**32** [c]) K₃ कटाक्षभावमधुरैश्च, K₄ रूपयौवनमाधुर्यैश्च, B₁ ₃ S कटाक्षभाव° — [d]) N (except Ś₁ K₁ D₃) °मनो हरै°

Colophon G₁ partly lost — *Major parvan* Ś₁ K₁ T G₂₋₄ आरण्य; Dn₂ वन (!) — *Sub-parvan* K₃ Dc Dn D₁ ₃₋₆ M₁ इन्द्रलोकाभिगमन, K₄ चन्द्रलोकगमन (sic), B इन्द्र(B₁ स्वर्ग)लोकगमन, G₁ **लोकाभिगमन. — *Adhy name* D₃ अर्जुनइन्द्रसमागम ; T₂ G₂ ₃ M₁ इन्द्रदर्शन — *Adhy no* (figures, words or both) Dn S 43 (G₄ 40!), D₁ 44 (as in text) — *Śloka no* Dn D₁ ₆ 32

☞ After adhy 44, S ins two addl adhy given in App I (No 6), cf v l 3 45 8

प्रवेशयामासुरथो पुरंदरनिवेशनम् ॥ २
एवं संपूजितो जिष्णुरुवास भवने पितुः ।
उपशिक्षन्महास्त्राणि ससंहाराणि पाण्डवः ॥ ३
शक्रस्य हस्ताद्दयितं वज्रमस्त्रं दुरुत्सहम् ।
अशनीश्च महानादा मेघबर्हिणलक्षणाः ॥ ४
गृहीतास्त्रस्तु कौन्तेयो भ्रातॄन्सस्मार पाण्डवः ।
पुरंदरनियोगाच्च पञ्चाब्दमवसत्सुखी ॥ ५
ततः शक्रोऽब्रवीत्पार्थं कृतास्त्रं काल आगते ।
नृत्तं गीतं च कौन्तेय चित्रसेनादवाप्नुहि ॥ ६
वादित्रं देवविहितं नृलोके यन्न विद्यते ।
तदर्जयस्व कौन्तेय श्रेयो वै ते भविष्यति ॥ ७
सखायं प्रददौ चास्य चित्रसेनं पुरंदरः ।
स तेन सह संगम्य रेमे पार्थो निरामयः ॥ ८
कदाचिदटमानस्तु महर्षिरुत लोमशः ।
जगाम शक्रभवनं पुरंदरदिदृक्षया ॥ ९
स समेत्य नमस्कृत्य देवराजं महामुनिः ।
ददर्शार्धासनगतं पाण्डवं वासवस्य ह ॥ १०
ततः शक्राभ्यनुज्ञात आसने विष्टरोत्तरे ।
निषसाद द्विजश्रेष्ठः पूज्यमानो महर्षिभिः ॥ ११
तस्य दृष्ट्वाभवद्बुद्धिः पार्थमिन्द्रासने स्थितम् ।
कथं नु क्षत्रियः पार्थः शक्रासनमवाप्तवान् ॥ १२
किं त्वस्य सुकृतं कर्म लोका वा के विनिर्जिताः ।

## 45

**2** $^b$) K (except K3) D1 3 T G2 3 M1 °गृह्य T2 G2 3 °त्मज
**3** $^a$) Ś1 K1 B4 D1 2 उपाशिक्ष°
**4** T2 G3 om (hapl) $4^a$–$5^b$ — $^a$) G3 4 स शक्र-हस्ताद् — $^b$) S1 K1 D1–3 सुदारुण, K2 Dn1 n2 M1 च (M1 तु-) दुःसह, K3 D5 सुदुर्जय, Dc दुरासद (for दुरु°) — $^c$) D5 S (T2 G3 om) अशनिं च °नादा — $^d$) Cf 3 43 5 S (T2 G3 om) °बर्हिण(G2 °बृंहित, G4 °बृंहण) लक्षणा
**5** T2 G3 om $5^{ab}$ (cf v l 4) — $^{cd}$) K1 2 B D (except D1–3 5) M पञ्चाब्दान् B2 3 सुखी°, T2 G2–4 सुख (for सुखी) G1 पञ्चाब्दमवसत्तत्र पाकशासनशासनात्
**6** $^a$) Ś1 K1 D3 वाक्य (for पार्थं) — $^c$) S1 K1 3 D3 (by transp) गीत नृत्तं, K2 4 B Dc Dn D4 6 G1 4 T1 नृत्य गीत, D1 2 5 गीत नृत्य
**7** $^a$) Ś1 K1 4 D3 वादित — $^c$) T1 G1 M तदाज्ञाय च; T2 G2–4 मदाज्ञया च (for तदर्जे°)
**8** $^d$) D1 3 G1 धनजय (for निरा°) — After 8, K3 B D (except D2 3) ins

192* गीतवादित्रनृत्यानि भूय एवादिदेश ह ।
तथापि नालभच्छर्म तरस्वी द्यूतकारितम् ।
दुःशासनवधामर्षी शकुनेः सौबलस्य च ।
ततस्तेनातुला प्रीतिमुपगम्य क्वचित्क्वचित् ।
गान्धर्वमतुलं नृत्यं वादित्रं चोपलब्धवान् । [5]
स शिक्षितो नृत्यगुणाननेका-
न्वादित्रगीतार्थगुणांश्च सर्वान् ।
न शर्म लेभे परवीरहन्ता
भ्रातॄन्स्मरन्मातरं चैव कुन्तीम् ।

Colophon

[(L 4) B2 उपलभ्य, Dc Dn1 D4 उपागम्य — (L 5) Dc Dn1 D4 नित्य (for नृत्य) — (L 7) B2 3 Dc D1 °गीतानु° (for °गीतार्थ°) — After line 9, D5 ins
192a* तदिन्द्रस्तस्य विज्ञाय चिकीर्षितमनुत्तमम् ]

☞ A passage (comprising two adhy and describing the temptation of Arjuna by Urvaśī) given in App I (No 6) is ins in K2 B Dc Dn D1 4–6 after 192*, and in K4 D2 3, after st 8 of this adhy, but in S, after adhy 44! There is no reference to this episode in Kṣemendra's Bhāratamañjarī Note the *phalaśruti* at the end of this interpolation

**9** Before 9, K1 2 B D (except D5) ins वैशं° उ°. — $^a$) K4 कदाचिद्भगवांस्तत्र — $^b$) T G (except G1) अथ (for उत)
**10** $^a$) G1 नमस्कृत्वा — $^d$) K3 B (except B1) Dn D4 6 G2 M1 हि, Dc1 तु, G1 च (for ह)
**11** $^b$) K1 4 B4 D1 विष्टरोत्तमे, S चास्तृतोत्तरे
**13** $^a$) B3 M न्वस्य, T G चास्य (for त्व°) K3 Dc D5 किं वानेन कृत कर्म — $^b$) B D4 6 वै के (B1 के वै) (for वा के) S1 K1 D6 M3 लोका वा के न निर्जिता°, K3 Dn के लोका वै विनि°, T2 G (except G1) लोकपाल विनिर्जित — $^c$) K3 B1 Dn स, K4 Dc D4 6 यद् (for य) T2 G (except G1) पुन (for एव) K2 4 B Dn

य एवमुपसंप्राप्तः स्थानं देवनमस्कृतम् ॥ १३
तस्य विज्ञाय संकल्पं शक्रो वृत्रनिषूदनः ।
लोमशं प्रहसन्वाक्यमिदमाह शचीपतिः ॥ १४
ब्रह्मर्षे श्रूयतां यत्ते मनसैतद्विवक्षितम् ।
नायं केवलमर्त्यो वै क्षत्रियत्वमुपागतः ॥ १५
महर्षे मम पुत्रोऽयं कुन्त्यां जातो महाभुजः ।
अस्त्रहेतोरिह प्राप्तः कस्माच्चित्कारणान्तरात् ॥ १६
अहो नैनं भवान्वेत्ति पुराणमृषिसत्तमम् ।
शृणु मे वदतो ब्रह्मन्योऽयं यच्चास्य कारणम् ॥ १७
नरनारायणौ यौ तौ पुराणावृषिसत्तमौ ।
ताविमावभिजानीहि हृषीकेशधनंजयौ ॥ १८
यन्न शक्यं सुरैर्द्रष्टुमृषिभिर्वा महात्मभिः ।
तदाश्रमपदं पुण्यं बदरी नाम विश्रुतम् ॥ १९
स निवासोऽभवद्विप्र विष्णोर्जिष्णोस्तथैव च ।
यतः प्रववृते गङ्गा सिद्धचारणसेविता ॥ २०
तौ मन्नियोगाद्ब्रह्मर्षे क्षितौ जातौ महाद्युती ।
भूमेर्भारावतरणं महावीर्यौ करिष्यतः ॥ २१
उद्वृत्ता ह्यसुराः केचिन्निवातकवचा इति ।
विप्रियेषु स्थितास्माकं वरदानेन मोहिताः ॥ २२
तर्कयन्ते सुरान्हन्तुं बलदर्पसमन्विताः ।
देवान्न गणयन्ते च तथा दत्तवरा हि ते ॥ २३
पातालवासिनो रौद्रा दनोः पुत्रा महाबलाः ।
सर्वे देवनिकाया हि नालं योधयितुं स तान् ॥ २४
योऽसौ भूमिगतः श्रीमान्विष्णुर्मधुनिषूदनः ।
कपिलो नाम देवोऽसौ भगवानजितो हरिः ॥ २५
येन पूर्वं महात्मानः खनमाना रसातलम् ।
दर्शनादेव निहताः सगरस्यात्मजा विभो ॥ २६
तेन कार्यं महत्कार्यमस्माकं द्विजसत्तम ।

---

$D_{1, 6}$ M अनु (for उप )

**14** $^b$) $S_1$ $K_1$ B (except $B_1$) $D_6$ $M_1$ °निसूदन , $T_2$ $G_{3, 4}$ विमर्दन , $G_2$ °विनाशन — $^d$) $D_{1-3}$ प्राह (for आह )

**15** $^a$) S देवर्षे (for ब्रह्मर्षे) $T_2$ G (except $G_1$) यत्तन् (for यत्ते) — $^b$) $K_3$ $D_5$ $T_2$ G (except $G_1$) मन स्येतद् $Ś_1$ $K_1$ Dc $D_{1-3}$ विचिंतित , $K_3$ विचेष्टित , $D_6$ ऽयव स्थित — $^c$) S [ऽ]भूत् (for वै) — $^d$) $K_2$ B (except $B_2$) Dn $D_{4, 6}$ मानुष (for क्षत्रिय° )

**18** $S_1$ om (? hapl ) $18^{ab}$ (along with $17^{cd}$) $G_4$ reads 18 after $16^{ab}$ (with v l ), *repeating* it here — $^a$) = 5 94 $42^a$ $K_4$ तौ हि, $D_{2, 3}$ यौ तु, T G (except $G_1$) एतौ (for यौ तौ) — $^c$) $K_2$ Dn $D_4$ अनु (for अभि ) — $^d$) $G_4$ (first time) यतो जातो महा भुज — After 18, $K_{1 (om line 1), 2}$ B D ( except $D_{1-3}$) ins

193* विख्यातौ त्रिषु लोकेषु नरनारायणावृषी ।
कार्यार्थमवतीर्णौ तौ पृथ्वीं पुण्यप्रतिश्रयाम् ।

Thereafter $K_1$ *repeats* $18^{cd}$ ।

**19** $^c$) T G न स शक्य (G₂ न शक्य स ) सु

**20** $^c$) Dc $D_{1-3}$ प्रवर्तते $T_2$ G (except $G_1$) यस प्रवृत्ता गगा सा

**22** $^a$) Dc उद्धूता , $Dn_2$ T $G_{2-4}$ M उद्धता , $Dn_3$ $D_{1, 2}$ उद्वृत्ता — $^c$) S विप्रियेष्वास्थिता — $^d$) $S_1$ $K_{1, 3}$ Dc $D_{1-3, 5}$ दर्पिता (for मोहि° )

**23** $D_1$ om (hapl ) $23^{ab}$ — $^a$) $Ś_1$ $K_{1, 4}$ तर्कयति , $D_2$ $T_2$ $G_{1, 3}$ °यत — $^b$) $Ś_1$ $K_{1, 3}$ Dc $D_{2, 3, 5}$ °वीर्य° (for °दर्प ) — $^c$) $K_2$ B Dn $D_{4, 6}$ $T_2$ $G_3$ गणयन्त्येते (for यन्ते च) — $^d$) $Ś_1$ $K_1$ इति (for हि ते)

**24** $^a$) $K_{1, 2}$ B D (except $Dc_2$ $D_{1, 2}$) सर्वे (for सर्वे) — $^d$) $K_2$ B D (except $D_{1-3}$) हि (for स्म) — After 24, $Ś_1$ $K_{1, 3}$ $D_{1-3}$ read 28, $K_1$ *repeating* it in its proper place

**25** $^a$) $Ś_1$ $K_3$ Dc $D_{1-3, 5}$ यस्तु (for योऽसौ) — $^b$) $Ś_1$ $K_1$ B M मधुनिसूदन , $K_3$ Dc °निहा हरि — $^c$) $K_3$ $M_1$ देवेश (for देवोऽसौ) — $^d$) $Ś_1$ $K_1$ भगवानमितो हरि , $K_3$ Dc $D_5$ नजितोऽव्यय

**26** $^b$) $Ś_1$ $K_{1, 3}$ Dc $D_{1-3, 5}$ मही° (for रसा° ) — $^c$) $Ś_1$ $K_{1, 3}$ Dc $D_5$ निर्दग्धा (for निहता )

**27** $^a$) $T_2$ G (except $G_1$) कर्म (for कार्यं) — $^b$) S क हि द्विजोत्तम — $^d$) $K_2$ B Dn $D_{4, 6}$ न सशय (for असशयम्) — After 27, $K_{1, 2}$ B D (except $D_{1-3, 5}$) ins

194* सोऽसुरान्दर्शनादेव शक्तो हन्तुं सहानुगान् ।
निवातकवचान्सर्वान्नागानिव महाह्रदे ।
किं तु नाल्पेन कार्येण प्रबोध्यो मधुसूदनः ।

पार्थेन च महायुद्धे समेतास्यामसंशयम् ॥ २७
अयं तेषां समस्तानां शक्तः प्रतिसमासने ।
तान्निहत्य रणे शूरः पुनर्यास्यति मानुषान् ॥ २८
भवांश्चास्मन्नियोगेन यातु तावन्महीतलम् ।
काम्यके द्रक्ष्यसे वीरं निवसन्तं युधिष्ठिरम् ॥ २९
स वाच्यो मम संदेशाद्धर्मात्मा सत्यसंगरः ।
नोत्कण्ठा फल्गुने कार्या कृतास्त्रः शीघ्रमेष्यति ॥ ३०
नाशुद्धबाहुवीर्येण नाकृतास्त्रेण वा रणे ।
भीष्मद्रोणादयो युद्धे शक्याः प्रतिसमासितुम् ॥ ३१
गृहीतास्त्रो गुडाकेशो महाबाहुर्महामनाः ।
नृत्तवादित्रगीतानां दिव्यानां पारमेयिवान् ॥ ३२
भवानपि विविक्तानि तीर्थानि मनुजेश्वर ।
भ्रातृभिः सहितः सर्वैर्द्रष्टुमर्हत्यरिंदम ॥ ३३
तीर्थेष्वाप्लुत्य पुण्येषु विपाप्मा विगतज्वरः ।
राज्यं भोक्ष्यसि राजेन्द्र सुखी विगतकल्मषः ॥ ३४
भवांश्चैनं द्विजश्रेष्ठ पर्यटन्तं महीतले ।
त्रातुमर्हति विप्राग्र्य तपोबलसमन्वितः ॥ ३५
गिरिदुर्गेषु हि सदा देशेषु विषमेषु च ।
वसन्ति राक्षसा रौद्रास्तेभ्यो रक्षेत्सदा भवान् ॥ ३६
स तथेति प्रतिज्ञाय लोमशः सुमहातपाः ।
काम्यकं वनमुद्दिश्य समुपायान्महीतलम् ॥ ३७
ददर्श तत्र कौन्तेयं धर्मराजमरिंदमम् ।
तापसैर्भ्रातृभिश्चैव सर्वतः परिवारितम् ॥ ३८

इति श्रीमहाभारते आरण्यकपर्वणि पञ्चचत्वारिंशोऽध्यायः ॥ ४५ ॥

---

तेजस॰ सुमहाराशि प्रवृद्ध॰ प्रदहेज्जगत् ।
[(L 4) K₃ Dn D₄ सुमहाराशि ]

**28** D₅ om 28 Ś₁ K₁ (with v l ) ₃ D₁₋₃ read 28 after 24, K₁ *repeats* it here B₃ *repeats* 28 (with v l ) in marg — ᵃ) Ś₁ च शक्ताना (for समस्ताना) K₁ (first time) अय च तेषा सक्ताना, B₃m अय तेषा तु शत्रूणा — ᵇ) K₁ (first time) ₄ D₁₋₃ ₆ °समापने, S °निवारणे, cf v l 31 K₁ (second time) शक्रप्रतिमतेजसा — ᵈ) K₄ S मानुष

**29** ᵃ) K₂ ₄ B D (except D₁₋₃) om च

**30** ᶜ) K (except K₁) B D फाल्गुने (K₂ ₃ त्वर्जुने) — ᵈ) Ś₁ K₃ D₀ D₁₋₃ ₅ क्षिप्रम्, K₁ पुनर् (for शीघ्रम्)

**31** ᶜᵈ) K₁ वीरा शक्या॰; S (by transp ) शक्या युद्धे K₄ °समापितु, T₃ G °समाधितु; cf v l 28

**32** ᵃᵇ) Ś₁ K (except K₁) D₀ D₁₋₃ ₅ transp गुडाकेशो and महाबाहुर् Ś₁ K₁ ₃ D₀ D₁₋₃ ₅ परतप (for महामना॰) — ᶜ) N (except Ś₁ K₁ D₃) नृत्य° — ᵈ) K₁ ₂ B D₀ Dn₁ n₃ D₅ ईयिवान् (for एयि°) K₄ पर पार समेयिवान्

**33** D₁ om 33ᶜᵈ — ᵈ) Ś₁ K (except K₂) D₂ M₃ अर्हसि (for अर्हति)

**34** ᵃ) D₁₋₃ रम्ये° (for पुण्ये°) — ᶜ) S धर्मेण (for राजेन्द्र) K₁ राजेंद्र भोक्ष्यसे राज्य

**35** ᵃ) K₃ T₃ G₃ [ए]न, G₁ M₁ [ए]तद् (for [ए]न) Ś₁ K₁ पर्यटतं (for द्विज°) — ᵇ) Ś₁ K₁ तीर्थेषु च (for पर्य°) K₂ B Dn D₄ ₆ °तल — ᶜ) Ś₁ K (except K₂) B₃ D₀ D₁₋₃ ₅ अर्हसि — ᵈ) Ś₁ K₁ ₃ D₀ D₅ °समन्वयात्

**36** ᵃ) N (except Ś₁ K₃) च सदा, M₃ देशेषु (for हि सदा) — ᵇ) T₃ G₂ ₃ वने°, G₄ M₃ समे° (for देशे°) — ᶜ) K₄ D₁₋₃ घोरास् (for रौद्रास्) — ᵈ) G₂ ₄ transp सदा and भवान् K₂ B Dn D₄ ₆ तेभ्यो रक्षा विधास्यति — K₂ B D (except D₁₋₃) T₂ G₂₋₄ ins after 36 (T₂ G₂₋₄ om lines 3–4)

195* एवमुक्ते महेन्द्रेण बीभत्सुरपि लोमशम् ।
उवाच प्रयतो वाक्य रक्षेथा॰ पाण्डुनन्दनम् ।
यथा गुप्तस्त्वया राजा चरेत्तीर्थानि सत्तम ।
दान दद्याद्यथा चैव तथा कुरु महामुने ।

**37** Before 37, most MSS ins वैश° उ (resp वैश°) — ᵃ) K₂ B Dn D₄ ₆ तथेति स (B₁ Dn स ) प्र ; T₁ G₁ M तथेत्यथ प्र° — ᵇ) T₂ G (except G₁) °यशा॰ (for °तपा॰)

Colophon — *Major parvan* S₁ K₁ T G₃ ₄ आरण्य, B₃ वन (!), G₂ अरण्य — *Sub parvan* K₃ ₄ D₁₋₃ ₅ T₂ G₃ M₁ इन्द्रलोकाभि(K₃ D₅ om अभि )गमन, to it K₃ D₁₋₃ add समास — *Adhy name* B₁ लोमशागमन, D₀ लोमशानुशासन, Dc₂ लोमशतीर्थयात्रा, D₂ लोमशाद्द

# ४६

जनमेजय उवाच ।
अत्यद्भुतमिदं कर्म पार्थस्यामिततेजसः ।
धृतराष्ट्रो महातेजाः श्रुत्वा विप्र किमब्रवीत् ॥ १
वैशंपायन उवाच ।
शक्रलोकगतं पार्थं श्रुत्वा राजाम्बिकासुतः ।
द्वैपायनादृषिश्रेष्ठात्संजयं वाक्यमब्रवीत् ॥ २
श्रुतं मे सूत कार्त्स्न्येन कर्म पार्थस्य धीमतः ।
कच्चित्तवापि विदितं यथातथ्येन सारथे ॥ ३
प्रमत्तो ग्राम्यधर्मेषु मन्दात्मा पापनिश्चयः ।
मम पुत्रः सुदुर्बुद्धिः पृथिवीं घातयिष्यति ॥ ४
यस्य नित्यमृता वाचः स्वैरेष्वपि महात्मनः ।
त्रैलोक्यमपि तस्य स्याद्योद्धा यस्य धनंजयः ॥ ५
अस्यतः कर्णिनाराचांस्तीक्ष्णाग्रांश्च शिलाशितान् ।
कोऽर्जुनस्याग्रतस्तिष्ठेदपि मृत्युर्जरातिगः ॥ ६
मम पुत्रा दुरात्मानः सर्वे मृत्युवशं गताः ।
येषां युद्धं दुराधर्षैः पाण्डवैः प्रत्युपस्थितम् ॥ ७
तस्यैव च न पश्यामि युधि गाण्डीवधन्वनः ।
अनिशं चिन्तयानोऽपि य एनमुदियाद्रथी ॥ ८
द्रोणकर्णौ प्रतीयातां यदि भीष्मोऽपि वा रणे ।
महान्स्यात्संशयो लोके न तु पश्यामि नो जयम् ॥ ९
घृणी कर्णः प्रमादी च आचार्यः स्थविरो गुरुः ।
अमर्षी बलवान्पार्थः संरम्भी दृढविक्रमः ॥ १०
भवेत्सुतुमुलं युद्धं सर्वशोऽप्यपराजितम् ।
सर्वे ह्यस्त्रविदः शूराः सर्वे प्राप्ता महद्यशः ॥ ११
अपि सर्वेश्वरत्वं हि न वाञ्छेरन्पराजिताः ।
वधे नूनं भवेच्छान्तिस्तेषां वा फल्गुनस्य वा ॥ १२

---

लोकगमने इन्द्रवाक्य, T2 G3 M1 लोमशविसर्जन, G1 M3 लोमशविसर्ग — *Adhy no* (figures, words or both) Dc3 S 45 (as in text), Dn1 n3 47, D1 48 — *Śloka no* Dn 34, D1 29

## 46

**1** c) K2 B Dn D4 6 G1 महाप्राज्ञ°, Dc D5 M महाराज° — d) S (except M3) तत्र (for विप्र)

**2** ab) S पार्थं श्रुत्वा महाबाहो (T1 M3 तदा राजा, G1 M1 महाराज) धृतराष्ट्रोम्बिकासुत°

**3** Before 3, a few MSS ins धृतराष्ट्र उ (resp धृतराष्ट्र°) — d) K3 4 B D (except Dn3 D1 4) T2 G3 M1 याथा (for यथा)

**4** a) K4 Dc1 प्रवृत्तो Ś1 K1 D1-3 ग्राम्यभोगेषु; Dc धर्मेण — D3 om 4c–6d

☞ Stanzas 5–17 = (var) 5 51 1–16

**5** = (var) 5 51 1 — Ś1 has lacuna for 5ab, D2 om 5 (cf v l 4), K3 om 5c–6b — d) K4 transp योद्धा and यस्य

**6** 6ab = (var) 5 51 3 — D2 om 6, K3 om 6ab (cf v l 4, 5) — a) Ś1 K1 4 Dc D1 3 कर्णि(K1 D1 र्ण)नालीकान् — b) Ś1 K1 शिलीमुखान् — c) S ना° (for को) — d) Ś1 K1 3 B3 D4 6 M1 मृत्यु- (for मृत्युर्)

**7** 7a = (var) 1 1 183a — b) K2 B Dn D4 6 मृत्युवशानुगा° — c) D4 6 M3 तेषा (for येषां) — d) S समु (for प्रत्यु°)

**8** = (var) 5 51 2 — a) K2 B (except B4) Dn D4 6 तथैव (for तस्यैव) T2 G3 हि न, G4 न हि (for च न) — b) Ś1 K (except K1) D2 G3 4 °धन्विन° — c) D1-3 वै (for ऽपि) — d) K1 T1 उदयाद्; K3 D1 उपयाद् K1 रणे, B3 वशी, S (except M1) युधि (for रथी)

**9** = (var) 5 51 40 — c) K4 सुमहान् (for महान्स्यात्) — d) Ś1 K1 न च, K2 B Dn D4 6 सम्र; M1 न हि (for न तु) K4 त, D1-3 वै (for नो)

**10** = (var) 5 51 5abcd — d) M3 दृढधन्वा जितक्लम

**11** = (var) 5 51 5ef–6ab — a) Ś1 K1 3 4 भवेत्तु, K2 B Dn D4 6 समभवेत् (for भवेत्सु) — b) K1 M3 सर्वत; K4 T G M1 सर्वस्य (for सर्वश) M3 ह्यपराजय (for ऽप्य°)

**12** = (var) 5 51 6cdef — a) Ś1 K1 अथ (for अपि) — b) S1 K1 4 B1 Dn D1-3 5 ते वाछत्यपराजिता°;

न तु हन्तार्जुनस्यास्ति जेता वास्य न विद्यते ।
मन्युस्तस्य कथं शाम्येन्मन्दान्प्रति समुत्थितः ॥ १३
त्रिदशेशसमो वीरः खाण्डवेऽग्निमतर्पयत् ।
जिगाय पार्थिवान्सर्वान्राजसूये महाक्रतौ ॥ १४
शेषं कुर्याद्गिरेर्वज्रं निपतन्मूर्ध्नि संजय ।
न तु कुर्युः शराः शेषमस्तास्तात किरीटिना ॥ १५
यथा हि किरणा भानोस्तपन्तीह चराचरम् ।
तथा पार्थभुजोत्सृष्टाः शरास्तप्स्यन्ति मे सुतान् ॥ १६
अपि वा रथघोषेण भयार्ता सव्यसाचिनः ।
प्रतिभाति विदीर्णेव सर्वतो भारती चमूः ॥ १७
यदुद्वपन्प्रवपंश्चैव बाणा-
न्स्थाताततायी समरे किरीटी ।
सृष्टोऽन्तकः सर्वहरो विधात्रा
भवेद्यथा तद्वदपारणीयः ॥ १८

संजय उवाच ।

यदेतत्कथितं राजंस्त्वया दुर्योधनं प्रति ।
सर्वमेतद्यथात्थ त्वं नैतन्मिथ्या महीपते ॥ १९
मन्युना हि समाविष्टाः पाण्डवास्तेऽमितौजसः ।
दृष्ट्वा कृष्णां सभां नीतां धर्मपत्नीं यशस्विनीम् ॥ २०
दुःशासनस्य ता वाचः श्रुत्वा ते दारुणोदयाः ।
कर्णस्य च महाराज न स्वप्स्यन्तीति मे मतिः ॥ २१
श्रुतं हि ते महाराज यथा पार्थेन संयुगे ।
एकादशतनुः स्थाणुर्धनुषा परितोषितः ॥ २२
कैरातं वेषमास्थाय योधयामास फल्गुनम् ।
जिज्ञासुः सर्वदेवेशः कपर्दी भगवान्स्वयम् ॥ २३
तत्रैनं लोकपालास्ते दर्शयामासुरर्जुनम् ।

---

K$_2$ ते वाछति परा°, K$_3$ वाछत्यप्यपरा, B$_{2\ 3}$ वाछेरन्नपरा° — $^{d}$) Ś$_1$ K$_1$ नैषा वा, K$_2$ Dn D$_5$ एतेषा, K$_4$ D$_{1-3}$ एषा वा (for तेषा वा) N (except Ś$_1$ K$_{1\ 3}$) फाल्गुनस्य

**13** = (var) 5 51 7 — $^{b}$) Ś$_1$ K$_1$ B$_{3\ 4}$ Dc$_1$ D$_{1\ 5\ 6}$ चास्य (for वास्य) — $^{d}$) Ś$_1$ K$_{1\ 3\ 4}$ B$_4$ D$_{1-3\ 5}$ मा (Ś$_1$ मा) वै प्रति Dc समुच्छ्रित°, T$_2$ G$_3$ °घत° K$_2$ B$_{1-3}$ Dn D$_{4\ 6}$ मा चैव प्रतिसहित°

**14** = (var) 5 51 9 — $^{a}$) K$_{1\ 3}$ Dc D$_5$ M$_2$ त्रिदशेश विनिर्जित्य

**15** = (var) 5 51 13 — $^{a}$) K$_2$ B Dn D$_{4\ 6}$ वज्रो — $^{c}$) K$_3$ D$_{1-3}$ च (for तु) — $^{d}$) Ś$_1$ K$_{1\ 3\ 4m}$ Dc D$_{1-3\ 5}$ मुक्तास्, K$_2$ B Dn D$_{4\ 6}$ क्षिप्तास् (for अस्तास्)

**16** $^{c}$) S करो° (for °भुजो) — $^{d}$) Ś$_1$ K$_3$ G$_4$ तप्स्यति K$_2$ B (except B$_2$) D (except D$_{1-3\ 5}$) मत्° (for मे) T$_1$ शरास्तप्स्यति मेदिनीं

**17** = (var) 5 51 16 — $^{a}$) K$_2$ B$_4$ Dc Dn D$_{4-6}$ तद्, K$_3$ मे, K$_4$ [इ]प, B$_{1-3}$ सा (for वा) Ś$_1$ K$_1$ D$_{1-3}$ मे शर° (for वा रथ°) — $^{b}$) Ś$_1$ B$_{1\ 4}$ Dc$_2$ D$_{1\ 2\ 6}$ S भयार्ता° D$_5$ भारती चमू° (for सव्य°), see below — $^{c}$) K$_{2\ 3}$ Dc$_1$ Dn D$_{3\ 4\ 6}$ च; Dc$_2$ D$_5$ [ए]व (for [इ]व) — $^{d}$) S$_1$ K$_1$ सर्वथा D$_5$ सर्वत° सव्यसाचिना

**18** S$_1$ has lacuna for 18 — $^{a}$) K$_2$ Dn D$_{4-6}$ यदुद्वमन्, B$_1$ °द्वहन्, D$_1$ °द्दहन्, T G समुद्वरन्, M$_1$ यदो द्वहन्, M$_2$ यथोद्ववन् (for यदुद्वपन्) K$_3$ (corrupt) सन्समरुधगवाश्चैव बाणान्; K$_4$ अस्यन्नमर्षेण शराननेकान् — $^{b}$) K$_4$ स त्वा°, B$_{1\ 3}$ D$_3$ ताना°, S (except M$_1$) तथा° (for स्थाता°) — $^{c}$) T$_2$ G (except G$_1$) हि (for वि) — $^{d}$) K$_3$ तत्कथ रक्षणीय, S तद्वदवारणीय° — After 18, N (except K$_3$) M$_1$ ins an addl colophon (*adhy no* Dn 48, D$_1$ 49, M$_1$ 46)

**19** $^{a}$) T$_2$ G (except G$_1$) यथा, M$_1$ तद् (for यद्) — $^{c}$) Ś$_1$ K$_{1\ 4m}$ D$_{2\ 3}$ यथार्थस्त्व, S यथातथ्य (G$_1$ °वृत्त) — $^{d}$) K$_3$ B$_1$ T$_1$ M$_2$ तन्; T$_2$ G (except G$_1$) तु (for [ए]तन्) K$_{3\ 4}$ D$_{1-3}$ भविष्यति (for मही)

**20** $^{b}$) S (except G$_1$ M$_2$) तु (for ते) K$_2$ Dn D$_{4\ 6}$ महौ (for ऽमितौ°) — $^{cd}$) S transp कृष्णा and नीता

**21** $^{ab}$) Dc D$_5$ ता वाच S$_1$ K$_1$ S (except G$_1$) वँ (for ते) K$_3$ S (except G$_1$) कटुकोदया, Dc D$_5$ दारुणो दया K$_4$ (m as in text) दुःशासनसमाविष्टामेकवस्त्रां रज स्वला — $^{d}$) Ś$_1$ K$_{1\ 3\ 4}$ न क्षस्यतीति, K$_2$ B$_4$ Dn D$_{4\ 6}$ जुगुप्सती°

**22** $^{a}$) K$_{1\ 2}$ B Dn D$_{1\ 4-6}$ M मे (for ते) K$_4$ श्रूयते च महा° — $^{b}$) Ś$_1$ K$_{1\ 3}$ Dc D$_{1-3\ 5}$ धीमता (for सयुगे) — $^{d}$) K$_1$ तपसा (for धनुषा)

**23** $^{a}$) B$_1$ D$_{1\ 5}$ कैरात- K$_4$ वपुर् (for वेषम्) — $^{b}$) N (except Ś$_1$ K$_{1\ 3}$ D$_3$) फाल्गुन — After 23 S ins

196* लेभे पाशुपत चापि परमास्त्र महाद्युति ।

**24** $^{b}$) K$_2$ B Dn D$_{4\ 6}$ G$_1$ M$_2$ अच्युत (for अर्जुनम्)

अस्त्रहेतोः पराक्रान्तं तपसा कौरवर्षभम् ॥ २४
नैतदुत्सहतेऽन्यो हि लब्धुमन्यत्र फल्गुनात् ।
साक्षाद्दर्शनमेतेषामीश्वराणां नरो भुवि ॥ २५
महेश्वरेण यो राजन्न जीर्णो ग्रस्तमूर्तिमान् ।
कस्तमुत्सहते वीरं युद्धे जरयितुं पुमान् ॥ २६
आसादितमिदं घोरं तुमुलं लोमहर्षणम् ।
द्रौपदीं परिकर्षद्भिः कोपयद्भिश्च पाण्डवान् ॥ २७
यत्र विस्फुरमाणोष्ठो भीमः प्राह वचो महत् ।
दृष्ट्वा दुर्योधनेनोरू द्रौपद्या दर्शितावुभौ ॥ २८
ऊरू भेत्स्यामि ते पाप गदया वज्रकल्पया ।
त्रयोदशानां वर्षाणामन्ते दुर्द्यूतदेविनः ॥ २९
सर्वे प्रहरतां श्रेष्ठाः सर्वे चामिततेजसः ।
सर्वे सर्वास्त्रविद्वांसो देवैरपि सुदुर्जयाः ॥ ३०
मन्ये मन्युसमुद्धूताः पुत्राणां तव संयुगे ।
अन्तं पार्थाः करिष्यन्ति वीर्यामर्षसमन्विताः ॥ ३१

धृतराष्ट्र उवाच ।

किं कृतं सूत कर्णेन वदता परुषं वचः ।
पर्याप्तं वैरमेतावद्यत्कृष्णा सा सभां गता ॥ ३२
अपीदानीं मम सुतास्तिष्ठेरन्मन्दचेतसः ।
येषां भ्राता गुरुर्ज्येष्ठो विनये नावतिष्ठते ॥ ३३
ममापि वचनं सूत न शुश्रूषति मन्दभाक् ।
दृष्ट्वा मां चक्षुषा हीनं निर्विचेष्टमचेतनम् ॥ ३४
ये चास्य सचिवा मन्दाः कर्णसौबलकादयः ।
तेऽप्यस्य भूयसो दोषान्वर्धयन्ति विचेतसः ॥ ३५
स्वैरमुक्ता अपि शराः पार्थेनामिततेजसा ।
निर्दहेयुर्मम सुतान्किं पुनर्मन्युनेरिताः ॥ ३६
पार्थबाहुबलोत्सृष्टा महाचापविनिःसृताः ।
दिव्यास्त्रमन्त्रमुदिताः सादयेयुः सुरानपि ॥ ३७
यस्य मन्त्री च गोप्ता च सुहृच्चैव जनार्दनः ।
हरिस्त्रैलोक्यनाथः स किं नु तस्य न निर्जितम् ॥ ३८

— d) A few MSS °र्षभ

25 a) T2 G3 उत्पस्यते, G4 उत्पद्यते (for उत्सहते) K3 B Dn D4 6 चान्य°, K4 [ऽ]न्यो वै, M3 [ऽ]न्योपि — b) N (except Ś1 K1) फाल्गुनात्

26 b) Ś1 विदीर्णो, K1 D3 न दीर्णो K1 2 4 B Dc Dn D4–6 ग्रस्त(D5 ग्रस्त)मूर्तिना; K4m D2 3 ग्रस्तमूर्तिना K3 जीर्णो ग्रस्तश्च मूर्तिं — c) K3 B Dn D4 6 S वीर° (for वीरं)

27 b) Dc D3 तुमल K1 S रोम° (for लोम ) — c) M3 अप° (for परि )

28 a) K3 B Dn D3 4 6 यत्तु, K3 एव S1 K1 3 4 Dc D5 विस्फुरमाणौष्ठो, K3 B Dn D1–4 6 प्रस्फुरमाणौ° (D1–3 णो)ष्ठो — b) T2 G3 प्रति (for प्राह) K3 B2 Dn D4 6 [ऽ]र्थवत्, T2 G3 [ऽ]वदत्, G4 वदन् (for महत्) — d) K4 (m as in text) दर्शित बलात् (for दर्शितावुभौ)

29 a) S1 पार्थ, B3 पार्थ; D1–3 राजन्, M3 मद (for पाप) — b) K3 4 B D (except D1–3) भीमवेग(K4 रूप)या (for वज्र )

30 c) K4 S सर्वास्त्रविदुष सर्वे

31 D3 om 31 — a) Ś1 K1 सर्वे (for मन्ये) N (except K3 Dn1, D3 om.) G1 समुद्भूता° — b) S (except G1) सगरे (for संयुगे) — d) K1 2 B (except B1) D (except D1, 2, D3 om ) भार्या°

32 c) Ś1 Dc Dn2 n3 D3 4 6 पर्याप्त° (for पर्याप्तं) — d) K3 कृष्णा सा हि, K4 D3 यस्मात्कृष्णा, B1 S यत्सा कृष्णा, D1 3 कृष्णा यत्सा (for यत्कृष्णा सा) T G3 4 M1 सभा गता, G1 [अ]थ भारत

33 b) Ś1 K (except K3) Dc D1–3 5 तिष्ठेयुर्, K4 (marg sec m ) भ्रियेरन् (for तिष्ठेरन्) — c) K1 D3 T G (except G1) गुरुः श्रेष्ठो, K4 कुरुश्रेष्ठो — d) Ś1 K3 4 B3 तिष्ठति

34 b) K1 (by transp ) शुश्रूषति न, K4 न शृणोति हि — d) Dc D1–3 T2 G1–3 अचेतस, G4 अरिंदम°

35 a) S1 K1 4 B1 D1–3 [ऽ]प्यस्य, G1 स्वस्य (for चास्य) — c) Ś1 ये (for ते) K3 3 Dn D4 6 G1 तस्य (for ऽप्यस्य)

36 a) S1 B3 D6 स्वैर (for स्वैर ) Ś1 च हि, K3 3 B Dc Dn D4 6 G1 M1 ह्यपि; K4 D3 [अ]पि हि (for अपि) — d) B4m D4 6 मन्युनाति(B4m °भि)समीरिता°

37 c) K4 (marg sec m ) जुदिता°, D3 G3 4 विदिता, M °चुदिता — d) Ś1 K1 2 Dc D2 3 5 घात°; B1 D1 पात, B3 G3 4 साध° (for साद°)

38 a) Dn D6 तस्य (for यस्य) — b) Ś1 K (except K3) Dc D1–3 5 सारथिश्च (for सुहृच्चैव) — c) K1 T1 2 (before corr ) G1 2 M सन्, T2 G3 स्याव् (for स) — d) Ś1 K (except K3) D3 3 तेन (for तस्य)

इदं च सुमहच्चित्रमर्जुनस्येह संजय ।
महादेवेन बाहुभ्यां यत्समेत इति श्रुतिः ॥ ३९
प्रत्यक्षं सर्वलोकस्य खाण्डवे यत्कृतं पुरा ।
फल्गुनेन सहायार्थे वह्नेर्दामोदरेण च ॥ ४०
सर्वथा नास्ति मे पुत्रः सामात्यः सहबान्धवः ।
क्रुद्धे पार्थे च भीमे च वासुदेवे च सात्वते ॥ ४१

इति श्रीमहाभारते आरण्यकपर्वणि षट्चत्वारिंशोऽध्यायः ॥ ४६ ॥

# ४७

जनमेजय उवाच ।
यदिदं शोचितं राज्ञा धृतराष्ट्रेण वै मुने ।
प्रव्राज्य पाण्डवान्वीरान्सर्वमेतन्निरर्थकम् ॥ १
कथं हि राजा पुत्रं स्वमुपेक्षेताल्पचेतसम् ।
दुर्योधनं पाण्डुपुत्रान्कोपयानं महारथान् ॥ २
किमासीत्पाण्डुपुत्राणां वने भोजनमुच्यताम् ।
वानेयमथ वा कृष्टमेतदाख्यातु मे भवान् ॥ ३
वैशंपायन उवाच ।
वानेयं च मृगांश्चैव शुद्धैर्बाणैर्निपातितान् ।
ब्राह्मणानां निवेद्याग्रमभुञ्जन्पुरुषर्षभाः ॥ ४
तांस्तु शूरान्महेष्वासांस्तदा निवसतो वने ।
अन्वयुर्ब्राह्मणा राजन्साग्नयोऽनग्नयस्तथा ॥ ५
ब्राह्मणानां सहस्राणि स्नातकानां महात्मनाम् ।
दश मोक्षविदां तद्वद्यान्बिभर्ति युधिष्ठिरः ॥ ६
रुरून्कृष्णमृगांश्चैव मेध्यांश्चान्यान्वनेचरान् ।
बाणैरुन्मथ्य विधिवद्ब्राह्मणेभ्यो न्यवेदयत् ॥ ७

---

**39** a) Ś1 K1 4 D4 तु, K2 B1 Dn हि (for च) — b) K8 न सशय˚, B2 [इ]ह सयुगे (for [इ]ह सजय) — d) Ś1 K3 4 B1 Dc D1–3 य˚ (for यत्) B2 D6 स्मृति, G1 श्रुत, M2 श्रुत

**40** c) Ś1 K2 3 B D फाल्गुनेन, K4 पाडवेन K3 4 (by corr) D1–3 G4 सहायेन, T2 G3 [अ]सहायेन (for सहायार्थे) — d) T2 G3 4 विना (for वह्नेर्)

**41** Dc1 repeats $41^{ab}$ as in Dn! — a) B2 3 समर्था, D4 शमार्थो (for सर्वथा) K2 B (except B1) Dn D4 6 T2 G (except G1) न हि (for नास्ति), and पुत्रा˚ (for पुत्र) K4 सर्वे न सति मे पुत्रा˚ — b) G4 बधुभि˚ (for ˚बान्धव) K2 B (except B1) Dn D4 6 सहामात्या ससौबला˚, K4 T2 G2 3 सामात्या सहबाधवा˚ — c) Ś1 K (except K2) Dc D1–3 5 transp पार्थे and भीमे

Colophon om in K3 — *Major parvan* Ś1 K1 Dn2 T G2–4 आरण्य — *Adhy name* K4 D5 धृतराष्ट्रवाक्य, B4 Dc धृतराष्ट्रपरिदेवन, D1 धृतराष्ट्रविलाप˚, D2 धृतराष्ट्रसजयसवाद˚, T2 G3 M1 धृतराष्ट्रशोकवाक्य, G1 धृतराष्ट्रसताप — *Adhy no* (figures, words or both) Dn 49, D1 50, S (as in text) 46 (M1 47) — *Śloka no* Dn D1 23

**47**

**2** a) K2 B2 Dn D4 6 च, M1 नु (for हि) Ś1 K1 2 B1 3 Dn2 D1 4–6 T G3 4 राजपुत्र (for राजा पुत्र) K2 B2 3 Dn D4 6 तम् (for स्वम्) — b) Ś1 B3 Dc1 ˚चेतन

**3** c) T1 2 (before corr) G1 2 4 M वन्य वाप्य (for वानेयम˚) — d) B1 Dn1 n2 D2 3 5 नो (for मे) K3 4 T1 एतदाख्यातुमर्हसि

**4** D3 om $4^{a}$–$5^{b}$ — a) Dc S वा(T1 G4 M2 व)नेयाश्च (for वानेय च) T1 G1 M ते तु (for चैव) — d) K1 ह्यभुजन् (for अभुजन्) D1 भरत˚ (for पुरुष˚) K4 ह्युपभुजन्नरर्षभा˚, S अभुजत (T1 भुजते ते, G2 M2 अभुजत) महारथा˚

**5** D3 om $5^{ab}$ (cf v l 4) — a) T1 G1 M1 स्म शूरान्, T2 G2–4 श्रुत्वाथ (for तु शूरान्) — b) T2 G3 4 M तदानीं वस˚

**6** c) K2 B (except B1) D (except D1–4) G1 तत्र, K4 राजन् (for तद्वद्)

**7** b) T G मनोरमान्, M1 महारथा (for वनेचरान्) — c) S1 विशिर्ष्वैर्, K B D (except D3) विगिर्धैर् (for विधिवद्) — d) Ś1 K4 D2 8 निवेदयन्, K2 D3 6 न्यवेदयन्

न तत्र कश्चिद्दुर्वर्णो व्याधितो वाप्यदृश्यत ।
कृशो वा दुर्बलो वापि दीनो भीतोऽपि वा नरः ॥ ८
पुत्रानिव प्रियाञ्ज्ञातीन्भ्रातॄनिव सहोदरान् ।
पुपोष कौरवश्रेष्ठो धर्मराजो युधिष्ठिरः ॥ ९
पतींश्च द्रौपदी सर्वान्द्विजांश्चैव यशस्विनी ।
मातेव भोजयित्वाग्रे शिष्टमाहारयत्तदा ॥ १०
प्राचीं राजा दक्षिणां भीमसेनो
यमौ प्रतीचीमथ वाप्युदीचीम् ।
धनुर्धरा मांसहेतोर्मृगाणां
क्षयं चक्रुर्नित्यमेवोपगम्य ॥ ११
तथा तेषां वसतां काम्यके वै
विहीनानामर्जुनेनोत्सुकानाम् ।
पञ्चैव वर्षाणि तदा व्यतीयु-
रधीयतां जपतां जुह्वतां च ॥ १२

इति श्रीमहाभारते आरण्यकपर्वणि सप्तचत्वारिंशोऽध्यायः ॥ ४७ ॥

# ४८

वैशंपायन उवाच ।
सुदीर्घमुष्णं निःश्वस्य धृतराष्ट्रोऽम्बिकासुतः ।
अब्रवीत्संजयं सूतमामन्त्र्य भरतर्षभ ॥ १
देवपुत्रौ महाभागौ देवराजसमद्युती ।

8 a) Ś1 K1 transp तत्र and कश्चित् B1 4 दुर्वृत्तो, D1-3 5 मलिनो (for दुर्वर्णो) — b) T G (except G1) व्यथितो K3 4 B D (except Dc2) वापि दृश्यते — d) K1 2 B4 D (except Dc1 D5) पुन, B2 भवेत् (for नर) — After 8, S ins

197* न तत्राविनय कश्चिददृश्यत तदा द्विज ।

9 ab) K3 B (except B1) Dn D1 4 6 transp ज्ञातीन् and भ्रातॄन्

10 a) T G (except G1) यतींश्च (for प ) K3 4 B1 Dc D5 तु (for च) — b) K2 4 B (except B1) Dn D4-6 G1 द्विजातींश्च (for द्विजांश्चैव) — c) K3 B2 3 Dn D1 4 6 मातृवद् (for मातेव) K4 भोजयेत्पुत्रान्

11 c) D3 5 धनुर्धराणा सहितो मृगाणा — d) Dc क्षेम, D4 क्षेप (for क्षय) Dc D5 कुर्युर् (for चक्रुर्) B2 अभि (for उप)

12 a) K1 तेषा तथा (by transp), K4 एव तथा, B1 तथैव तेषा, B4 तदा तेषा, Dc D5 तदा (Dc1 तथा) चैषा, T2 G3 5 यथाजोष — K1 transp 12c and 12d — c) K3 Dc D5 [अ]थ (for [ए]व) K2 3 B Dn D1 4-6 S (except G1) तथा, K4 ततो (for तदा) K3 व्यतीता, B4 [अ]प्यतीयुर् — Ś1 om 12d — d) K3 व्यधीयता; T2 G3 4 अधीयिना K1 अधीयता जुह्वता चैव राजन्

Colophon — *Major parvan* S1 K1 T G2-4 आरण्य — *Adhy name* K4 M1 धृतराष्ट्रपरिताप, D2 धृतराष्ट्र संजयसंवादे पाण्डवभक्षकथन, D5 पाण्डवव्यवहार, T2 G1 3 पाण्डवारण्यव्यवहारकथन — *Adhy no* (figures, words or both) Dn 50, D1 51, T1 46, T2 G M2 47 (as in text), M1 48 — *Śloka no* Dn D1 12

## 48

1 K1 2 B D (except D2 3) ins after वैश उ T2 G (except G1), after 199*

198* तेषा तच्चरित श्रुत्वा मनुष्यातीतमद्भुतम् ।
चिन्ताशोकपरीतात्मा मन्युनाभिपरिप्लुत ।

[(L 1) T2 G (except G1) तु (for तच्) K1 B (except B2) Dc T2 G (except G1) ईदृश (for अद्भुतम्) — (L 2) T2 G (except G1) च (for [अ]भि ) ] D1 om 1 — a) T G M2 स (for सु) K1 2 B (except B1) D (except Dc1 D5, D1 om ) M1 दीर्घमुष्ण च नि — d) K3 Dn D5 पुरुषर्षभ — K1 2 B Dc Dn D4-6 T2 G (except G1) ins after 1 D1 (which om 1) ins after 198*

199* न रात्रौ न दिवा सूत शान्ति प्राप्नोमि वै क्षणम् ।
सचिन्त्य दुर्नय घोरमतीत धूतज हि तत् ।
तेषामसह्यवीर्याणा शौर्यं धैर्यं धृति पराम् ।
अन्योन्यमनुराग च भ्रातॄणामतिमानुषम् ।

[(L 1) K1 2 Dn2 n3 D4 रात्रि (for रात्रौ) T2 G3 4 आप्नोमि, G3 आप्नोति — (L 2) T2 G3 निर्णय (for दुर्नय) — (L 3) T2 G2-4 तेषामशक्य (G2 पा शक्य तु) वीराणा

नकुलः सहदेवश्च पाण्डवौ युद्धदुर्मदौ ॥ २
दृढायुधौ दूरपातौ युद्धे च कृतनिश्चयौ ।
शीघ्रहस्तौ दृढक्रोधौ नित्ययुक्तौ तरस्विनौ ॥ ३
भीमार्जुनौ पुरोधाय यदा तौ रणमूर्धनि ।
स्थास्येते सिंहविक्रान्तावश्विनाविव दुःसहौ ।
न शेषमिह पश्यामि तदा सैन्यस्य संजय ॥ ४
तौ ह्यप्रतिरथौ युद्धे देवपुत्रौ महारथौ ।
द्रौपद्यास्तं परिक्लेशं न क्षंस्येते त्वमर्षिणौ ॥ ५
वृष्णयो वा महेष्वासा पाञ्चाला वा महौजसः ।
युधि सत्याभिसंधेन वासुदेवेन रक्षिताः ।
प्रधक्ष्यन्ति रणे पार्थाः पुत्राणां मम वाहिनीम् ॥ ६
रामकृष्णप्रणीतानां वृष्णीनां सूतनन्दन ।
न शक्यः सहितुं वेगः पर्वतैरपि संयुगे ॥ ७
तेषां मध्ये महेष्वासो भीमो भीमपराक्रमः ।
शैक्यया वीरघातिन्या गदया विचरिष्यति ॥ ८
तथा गाण्डीवनिर्घोषं विस्फूर्जितमिवाशनेः ।
गदावेगं च भीमस्य नालं सोढुं नराधिपाः ॥ ९
ततो[illegible] सुहृदां वाचो दुर्योधनवशानुगः ।
स्मरणीयाः स्मरिष्यामि मया या न कृताः पुरा ॥ १०

संजय उवाच ।

व्यतिक्रमोऽयं सुमहांस्त्वया राजन्नुपेक्षितः ।
समर्थेनापि यन्मोहात्पुत्रस्ते न निवारितः ॥ ११
श्रुत्वा हि निर्जितान्द्यूते पाण्डवान्मधुसूदनः ।
त्वरितः काम्यके पार्थान्समभावयदच्युतः ॥ १२
द्रुपदस्य तथा पुत्रा धृष्टद्युम्नपुरोगमाः ।
विराटो धृष्टकेतुश्च केकयाश्च महारथाः ॥ १३
तैश्च यत्कथितं तत्र दृष्ट्वा पार्थान्पराजितान् ।
चारेण विदितं सर्वं तन्मया वेदितं च ते ॥ १४
समागम्य वृतस्तत्र पाण्डवैर्मधुसूदनः ।
सारथ्ये फल्गुनस्याजौ तथेत्याह च तान्हरिः ॥ १५

---

शौर्यधैर्यधनु(T2 G3 °धृति)ष्मता ]
— Thereafter T2 G (except G1) ins 198*

**3** a) Ś1 Dc D5 M2 दूरपाती, K1 3 4 D2 3 °पाते, B4m T G (except G1) दुराधर्षौ — b) B1 उभौ च, T2 G2 3 तौ युद्धे (for युद्धे च) — d) D1 तपस्विनौ, S रथे स्थितौ

**4** a) D1 रण , S युधि (for सिंह-) — e) Dn1 हि प्र , S अनु (for इह) — f) K (except K4) B (except B1) Dc Dn D4 6 मम (for तदा) K4 (m as in text) पुत्र (for सैन्य°)

**5** a) S (except M1) ततस्तौ ह्यप्रतिरथौ — c) S1 K1 स- (for त) — d) K3 4 D1 2 क्षस्यते, T2 G (except G1) क्षमेते S1 सुमर्षिणौ, K1 Dc D1 5 ह्यमर्ष(K1 °र्षि)णौ, K3 हि मोक्षणे, K4 D2 3 S [ऽ]त्य(G1 स्व)मर्षणौ, B1 तरस्विनौ

**6** a) K2 B4 Dn D3 4 5 [ऽ]थ (for वा) — b) B1 4 पचाला K1 महारथ°, S (except T1 G2) [अ]मितौजस° (for महौ°) — d) Ś1 K1 3 D1-3 पालिता° (for रक्षि°) — e) B1 D1-3 वीरा (for पार्था)

**7** a) Dn2 T2 G (except G1) °प्रतीताना — d) K2 B (except B1) Dn D4-6 सर्वैस्तैरपि S (except M2) दुःसह° (for संयुगे)

**8** $8^b$ = 1 2 $184^b$, 114 $9^d$, 141 $18^b$ 4 21 4[illegible] etc — c) K (except K2) D3 T1 G2 M सैक्यया, G[illegible] सैन्यया, G4 महत्या

**10** a) B2 तत्राह, Dc अतो°, M तदा° — d) K1 Dc transp मया and या, K4 transp मया and पुरा

**12** a) S1 तान्, K1 M1 वि-, K3 B3 [अ]पि, G2 4 यन्, M2 च (for हि) K3 सर्वान् (for द्यूते) — b) T2 G धर्मचारिण (for मधु°)

**13** d) S1 केकेया°, K2 Dc Dn D1-3 6 कैकेया°, K4 B2 D4 5 कैकया°

**14** a) K3 Dc D1 तत (for यत्) K2 B (except B1) Dn D4 6 राजन् (for तत्र) — S1 om (hapl) $14^b$–$15^a$ — b) K1 समागतै , S तथागतान् (for परा°) — T2 G3 om (hapl) $14^c$–$16^b$ — c) K1 4 S (T2 G3 om ) कथित (for विदित) — d) T1 G2 4 M यन्मया K1 तव, D5 च ये (for च ते)

**15** T2 G3 om 15, Ś1 om $15^a$ (cf v.l 14) — a) G2 4 तत° (for वृत°) — c) N (except K1) M1 फाल्गुनस्य — d) D5 ततोभ्याह S1 स (for च)

**16** T2 G3 om $16^{ab}$ (cf v l 14) — a) T1 G (G3

अमर्षितो हि कृष्णोऽपि दृष्ट्वा पार्थांस्तथागतान् ।
कृष्णाजिनोत्तरासङ्गानब्रवीच्च युधिष्ठिरम् ॥ १६
या सा समृद्धिः पार्थानामिन्द्रप्रस्थे बभूव ह ।
राजसूये मया दृष्टा नृपैरन्यैः सुदुर्लभा ॥ १७
यत्र सर्वान्महीपालाञ्शस्त्रतेजोभयार्दितान् ।
सवङ्गाङ्गान्सपौण्ड्रोड्रान्सचोलद्रविडान्धकान् ॥ १८
सागरानूपगांश्चैव ये च पत्तनवासिनः ।
सिंहलान्बर्बरान्म्लेच्छान्ये च जाङ्गलवासिनः ॥ १९
पश्चिमानि च राज्यानि शतशः सागरान्तिकान् ।
पह्लवान्दरदान्सर्वान्किरातान्यवनाञ्शकान् ॥ २०
हारहूणांश्च चीनांश्च तुखारान्सैन्धवांस्तथा ।
जागुडान्रमठान्मुण्डान्स्त्रीराज्यानथ तङ्गणान् ॥ २१
एते चान्ये च बहवो ये च ते भरतर्षभ ।
आगतानहमद्राक्षं यज्ञे ते परिवेषकान् ॥ २२
सा ते समृद्धिर्यैरात्ता चपला प्रतिसारिणी ।
आदाय जीवितं तेषामाहरिष्यामि तामहम् ॥ २३
रामेण सह कौरव्य भीमार्जुनयमैस्तथा ।
अक्रूरगदसाम्बैश्च प्रद्युम्नेनाहुकेन च ।
धृष्टद्युम्नेन वीरेण शिशुपालात्मजेन च ॥ २४
दुर्योधनं रणे हत्वा सद्यः कर्णं च भारत ।
दुःशासनं सौबलेयं यश्चान्यः प्रतियोत्स्यते ॥ २५
ततस्त्वं हास्तिनपुरे भ्रातृभिः सहितो वसन् ।
धार्तराष्ट्रीं श्रियं प्राप्य प्रशाधि पृथिवीमिमाम् ॥ २६
अथैनमब्रवीद्राजा तस्मिन्वीरसमागमे ।

om ) $M_1$ अमर्षी स (for र्षितो)   $B_1 T_1 G_1$ $_4$ ह, $B_3$ $Dc_2$ [ऽ]पि, $D_1$ $M_2$ च (for हि)   $B_3$ $D_1$ हि (for [ऽ]पि)

**18** $^{a}$) T G सर्वं (for सर्वान्) — $^{c}$) $Ś_1$ अगवगपुड्रो स्यान्, $K_1$ अगान्वगान्कलिंगाश्च, $K_3$ सवगागासजलान्, $K_4$ $Dc_1$ $D_2$ सवगागपुलिंदोड्र; $Dc_2$ $D_3$ °गसपुंड्रोड्रान्, $D_1$ °गम रुडोंडान्, $T_1$ सवकांगान्मरून्पौड्रान्, $T_2$ $G_3$ °गान्सपौड्रांश्च, $G_1$ सवान्कानगरून्पुड्रान्, $G_2$ सवकाकमरून्पुड्रान्; $G_4$ अगावग करूशाश्च, M अगवगमरुपौड्रान् — $^{d}$) $Ś_1$ $K_1$ सचोलान्ध्र ($K_1$ न्द्रा)मिडान्छकान्; $K_2$ Dn $D_5$ सचोलद्राविडाध्रकान्, $K_3$ सचोडहविराध्रकान्; $K_4$ सचोडद्रविडाद्रकान् (m °द्रमिडा ध्रकान्), $B_3$ $_4$ सचोलद्राविडाधकान्, $Dc_1$ $D_{1-3}$ सचौड्रद्रवि डाध्र($Dc_1$ $D_1$ घ)कान्, $Dc_2$ सचोलम्राविडान्छकान्, $T_1$ सचोलाद्रमिडाद्रकान्, $T_2$ $G_2$ $_3$ सचोलद्रमिडाधकान्, $G_1$ $_4$ $M_1$ सचोलद्रमिळाध्रकान्, $M_2$ सचोलद्रमिळातकान्   S (mostly) -चोळ (for -चोल)

**19** $^{a}$) $K_2$ $_3$ B D सागरानूपका($K_3$ $_3$ $D_4$ $_5$ °रूपका°, $B_1$ नूपजा)श्चैव, $G_1$ सागरानापगाश्चैव — $Ś_1$ $K_1$ om (? hapl) $19^{bc}$ — $^{b}$) $K_2$ मातनिवासिन, $K_4$ $Dc_1$ प्रत्यत°; $B_1$ $_3$ $Dc_2$ $D_5$ पर्वत°, Dn $D_{1-3}$ मालाभि° — $B_1$ om (hapl) $19^{cd}$ — $^{d}$) $Ś_1$ $K_1$ $_3$ $D_{1-3}$ तथा, $K_4$ यथा (for ये च)   N लकानिवासिन; $T_2$ G (except $G_1$) मुद्गल

**20** $^{a}$) $K_2$ $B_3$ $_4$ Dn राष्ट्राणि (for राज्यानि)   $K_4$ पश्चिमावर्तराज्यानि — $^{b}$) M सागरान्तिके — $^{c}$) $K_3$ द्रुर्वान्, $B_3$ $M_1$ दार्वान्, $M_2$ चैव (for सर्वान्)

**21** $T_2$ $G_3$ $_4$ om $21^{ab}$ — $^{a}$) $Ś_1$ दीनाश्च, $K_2$ Dn ($Dn_1$ m as in text) गुरूमाश्च — $^{b}$) $K_{2-4}$ D (except Dc) $T_1$ $G_1$ M तुषारान् (for तुखा°)   $Ś_1$ $K_1$ चीनाश्च ($K_1$ दीनान्वै) तुखरास्तथा; $K_4$ तुषारान्सैंधवानपि, $G_3$ तुषाराश्चैव सैंधवान् — $^{c}$) $Ś_1$ $K_1$ जाहुडान्हमिडान्हीनान्, $K_3$ जाहुडा न्मागधान्हूणान्, $K_4$ जागलान्रमठाश्चापि; $B_1$ जागुडान्मागमन्पु ड्रान्; $B_4$ जारूथ्यान्रसलान्सुडान्, $Dc_1$ जागुडान्रामहान्कुडान्, $Dc_2$ °न्रामठान्कुडान्, $Dn_2$ °न्रामठान्सुडान्, $D_{1-3}$ $_5$ जाहुडान् ($D_1$ जान्हुरान्, $D_2$ जागणान्) रा(*or* र)मठान्हूणान्; $T_1$ $G_1$ M जागरान्रमया($M_2$ °न्द्रमिळा)न्पुड्रान्, $T_2$ $G_3$ सैंधकान्पौड्र कास्तत्र, $G_2$ सागरानूपजान्पौड्रान्, $G_4$ सैंधवान्पुड्रकास्तत्र — $^{d}$) $K_2$ $_3$ $B_3$ Dn $D_{1-3}$ स्त्रीराज्यमथ, $T_2$ $G_2$ $_3$ स्त्रीराज्यान्यथ   $T_1$ $G_2$ $M_2$ ककणान्, $T_2$ $G_3$ $_4$ कोंकणान्, $G_1$ शकणान्   $Ś_1$ स्त्रीराज्यान्सैंधवास्तथा, $K_1$ तथा स्त्रीराज्यतगणान्

**22** $K_3$ om $22^{ab}$ — $^{ab}$) N ($K_3$ om) केक(कैके *or* कैक)यान्मालवांश्चैव तथा काश्मीरकानपि — After $22^{ab}$, $M_2$ ins

200* ताश्चान्यांश्च सुबहून्नाहूतान्भरतर्षभ ।

— $^{c}$) N अद्राक्षमहमाहूतान् — $^{d}$) $B_4$ तथा देशविदेश कान्

**23** $^{a}$) $T_2$ G (except $G_1$) येषा (for सा ते)   $K_1$ $_3$ $B_3$m Dc S (except $M_1$) भासा (for आत्ता) — $^{d}$) $Ś_1$ $K_1$ ते मही (for तामहम्)

**25** $^{d}$) $Ś_1$ $K_3$ $D_{1-3}$ यो चान्य°   S (except $M_1$) प्रति योत्स्यति

**26** $^{a}$) S (except $M_1$) हस्तिन° — $^{cd}$) $T_2$ G (except $G_2$) धार्तराष्ट्रात्   $T_2$ G (except $G_1$) स (*for* प्र)   $M_2$ जितारिः पृथिवीपाल सुहृदो नदयिष्यसि

शृण्वत्सु तेषु सर्वेषु धृष्टद्युम्नमुखेषु च ॥ २७
प्रतिगृह्णामि ते वाचं सत्यामेतां जनार्दन ।
अमित्रान्मे महाबाहो सानुबन्धान्हनिष्यसि ॥ २८
वर्षात्त्रयोदशादूर्ध्वं सत्यं मां कुरु केशव ।
प्रतिज्ञातो वने वासो राजमध्ये मया ह्ययम् ॥ २९
तद्धर्मराजवचनं प्रतिश्रुत्य सभासदः ।
धृष्टद्युम्नपुरोगास्ते शमयामासुरञ्जसा ।
केशवं मधुरैर्वाक्यैः कालयुक्तैरमर्षितम् ॥ ३०
पाञ्चाली चाहुरक्लिष्टां वासुदेवस्य शृण्वतः ।
दुर्योधनस्तव क्रोधाद्देवि त्यक्ष्यति जीवितम् ।
प्रतिजानीम ते सत्यं मा शुचो वरवर्णिनि ॥ ३१
ये स्म ते कुपितां कृष्णे दृष्ट्वा त्वां प्राहसंस्तदा ।
मांसानि तेषां खादन्तो हसिष्यन्ति मृगद्विजाः ॥ ३२
पास्यन्ति रुधिरं तेषां गृध्रा गोमायवस्तथा ।
उत्तमाङ्गानि कर्षन्तो यैस्त्वं कृष्टा सभातले ॥ ३३
तेषां द्रक्ष्यसि पाञ्चालि गात्राणि पृथिवीतले ।
क्रव्यादैः कृष्यमाणानि भक्ष्यमाणानि चासकृत् ॥ ३४
परिक्लिष्टासि यैस्तत्र यैश्चापि समुपेक्षिता ।
तेषामुत्कृत्तशिरसां भूमिः पास्यति शोणितम् ॥ ३५
एवं बहुविधा वाचस्तदोचुः पुरुषर्षभाः ।
सर्वे तेजस्विनः शूराः सर्वे चाहतलक्षणाः ॥ ३६
ते धर्मराजेन वृता वर्षादूर्ध्वं त्रयोदशात् ।
पुरस्कृत्योपयास्यन्ति वासुदेवं महारथाः ॥ ३७
रामश्च कृष्णश्च धनंजयश्च
प्रद्युम्नसाम्बौ युयुधानभीमौ ।
माद्रीसुतौ केकयराजपुत्राः

---

**27** $^{c}$) B (except B2) शृणुष्व K2 B (except B2) Dn1 n3 D5 [ए]तेषु (for ते°) K3 B2 D (except D1-3 5) वीरेषु (for सर्वे°) — $^{d}$) Ś1 K (except K3) B (except B2) Dc D1-3 5 M2 वै (for च)
**28** Before 28, a few N MSS read युधिष्ठिर उ° — $^{a}$) K3 प्रतिवाचमिमा सत्या — $^{b}$) K3 नसत्या च; B2 Dn D4 6 T2 G3 इमा सत्या (for सत्यामेता) T1 2 (before corr) G1 3 4 M2 सत्यामभिगतो (T1 G1 4 °हितो) ह्यसि, M1 सत्या मम हितो ह्यसि
**29** $^{d}$) K4 S (except M2) राज्ञा (for राज°) Ś1 तथा, D1-3 यथा (for मया) S च य(G1 त)त् (for ह्ययम्)
**30** $^{a}$) S धर्मराजस्य व° — $^{b}$) Ś1 K1 श्रुत्वा सर्वे (for प्रति°) — $^{c}$) Ś1 K1 Dc च (for ते) — $^{d}$) K3 B Dn3 M Cn सम° (for शम°) ❀ Cn समयामासु° सम युक्तमित्याचख्यु°। समशब्दात्तदाचष्ट इति णिच् लिटि आम्। ❀ — $^{f}$) T2 G कालयुक्तम्
**31** $^{a}$) Ś1 K3 B D (except D1-3) M1 प्राहुर् (for चाहुर्) G1 पाचालीं चाब्रुव क्लिष्टा — $^{c}$) B1 G1 M1 प्रतिजानामि G2 4 ते नित्य Ś1 K1 3 Dc D1-3 5 सत्य ते (Ś1 च) प्रतिजानीम, K3 B2-4 Dn D4 6 प्रतिजानीमहे सत्य
**32** $^{ab}$) K3 येषा स्व, K4 यत्किंचित्; D1 ते स्म ते, D2 ये तत्र, D3 यस्मात्ते, G4 ये च ते K3 B1 3 D (except D1-3) [S]क्षजिता, S कुरव (for कुपिता) Ś1 transp कृष्णे and दृष्ट्वा, Dc D3 transp दृष्ट्वा and त्वा — $^{d}$) B2 4 Dn3 n3 G1 M हरिष्यति, T G2-4 भविष्यति Ś1 K1 Dc वृका द्विजा°, K3 4 Dn D5 वृक°, T2 G3 मृगा द्विजा°
**33** $^{b}$) K4 Dc D5 T2 G1-3 M2 गृध्रगोमा° G4 गृध्र गोमायुवायसा° — $^{c}$) K4 (m as in text) अगैरंगानि कर्षन्तो — $^{d}$) K3 B (except B1) Dn D4 6 कृष्टासि, K4 (m as in text) आकृष्टा (for स्व कृष्टा) B2 मही° (for सभा°) B1 यैस्त्व कृष्टासि भाविनि, S यैस्त्व नीता सभा पुरा (M2 गता)
**34** Dc3 om (hapl) 34$^{ab}$ — $^{a}$) Ś1 K1 3 Dc1 D1-3 5 कल्याणि (for पाञ्चालि) — $^{b}$) Dc1 D5 शिरांसि (for गात्राणि) — $^{cd}$) Ś1 transp कृष्य° and भक्ष्य°
**35** $^{b}$) K1 2 B1 3 Dn D1 4 6 T2 G3 3 M1 [अ]सि (for [अ]पि) — $^{c}$) K1 4 (m as in text) उत्कृत्य, K3 उत्कृष्य (for उत्कृत्त) — 35$^{d}$ = 3 13 5$^{d}$
**36** $^{b}$) Ś1 K1 D1 3 6 तामूचु°, K3 B Dc Dn D4 5 त ऊचु, K3 ऊचुस्ते, K4 D2 तामुक्त्वा, T2 G3 ते चोचु° Ś1 K1 3 B2 3 Dc D1-3 5 भरतर्षभ, K2 4 B4 Dn D4 6 भरतर्षभा° — $^{d}$) K3 4 B2-4 Dn1 n3 D1 4-6 T2 G3 Cnp चाहवलक्षणा, T1 G1 2 4 M1 चाहित, Ś1 K1 3 B1 Dc Dn3 D2 3 M2 Cn as in text [Nil and Arj, misunderstanding the word, have the gloss अहतलक्षणा° = अखण्डितध्वजा° ]
**37** $^{c}$) Ś1 K1 3 Dc D1 3 5 पुरस्कृत्य समेष्यति
**38** $^{a}$) S राम च कृष्ण च धनजय च — $^{c}$) Some MSS कैकय° S °राजपुत्रान् — $^{d}$) S °पुत्रान् K3 3 Dn

पाञ्चालपुत्राः सह धर्मराज्ञा ॥ ३८
एतान्सर्वाँल्लोकवीरानजेया-
न्महात्मनः सानुबन्धान्ससैन्यान् ।
को जीवितार्थी समरे प्रत्युदीया-
त्क्रुद्धान्सिंहान्केसरिणो यथैव ॥ ३९
धृतराष्ट्र उवाच ।
यन्माब्रवीद्विदुरो द्यूतकाले
त्वं पाण्डवाञ्जेष्यसि चेन्नरेन्द्र ।
ध्रुवं कुरूणामयमन्तकालो
महाभयो भविता शोणितौघः ॥ ४०
मन्ये तथा तद्भवितेति सूत
यथा क्षत्ता प्राह वचः पुरा माम् ।
असंशयं भविता युद्धमेत-
द्गते काले पाण्डवानां यथोक्तम् ॥ ४१

इति श्रीमहाभारते आरण्यकपर्वणि अष्टचत्वारिंशोऽध्यायः ॥ ४८ ॥

# ४९

जनमेजय उवाच ।
अस्त्रहेतोर्गते पार्थे शक्रलोकं महात्मनि ।
युधिष्ठिरप्रभृतयः किमकुर्वन्त पाण्डवाः ॥ १
वैशंपायन उवाच ।
अस्त्रहेतोर्गते पार्थे शक्रलोकं महात्मनि ।
न्यवसन्कृष्णया सार्धं काम्यके पुरुषर्षभाः ॥ २
ततः कदाचिदेकान्ते विविक्त इव शाद्वले ।
दुःखार्ता भरतश्रेष्ठा निषेदुः सह कृष्णया ।
धनंजयं शोचमानाः साश्रुकण्ठाः सुदुःखिताः ॥ ३
तद्वियोगाद्धि तान्सर्वाञ्शोकः समभिपुप्लुवे ।
धनंजयवियोगाच्च राज्यनाशाच्च दुःखिताः ॥ ४
अथ भीमो महाबाहुर्युधिष्ठिरमभाषत ।
निदेशात्ते महाराज गतोऽसौ पुरुषर्षभः ।
अर्जुनः पाण्डुपुत्राणां यस्मिन्प्राणाः प्रतिष्ठिताः ॥ ५

---

D5 मत्स्य ; K4 D2 S मम (for धर्म°)

39 $^a$) K4 D2 6 एतान्हि (K4 एव हि) सर्वान्समरेष्व जेयान् — $^c$) K1 प्रत्युपेयात्, K2 B Dn D4 6 [S]भ्युदीयात् — $^d$) Ś1 K1 4 D1 2 क्रोष्टा (for क्रुद्धान्)

40 $^a$) K3 B1 3 Dn D1 3–5 यन्मा ब्रवीद्, B4 यन्मा मम, T1 यो मामब्र° — $^b$) T2 G (except G1) पाडवं — $^d$) K3 Dc T1 M1 महाहवो, D5 महाभय K4 घोररूप (for शोणि )

Colophon — *Major parvan* Ś1 K1 T G2–4 आरण्य — *Adhy name* K4 G1 M धृतराष्ट्रसंजयसंवाद° (G1 °सला प ), D1 संजयधृतराष्ट्रयोर्वाक्य, D4 6 धृतराष्ट्रविलाप°, D5 धृतराष्ट्रवाक्य — *Adhy no* (figures, words or both) Dc2 M1 49, Dn (Dn1 *sup lin* ) 51, D1 52 T G M2 48 (as in text) — *Śloka no* Dn D1 46

## 49

1 $1^{ab} = 2^{ab}$ — $^b$) B1 इन्द्र° (for शक्र ) — K3 B1 om (hapl ) $1^c$–$2^b$ — $^d$) K1 2 B Dn D4–6 T2 G अकुर्वत

2 K3 B1 Dc2 om $2^{ab}$ (for K3 B1 cf v l 1) — $2^{ab} = 1^{ab}$ — $^c$) K2 B1 Dn आवसन्, K4 निवसन् — $^d$) K (except K3) B3 4 D (except D1–3 5) M भरतर्षभा , B2 पार्थव

3 B3 om (hapl ) $3^a$–$5^d$ — $^b$) D1–3 S मृदु (for इव) K4 Dc D6 S शाड्वले — $^c$) T2 G3 पुरुषश्रेष्ठा — $^d$) S1 D1–3 transp सह and कृष्णया — $^f$) K4 S सास्र(K4 °श्रु)नेत्रा (for साश्रुकण्ठा )

4 K2 D2 (both hapl ) and B3 om 4 (for B3 cf v l 3) — $^a$) K1 4 D4–6 तद्वियोगान्वितान्, B Dn °दितान् (for °द्धि तान्) S सर्वेषा (for तान्सर्वान्) — $^d$) B1 2 Dn D4 6 राज्यभ्रशाच्च

5 B3 om $5^{abcd}$ (of v l. 3) — $^c$) T2 G (except G1) नियोगात्ते K4 D5 महाबाहुर्, M1 महाभाग — $^d$) K2 4 B2 4 Dn D3 4 6 T2 G3 4 M1 भरतर्षभ° (or °भ) ; K3 पुरुषर्षभ

21

यस्मिन्विनष्टे पाञ्चालाः सह पुत्रैस्तथा वयम् ।
सात्यकिर्वासुदेवश्च विनश्येयुरसंशयम् ॥ ६
योऽसौ गच्छति तेजस्वी बहून्क्लेशानचिन्तयन् ।
भवन्नियोगाद्बीभत्सुस्ततो दुःखतरं नु किम् ॥ ७
यस्य बाहू समाश्रित्य वयं सर्वे महात्मनः ।
मन्यामहे जितानाजौ परान्प्राप्तां च मेदिनीम् ॥ ८
यस्य प्रभावान्न मया सभामध्ये धनुष्मतः ।
नीता लोकममुं सर्वे धार्तराष्ट्राः ससौबलाः ॥ ९
ते वयं बाहुबलिनः क्रोधमुत्थितमात्मनः ।
सहामहे भवन्मूलं वासुदेवेन पालिताः ॥ १०
वयं हि सह कृष्णेन हत्वा कर्णमुखान्परान् ।
स्वबाहुविजितां कृत्स्नां प्रशासेम वसुंधराम् ॥ ११
भवतो द्यूतदोषेण सर्वे वयमुपप्लुताः ।
अहीनपौरुषा राजन्बलिभिर्बलवत्तमाः ॥ १२
क्षात्रं धर्मं महाराज समवेक्षितुमर्हसि ।
न हि धर्मो महाराज क्षत्रियस्य वनाश्रयः ।
राज्यमेव परं धर्मं क्षत्रियस्य विदुर्बुधाः ॥ १३
स क्षत्रधर्मविद्राजन्मा धर्म्यान्नीनशः पथः ।
प्राग्द्वादश समा राजन्धार्तराष्ट्रान्निहन्महि ॥ १४
निवर्त्य च वनात्पार्थमानाय्य च जनार्दनम् ।
व्यूढानीकान्महाराज जवेनैव महाहवे ।
धार्तराष्ट्रानमुं लोकं गमयामि विशां पते ॥ १५
सर्वानहं हनिष्यामि धार्तराष्ट्रान्ससौबलान् ।
दुर्योधनं च कर्णं च यो वान्यः प्रतियोत्स्यते ॥ १६
मया प्रशमिते पश्चात्त्वमेष्यसि वनात्पुनः ।
एवं कृते न ते दोषो भविष्यति विशां पते ॥ १७

---

6 $^{a}$) D1 3 तस्मिन्वि° — $^{b}$) D01 D1 5 पुत्रास्तथा — $^{d}$) K2 B3 4 Dn D1-3 6 न सशय, K3 4 B3 D4 नसशय

7 $^{a}$) K2 B2 Dn D4 6 धर्मात्मा (for तेजस्वी) — $^{b}$) N विचिंतयन् (for अ°) — $^{c}$) K4 गर्हय याति बीभत्सु° — $7^{d}$ = (var) 1 138 $22^{d}$

8 $^{cd}$) S1 K1 जितामाजौ Ś1 K4 Dc D1 परा प्राप्ता; K1 सर्वान्प्राप्ता, K3 D3 परान्प्राप्तान् — S ins after 8 (G1 om line 1, ins after $9^{ab}$)

201* यस्य प्रभावाद्धि वय सभामध्ये धनुष्मत ।
जितान्मन्यामहे सर्वान्धार्तराष्ट्रान्ससौबलान् ।
[Line 1 = (var) $9^{ab}$]

9 $^{a}$) G1 यस्य प्रसादाद्धि वय (cf 201*) — $^{b}$) Ś1 K1 4 वपुष्मत, K3 Dc D5 S (except G1) महाबला (for धनु) — After $9^{ab}$, G1 ins line 2 of 201* — $^{c}$) K3 नीता सर्वे मृत्युलोक — $^{d}$) Ś1 धार्तराष्ट्रश्च सौबल, M2 °ष्ट्रा महाबला

11 $^{a}$) T2 G (except G1) M1 मया (for वय) — $^{d}$) K3 T2 G3 प्रशासेमा, G2 4 M1 प्रशाधीमा

12 $^{a}$) K2 Dn D4 6 बाला (for राजन्) Ś1 K1 3 4 D3 5 अहीना° (K3 °न-) पौरुषाद्राजन् (K4m अहीनपौरुषा सर्वे) — $^{d}$) D2 रिपुभ्यो, G2 बाहुभिर् (for बलिभिर्) N °त्तरा (for °त्तमा)

13 $^{a}$) Ś1 K (except K4) Dc D1-3 G4 क्षत्रधर्मं — $^{b}$) Ś1 K1 त्वमु(K1 °म)पेक्षितुम्, K3 Dc Dn D1-3 5 त्वमवे°, K3 4 त्वमेवे°, D4 6 नन्ववे°

14 $^{a}$) Ś1 K4 न, K1 D3 त्व (for स) K2 B Dn D4 6 T1 G1 राजा (for राजन्) — $^{b}$) K2 4 D (except D1-3 5) G1 4 धर्मात् (for धर्म्यात्) T G (except G2) विनश (for नीनश) — $^{c}$) S (except G1 2) समाद् (for समा) Ś1 K1 यक्ष (for राजन्) K3 4 प्राग्द्वादशे भ्य° सामात्यान् (K4 °शभ्य° समाभ्य°) — After $14^{c}$, Dc D1 ins

202* हृदयेन विचिन्त्यताम् ।
तदुत्तिष्ठ महाबाहो

— $^{d}$) D1-3 निहन्महे

15 $^{a}$) Ś1 K1 3 D2 T G वचनात् (for च वनात्) D1 निवर्तय वनात्पार्थं — $^{c}$) Ś1 व्यूढानीके; K1 2 4 Dc D1 T1 G1 2 M2 नीका K3 सर्वे वै मिलितान्सर्वान् — $^{d}$) N (except Ś1 K1) M2 महामते (for हवे) — $^{f}$) Ś1 नाशयामि, K1 B1 T G M1 गमयाम, K3 Dc D1-3 5 M2 गमयामो

16 $^{a}$) K4 T1 वधि° (for हनि) — $^{b}$) G4 महाहवे (for ससौब) — Cf 5 48 $25^{cd}$ — $^{d}$) K3 Dc D5 S यश्चान्य°, K4 यथान्य° B2 D1 3 T G (except G1) योत्स्यति

17 $^{a}$) S (except M2) प्रशासिते (for प्रशमिते) — $^{b}$) K2 B Dn D4 6 वन (for वनात्) Dc D5 S तत (for पुन) — $^{cd}$) K2 Dn1 n2 दोषा भविष्यति

18 D1 om $18^{a}$–$19^{b}$ — $^{a}$) Ś1 K (except K2)

यज्ञैश्च विविधैस्तात कृतं पापमरिंदम ।
अवधूय महाराज गच्छेम स्वर्गमुत्तमम् ॥ १८
एवमेतद्भवेद्राजन्यदि राजा न बालिशः ।
अस्माकं दीर्घसूत्रः स्याद्भवान्धर्मपरायणः ॥ १९
निकृत्या निकृतिप्रज्ञा हन्तव्या इति निश्चयः ।
न हि नैकृतिकं हत्वा निकृत्या पापमुच्यते ॥ २०
तथा भारत धर्मेषु धर्मज्ञैरिह दृश्यते ।
अहोरात्रं महाराज तुल्यं संवत्सरेण हि ॥ २१
तथैव वेदवचनं श्रूयते नित्यदा विभो ।
संवत्सरो महाराज पूर्णो भवति कृच्छ्रतः ॥ २२
यदि वेदाः प्रमाणं ते दिवसादूर्ध्वमच्युत ।
त्रयोदश समाः कालो ज्ञायतां परिनिष्ठितः ॥ २३
कालो दुर्योधनं हन्तुं सानुबन्धमरिंदम ।
एकाग्रां पृथिवीं सर्वां पुरा राजन्करोति सः ॥ २४
एवं ब्रुवाणं भीमं तु धर्मराजो युधिष्ठिरः ।
उवाच सान्त्वयन्राजा मूर्ध्न्युपाघ्राय पाण्डवम् ॥ २५
असंशयं महाबाहो हनिष्यसि सुयोधनम् ।
वर्षात्त्रयोदशादूर्ध्वं सह गाण्डीवधन्वना ॥ २६
यच्च मा भाषसे पार्थ प्राप्तः काल इति प्रभो ।
अनृतं नोत्सहे वक्तुं न ह्येतन्मयि विद्यते ॥ २७
अन्तरेणापि कौन्तेय निकृतिं पापनिश्चयम् ।
हन्ता त्वमसि दुर्धर्ष सानुबन्धं सुयोधनम् ॥ २८
एवं ब्रुवति भीमं तु धर्मराजे युधिष्ठिरे ।
आजगाम महाभागो बृहदश्वो महानृषिः ॥ २९
तमभिप्रेक्ष्य धर्मात्मा संप्राप्तं धर्मचारिणम् ।
शास्त्रवन्मधुपर्केण पूजयामास धर्मराट् ॥ ३०
आश्वस्तं चैनमासीनमुपासीनो युधिष्ठिरः ।
अभिप्रेक्ष्य महाबाहुः कृपणं बह्वभाषत ॥ ३१
अक्षद्यूतेन भगवन्धनं राज्यं च मे हृतम् ।
आहूय निकृतिप्रज्ञैः कितवैरक्षकोविदैः ॥ ३२

---

Dc D2 3 5 पार्थ, T2 G (except G1) दानै° (for तात) — d) S1 K1 D3 गच्छेयु , K3 गच्छेथा°

**19** D1 om 19ab (cf v l 18) — a) Dc G4 एव (for एतद्) Ś1 राष्ट्र; K (except K3) D2 3 राज्य (for राजन्) — c) D1 3 °सूत्रस्वाद् (for °सूत्र स्याद्)

**20** b) S इति निश्चित — After 20 K1 (which om 21–24) ins a passage given in App I (No 7)

**21** K1 om 21–24, Dc2 om 21c–22b, Ś1 om 21ab — a) T2 G3 4 M2 भरतधर्मेषु — D2 om (hapl) 21d–22c — d) K2 3 B D (Dc2 D2 om) ह, K4 तु (for हि)

**22** K1 om 22, D2 om 22abc, Dc2 om 22ab (cf v l 21) — b) S (except G1) दृश्यते (for श्रूय )

**23** K1 om 23 (cf v l 21) — a) K2 B (except B3) Dn2 n3 D4 6 प्रमाणास्ते — b) K2 3 Dn2 D1 3 उच्यते (for अच्युत) — c) D2 3 त्रयोदशसम कालो; S त्रयोदशादित° (G1 शदिन°, M1 शोदित ) कालो

**24** K1 om 24 (cf v l 21) — c) S (except G1 4) कृत्स्ना (for सर्वां) — A passage given in App I (No 7) is ins in K2 B (except B1) D (except D1–3) after 24 in K1 (which om 21–24) after 20

**25** Before 25, N (except B2) T1 G1 2 M ins वैश उ° (resp वैश ) — c) Ś1 K1 3 T1 राजन्, K4 वाक्य (for राजा) — d) Some MSS पाण्डव

**27** a) K2–4 B2–4 Dn D4 6 यस्त्वम्, S (except T1 G1 M2) यदि (for यच्च) K1 B1 4 Dc Dn1 D1–3 5 मा भाषसे, K2–4 B2 3 Dn2 n3 D4 6 आभाषसे, S त्व मन्यसे (for मा भाषसे) — b) Ś1 K1 3 D3 प्राप्तकालम्, B3 Dc D1 2 4 5 T1 G2 प्राप्तकाल — c) S1 K3 4 B2 Dc D1–3 5 कर्तुं, K1 हन्तु (for वक्तु) — d) S1 K2 B D (except Dn1 D1–3) मम (for मयि)

**28** c) K2 B2 Dn1 n3 D4 6 दुर्धर्ष G1 निहनिष्यसि दुर्धर्ष

**29** c) K3 4 (before corr ) Dn3 T2 G2–4 M2 महाबाहो, D1 °राज, D2 3 G1 योगी, T1 M1 तेजा (for भागो) — d) Ś1 महामति , K4 B3 D1 3 महामुनि (for नृषि )

**31** a) K3 आसने (for आश्वस्त) K3 B4 D5 चैवम् (for चैनम्) D1 आसने समुपासीनम् — b) Ś1 उपास्वस्थो , D1 आश्वास्य च (for उपासीनो) — d) D1 तमृषिं (for कृपण) K3 सोऽभ्यभाषत; D1 प्रत्य°, T2 G (except G1) सम°

**32** a) K1 2 Dn1 n3 D4–6 घूते च (for °घूतेन)

**33** a) K1 G1 च (for हि) K3 अनक्षज्ञतयाह वै

अनक्षज्ञस्य हि सतो निकृत्या पापनिश्चयैः ।
भार्या च मे सभां नीता प्राणेभ्योऽपि गरीयसी ॥ ३३
अस्ति राजा मया कश्चिदल्पभाग्यतरो भुवि ।
भवता दृष्टपूर्वो वा श्रुतपूर्वोऽपि वा भवेत् ।
न मत्तो दुःखिततरः पुमानस्तीति मे मतिः ॥ ३४
बृहदश्व उवाच ।
यद्ब्रवीषि महाराज न मत्तो विद्यते क्वचित् ।
अल्पभाग्यतरः कश्चित्पुमानस्तीति पाण्डव ॥ ३५
अत्र ते कथयिष्यामि यदि शुश्रूषसेऽनघ ।
यस्त्वत्तो दुःखिततरो राजासीत्पृथिवीपते ॥ ३६
वैशंपायन उवाच ।
अथैनमब्रवीद्राजा ब्रवीतु भगवानिति ।
इमामवस्थां संप्राप्तं श्रोतुमिच्छामि पार्थिवम् ॥ ३७
बृहदश्व उवाच ।
शृणु राजन्नवहितः सह भ्रातृभिरच्युत ।
यस्त्वत्तो दुःखिततरो राजासीत्पृथिवीपते ॥ ३८

---

— c) T2 G (except G1) [अ]पि (for च) — After 33, K1 2 B D (except D1-3) S (T G M2 om line 10) ins

203* पुनर्द्यूतेन मां जित्वा वनवासं सुदारुणम् ।
प्राव्राजयन्महारण्यमजिनैः परिवारितम् ।
अहं वने दुर्वसतीर्वसन्परमदुःखितः ।
अक्षद्यूताधिकारे च गिरः शृण्वन्सुदारुणाः ।
आर्तानां सुहृदां वाचो द्यूतप्रभृति शंसताम् । [5]
अहं हृदि श्रिताः स्मृत्वा सर्वरात्रीर्विचिन्तयन् ।
यस्मिंश्चैव समस्तानां प्राणा गाण्डीवधन्वनि ।
विना महात्मना तेन गतसत्त्व इवाभवम् ।
कदा द्रक्ष्यामि बीभत्सुं कृतास्त्रं पुनरागतम् ।
प्रियवादिनमक्षुद्रं दयायुक्तमतन्द्रितम् । [10]

[(L 3) S (except G4) सोहं (for अहं) S (except G4 M2) दुर्वसतिं T1 G1 M1 शये, T2 G2-4 M2 वसे (for वसन्) — (L 4) S अक्षद्यूताभि(M2 °नु)योगेण T1 गिरे शृण्वान्सुदारुणान् — (L 5) K1 मर्मगा, B1 3 4 सद्यगा, B2 D6 मर्मगां, Dc D4 सद्यगा, D8 सद्यग (for शंसताम्) S सम्प्राप्तानां च सुहृदां शृण्वन्स्तत्वाभिसंश्रिताः (T1 °त्व हि संश्रिताः, G2 3 °श्रितः, G4 °श्रिताः) — (L 6) B1 3 कृता, Dc स्थिता (for श्रिताः) T1 G1 द्यूतान्प्रभृति धर्मघ्नीः, T2 G2-4 M द्यूतात्प्र(G3 M1 °तप्र)भृति मर्मघ्नीः (M2 °घ्ना) (for the prior half) K3 Dc D6 सर्वा रात्रीर्, S रात्रीः सर्वाः (for सर्वरात्रीर्) — (L 7) S यस्मिंश्च वयमायत्ता (for the prior half) T2 G M2 सदा, M1 सर्वे (for प्राणा) — (L 8) S महात्मना तेन विना (G1 by transp विना तेन) गतसत्वा इवा (G4 °द्दा)सहे — (L 10) K3 B1 Dn °द्रित (for °द्रितम्)]

— S cont

204* इति सर्वे महेष्वासं चिन्तयाना धनंजयम् ।
अनेन तु विषण्णोऽहं कारणेन सहानुजः ।
वनवासान्निवृत्तं मां पुनस्ते पापबुद्धयः ।
जयन्तः प्रीयमाणा वै देवने भ्रातृभिः सह ।
द्यूतेनैवाह्वयिष्यन्ति बलादक्षेषु तद्विदः । [5]
आहूतश्च पुनर्द्यूते नास्मि शक्तो निवर्तितुम् ।
पणे च मम नास्त्यर्थे विद्यते वसु किंचन ।
एतत्सर्वमनुध्यायंश्चिन्तयानो दिवानिशम् ।
न मत्तो दुःखिततरः पुमानस्तीह कश्चन ।

[(L 1) T1 M2 महेष्वासा, T2 G3 4 महात्मानं (G4 °न) — (L 7) T1 चाप्यर्थे, T2 G3 नात्यर्थे, M1 नास्त्यर्थो T2 G2-4 वसु किंचिन्न (G2 4 °चन) विद्यते]

**34** a) T G नास्ति, M1 अपि (for अस्ति) — d) K3 B (except B1) D (except Dc2 D1 5) क्वचिद् (for भवेत्) — After 34, K4 D2 ins

205* अल्पभाग्यतरो वापि कश्चिदस्ति महामुने ।,

while D1 3 ins

206* इति ब्रुवाणं राजानं बृहदश्वोऽब्रवीन्मुनिः ।,

and finally, S ins

207* एवं ब्रुवन्तं दुःखार्तमुवाच भगवानृषिः ।
शोकं व्यपनुदन्राज्ञो धर्मराजस्य धीमतः ।

**35** After the ref, S ins

208* न विषादे मनः कार्यं त्वया बुद्धिमतां वर ।
आगमिष्यति बीभत्सुरमित्रांश्च विजेष्यते ।
[(L 2) T1 G1 M विजेष्यति]

— D8 om $35^{c}$–$41^{b}$

**36** D8 om 36 (cf v l 35) — a) K2 D6 वर्त°; Dn D4 वर्ण° (for कथ°) — b) T G नृप (for ऽनघ) — $36^{cd} = 38^{cd}$ — d) K3 D2 °पतिं, K4 Dc1 D1 G1 °तले (for °पते)

**37** D8 om 37 (cf v l 35), G2 om (hapl) 37–38 — a) B [ए]वम् (for [ए]नम्) — d) M त नृप (for पार्थिवम्)

**38** D8 G2 om 38 (cf v l 35, 37) — b) D1 2 भ्रातृभिः सह यत्नतः — $38^{cd} = 36^{cd}$ — c) K3 G1 यस्त्वया (for यस्त्वत्तो) — d) K4 °तले, D1 2 °पतिं (for पते)

निषधेषु महीपालो वीरसेन इति स्म ह ।
तस्य पुत्रोऽभवन्नाम्ना नलो धर्मार्थदर्शिवान् ॥ ३९
स निकृत्या जितो राजा पुष्करेणेति नः श्रुतम् ।
वनवासमदुःखार्हो भार्यया न्यवसत्सह ॥ ४०
न तस्याश्वो न च रथो न भ्राता न च बान्धवाः ।
वने निवसतो राजञ्शिष्यन्ते स्म कदाचन ॥ ४१
भवान्हि संवृतो वीरैर्भ्रातृभिर्देवसंमितैः ।
ब्रह्मकल्पैर्द्विजाग्र्यैश्च तस्मान्नार्हसि शोचितुम् ॥ ४२
युधिष्ठिर उवाच ।
विस्तरेणाहमिच्छामि नलस्य सुमहात्मनः ।
चरितं वदतां श्रेष्ठ तन्ममाख्यातुमर्हसि ॥ ४३

इति श्रीमहाभारते आरण्यकपर्वणि एकोनपञ्चाशोऽध्यायः ॥ ४९ ॥

## ५०

बृहदश्व उवाच ।
आसीद्राजा नलो नाम वीरसेनसुतो बली ।
उपपन्नो गुणैरिष्टै रूपवानश्वकोविदः ॥ १
अतिष्ठन्मनुजेन्द्राणां मूर्ध्नि देवपतिर्यथा ।
उपर्युपरि सर्वेषामादित्य इव तेजसा ॥ २
ब्रह्मण्यो वेदविच्छूरो निषधेषु महीपतिः ।
अक्षप्रियः सत्यवादी महानक्षौहिणीपतिः ॥ ३
ईप्सितो वरनारीणामुदारः संयतेन्द्रियः ।
रक्षिता धन्विनां श्रेष्ठः साक्षादिव मनुः स्वयम् ॥ ४
तथैवासीद्विदर्भेषु भीमो भीमपराक्रमः ।

---

**39** $D_3$ om 39 (cf v l 35), $K_1$ om 39-42 — $^a$) $K_{3\ 4}$ महीपाल — $^b$) $K_2$ B Dn $D_4$ $_6$ $G_{2\ 4}$ श्रुत° (for स्म ह) — $^d$) T $G_3$ $M_1$ नळो (for नलो) $K_2$ B Dn $D_4$ $_6$ M °कोविद°; $D_1$ °तत्त्ववित्, $G_3$ °दर्शन

**40** $K_1$ $D_3$ om 40 (cf v l 39, 35) — $^a$) Ś$_1$ $K_{3\ 4}$ $D_{1\ 2}$ $M_2$ राज्यः; $B_{3\ 4}$ $T_1$ $G_1$ राजन् (for राजा) — $^c$) $K_2$ B (except $B_1$) Dn $D_4$ $_6$ वास सुदुःखार्त° — $^d$) $D_2$ तदा, $G_1$ सुधी° (for सह) $S_1$ न्यवसत्सह भार्यया

**41** $K_1$ om 41, $D_3$ om $41^{ab}$ (cf v l 39, 35) — $^a$) Ś$_1$ K ($K_1$ om) $B_1$ Dc Dn $D_{1\ 4\ 5}$ न तस्य दासा (Ś$_1$ $D_5$ दासो, $K_3$ corr to देशो) न रथो; $B_{2-4}$ $D_6$ M न तस्याश्वा न च रथो (M था), $D_2$ न तस्याश्वो नानुचरो; $G_1$ न चाप्यश्वा न च रथा — $^b$) $B_3$ $D_1$ T G बाधव° — $^d$) $S_1$ $K_{3\ 4}$ $B_1$ $D_{1-3}$ दृश्यते स्म, $T_1$ $G_1$ M अश्रूयत; $T_2$ $G_{2-4}$ नाश्रूयत (for शिष्यन्ते स्म)

**42** $K_1$ om 42 (cf v l 39) — $^a$) Dc स भवान् (for भवान्हि) $S_1$ $D_1$ M सहितो (for संवृतो) $B_3$ भवानसि वृतो वीरै, $D_{2\ 3}$ कृष्णया सहितो वीर — $^b$) Ś$_1$ $T_1$ °समतै; $K_3$ °सन्निभैः, $T_2$ $G_3$ निर्मितै — $^d$) $D_2$ $T_2$ $G_{2\ 3}$ M नार्हति

**43** $^d$) $B_1$ S सदाख्यातुमिहा($T_1$ °तु त्वम)र्हसि

Colophon om in $K_4$ $B_1$ — *Major parvan* Ś$_1$ $K_1$ $Dn_2$ T G आरण्य — *Sub parvan* N (except $S_1$ $Dn_2$, $K_4$ $B_1$ om) $T_2$ $G_{2\ 3}$ (all om sub parvan name) mention only नलोपाख्यान — *Adhy name* $D_2$ आदौ बृहदश्वागमन — *Adhy no* (figures, words or both) $Dc_2$ $M_1$ 50, Dn ($Dn_1$ *sup lin*, $Dn_2$ in words) 52, $Dn_2$ (in figures) $D_1$ 53, T G $M_2$ 49 (as in text) — *Śloka no* Dn 59, $D_1$ 45

## 50

☞ Here begins the celebrated Nala Damayanti episode

**1** $^a$) Here and below some S MSS नळ for नल — $^c$) Ś$_1$ युक्तो, K (except $K_2$) Dc $D_{1-3}$ $_5$ सर्वै (for इष्टै), cf $9^c$ — $^d$) $K_4$ $D_{1\ 3}$ अक्ष ; $B_1$ अर्थ°, $D_2$ अस्त्र° (for अश्व) — After 1, S ins

209* यज्वा दानपतिर्दक्षः सदा शीलपुरस्कृतः ।

**2** $^d$) Ś$_1$ $K_{1\ 4}$ $D_{1\ 2}$ तेजसा

**3** $^a$) Ś$_1$ शातो, $K_3$ क्रातो (for शूरो) — $K_4$ om $3^{cd}$ — $^d$) $K_3$ $D_3$ G (except $G_3$) अक्षो (for अक्षौ°)

**4** $^a$) $K_2$ $D_3$ M नर° (for वर°) — $^b$) $K_{3\ 4}$ $D_{1\ 3}$ सजितेंद्रिय

शूरः सर्वगुणैर्युक्तः प्रजाकामः स चाप्रजः ॥ ५
स प्रजार्थे परं यत्नमकरोत्सुसमाहितः ।
तमभ्यगच्छद्ब्रह्मर्षिर्दमनो नाम भारत ॥ ६
तं स भीमः प्रजाकामस्तोषयामास धर्मवित् ।
महिष्या सह राजेन्द्र सत्कारेण सुवर्चसम् ॥ ७
तस्मै प्रसन्नो दमनः सभार्याय वरं ददौ ।
कन्यारत्नं कुमारांश्च त्रीनुदारान्महायशाः ॥ ८
दमयन्तीं दमं दान्तं दमनं च सुवर्चसम् ।
उपपन्नान्गुणैः सर्वैर्भीमान्भीमपराक्रमान् ॥ ९
दमयन्ती तु रूपेण तेजसा यशसा श्रिया ।
सौभाग्येन च लोकेषु यशः प्राप सुमध्यमा ॥ १०
अथ तां वयसि प्राप्ते दासीनां समलंकृतम् ।
शतं सखीनां च तथा पर्युपास्ते शचीमिव ॥ ११
तत्र स्म भ्राजते भैमी सर्वाभरणभूषिता ।
सखीमध्येऽनवद्याङ्गी विद्युत्सौदामिनी यथा ।
अतीव रूपसंपन्ना श्रीरिवायतलोचना ॥ १२
न देवेषु न यक्षेषु तादृग्रूपवती क्वचित् ।
मानुषेष्वपि चान्येषु दृष्टपूर्वा न च श्रुता ।
चित्तप्रमाथिनी बाला देवानामपि सुन्दरी ॥ १३
नलश्च नरशार्दूलो रूपेणाप्रतिमो भुवि ।
कन्दर्प इव रूपेण मूर्तिमानभवत्स्वयम् ॥ १४
तस्याः समीपे तु नलं प्रशशंसुः कुतूहलात् ।
नैषधस्य समीपे तु दमयन्तीं पुनः पुनः ॥ १५
तयोरदृष्टकामोऽभूच्छृण्वतोः सततं गुणान् ।
अन्योन्यं प्रति कौन्तेय स व्यवर्धत हृच्छयः ॥ १६
अशक्नुवन्नलः कामं तदा धारयितुं हृदा ।

---

**5** For $5^b$, cf 1 2 $184^b$, 114 $9^d$, 141 $18^b$ 3 50 $9^d$, 71 $19^d$ 4 21 $47^b$, etc — $^c$) K3 शूर सर्वैर्गुणैर्युक्त°, K4 B1 G1 शूर' सर्वगुणोपेत', T1 शूरश्च सद्गुणैर्युक्त' — $^d$) T2 G transp स' and च

**6** $^a$) Ś1 K1 3 प्रजार्थं — $^b$) Ś1 D3 स, K4 च (for सु') — $^c$) D1 देवर्षिर् (for ब्रह्म°) — $^d$) D3 5 पार्थिव', M2 भार्गव (!) (for भारत)

**7** $^a$) K3 transp त and स — $^c$) D3 G2 राजेंद्र' — $^d$) Ś1 K1 B3 4 D1 6 सुवर्चसा, K3 4 (before corr) समाहित (cf $6^b$) — After 7, K1 reads $9^{cd}$

**8** G1 om $8^b$–$10^a$ — $^c$) K4 D1 3 त्रीन् (for च) — $^d$) K3 चतुरोभून्महा°, K4 D1 3 उदारान्सुमहा°

**9** G1 om 9 (cf v l 8) — $^a$) Ś1 शम (for दम) — $^b$) K3 सुवर्णं सूर्यवर्चसं — K1 reads $9^{cd}$ after 7 — $^c$) K1 (in addition to text reading) D4 6 सर्वान् (for सर्वैर्) — $^d$) Cf $5^b$ K4 B3 4 M भैमान् (for भीमान्)

**10** G1 om $10^a$ (cf v l 8) — $^a$) T2 G3 दमयन्त्यति (for °यन्ती तु) — $^b$) S (except M2) वपुषा (for यशसा) — $^c$) K3 D3 लोकेस्मिन् (for °षु) — $^d$) D5 तादृग्रूपवती क्वचित् (=$13^b$)

**11** $^a$) D2 अथैता च' D1–3 प्राप्ता (for °प्ते) — $^b$) D2 3 दासीभि Ś1 K4 D1–3 कृता K3 दासीदासम लकृता — $^c$) T1 सम (for शत) Ś1 K1 B1 च शत, D1–3 सतत, S (except G1 M2) च तदा (for च तथा) K2 B2–4 Dc Dn D4–6 शत शत सखीना च, K3 सर्वा सखिगणा चैता — $^d$) S1 K2 4 B D (except D1) पर्युपासद, K1 3 G1 °पास्त

**12** $^a$) Ś1 तत' स, T1 G1 तत सा, T2 G2–4 सा तदा (G4 तथा) (for तत्र स्म) K2 B D (except Dc2 D1–3) राजते (for भ्रा°) — $^d$) B2 3 Dc2 Dn1 सौदामनी

**13** $^c$) D2 3 मनुष्येष्वपि Ś1 वाक्येषु, K3 राजेंद्र, K4 वा नान्या, B1 S वा चान्या (G1 नैवान्या, M2 वाथान्या) (for चान्येषु) K1 मानुषीष्वपि चान्यासु, D1 मानुषीषु तथान्यासु — $^d$) K2 B (except B3) Dn D4–6 T2 G2–4 [अ]थ वा, K4 [अ]पि वा, D3 न वा, G1 तथा (for न च) T1 °पूर्वा श्रुताथवा — $^e$) Cf 1 61 $97^d$ Ś1 K1–3 B1 2 4 Dc Dn D2 4 5 M2 °प्रसादनी, K4 D1 3 6 M1 °प्रसादिनी, B3 G2 4 °प्रमथनी, T1 G1 प्रमथिनी Cf Hopkins, *Great Epic* (1920), p 411, No 66 — $^f$) Dc इव (for अपि)

**14** $^a$) D2 3 नलस्तु B2 T G (except G1) °शार्दूल — $^b$) Ś1 K1 3 4 Dc D1 3 6 गुणैर्, K3 B D2 4 6 G1 लोकेषु (for रूपेण)

**15** $^c$) Ś1 K1 B3 Dc D4 6 च (for तु) — $^d$) D1 3 जना' पुन ; B3 पुनर्जना

**16** $^a$) K1 4 D1–3 G4 दृष्टकामो (as in text), D5 °दृष्टपूर्वो, the rest °दृष्ट' कामो — $^b$) K1 transp शृण्वतो and सतत — $^d$) K1 4 D1 सव्यवर्धत; T G सोभ्यवर्ध(T2 G3 °र्ते)त, M1 सोभ्यपधत

**17** $^{ab}$) D5 अगच्छन्न (for अशक्नुवन्) K1 transp नल and तदा K4 D5 हृदि (for हृदा) — $^c$) Ś1 K4

अन्तःपुरसमीपस्थे वन आस्ते रहोगतः ॥ १७
स ददर्श तदा हंसाञ्जातरूपपरिच्छदान् ।
वने विचरतां तेषामेकं जग्राह पक्षिणम् ॥ १८
ततोऽन्तरिक्षगो वाचं व्याजहार तदा नलम् ।
न हन्तव्योऽस्मि ते राजन्करिष्यामि हि ते प्रियम् ॥१९
दमयन्तीसकाशे त्वां कथयिष्यामि नैषध ।
यथा त्वदन्यं पुरुषं न सा मंस्यति कर्हिचित् ॥ २०
एवमुक्तस्ततो हंसमुत्ससर्ज महीपतिः ।
ते तु हंसाः समुत्पत्य विदर्भानगमंस्ततः ॥ २१
विदर्भनगरीं गत्वा दमयन्त्यास्तदान्तिके ।
निपेतुस्ते गरुत्मन्तः सा ददर्शाथ तान्खगान् ॥ २२
सा तानद्भुतरूपान्वै दृष्ट्वा सखिगणावृता ।
हृष्टा ग्रहीतुं खगमांस्त्वरमाणोपचक्रमे ॥ २३
अथ हंसा विससृपुः सर्वतः प्रमदावने ।
एकैकशस्ततः कन्यास्तान्हंसान्समुपाद्रवन् ॥ २४
दमयन्ती तु यं हंसं समुपाधावदन्तिके ।
स मानुषीं गिरं कृत्वा दमयन्तीमथाब्रवीत् ॥ २५
दमयन्ति नलो नाम निषधेषु महीपतिः ।
अश्विनोः सदृशो रूपे न समास्तस्य मानुषाः ॥ २६
तस्य वै यदि भार्या त्वं भवेथा वरवर्णिनि ।
सफलं ते भवेज्जन्म रूपं चेदं सुमध्यमे ॥ २७
वयं हि देवगन्धर्वमनुष्योरगराक्षसान् ।
दृष्टवन्तो न चास्माभिर्दृष्टपूर्वस्तथाविधः ॥ २८
त्वं चापि रत्नं नारीणां नरेषु च नलो वरः ।

---

(before corr ) D₂ ₃ T₂ G₃ °समीपस्थ°, K₃ अत°पुर प्रविश्याथ — $^{d}$) K₃ ततोतिष्ठत दुर्मना , G₁ corrupt — After 17, M₂ ins

210* कस्यचिरवथ कालस्य नल° पार्थिवसत्तम ।

18 $^{a}$) N (except Ś₁ K₁ ₄ D₁ ₂) G₂ M₃ ततो (for तदा) — $^{b}$) N (except K₁ ₃ D₁ ₂) परिष्कृतान् (cf 3 58 11$^{d}$)

19 $^{b}$) B Dn D₄₋₆ (by transp ) नल तदा, T₂ G₂ ₃ ततो नल — $^{c}$) B₃ ₄ Dn D₄₋₆ हतव्योस्मि न ते राजन् — $^{d}$) K₄ °ष्यामीति ते, B Dn D₄₋₆ °ष्यामि तव ; M₁ °ष्यामि च ते

20 $^{b}$) G₂ तेनघ (for नैषध) — B₁ om 20$^{cd}$ — $^{d}$) Ś₁ K (except K₂) सा न (by transp ), D₂ ₃ नानु , T₁ न स्म K₂ कांक्ष्यति, T₁ रंस्यति (for मं°) Dc न च सा कामयिष्यति — After 20, Dc₁ D₅ S (except M₂) ins

211* तव चैव यथा भार्या भविष्यति तथानघ ।
विधास्यामि नरव्याघ्र सोऽनुजानातु मा भवान् ।

[ (L 1) Dc₁ D₅ तथा वय, T₁ G₁ ₄ तदानघ (for तथा°) — (L 2) Dc₁ D₅ विधास्याम T₁ नो, T₂ G₃ मा (for मा) Dc₁ स मामुत्स्रष्टुमर्हसि, D₅ सोत्र जानात्ततो भवान् ]

21 $^{c}$) G₁ स तु हस स° — $^{d}$) K (except K₁) B₃ ₄ D (except Dn) विदर्भाम् Ś₁ K₁ पुन°, T₁ सदा (for तत°)

22 $^{a}$) K₁ B₃ Dc नगर — $^{b}$) Ś₁ Dc D₃ दमयत्या स्तदतिके, K₃ °त्यासनातिके; B D₄ ₆ M °तीसमतिके — $^{d}$) Ś₁ K₃ ₄ Dc D₁₋₃ ददर्शाथ च, K₁ ₂ B Dn D₄ ₆ G₁ M सा ददर्श च Dn₁ n₂ तान्गणान् D₅ ददर्शाथ वनान्खगान्

23 $^{b}$) Dn₃ D₄ सखी° (for सखि°, shortening *metri causa*) — $^{c}$) B₁ स्वय (for हृष्टा) K₂ खमृगान्, D₅ च खगान् (for खगमान्) D₁ खगान्ग्रहीतु हृष्टा सा

24 $^{a}$) M₁ ते तु (for अथ) — $^{b}$) S₁ सर्वथा, M₃ सतत (for सर्वत ) — $^{c}$) K₂ B (except B₃) Dc₁ Dn D₅ तदा (for तत ) S₁ एकैकशस्तत° सख्य°, K₁ D₆ T₁ G₁ ₂ ₄ शश्च कन्यास्ता , K₃ ₄ D₁₋₃ T₂ G₃ शश्च कन्यास्तान् — $^{d}$) K₁ खगमान्, K₄ हसास्ता°, D₁ हसाश्च, D₂ ₃ हसास्तु, T₂ G₃ हसान्वै (for तान्हसान्)

25 $^{a}$) B₃ Dc G₁ ₂ त (for य) — $^{b}$) T G₂₋₄ अतिक ; M अतिकात् (for °के) G₁ उपाधावत्तदतिके

26 Before 26, T₂ G (except G₄) M₂ ins हस° — $^{d}$) D₁ मानवा (for मानुषा ) T₁ G₁ न समस्त(G₁ °मोस्त्य)स्य मानुष° — After 26, K₁ ₂ B (except B₁) D (except D₁₋₃) repeat 14$^{cd}$

27 $^{a}$) K₁ transp तस्य and यदि B₂ D₆ तस्यैव, D₂ ₃ G₃ तस्य त्व (for तस्य वै) D₂ ₃ भार्या स्या , G₂ वै भार्या (for भार्या त्व) — $^{b}$) D₂ सभाग्या, D₆ सभार्या (for भवेथा) Some MSS वर्णिनी

28 $^{ab}$) M₁ तु (for हि) K₃ G₄ गधर्वान्मनुष्योरग° ; D₂ ₃ गधर्वसयक्षोरग° — $^{c}$) G₁ दृष्टाग्र स (for दृष्ट )

29 $^{b}$) K₁ नराणा (for नरेषु) D₁ नल पुमान्, T₂ G (except G₁) वरो नल (by transp ) — $^{c}$) K₂ ₄ B (except B₃) Dn D₁₋₃ ₅ T₂ G₁ ₃ विशिष्टया, Dc दृष्टेषु (for छाया) — $^{d}$) K₂ Dn₂ n₃ (before corr ) Cn

विशिष्टाया विशिष्टेन संगमो गुणवान्भवेत् ॥ २९
एवमुक्ता तु हंसेन दमयन्ती विशां पते ।
अब्रवीत्तत्र तं हंसं तमप्येवं नलं वद ॥ ३०
तथेत्युक्त्वाण्डजः कन्यां वैदर्भस्य विशां पते ।
पुनरागम्य निषधान्नले सर्वं न्यवेदयत् ॥ ३१

इति श्रीमहाभारते आरण्यकपर्वणि पञ्चाशोऽध्याय ॥ ५० ॥

# ५१

बृहदश्व उवाच ।
दमयन्ती तु तच्छ्रुत्वा वचो हंसस्य भारत ।
तदा प्रभृति नस्वस्था नलं प्रति बभूव सा ॥ १
ततश्चिन्तापरा दीना विवर्णवदना कृशा ।
बभूव दमयन्ती तु निःश्वासपरमा तदा ॥ २
ऊर्ध्वदृष्टिर्ध्यानपरा बभूवोन्मत्तदर्शना ।
न शय्यासनभोगेषु रतिं विन्दति कर्हिचित् ॥ ३
न नक्तं न दिवा शेते हा हेति वदती मुहुः ।
तामस्वस्थां तदाकारां सख्यस्ता जज्ञुरिङ्गितैः ॥ ४
ततो विदर्भपतये दमयन्त्याः सखीगणः ।
न्यवेदयत नस्वस्थां दमयन्तीं नरेश्वर ॥ ५
तच्छ्रुत्वा नृपतिर्भीमो दमयन्तीसखीगणात् ।

---

सग्राम , Cnp सगम (as in text) D3 पुण्यवान्

**30** $^{b}$) K3 सुविस्मिता (for विशा पते) — $^{c}$) Ś1 K (except K3) D3 3 अब्रवीत्साधु तत्र त्व, Dc2 °वीत्त ब्रुत हस — $^{d}$) N (except Ś1 K1 3) M1 त्वम् (for तम्) K3 B1 Dn D3 5 6 नले (for °ल)

**31** $^{b}$) K3 4 B1 2 Dn D4 6 विदर्भस्य; Dc वैदर्भेषु — $^{c}$) S1 D1 निषध (for °धान्) — After 31, D1 ins

212* वयं हि देवगन्धर्वा शप्ताश्चेन्द्रेण कारणात्।
अस्मान्संस्पृश्य पाणिभ्या यथा मोक्षे व्रजामहे।
एवमुक्तस्ततो हसान्प्रममज्जाथ नैषध ।
नैषधेन तु सस्पृष्टा इन्द्रलोक पुनर्गता ।

Colophon B1 reads it in marg — *Major parvan* Ś1 K1 Dn1 n3 T1 G1 2 4 आरण्य — *Sub parvan* N (except Ś1, B1 marg ) T1 G3 M2 (all om sub-parvan name) mention only नलोपाख्यान — *Adhy name* B4 दमयतीहससवाद , D3 नलेन हसप्रेषणे दमयती प्रति हसेन नल सदेशकथन, T2 G2 3 हसदौ(G3 °दू)त्य — *Adhy no* (figures, words or both) K1 T G M2 50 (as in text), Dc2 M1 51, Dn3 n3 53, D1 54 — *Śloka no* Dn1 33, Dn2 n3 32, D1 34

**51**

**1** $^{a}$) G4 तत (for तु तद्) M2 ज्ञात्वा (for श्रुत्वा) — $^{c}$) K3 B (except B1) D (except D1–3) तत (for तदा) G1 चास्वस्था (for नस्वस्था), cf 5$^{c}$ — $^{d}$) D1 सुमध्यमा (for बभूव सा)

**2** $^{a}$) Ś1 K1 3 Dc D3 °पराधीना (for °परा दीना) — $^{b}$) Dc D5 °वदनाकृति — $^{d}$) Dc तथा, G1 सदा (for तदा) K3 सा नि श्वासपरायणा

**3** $^{b}$) D2 3 °चेतना (for °दर्शना) — After 3$^{ab}$, N ins

213* पाण्डुवर्णा क्षणेनाथ हृच्छयाविष्टचेतना।
[K3 D1 3 °चेतसा (for °चेतना) ]

— $^{d}$) Ś1 K (except K3) D1–3 बध्नाति (for विन्दति) — K1 reads 3–13 in the following sequence 3, 9$^{cd}$–10$^{ab}$, 4$^{cd}$–9$^{ab}$, 11$^{cd}$–12$^{cd}$, 10$^{cd}$–11$^{ab}$, 4$^{ab}$, 13 !

**4** For sequence in K1, cf v l 3 — $^{a}$) M1 वापि (for शेते) — $^{b}$) K3 B1 3 4 D (except D1–3 5) रुदती (for व°) K3 B2–4 Dn D4 6 पुन (for मुहु) — $^{c}$) K4 D1–3 G1 अवस्था (for अस्वस्था) S1 महाकारा, K1 G1 तथा , K3 तदा दृष्ट्वा, M अनाहारा (for तदाकारा) — $^{d}$) G1 2 सख्यस्ता, M तत्सख्य (for सख्यस्ता) K4 ययुर् (for जज्ञुर्) D1 सख्यस्ता जज्ञिरेंगितै , D3 सख्यो ज्ञात्वा तदिंगितै

**5** $^{b}$) K1 3 B3 4 Dn D4 6 सखीजन — $^{c}$) S1 K1 Dc D5 नस्वस्था (S1 °स्था), K3 4 T G2–4 M1 चास्व(K4 °व) स्था, D3 G1 चास्वस्था (for नस्वस्था), cf 1$^{c}$ K3 B2–4 Dn D1 3 4 6 न्यवेदयत्तामस्व(D1 °व)स्था — $^{d}$) S1 K1 2 Dc D4–6 G1 दमयती K3 B2–4 Dn D1–4 6 नरेश्वरे

चिन्तयामास तत्कार्यं सुमहत्स्वां सुतां प्रति ॥ ६
स समीक्ष्य महीपालः स्वां सुतां प्राप्तयौवनाम् ।
अपश्यदात्मनः कार्यं दमयन्त्याः स्वयंवरम् ॥ ७
स संनिपातयामास महीपालान्विशां पते ।
अनुभूयतामयं वीराः स्वयंवर इति प्रभो ॥ ८
श्रुत्वा तु पार्थिवाः सर्वे दमयन्त्याः स्वयंवरम् ।
अभिजग्मुस्तदा भीमं राजानो भीमशासनात् ॥ ९
हस्त्यश्वरथघोषेण नादयन्तो वसुंधराम् ।
विचित्रमाल्याभरणैर्बलैर्दृश्यैः स्वलंकृतैः ॥ १०
एतस्मिन्नेव काले तु पुराणावृषिसत्तमौ ।
अटमानौ महात्मानाविन्द्रलोकमितो गतौ ॥ ११
नारदः पर्वतश्चैव महात्मानौ महाव्रतौ ।
देवराजस्य भवनं विविशाते सुपूजितौ ॥ १२
तावर्चित्वा सहस्राक्षस्ततः कुशलमव्ययम् ।
पप्रच्छानामयं चापि तयोः सर्वगतं विभुः ॥ १३

नारद उवाच ।

आवयोः कुशलं देव सर्वत्रगतमीश्वर ।
लोके च मघवन्कृत्स्ने नृपाः कुशलिनो विभो ॥ १४

बृहदश्व उवाच ।

नारदस्य वचः श्रुत्वा पप्रच्छ बलवृत्रहा ।
धर्मज्ञाः पृथिवीपालास्त्यक्तजीवितयोधिनः ॥ १५
शस्त्रेण निधनं काले ये गच्छन्त्यपराङ्मुखाः ।
अयं लोकोऽक्षयस्तेषां यथैव मम कामधुक् ॥ १६
क्व नु ते क्षत्रियाः शूरा न हि पश्यामि तानहम् ।

---

**6** $^a$) T2 G3 भूपतिर् (for नृपतिर्) — $^b$) K1 3 D2 3 T1 G1 दमयत्या, K4 B2 4 Dn D5 6 T2 G3 4 दमयतीं — $6^{cd}$ = (var) 3 57 $2^{cd}$ — K3 om (hapl) $6^d$–$7^c$ — $^d$) D2 3 सुहृद्भक्त्या, D4 S (except G1 M1) सुमहत्स्व — After 6, K2 B D (except D2 3) T G ins

214* किमर्थं दुहिता मेऽद्य नातिस्वस्थेव लक्ष्यते ।
[T1 किमसद्, T2 G2–4 किमत्र T2 G2–4 °स्वस्थोपलक्ष्यते ]

**7** K3 om $7^{abc}$ (cf v l 6), D2 om (hapl) from $7^b$ up to महीपालान् (in $8^b$) — $^c$) K2 B D (except D1 3, D2 om) आत्मना

**8** D2 om up to °पालान् (cf v l 7), Ś1 om $8^a$–$10^b$, D3 om (hapl) $8^a$–$9^b$ — $^a$) K2 3 B D (D3 om) मत्र (for °पात ), cf 3 53 $3^d$ — $^b$) K2 B Dn D4 6 पति (for पते) — $^c$) Hypermetric! K3 S एषोनुभूयता वीरा ; Dc अन्वीयतामय वीरा , D5 आहूयता महावीरा — $^d$) K4 D1 स्म ह, D2 प्रभु (for प्रभो)

**9** S1 om 9, D3 om $9^{ab}$ (cf. v l 8) For sequence in K1, cf v l 3 — $^a$) K3 T2 G2 3 [अ]थ (for तु) — $^c$) K (except K2) Dc D1–3 5 अभिपेतु K2 B Dn D4 6 M ततो, Dc यथा, D5 तथा (for तदा) T G वीरा (for भीम) — $^d$) K1 corrupt

**10** For sequence in K1 cf v l 3 Ś1 om $10^{ab}$ (cf v l 8) — $^a$) K1 वेगेन — $^b$) K2 B (except B1) Dn D4 6 पूर (for नाद°) K4 दमयत्या स्वयवर (= $9^b$) — $^c$) M भरणा — $^d$) K3 शोभमाना समतत , D3 M चलैर्दृश्ये(D5 °रथै)रलंकृता , T G ध्वजैश्चित्रै(T1 °र्दृश्यै)रलंकृतै° — After 10, K3 B D (except D1–3) ins

215* तेषा भीमो महाबाहु पार्थिवाना महात्मनाम् ।
यथार्हमकरोत्पूजा तेऽवसस्तत्र पूजिता ।

**11** For sequence in K1, cf v l 3 D4 om 11 — $^b$) K1 2 B (except B1) Dc1 Dn D6 सुराणामृषि° — $^{cd}$) K4 transp महात्मानौ and इन्द्रलोक Ś1 K (except K2) D1–3 समा , T2 G (except G1) उपा (for इतो)

**12** For sequence in K1, cf v l 3 — $^b$) K2 B Dn D4 6 T2 G (except G2) महाप्राज्ञौ Dc M2 महाप्रभौ , T G M1 महाद्युती

**13** For sequence in K1, cf v l 3 — $^a$) D5 T1 अर्चयित्वा (for तावर्चित्वा) K3 4 Dn G1 तावर्चयित्वा मघवा (K4 देवेंद्रस, G1 भगवान्) — $^b$) Ś1 K (except K2) D1–3 ततो वचनमब्रवीत — $^c$) Ś1 K3 4 Dc D1–3 5 चैव, K1 देवस (for चापि) — $^d$) D1 3 भुवि, T G2–4 प्रभु (for विभु) G1 तथा सर्वगत प्रभु°

**14** $^a$) Ś1 K (except K2) B1 Dc D1–3 5 वीर (for देव) — $^c$) Ś1 K1 लोकेषु, G2 लोकेश (for लोके च) K4 B1 2 D5 T G (except G2) भगवन् (for मघ°) K1 सर्वे, D5 T G कृत्स्ना (for कृत्स्ने) — $^d$) K3 लोका°, K4 भूपा° (for नृपा )

**15** S om the ref — $^b$) T1 M वल° (for बल°) Ś1 K (except K2) D1 शक्रः प्रोवाच शत्रुहा — $^d$) D1 सग्रामे त्यक्तजीविता°

**17** $^b$) Dc D4 नाद्य, G1 2 नेह (for न हि) — $^d$) K2 B Dn D4 6 M transp अतिथीन् and दयितान् B2 इव;

आगच्छतो महीपालानतिथीन्दयितान्मम ॥ १७
एवमुक्तस्तु शक्रेण नारदः प्रत्यभाषत ।
शृणु मे भगवन्येन न दृश्यन्ते महीक्षितः ॥ १८
विदर्भराजदुहिता दमयन्तीति विश्रुता ।
रूपेण समतिक्रान्ता पृथिव्यां सर्वयोषितः ॥ १९
तस्याः स्वयंवरः शक्र भविता नचिरादिव ।
तत्र गच्छन्ति राजानो राजपुत्राश्च सर्वशः ॥ २०
तां रत्नभूतां लोकस्य प्रार्थयन्तो महीक्षितः ।
काङ्क्षन्ति स्म विशेषेण बलवृत्रनिषूदन ॥ २१
एतस्मिन्कथ्यमाने तु लोकपालाश्च साग्निकाः ।
आजग्मुर्देवराजस्य समीपममरोत्तमाः ॥ २२
ततस्तच्छुश्रुवुः सर्वे नारदस्य वचो महत् ।
श्रुत्वा चैवाब्रुवन्हृष्टा गच्छामो वयमप्युत ॥ २३
ततः सर्वे महाराज सगणाः सहवाहनाः ।
विदर्भानभितो जग्मुर्यत्र सर्वे महीक्षितः ॥ २४
नलोऽपि राजा कौन्तेय श्रुत्वा राज्ञां समागमम् ।
अभ्यगच्छददीनात्मा दमयन्तीमनुव्रतः ॥ २५
अथ देवाः पथि नलं ददृशुर्भूतले स्थितम् ।
साक्षादिव स्थितं मूर्त्या मन्मथं रूपसंपदा ॥ २६
तं दृष्ट्वा लोकपालास्ते भ्राजमानं यथा रविम् ।
तस्थुर्विगतसंकल्पा विस्मिता रूपसंपदा ॥ २७
ततोऽन्तरिक्षे विष्टभ्य विमानानि दिवौकसः ।
अब्रुवन्नैषधं राजन्नवतीर्य नभस्तलात् ॥ २८
भो भो नैषध राजेन्द्र नल सत्यव्रतो भवान् ।
अस्माकं कुरु साहाय्यं दूतो भव नरोत्तम ॥ २९

इति श्रीमहाभारते आरण्यकपर्वणि एकपञ्चाशोऽध्यायः ॥ ५१ ॥

---

D5 विभो (for मम)
18 Before 18cd, K3 B D (except D1–3) ins नारद उ° — c) K2 B D (except D1 3) M1 मघ° (for भग°)
19 a) K2 B (except B1) Dn D4 6 °राज्ञो दुहिता, K3 °राजर्षिसुता, K4 D1 T1 G1 °राजतनया
20 d) Ś1 K1 सहस्रश, Dc D5 च वासव (for च सर्वश)
21 a) G1 रत्नभूमिं — b) D3 मनीषिण (for मही°) — d) A few S MSS वल, some MSS °सूदन
22 a) T1 एतेषु, M3 एतच्च (for एतस्मिन्) Ś1 K1 3 4 B1 D1–3 एव क(K3 B1 एतत्क)थयतस्तस्य (Ś1 K1 °त्र), T2 G2 3 एतेषु कथ्यमानेषु
23 a) K2 3 B2–4 Dn D4 6 ते, B1 T1 तु, D1 च (for तत्) — c) K2 B2 4 Dn D4 6 श्रुत्वैव चाब्रुवन् K4 T G सर्वे, B1 द्रष्टु (for हृष्टा) — d) T1 G2 4 M गच्छाम Ś1 T1 अच्युत, B3 इत्युत (for अप्युत)
24 c) K3 4 B1 3 Dc D1–5 विदर्भान् (for °र्भान्) K2 B (except B1) Dn D3 4 6 अभिजग्मुस्ते (for अभितो जग्मुर्) — d) K2 B (except B1) Dn D3 4 6 यत°, T G यथा (T1 तथा, G1 यदा) (for यत्र)
25 a) T1 (by transp) राजा नलोपि — c) K1 S (except G1 M3) अमेयात्मा (for अदीना°) — d) B1 यतव्रत°, T2 G अनुस्मरन् (for अनुव्रत)
28 a) B अतरीक्षे K4 D2 3 [ऽ]वष्टम्य (for वि) — d) Ś1 K (except K2) D3 3 त्रिविष्टपात्, T1 नभ स्थलात्
29 a) K2 B2 Dn D4–6 G1 निषध (for नैषध) — b) D1 नल सत्यपराक्रम — d) K4 B3 Dn2 नरेश्वर (for नरो°)

Colophon — *Major parvan* S1 T G2–4 आरण्य — *Sub parvan* N (except Ś1 Dn2) T1 (om sub parvan name) mention only नलोपाख्यान — *Adhy name* D2 दमयतीस्वयवरे नलागमे इन्द्रवरुणधनदयमाभि समागम — *Adhy no* (figures, words or both) Dc2 M1 52, Dn2 n3 54, D1 55, T G M2 51 (as in text) — *Śloka no* Dn 31, D1 30

## 52

1 D2 om 1 — a) S1 K (except K2) B1 Dc D1 नृप° (for नल°) — c) N (except Ś1 K1 B1, D2 om) अथैतान् (for °नान्) — d) K2 B (except B1) Dn D4 6 M1 उप (for अव-)
2 a) G1 भवतश्च (for वै भवन्त) — c) G1 वा (for च) K2 B (except B1) Dn D4–6 तद्धो (for तत्र) Dc तत्त्वेन परिपृच्छामि

# ५२

बृहदश्व उवाच ।

तेभ्यः प्रतिज्ञाय नलः करिष्य इति भारत ।
अथैनान्परिपप्रच्छ कृताञ्जलिरवस्थितः ॥ १
के वै भवन्तः कश्चासौ यस्याहं दूत ईप्सितः ।
किं च तत्र मया कार्यं कथयध्वं यथातथम् ॥ २
एवमुक्ते नैषधेन मघवान्प्रत्यभाषत ।
अमरान्वै निबोधास्मान्दमयन्त्यर्थमागतान् ॥ ३
अहमिन्द्रोऽयमग्निश्च तथैवायमपांपतिः ।
शरीरान्तकरो नृणां यमोऽयमपि पार्थिव ॥ ४
स वै त्वमागतानस्मान्दमयन्त्यै निवेदय ।
लोकपालाः सहेन्द्रास्त्वां समायान्ति दिदृक्षवः ॥ ५
प्राप्तुमिच्छन्ति देवास्त्वां शक्रोऽग्निर्वरुणो यमः ।
तेषामन्यतमं देवं पतित्वे वरयस्व ह ॥ ६
एवमुक्तः स शक्रेण नलः प्राञ्जलिरब्रवीत् ।
एकार्थसमवेतं मां न प्रेषयितुमर्हथ ॥ ७

देवा ऊचुः ।

करिष्य इति संश्रुत्य पूर्वमस्मासु नैषध ।
न करिष्यसि कस्मात्त्वं व्रज नैषध माचिरम् ॥ ८

बृहदश्व उवाच ।

एवमुक्तः स देवैस्तैर्नैषधः पुनरब्रवीत् ।
सुरक्षितानि वेश्मानि प्रवेष्टुं कथमुत्सहे ॥ ९
प्रवेक्ष्यसीति तं शक्रः पुनरेवाभ्यभाषत ।
जगाम स तथेत्युक्त्वा दमयन्त्या निवेशनम् ॥ १०
ददर्श तत्र वैदर्भीं सखीगणसमावृताम् ।

---

**3** $^a$) $K_3$ $B_{3, 4}$ Dc S (except $M_2$) उक्तो (for उक्ते) — $^b$) $G_1$ भगवान् (for मघ°) $K_2$ $B_{2, 3}$ Dn $D_{4, 6}$ अभ्य° (for प्रत्य°)

**4** $^a$) $B_{1, 4}$ Dc $D_5$ तु (for च) — $T_1$ om $4^{bc}$ — $^c$) $D_{2, 3}$ य॰ सर्वांतकरो नृणा

**5** $^a$) $K_2$ Dn स्व (for स) $K_3$ $D_5$ स्व (for वै) $K_{2, 3}$ B (except $B_1$) Dn $D_{3-6}$ $G_1$ समा° (for त्वमा°) $K_3$ $D_5$ सर्वान् (for अस्मान्) — $^b$) $G_1$ निबोधय (for निवेद ) — $^c$) $Ś_1$ $K_3$ $G_1$ सहेंद्रास्त्वा, $K_{2, 4}$ $B_{2-4}$ Dn $D_{4, 6}$ म($K_4$ $B_4$ स)हेंद्राद्या — $^d$) $D_5$ समायाता, T G दमयति

**6** 6 = (var ) 22 — $^c$) $Ś_1$ K (except $K_2$) Dc $D_{1, 2, 5}$ एषाम् (for तेषाम्) $K_1$ एकतरं (for अन्यतम) — $^d$) $K_3$ $B_1$ S वरयेति (for °यस्व) $K_3$ Dc M च (for ह) $D_{2, 3}$ वरय स्वय (for °यस्व ह)

**7** $^a$) $K_{1, 4}$ $B_1$ $D_{1, 2}$ तु (for स) — $^c$) $K_1$ $B_{2, 4}$ $Dn_2$ $D_6$ एकार्थं समुपेत, $K_2$ $B_3$ $Dn_1$ $n_3$ $D_4$ र्थसमुपेत; $B_1$ $D_{2, 5}$ $G_1$ र्थं ($D_2$ र्थे , $D_5$ र्थे) समवेत — $^d$) $B_2$ $D_1$ अर्हसि (for अर्हथ) — After 7, all MSS except $Ś_1$ $K_4$ $D_{1-3}$ ins

216* कथ नु जातसकल्प॰ स्त्रियमुत्सहते पुमान् ।
परार्थमीदृश वक्तु तत्क्षमन्तु महेश्वरा॰ ।

[(L 1) $K_2$ $B_{3, 4}$ Dc नु, S हि (for नु) S (except $M_1$) सकल्पा $K_3$ S (except $G_2$ $M_2$) नर (for पुमान्) — (L 2) $B_4$ क्षमध्व $B_3$ $D_5$ ममेश्वरा , Dc [अ]मरेश्वरा (for महे°) $K_3$ $T_2$ G तदै ($K_3$ द्धि, $G_1$ व) पश्यामरेश्वर, $T_1$ पश्य माममरेश्वर, M तदै पश्य सुरेश्वर ] — S cont

217* एवमुक्तो नैषधेन मघवान्पुनरब्रवीत् ।

**8** S om the ref — After 8, T G ins

218* स वै त्वमागतानस्मान्दमयन्त्यै निवेदय ।
श्रेयसा योक्ष्यसे हि त्व कुर्वन्नमरशासनम् ।

[(L 1) $T_1$ $G_2$ न्यवेदय, $G_1$ निबोधय ]

**9** $K_1$ om $9^a$–$11^b$ $T_2$ $G_{3, 4}$ om the ref — $^a$) $K_4$ एवमुक्तोथ, $D_{1, 3}$ क्तस्तु $B_2$ वै दैवैर्, $G_1$ $M_2$ देवेन (for देवैस्तैर्) $S_1$ $K_4$ $B_1$ Dc $D_{2, 3, 5}$ तु, $K_3$ च, $D_1$ स (for तैर्) — $^b$) $S_1$ $K_{3, 4}$ $D_{1-3}$ व्रजश्चैव स उक्तवान्, Dc $D_5$ °ध प्रत्युवाच ह — After 9 $T_2$ $G_3$ ins

219* अस्माक मायया छन्नस्त्व प्रवेक्ष्यसि निश्चयम् ।
इति शक्रो नैषध त पुनरेवाभ्यभाषत ।

[ With line 2, cf $10^{ab}$ ]

**10** $K_1$ om 10 (cf v l 9) — $^c$) $K_2$ M transp जगाम and स

**11** $K_1$ om $11^{ab}$ (cf v.l 9) — $^a$) $K_3$m राजा (for तत्र) — $^b$) $S_1$ $T_2$ G (except $G_4$) °जन° (for °गण°) — $B_2$ om $11^{cd}$ — $^c$) $Ś_1$ $K_{1, 4}$ $D_{1-3}$ दीप्य-

देदीप्यमानां वपुषा श्रिया च वरवर्णिनीम् ॥ ११
अतीव सुकुमाराङ्गीं तनुमध्यां सुलोचनाम् ।
आक्षिपन्तीमिव च भाः शशिनः स्वेन तेजसा ॥ १२
तस्य दृष्ट्वैव ववृधे कामस्तां चारुहासिनीम् ।
सत्यं चिकीर्षमाणस्तु धारयामास हृच्छयम् ॥ १३
ततस्ता नैषधं दृष्ट्वा संभ्रान्ताः परमाङ्गनाः ।
आसनेभ्यः समुत्पेतुस्तेजसा तस्य धर्षिताः ॥ १४
प्रशशंसुश्च सुप्रीता नलं ता विस्मयान्विताः ।
न चैनमभ्यभाषन्त मनोभिस्त्वभ्यचिन्तयन् ॥ १५
अहो रूपमहो कान्तिरहो धैर्यं महात्मनः ।
कोऽयं देवो नु यक्षो नु गन्धर्वो नु भविष्यति ॥ १६
न त्वेनं शक्नुवन्ति स्म व्याहर्तुमपि किंचन ।
तेजसा धर्षिताः सर्वा लज्जावत्यो वराङ्गनाः ॥ १७
अथैनं स्मयमानेव स्मितपूर्वाभिभाषिणी ।
दमयन्ती नलं वीरमभ्यभाषत विस्मिता ॥ १८
कस्त्वं सर्वानवद्याङ्ग मम हृच्छयवर्धन ।
प्राप्तोऽस्यमरवद्वीर ज्ञातुमिच्छामि तेऽनघ ॥ १९
कथमागमनं चेह कथं चासि न लक्षितः ।
सुरक्षितं हि मे वेश्म राजा चैवोग्रशासनः ॥ २०
एवमुक्तस्तु वैदर्भ्या नलस्तां प्रत्युवाच ह ।
नलं मां विद्धि कल्याणि देवदूतमिहागतम् ॥ २१
देवास्त्वां प्राप्तुमिच्छन्ति शक्रोऽग्निर्वरुणो यमः ।
तेषामन्यतमं देवं पतिं वरय शोभने ॥ २२
तेषामेव प्रभावेन प्रविष्टोऽहमलक्षितः ।
प्रविशन्तं हि मां कश्चिन्नापश्यन्नाप्यवारयत् ॥ २३
एतदर्थमहं भद्रे प्रेषितः सुरसत्तमैः ।
एतच्छ्रुत्वा शुभे बुद्धिं प्रकुरुष्व यथेच्छसि ॥ २४

इति श्रीमहाभारते आरण्यकपर्वणि द्विपञ्चाशोऽध्यायः ॥ ५२ ॥

---

माना स्ववपुषा
**12** $^{c}$) Ś1 K1 4 B3 4 D4 6 च भा (as in text), K2 B1 Dn प्रभा, K3 च सा, D5 विभा°, M2 विभा, the rest च ता D1 आक्षिपतीमिवाभिख्या, D2 3 °पतीं प्रभा भानो° — $^{d}$) S शशिन
**13** $^{d}$) K3 Dc T2 G (except G4) वार° (for धार°)
**15** $^{a}$) K4 तु सुप्रीता, B1–3 च सप्रीत्या (B2 °ता), T2 G (except G1) तदा प्रीता — $^{b}$) K3 T G त (for ता) — $^{d}$) K2 B Dn D3 4 6 °भ्यपूजयन्
**16** G4 om 16–17 — $^{ab}$) T G (G4 om ) transp कान्तिर् and धैर्यं — $^{c}$) T G (G4 om ) नु (for ऽय) Dc D3 5 [ऽ]थ (for the *first* नु) K2 B2–4 Dn D4 6 [ऽ]थ वा यक्ष (for नु यक्षो नु) Ś1 K4 B1 D2 3 G1 वा, K3 [ऽ]य, Dc D5 [ऽ]थ (for the *second* नु) — $^{d}$) K2 B Dn D4 6 वा, Dc D5 [ऽ]थ (for नु)
**17** G4 om 17 (cf v l 16) — $^{a}$) K1 2 B (except B1) Dn1 n2 D4 6 तास्त, K3 चैन, D2 M2 स्वेव, T G (G4 om ) स्वेव (for स्वेन) — $^{c}$) Ś1 श्रुत्वा, K (except K3) B (except B1) Dn D4 6 तस्य (for सर्वा) — After 17, T2 G2 3 *repeat* 15$^{cd}$.
**18** $^{a}$) K2 B (except B1) Dn D4 6 स्मयमान तु (for °मानेव) — $^{c}$) D3 वीक्ष्य (for वीरम्) — $^{d}$) B4 (m as in text) विस्मया[त् ?], D3 लज्जया, M भामिनी
**19** $^{a}$) Ś1 K1 कथ (for कस्त्व) K3 D2 3 °वद्याग° — $^{b}$) K3 D3 G2 3 °वर्धन° — $^{d}$) G1 °च्छाम हेनघ
**20** $^{a}$) Ś1 चागमन (for आग°) T2 G3 चैव (for चेह) — $^{b}$) Ś1 चासि न, Dc आसीर्न, M2 आसीन्न (for चासि न) D5 कथ वा नासि लक्षित°, T2 G (except G1) कथमासीदलक्षित — $^{c}$) S (except G1 M1) च (for हि) Ś1 K1 मद् (for मे) — $^{d}$) D2 3 राज्ञश्चैवोग्रशासनात्
**21** $^{b}$) K1 D2 3 T G प्रत्यभाषत (for प्रत्युवाच ह) — Before 21$^{cd}$, K2 B D (except D1 2) ins नल उ°
**22** = (var ) 6 — $^{a}$) K3 द्रष्टुम् (for प्राप्तुम्) — $^{c}$) K1 एकतर, K3 एकतम (for अन्य°) G1 वीर (for देव)
**23** $^{a}$) B D4 6 प्रभावेण — $^{b}$) D3 न लक्षित° (for अल°) — $^{c}$) K2 B (except B1) Dn D4 6 न (for हि) K3 नैव (for कश्चिन्) — $^{d}$) K2 B Dn D4 6 अपश्यन् (for नाप°) K3 D1 3 नाप(D3 °पि)वारयत्, S (except G1) नाभ्य°
**24** $^{a}$) D3 °दर्थे ह्यह (for °दर्थमह) — $^{c}$) S (except M2) तु मे वाक्य (for शुभे बुद्धिं) — $^{d}$) Dc प्रकुर त्व K4 D5 यथेप्सित

# ५३

बृहदश्व उवाच।
सा नमस्कृत्य देवेभ्यः प्रहस्य नलमब्रवीत्।
प्रणयस्व यथाश्रद्धं राजन्किं करवाणि ते ॥ १
अहं चैव हि यच्चान्यन्ममास्ति वसु किंचन।
सर्वं तत्तव विश्रब्धं कुरु प्रणयमीश्वर ॥ २
हंसानां वचनं यत्तत्तन्मां दहति पार्थिव।
त्वत्कृते हि मया वीर राजानः संनिपातिताः ॥ ३
यदि चेद्भजमानां मां प्रत्याख्यास्यसि मानद।
विषमग्निं जलं रज्जुमास्थास्ये तव कारणात् ॥ ४
एवमुक्तस्तु वैदर्भ्या नलस्तां प्रत्युवाच ह।
तिष्ठत्सु लोकपालेषु कथं मानुषमिच्छसि ॥ ५
येषामहं लोककृतामीश्वराणां महात्मनाम्।
न पादरजसा तुल्यो मनस्ते तेषु वर्तताम् ॥ ६
विप्रियं ह्याचरन्मर्त्यो देवानां मृत्युमृच्छति।
त्राहि मामनवद्याङ्गि वरयस्व सुरोत्तमान् ॥ ७
ततो बाष्पकलां वाचं दमयन्ती शुचिस्मिता।
प्रव्याहरन्ती शनकैर्नलं राजानमब्रवीत् ॥ ८
अस्त्युपायो मया दृष्टो निरपायो नरेश्वर।
येन दोषो न भविता तव राजन्कथंचन ॥ ९
त्वं चैव हि नरश्रेष्ठ देवाश्चाग्निपुरोगमाः।
आयान्तु सहिताः सर्वे मम यत्र स्वयंवरः ॥ १०
ततोऽहं लोकपालानां संनिधौ त्वां नरेश्वर।

---

Colophon — *Major parvan* Ś1 Dc1 T G आरण्य — *Sub parvan* N (except Ś1 Dn2) T1 (om sub parvan name) mention only नलोपाख्यान — *Adhy name* B4 दमयन्तीदर्शन; D2 दमयतीस्वयंवरे नलदमयन्ती समागमे नलवाक्य — *Adhy no* (figures, words or both) Dc2 M1 53, Dn (Dn1 *sup lin*) 55 D1 56, T G M2 52 (as in text) — *Śloka no* Dn 25, D1 24

## 53

**1** b) T G प्रहसतीदमब्रवीत् — c) Ś1 वर (for प्रण°) D1 महाराज (for यथा°) D2 प्रणय भावयत्यस्मिन्

**2** a) Dc D1 5 transp चैव and हि K1 किंचित् (for चान्यत्) — b) T1 यच्चास्ति (for ममास्ति) K1 पार्थिव (for किंचन) — c) K2 B (except B1) Dn D4 6 तत्सर्वं (by transp), K3 सर्वंतस्, D1 सर्वं तु, D3 सर्वं नस K1 T1 G2 4 M विस्रब्ध, G1 विश्रब्ध°

**3** a) Ś1 K4 B D2 3 यत्तु; K3 D1 5 M2 श्रुत्वा, Dn2 यच्च (for यत्तत्) — b) Ś1 D4 G1 2 M मा (for मां) — c) K3 महाराज (for मया वीर) — d) K3 4 D1–3 5 सनिमत्रिता°

**4** a) Ś1 K3 4 Dc D1–3 5 वै, K1 मा, K2 B Dn D4 6 त्व (for चेद्) K1 Dc चै (for मां) — d) T1 G1 मृत्यु (for तव)

**5** In G1 the portion of the text from st 5 up to समाह्वान in 8b of adhy 56 is lost on a missing fol (190) — a) Ś1 K (except K2) Dc D1–3 M उक्ते तु (for उक्तस्तु) — b) K1 T2 G (G1 missing) प्रत्यभाषत (for प्रत्युवाच ह) — d) T G अर्हसि (for इच्छ°)

**6** G1 missing (cf v l 5) Ś1 om (hapl) 6a–7b — a) S (except M1, G1 missing) भृताम् (for °कृताम्) — d) D1 T1 M मनस्तेषु प्रवर्तता

**7** G1 missing (cf v l 5) Ś1 om 7ab (cf v l 6) — b) B3 4 मन्युम् (for मृत्युम्) K1 3 Dc D1 2 इच्छति, B Dn1 n3 D6 अर्छे; D5 अर्हे° (for ऋच्छ°) — c) S1 K (except K2) Dc D1–3 5 पाहि (for त्रा°) — After 7, K1 2 B D (except D1–3) ins a passage given in App I (No 8)

**8** G1 missing (cf v l 5) — a) K2 3 B2 Dn D1 3 6 G2 बाष्पाकुला, B1 वार्याकुला, T1 बाष्पाकुला, T2 G3 बाष्पाकुल — c) Ś1 K Dn D1 2 4–6 प्रत्या°, D3 अपा° (for प्रव्या°)

**9** G1 missing (cf v l 5) — a) K2 B2 3 Dn D4 6 उपायोय (for अस्त्युपायो) Ś1 नलो (for मया) — c) B1 यथा (for येन)

**10** G1 missing (cf v l 5) — a) B2 Dc त्वयैव (for त्वं चैव) — b) K (except K1) B D देवाश्चेन्द्र (B1 देवा° साग्नि, D3 देवा इन्द्र)पुरो°; M2 लोकपालाश्च साग्निका° (= 3 51 22b)

वरयिष्ये नरव्याघ्र नैवं दोषो भविष्यति ॥ ११
एवमुक्तस्तु वैदर्भ्या नलो राजा विशां पते ।
आजगाम पुनस्तत्र यत्र देवाः समागताः ॥ १२
तमपश्यंस्तथायान्तं लोकपालाः सहेश्वराः ।
दृष्ट्वा चैनं ततोऽपृच्छन्वृत्तान्तं सर्वमेव तत् ॥ १३

देवा ऊचुः ।

कच्चिद्दृष्टा त्वया राजन्दमयन्ती शुचिस्मिता ।
किमब्रवीच्च नः सर्वान्वद भूमिपतेऽनघ ॥ १४

नल उवाच ।

भवद्भिरहमादिष्टो दमयन्त्या निवेशनम् ।
प्रविष्टः सुमहाकक्ष्यं दण्डिभिः स्थविरैर्वृतम् ॥ १५
प्रविशन्तं च मां तत्र न कश्चिद्दृष्टवान्नरः ।
ऋते तां पार्थिवसुतां भवतामेव तेजसा ॥ १६
सख्यश्चास्या मया दृष्टास्ताभिश्चाप्युपलक्षितः ।
विस्मिताश्चाभवन्दृष्ट्वा सर्वा मां विबुधेश्वराः ॥ १७
वर्ण्यमानेषु च मया भवत्सु रुचिरानना ।
मामेव गतसंकल्पा वृणीते सुरसत्तमाः ॥ १८
अब्रवीच्चैव मां बाला आयान्तु सहिताः सुराः ।
त्वया सह नरश्रेष्ठ मम यत्र स्वयंवरः ॥ १९
तेषामहं संनिधौ त्वां वरयिष्ये नरोत्तम ।
एवं तव महाबाहो दोषो न भवितेति ह ॥ २०
एतावदेव विबुधा यथावृत्तमुदाहृतम् ।
मयाशेषं प्रमाणं तु भवन्तस्त्रिदशेश्वराः ॥ २१

इति श्रीमहाभारते आरण्यकपर्वणि त्रिपञ्चाशोऽध्यायः ॥ ५३ ॥

---

**11** $G_1$ missing (cf v l 5) $D_5$ om $11^{ab}$ — $^{a}$) $K_1$ $M_1$ तत्राह — $^{b}$) Ś$_1$ त्वा (for स्वा) $D_1$ $_3$ $_6$ नरेश्वर — $^{d}$) T G ($G_1$ missing) नैष (for नैव)

**12** $G_1$ missing (cf v l 5) — $^{b}$) Ś$_1$ K (except $K_2$) $D_{1-3}$ महायशा°, $B_3$ $G_4$ विशा पति° — $^{c}$) Ś$_1$ नलस्, $K_1$ जवात्, $K_3$ $_4$ $D_{1-3}$ ततस् (for पुनस्) — $D_4$ om $12^{d}$–$13^{a}$ — $^{d}$) Ś$_1$ K (except $K_2$) $D_{1-3}$ सवासवा°, M व्यवस्थिता° (for समा°)

**13** $G_1$ missing (cf v l 5) $D_4$ om $13^{a}$ (cf v l 12) — $^{a}$) $T_2$ $G_3$ तत्रा° (for तम°) M अथा° (for तथा°) — $^{b}$) = 3 54 $20^{b}$ Ś$_1$ $K_2$ B Dc Dn $D_1$ $_4$ $_6$ महेश्वरा°, $K_1$ M नरेश्वर (for सहे°) — $^{c}$) $B_3$ $_4$ $M_1$ अथा°; T G ($G_1$ missing) तथा° (for ततो°) — $^{d}$) $K_3$ $_4$ Dn $D_4$ $_6$ $M_2$ स (for तत्)

**14** $G_1$ missing (cf v l 5) $K_2$ B (except $B_2$) Dn $D_4$ $_6$ om the ref — $^{a}$) $S_1$ $K_1$ वीर (for दृष्टा) Ś$_1$ $K_1$ दृष्टा, $K_3$ $_4$ Dc $D_{1-3}$ वीर (for राजन्) — $^{d}$) $K_1$ नल (for ऽनघ)

**15** $G_1$ missing (cf v l 5) — $^{a}$) $T_2$ $G_2$ $_3$ त्वहम् (for अहम्) — $^{c}$) $D_3$ $_5$ $M_2$ सुमहत् (for सुमहा ) N (except Ś$_1$ $K_1$ $D_1$) spells कक्ष

**16** $G_1$ missing (cf. v l 5) — $^{ab}$) $K_4$ $D_1$ transp तत्र and कश्चित् — $^{c}$) Ś$_1$ K (except $K_2$) $Dc_2$ $D_{1-3}$ $_5$ M विना (for ऋते)

**17** $G_1$ missing (cf v l 5) — $^{a}$) $S_1$ K (except $K_2$) Dc $D_{1-3}$ $_5$ तस्या (for चास्या) — $^{b}$) $D_2$ $_3$ om च Ś$_1$ $K_1$ $_3$ $B_1$ अस्मि (for अपि) — $^{cd}$) $K_3$ B (except $B_1$) Dn $D_4$ $_6$ M transp दृष्ट्वा and सर्वा

**18** $G_1$ missing (cf v l 5) — $^{c}$) $T_1$ $G_2$ $_4$ $M_1$ मामेवागत° — $^{d}$) $D_{1-3}$ $M_2$ वृणोति $K_3$ B (except $B_1$) Dn $D_{4-6}$ सा सुरोत्तमा°

**19** $G_1$ missing (cf v l 5) — $^{a}$) $K_3$ $Dc_2$ मा (for मा) — $^{b}$) $K_3$ S (except $M_2$, $G_1$ missing) सुरसत्तमा° (for सहिता सुरा°), cf $18^{d}$ — $^{c}$) $K_2$ B Dn $D_4$ $_6$ $M_1$ नरव्याघ्र (for °श्रेष्ठ)

**20** $G_1$ missing (cf v l 5) — $^{a}$) Ś$_1$ $G_4$ $M_2$ त्वा (for त्वां) — $^{b}$) $K_1$ नरेश्वर; Dc नृपोत्तम, $D_3$ न सशय° (for नरो ) $K_2$ B Dn $D_4$ $_6$ वरयिष्यामि नैषध ($B_1$ सत्तम) — $^{c}$) $K_3$ एव (for तव) $D_3$ °भाग (for °बाहो) — $^{d}$) $K_3$ $_4$ (by transp ) न दोषो K (except $K_1$) $D_3$ भवितेति हि, $B_2$ $D_1$ °तेति च, $D_5$ ता स्विह, $T_2$ $G_3$ $_4$ °ता तव

**21** $G_1$ missing (cf v l 5) — $^{a}$) $T_2$ G ($G_1$ missing) एव, $M_1$ एतदु (for एव) — $^{b}$) $K_2$ $B_1$ Dn $D_4$ $_6$ उपा° (for उदा°) — $^{c}$) $K_1$ $_3$ B Dn $D_{4-6}$ मया शेषे, M अत पर — $^{d}$) $D_3$ भवत्तु M सुरसत्तमा° (for त्रिदशे°)

Colophon $G_1$ missing $B_1$ reads it in marg

सुप्तायां दमयन्त्यां तु नलो राजा विशां पते ।
शोकोन्मथितचित्तात्मा न स्म शेते यथा पुरा ॥ ८
स तद्राज्यापहरणं सुहृत्त्यागं च सर्वशः ।
वने च तं परिध्वंसं प्रेक्ष्य चिन्तामुपेयिवान् ॥ ९
किं नु मे स्यादिदं कृत्वा किं नु मे स्यादकुर्वतः ।
किं नु मे मरणं श्रेयः परित्यागो जनस्य वा ॥ १०
मामियं ह्यनुरक्तेदं दुःखमाप्नोति मत्कृते ।
मद्विहीना त्वियं गच्छेत्कदाचित्स्वजनं प्रति ॥ ११
मया निःसंशयं दुःखमियं प्राप्स्यत्यनुत्तमा ।
उत्सर्गे संशयः स्यात्तु विन्देतापि सुखं क्वचित् ॥ १२
स विनिश्चित्य बहुधा विचार्य च पुनः पुनः ।
उत्सर्गेऽमन्यत श्रेयो दमयन्त्या नराधिपः ॥ १३
सोऽवस्त्रतामात्मनश्च तस्याश्चाप्येकवस्त्रताम् ।
चिन्तयित्वाध्यगाद्राजा वस्त्रार्धस्यावकर्तनम् ॥ १४
कथं वासो विकर्तेयं न च बुध्येत मे प्रिया ।
चिन्त्यैवं नैषधो राजा सभां पर्यचरत्तदा ॥ १५
परिधावन्नथ नल इतश्चेतश्च भारत ।
आससाद सभोद्देशे विकोशं खड्गमुत्तमम् ॥ १६
तेनार्धं वाससश्छित्वा निवस्य च परंतपः ।
सुप्तामुत्सृज्य वैदर्भीं प्राद्रवद्गतचेतनः ॥ १७
ततो निबद्धहृदयः पुनरागम्य तां सभाम् ।
दमयन्तीं तथा दृष्ट्वा रुरोद निषधाधिपः ॥ १८

---

**8** c) Dc शोकोन्मथितचित्तोसौ, G1 M1 शोकोन्मथन (M1 शोकोपहत)चित्त सन् — d) T1 पुन°, G (except G3) M °पुर (for पुरा)

**9** c) D1 निवास च अरण्यस्य, D2 3 वनेन च परिक्लिन्न

**10** $10^{ab}$ = 5 34 $19^{ab}$ — c) Ś1 K3 4 स्यात्तु, K1 T G (except G1) स्याद्व, D1 स्याच्च (for किं नु) — d) Dc वै, Dn2 D6 G1 च (for वा)

**11** a) K1 मयेय, Dc यामिय Ś1 K1 om हि T1 G1 M2 तु (for हि) K2 3 B2–4 Dn D4–6 T2 (by corr) G3 [ए]व, B1 T2 G2 4 [इ]य (for [इ]द) D1–3 मामेवा त्वनुरक्तेय — b) K3 4 Dc प्राप्नोति (for आप्नो°) T2 G M दारुण (G1 सुसितै) (for मत्कृते) — c) D3 कथ, T1 G1 स्वय (for त्विय) K1 मद्वियोगाद्धि य गच्छेत्, K3 मद्विहीना न्वय गच्छेत् — d) K4 स्वगृह (for स्वजन)

**12** K2 om $12^{ab}$ — a) N (K2 om) T1 G1 मयि (for मया) — b) K4 M1 इद (for इय) K1 4 प्राप्नोति, G1 (corrupt) लब्धति (for प्राप्स्यति) K1 3 [अ]निन्दिता; B Dn D4–6 T2 G (except G1) [अ]नुव्रता, D2 M1 [अ]नुत्तम — c) Dc च (for तु) Ś1 उत्सर्गे दमयत्यास्तु — d) K3 विंदतेपि, K4 D1 विंदेच्चापि, Dc °थापि, D3 ह्यपि D3 transp सुख and क्वचित्

**13** K2 om $13^{ab}$ — a) Ś1 विबुधो, K1 मनसा (for बहुधा) — $13^{b}$ = 1 57 $41^{b}$ — c) K1 2 B D (except Dc1 D1–3) G1 उत्सर्गं Ś1 K1 2 B D (except D1–3) G1 मन्यते (for ऽमन्यत) — d) K2 4 Dn D1 4–6 G3 M1 नराधिप — After 13, K1 2 B D (except D1–3) ins

247* न चैषा तेजसा शक्या कैश्चिद्धर्षयितु पथि ।
यशस्विनी महाभागा मद्भक्तेय पतिव्रता ।
एव तस्य तदा बुद्धिर्दमयन्त्या न्यवर्तत ।
कलिना दुष्टभावेन दमयन्त्या विसर्जने ।

**14** a) Dc वि (for सोऽ) — b) D3 तथा चाप्ये° — c) S1 K1 [अ]भ्यगाद्, B2 G (except G3) [अ]त्य°, D1–3 तदा (for [अ]ध्यगाद्) — d) Ś1 K1 3 4 D1–3 वस्त्रस्यार्धव(S1 °र्ध)कर्तन, G1 वस्त्रार्धस्यावकृतन

**15** a) Ś1 [ऽ]र्धकृत्येय, K1 Dc [ऽ]वकृत्तेय; K3 विकर्तव्य, K4 T1 M1 [ऽ]वकर्तेय, D3 निकृत्येय, T2 G2–4 [ऽ]वकृतेय, G1 M2 [ऽ]पकर्तेय (for विकर्तेयं) — c) T2 G (except G1) M1 ध्यात्वैव (for चिन्त्यै°) N विचिंत्यैव नलो राजा — d) K1 Dc स तां; D3 प्रपा (for सभा) D2 3 ता पर्यटत् (for पर्यचरत्) T1 M2 नृप (for तदा) D1 ता प्रपा पर्यटत्तदा

**16** b) T1 M2 (inf lin) सत्वर, G1 सत्वर, M2 सर्वश° (for भारत) — c) D1 प्रपादेशे, D2 3 सभामध्ये (for सभो°) — d) B (except B1) विकोष

**17** a) Dc G2 वाससि (for °सश्) K3 तेनार्धं वास आच्छिद्य — b) K3 व्यवस्य, D1 T1 G1 निश्वस्य, G2 4 निरस्य K2 D5 [ए]व, Dc [अ]थ (for च) Ś1 K3 परतप; K1 नरर्षभ, K2 D4 5 पर तत° — D2 om $17^{c}$–$24^{b}$ — c) Ś1 छित्वा चोत्सृज्य, K1 स तामुत्सृज्य — d) Ś1 K2 B (except B1) Dc Dn D4–6 गतचेतना, D1 हृतचेतन°

**18** D3 om 18 (cf v l 17) — a) K3 B Dc Dn D4–6 निवृत्तहृदय°, K4 निबद्धस्नेहेन, D1 निरुद्धहृदय, T2 G2–4 M [ऽ]बध(G4 M2 °बधु)द्ध° — b) Dc D3 आगत्य

यां न वायुर्न चादित्यः पुरा पश्यति मे प्रियाम् ।
सेयमद्य सभामध्ये शेते भूमावनाथवत् ॥ १९
इयं वस्त्रावकर्तेन संवीता चारुहासिनी ।
उन्मत्तेव वरारोहा कथं बुद्ध्वा भविष्यति ॥ २०
कथमेका सती भैमी मया विरहिता शुभा ।
चरिष्यति वने घोरे मृगव्यालनिषेविते ॥ २१
गत्वा गत्वा नलो राजा पुनरेति सभां मुहुः ।
आकृष्यमाणः कलिना सौहृदेनापकृष्यते ॥ २२
द्विधेव हृदयं तस्य दुःखितस्याभवत्तदा ।
दोलेव मुहुरायाति याति चैव सभां मुहुः ॥ २३
सोऽपकृष्टस्तु कलिना मोहितः प्राद्रवन्नलः ।
सुप्तामुत्सृज्य तां भार्यां विलप्य करुणं बहु ॥ २४
नष्टात्मा कलिना स्पृष्टस्तत्तद्विगणयन्नृपः ।
जगामैव वने शून्ये भार्यामुत्सृज्य दुःखितः ॥ २५

इति श्रीमहाभारते आरण्यकपर्वणि एकोनषष्टितमोऽध्यायः ॥ ५९ ॥

---

K2 शुभा, K3 सतीं; D1 3 प्रपा (for सभाम्) — c) K1 3 ततो, K4 B1 Dn D1 5 तदा (for तथा) — d) T1 G1 M2 °द स नराधिप

**19** In G1, the portion of the text from st 19 up to 3 61 35c is lost on missing fol D3 om 19 (cf v l 17) — a) T1 G4 यावन्न वायुरा(G4 वायुर्ना)दित्य° — b) Ś1 K1 3 D1 3 मे पश्यता (D1 °त; D3 °त, K4 [अ]प श्यत ता, Dc मे पश्यति (by transp ) — c) D1 3 प्रपा (for सभा°)

**20** D3 om 20 (cf v l 17) G1 missing (cf v l 19) — a) Ś1 K1 3 D3 वस्त्रार्ध° — c) B1 3 Dc S (G1 missing) मया हीना (for वरारोहा) — d) Ś1 K (except K2) Dc Dn2 D1 3 4 6 T2 G3 M2 बुद्धा; T1 G2 4 M1 ध्या (for °द्धा)

**21** D3 om 21 (cf v l 17) G1 missing (cf v l 19) — a) Ś1 K (except K2) Dc D1 3 एकाकिनी (for एका सती) — d) = 1 109 5b 4 5 13d T1 M समाकुले — After 21, K2 B D (except D1-3) T2 (marg sec m om line 4) G3 ins

248* आदित्या वसवो रुद्रा अश्विनौ समरुद्गणौ ।
रक्षन्तु त्वा महाभागे धर्मेणासि समावृता ।
एवमुक्त्वा प्रियां भार्यां रूपेणाप्रतिमां भुवि ।
कलिनापहृतज्ञानो नल प्रातिष्ठदुत्यत ।
[ (L 4) B4 नल प्रातिष्ठतान्यत ]

**22** D3 om 22 (cf v l 17) G1 missing (cf v l 19) — b) D1 3 प्रपा, M मुहुर् (for सभा) — c) Ś1 K1 सोपकृष्टस्तु क (= 24a) — d) K4 सौहार्देना K2 B2 4 Dn D4-6 M2 [अ]वकृष्यते

**23** D3 om 23 (cf v l 17) G1 missing (cf v l 19) — a) Ś1 द्विरेव; K3 Dc D3 T1 G2 द्विधैव; B1 3 द्विविध — c) K4 M1 पुनर्, D6 यहिर् (for मुहुर्) — d) K1 सभा पुन , K2 B Dn D4-6 M2 सभा प्रति, D1 3 प्रपा पुन , T G (G1 missing) मुहुर्मुहु

**24** G1 missing (cf v l 19) D3 om 24ab (cf v l 17) — a) K2 B2 Dn D4-6 अव° (for सोऽप ) Dc च (for तु) — c) K1 बाला (for भार्या) — d) K1 B3 Dc D3 मुहु° (for बहु)

**25** G1 missing (cf v l 19) — a) S (except M2, G1 missing) [आ]विष्टस (for स्पृष्टस) — b) T1 M बहु, T2 G (G1 missing) मुहु (for नृप ) — c) K2 B Dn D4-6 जगामैका; K4 D1 T1 M1 °मैव, Dc मैको; T2 G3 °म वै (for मैव) K1 कानने (for [ए]व वने) S1 घोरे, B1 नान्या (for शून्ये) — d) T2 G (G1 missing) मो हित (for दु:खि )

Colophon G1 missing — *Major parvan* Ś1 T G2-4 आरण्य — *Sub parvan* N T1 (om sub-parvan name) mention only नलोपाख्यान — *Adhy name* D3 नलेन वस्त्रार्धच्छेदने दमयतीपरित्यागे नलविलाप — *Adhy no* (figures, words or both) Dn (Dn1 *sup lin* ) 62, D1 64, T G2-4 M2 59 (as in text), M1 60 — *Śloka no* Dn 29, D1 25

## 60

☞ This adhy is missing in G1 (cf v l 3 59 19), the MS is mostly ignored here

**1** c) Dc2 अवबुध्य (for अबु ) K3 महाराज (for वरा )

**2** a) K2 B (except B3) Dn D4-6 अपश्यमाना (for सा ) T2 G (G1 missing) M1 भर्तार सा स्वपश्यती — b) K2 B Dn D4-6 T1 M2 शोकदु ख (by transp )

# ६०

बृहदश्व उवाच ।
अपक्रान्ते नले राजन्दमयन्ती गतक्लमा ।
अबुध्यत वरारोहा संत्रस्ता विजने वने ॥ १
सापश्यमाना भर्तारं दुःखशोकसमन्विता ।
प्राक्रोशदुच्चैः संत्रस्ता महाराजेति नैषधम् ॥ २
हा नाथ हा महाराज हा स्वामिन्किं जहासि माम् ।
हा हतास्मि विनष्टास्मि भीतास्मि विजने वने ॥ ३
ननु नाम महाराज धर्मज्ञः सत्यवागसि ।
कथमुक्त्वा तथासत्यं सुप्तामुत्सृज्य मां गतः ॥ ४
कथमुत्सृज्य गन्तासि वश्यां भार्यामनुव्रताम् ।
विशेषतोऽनपकृते परेणापकृते सति ॥ ५
शक्ष्यसे ता गिरः सत्याः कर्तुं मयि नरेश्वर ।
यास्त्वया लोकपालानां संनिधौ कथिताः पुरा ॥ ६
पर्याप्तः परिहासोऽयमेतावान्पुरुषर्षभ ।
भीताहमस्मि दुर्धर्ष दर्शयात्मानमीश्वर ॥ ७
दृश्यसे दृश्यसे राजन्नेष तिष्ठसि नैषध ।
आवार्य गुल्मैरात्मानं किं मां न प्रतिभाषसे ॥ ८
नृशंसं बत राजेन्द्र यन्मामेवंगतामिह ।
विलपन्तीं समालिङ्ग्य नाश्वासयसि पार्थिव ॥ ९
न शोचाम्यहमात्मानं न चान्यदपि किंचन ।
कथं नु भवितास्येक इति त्वां नृप शोचिमि ॥ १०
कथं नु राजंस्तृपितः क्षुधितः श्रमकर्शितः ।

— $^{c}$) K3 साक्रोश°, D1 आक्रोश° — $^{d}$) T1 M3 हा राजन्निति भारत

**3** M1 om (hapl) $3^{b}$–$4^{a}$ — $^{b}$) Ś1 K1 3 4 D1 स्वामिन्किं वि(D1 त्व)जहासि मा — $^{d}$) D3 3 भीताहं, T2 G (G1 missing) हीनास्मि (for भीतास्मि)

**4** Ś1 om (hapl) 4, M1 om $4^{a}$ (cf v l 3) — $^{b}$) K4 Dc1 D3 G2 4 सत्यवानसि, T1 M3 इति विश्रुत° — $^{c}$) K3 D3 मा त्व, D2 M1 2 सात्व (for [अ]सत्य) K4 कथ मुक्त्वा तथा साध्वीं; D1 कथमुत्सृज्य ता सुप्ता, T G (G1 missing) कथ तथाविधस्त्व हि — $^{d}$) K4 Dn D3m 3 कानने (D3 orig नैषध) (for मा गत°) D1 गतवान्काननादत°

**5** $^{a}$) Ś1 K1 4 क्व त्वम्, D3 वनम् (for कथम्) S1 K1 यातोसि (for गन्ता°) D1 क्व परित्यज्य गतासि, M1 पुन कथ नु भविता — $^{b}$) K3 B Dn D4–6 दक्षा, M1 त्यक्त्वा (for वश्या) D2 3 च सुव्रता (for अनुव्रता) — $5^{cd}$ = 1 141 $3^{cd}$ — $^{c}$) K1 B2 T1 M नापकृते, Dc T2 G (G1 missing) नापकृत, Dn3 D1 3 [ऽ]नपकृता, D2 मम कृते (for ऽनपकृते) — $^{d}$) S1 K1 [अ]पि कृते, D1 3 T2 G (G1 missing) [अ]पकृतो, D2 [उ]पेक्षितो (for [अ]पकृते) D1 3 भवान्, D2 T2 G (G1 missing) ह्यसि (for सति)

**6** $^{a}$) Ś1 K1 वक्ष्यसे, K3 B Dc Dn D1 5 6 शक्ष्यसे; D2 वदस्व D4 T2 (by corr) G3 शक्यमेता (for शक्ष्यसे ता) K2 सा, D1 3 T1 G2 4 M3 न (for ता) K2 B (except B1) Dn D4–6 सम्यक् (for सत्या) — $^{b}$) Dc transp कर्तुं and मयि B1 कर्तुं मे निषधेश्वर, D3 साम्प्रत च मया सह — $^{c}$) K2 B Dn D4–6 तेषा, K3 स्वय (for त्वया) — After 6, K2 B D (except D1–3) ins

249* नाकाले विहितो मृत्युर्मर्त्यानां पुरुषर्षभ ।
यत्र कान्ता त्वयोत्सृष्टा मुहूर्तमपि जीवति ।

**7** $^{b}$) K3 4 B1 Dn1 n2 D1 3 M2 एतावत्, T1 ते भवान् (for एतावान्) — $^{c}$) K2 3 B (except B4) Dn D3 4–6 अति (for अस्मि) T2 G (G1 missing) भृश भीतास्मि दु°

**8** $^{b}$) K1 3 4 Dc D1–3 T1 M3 तिष्ठति; K2 B Dn D4–6 G4 दृष्टोसि K3 4 Dc D1 2 T1 M3 नैषध° G3 न तिष्ठसि नरेश्वर — After $8^{ab}$, D2 3 ins

250* आधार्यमाणेषु मया शोकमूलेषु दु खित° ।

— $^{c}$) K3 (marg *sec m*) D1 आच्छाद्य (for आवार्य)

**9** $^{a}$) K3 4 D1–3 तव (for बत) — $^{b}$) K1 M3 किं (for यन्) — D3 om $9^{c}$–$10^{d}$ — $^{c}$) Ś1 K1 3 समालोक्य, K2 B Dn D4–6 °गम्य, T1 °साद्य (°लिङ्ग्य)

**10** D3 om 10 (cf v l 9) — $^{b}$) D1 T2 G (G1 missing) तथा (for न चा°) — After $10^{ab}$, B4 ins

251* सत्यवागसि मा त्यक्त्वा गतसत्य कथ भवान् ।

— $^{c}$) Dc भविता सम्यक् (for स्येक) — $^{d}$) G3 M2 स्वा (for त्वा) K2 T1 G3 4 M3 शोचये, B (except B2) Dc रोदिमि (for शोचिमि) Ś1 इति त्वा शोचयाम्यह; K1 इति त्वामनुशोचिमि, K3 इति मत्वा तु शोचिमि, K4 इति शोचाम्यह नृप, D1 इति शोचाम्यनुव्रत, D2 इति मत्वा तु रोदिमि, M1 इति मत्वानुशोचये

सायाह्ने वृक्षमूलेषु मामपश्यन्भविष्यसि ॥ ११
ततः सा तीव्रशोकार्ता प्रदीप्तेव च मन्युना ।
इतश्चेतश्च रुदती पर्यधावत दुःखिता ॥ १२
मुहुरुत्पतते बाला मुहुः पतति विह्वला ।
मुहुरालीयते भीता मुहुः क्रोशति रोदिति ॥ १३
सा तीव्रशोकसंतप्ता मुहुर्निःश्वस्य विह्वला ।
उवाच भैमी निष्क्रम्य रोदमाना पतिव्रता ॥ १४
यस्याभिशापाद्दुःखार्तो दुःखं विन्दति नैषधः ।
तस्य भूतस्य तद्दुःखाद्दुःखमभ्यधिकं भवेत् ॥ १५
अपापचेतसं पापो य एवं कृतवान्नलम् ।
तस्माद्दुःखतरं प्राप्य जीवत्वसुखजीविकाम् ॥ १६
एवं तु विलपन्ती सा राज्ञो भार्या महात्मनः ।
अन्वेषति स्म भर्तारं वने श्वापदसेविते ॥ १७
उन्मत्तवद्भीमसुता विलपन्ती ततस्ततः ।
हा हा राजन्निति मुहुरितश्चेतश्च धावति ॥ १८
तां शुष्यमाणामत्यर्थं कुररीमिव वाशतीम् ।
करुणं बहु शोचन्तीं विलपन्तीं मुहुर्मुहुः ॥ १९
सहसाभ्यागतां भैमीमभ्याशपरिवर्तिनीम् ।
जग्राहाजगरो ग्राहो महाकायः क्षुधान्वितः ॥ २०
सा ग्रस्यमाना ग्राहेण शोकेन च पराजिता ।
नात्मानं शोचति तथा यथा शोचति नैषधम् ॥ २१
हा नाथ मामिह वने ग्रस्यमानामनाथवत् ।

**11** $^{b}$) Ś1 K B2–4 Dn D4–8 श्रमकर्षित , B1 पीडित — $^{c}$) K4 मूले स्व, Dc °मूले तु — $^{d}$) S (G1 missing) निवत्स्यसि (for भवि ) D8 मामपश्यसि दु खित

**12** $^{a}$) T1 M2 एव (for तत ) Ś1 K1 तीव्रदु खार्ता, K2 4 D1–3 [अ]तीव दु खार्ता, Dn2 n3 M1 [अ]तीव शोकार्ता — $^{b}$) T1 प्रदीप्तेन S1 K1 3 4 Dc D1–3 सप्रदीप्तेव (K3 Dc °न) मन्युना — $^{d}$) K4 D1–3 धावत्सुदु खिता — After 12, D2 3 ins

252* मा त्व समाश्रय विभो अनाथा निर्जने वने ।
इतश्चेतश्च धावन्ती शोकव्याकुलचेतसा ।
सहसा मुह्यते बाला मुहु रोदिति शोचती ।

[(L 1) D3 समाश्रय विभो मा त्व (for prior half), and विजने (for निर्जने) — (L 2) D2 °लोचना (for चेतसा) — (L 3) Cf 13$^{ab}$ D3 वामा (for बाला) ]

**13** D3 om 13 — $^{b}$) K1 T1 दु खिता (for विह्वला) — $^{c}$) K1 4 D1 2 चापि, K3 बाला, Dc तेन (for भीता) — $^{d}$) G2 शोचति (for रोदिति)

**14** $^{a}$) Ś1 K1 2 D5 G2 सातीव; Dn अतीव (for सा तीव्र ) — $^{b}$) D2 3 तिष्ठति (for नि श्वस्य) B D4 6 दु खिता (for विह्वला), cf v l 13 — After 14$^{ab}$, D2 3 ins

253* पतिव्रता सा रुदती भर्तृशोकसमाकुला ।
[ D3 भर्तृशोकपरायणा ]

— $^{c}$) Ś1 K1 तथा च (for उवाच)। K2 4 Dn D1–3 5 नि श्वस्य, B D4 6 निष्क्रान्ता (for निष्क्रम्य) — $^{d}$) S1 K1 रुदती स्म, K2 D5 रुदत्यथ, K3 रुदित्वा स्म, K4 D1 रुदती मा, Dc रुदतीति, Dn रुदत्यथ (Dn2 तीरथ), D2 3 रुदती सा (for रोदमाना)

**15** $^{a}$) B1 °शापदु खार्तो, D1 3 °तापदु खार्तो — $^{b}$) Ś1 K1 3 तिष्ठति (for विन्दति) S (except M1, G1 missing) नैष नदति नैषध — B1 om 15$^{c}$–16$^{d}$ — $^{cd}$) B (B1 om ) D (except D1–3 5) नो (for तद् ) Ś1 K D1–3 5 transp दु खाद् and दु खं K (except K1) B (B1 om ) Dn1 n2 D4 6 अपि (for अभि )

**16** B1 om 16 (cf v l 15) — $^{b}$) K2 D1 G4 एन (for एव) — $^{c}$) K1 अभ्यधिक (for दु खतर)

**17** $^{a}$) Dc स, D2 3 हि (for तु) — $^{c}$) Ś1 K1 3 4 Dc Dn D1–3 5 अन्वेषमाणा (Ś1 K1 2 D5 ना), K3 B D4 6 अन्वेषयति (for षति स्म) — $^{d}$) D2 जीविते, T1 (*sup lin* as in text) चेष्टिते (for सेविते)

**18** $^{b}$) D1 दमयती (for विल°) K2 Dn D5 इतस्, D2 3 यतस् (for ततस्) — $^{c}$) D2 3 महाराज (for राजन्निति) — $^{d}$) Ś1 K (except K4) D5 भारत (for धावति)

**19** $^{a}$) B D2–6 T1 स , Dc सा (for ता) K2 Dn D5 क्रन्दमाना (for शुष्यमाणा ) Dc अत्यत (for अत्यर्थं) K3 मत्शुष्कमाणा भर्तारं, K4 D1 सभ्य(D1 °रू)ष्यमाणा पत्यर्थं — $^{b}$) A few MSS वासतीं, D1 ता सतीं — $^{c}$) K2 3 Dc2 Dn2 शोचती — $^{d}$) K2 3 Dc D2 3 विलपती B1 4 T1 M पुन पुन , T2 G (G1 missing) सुमध्यमा

**20** $^{a}$) B (except B4) Dc D4 6 T2 G (G1 missing) भीरुम् (for भैमीम्) D5 सहसाजगरो भैमीं; T1 M सहसैवानवद्याङ्गीं — $^{b}$) Ś1 मध्ये सपरि°, K (except K1) B Dc D1 2 अभ्यासपरि°, D5 अभ्यासवश° — $^{c}$) D5 [अ]भिमुखो (for [अ]जगरो) — $^{d}$) Dc दमयतीं (for महा )

**21** $^{a}$) G4 सगृह्यमाणा (for सा ग्रस्य ) — $^{b}$) B Dn D4 6 T2 (by corr ) G3 परिप्लुता (for परा )

ग्राहेणानेन विपिने किमर्थं नाभिधावसि ॥ २२
कथं भविष्यसि पुनर्मामनुस्मृत्य नैषध ।
पापान्मुक्तः पुनर्लब्ध्वा बुद्धिं चेतो धनानि च ॥ २३
श्रान्तस्य ते क्षुधार्तस्य परिग्लानस्य नैषध ।
कः श्रमं राजशार्दूल नाशयिष्यति मानद ॥ २४
तामकस्मान्मृगव्याधो विचरन्गहने वने ।
आक्रन्दतीमुपश्रुत्य जवेनाभिससार ह ॥ २५
तां स दृष्ट्वा तथा ग्रस्तामुरगेणायतेक्षणाम् ।
त्वरमाणो मृगव्याधः समभिक्रम्य वेगितः ॥ २६
मुखतः पाटयामास शस्त्रेण निशितेन ह ।
निर्विचेष्टं भुजंगं तं विशस्य मृगजीवनः ॥ २७
मोक्षयित्वा च तां व्याधः प्रक्षाल्य सलिलेन च ।
समाश्वास्य कृताहारामथ पप्रच्छ भारत ॥ २८
कस्य त्वं मृगशावाक्षि कथं चाभ्यागता वनम् ।
कथं चेदं महत्कृच्छ्रं प्राप्तवत्यसि भामिनि ॥ २९
दमयन्ती तथा तेन पृच्छ्यमाना विशां पते ।
सर्वमेतद्यथावृत्तमाचचक्षेऽस्य भारत ॥ ३०
तामर्धवस्त्रसंवीतां पीनश्रोणिपयोधराम् ।
सुकुमारानवद्याङ्गीं पूर्णचन्द्रनिभाननाम् ॥ ३१
अरालपक्ष्मनयनां तथा मधुरभाषिणीम् ।
लक्षयित्वा मृगव्याधः कामस्य वशमेयिवान् ॥ ३२
तामथ श्लक्ष्णया वाचा लुब्धको मृदुपूर्वया ।

---

**22** $^{b}$) $B_{1\,3\,4}$ $D_{4\,6}$ $T_2$ (by corr ) अनागस, S अनागसीं (for अनाथवत्) — $^{c}$) $S_1$ $K_2$ $B_{3\,4}$ Dn $D_5$ $T_2$ $G_3$ विजने (for विपिने) — $^{d}$) $K_1$ नैष, $K_2$ Dn $D_{4\,6}$ नानु (for नाभि )

**23** $^{a}$) $K_2$ कथ भवसि च पुन° — $^{b}$) $K_3$ $D_2$ इहो त्सृज्य ; $T_1$ $M_2$ अभिस्मृत्य — After $23^{ab}$, Dn ins

254* कथ भवाञ्जगामाद्य मामुत्सृज्य वने प्रभो ॥

— $Ś_1$ $D_3$ om (hapl ) $23^{c}$–$24^{b}$ — $^{c}$) K (except $K_4$) Dc $Dn_1$ $D_{1\,2\,5}$ $G_2$ $M_1$ शापान् (for पापान्)

**24** $Ś_1$ $D_3$ om $24^{ab}$ (cf v l 23) — $^{a}$) $B_1$ Dc च (for ते) — $^{b}$) $K_1$ परिश्रातस्य, Dc $D_{2\,5}$ $M_1$ °म्लानस्य — $^{c}$) S (except $T_1$, $G_1$ missing) का (for क° ) $Ś_1$ नृप° (for राज ) — $^{d}$) $K_3$ $D_5$ मा विना, B Dn $D_{4\,6}$ $T_1$ M ते( $B_3$ चा )नघ (for मानद )

**25** Before 25, S ($G_1$ missing) ins बृहदश्व° — $^{a}$) $K_3$ Dn $D_5$ तत कश्चिन्, $T_2$ G ($G_1$ missing) ता तु कश्चिन् (for तामकस्मान्) — $^{b}$) $D_2$ विजने (for गहने) — $T_1$ om $25^{c}$–$26^{d}$ — $^{c}$) $B_3$ Dc $D_{4\,6}$ आक्रंदितम्, $D_3$ आरुधतीम् $T_2$ G ($G_1$ missing) अभि° (for उप° ) $K_2$ $B_{1\,2\,4}$ Dn $D_5$ आक्रदमाना सश्रुत्य — $^{d}$) $S_1$ $K_1$ वेगेनाभि°

**26** $T_1$ om 26 (cf v l 25) — $^{a}$) $K_2$ $B_1$ Dn $D_{5\,6}$ तु दृष्ट्वा, Dc (by transp ) दृष्ट्वा स — $^{d}$) $Ś_1$ $K_{3\,4}$ Dc $Dn_3$ $D_{1\,2\,4\,6}$ $M_1$ समतिक्रम्य, $T_2$ G ($G_1$ missing) समभिद्रुत्य K (except $K_3$) $B_4$ Dn $D_{1-3\,5}$ वेगत $M_2$ सचरन्गाहने वने — After 26, $M_2$ ins

255* समतिक्रम्य वेगेन सत्वर स वनेचर ।

**27** $B_2$ om $27^{ab}$ — $^{a}$) $T_2$ $G_{2\,3}$ मुखे त (for मुखत ) — $^{b}$) $S_1$ $K_{2\,3}$ $B_1$ Dn $D_{1\,5}$ $T_1$ $M_2$ च (for ह) — $^{d}$) $Ś_1$ $B_2$ निशाम्य, $K_1$ विशाव्य, $K_{2\,3}$ निशम्य, $D_1$ विहत्य (for विशस्य) $K_3$ $T_2$ $G_{2\,3}$ °जीवक , $G_4$ जीविक, some MSS जीविन° (cf $37^{d}$ )

**28** $^{a}$) $D_3$ मोचयित्वा $K_3$ [अ]थ, B Dn $D_{1\,4\,6}$ स, $D_2$ तु (for च) $K_2$ $D_5$ $T_2$ G ($G_1$ missing) मृग , $D_3$ शुभा (for च ता) — $^{b}$) $Ś_1$ $K_{1\,2}$ B Dn $D_{4-6}$ ह, $K_3$ $D_{2\,3}$ हि, Dc वै (for च) — $^{c}$) $M_1$ च ता भीरुम् (for कृताहाराम्)

**29** $^{a}$) $M_1$ (*inf lin* ) कासि (for कस्य) $D_{2\,3}$ हि विशालाक्षि (for मृग° ) — $^{b}$) $K_1$ $D_1$ चाभ्यागत, $K_4$ चैवा गता, $B_3$ $D_{4\,6}$ $T_1$ $G_{3\,4}$ चास्या — $^{c}$) $D_{2\,3}$ कष्ट (for कृच्छ्र) — $^{d}$) $K_2$ B D (except $D_{1-3}$) भाविनि

**30** $^{b}$) $K_1$ मनस्विनी (for विशा पते) — $^{c}$) K (except $K_3$) $D_{1\,5}$ सर्वमेव $T_2$ $G_3$ यथातथ्यम् — $^{d}$) Dc $Dn_2$ [ऽ]थ (for ऽस्य) $D_{2\,3}$ भामिनी (for भारत)

**31** $31^{b}$ = (var ) 1 96 $54^{d}$ 4 8 $11^{b}$ — $^{c}$) $K_3$ Dc $D_5$ सुविभक्तानव° — $31^{d}$ = (var ) 1 213 $69^{d}$ 4 8 $12^{d}$ — After 31, $K_1$ ins

सान्त्वयामास कामार्तस्तदबुध्यत भामिनी ॥ ३३
दमयन्ती तु तं दुष्टमुपलभ्य पतिव्रता ।
तीव्ररोषसमाविष्टा प्रजज्वालेव मन्युना ॥ ३४
स तु पापमतिः क्षुद्रः प्रधर्षयितुमातुरः ।
दुर्धर्षां तर्कयामास दीप्तामग्निशिखामिव ॥ ३५
दमयन्ती तु दुःखार्ता पतिराज्यविनाकृता ।
अतीतवाक्पथे काले शशापैनं रुषा किल ॥ ३६
यथाहं नैषधादन्यं मनसापि न चिन्तये ।
तथायं पततां क्षुद्रः परासुर्मृगजीवनः ॥ ३७
उक्तमात्रे तु वचने तया स मृगजीवनः ।
व्यसुः पपात मेदिन्यामग्निदग्ध इव द्रुमः ॥ ३८

इति श्रीमहाभारते आरण्यकपर्वणि षष्टितमोऽध्यायः ॥ ६० ॥

# ६१

बृहदश्व उवाच ।
सा निहत्य मृगव्याधं प्रतस्थे कमलेक्षणा ।
वनं प्रतिभयं शून्यं झिल्लिकागणनादितम् ॥ १
सिंहव्याघ्रवराहर्क्षरुरुद्वीपिनिषेवितम् ।
नानापक्षिगणाकीर्णं म्लेच्छतस्करसेवितम् ॥ २
शालवेणुधवाश्वत्थतिन्दुकेङ्गुदकिंशुकैः ।
अर्जुनारिष्टसंछन्नं चन्दनैश्च सशाल्मलैः ॥ ३
जम्ब्वाम्रलोध्रखदिरशाकवेत्रसमाकुलम् ।

---

तदा , T G ($G_1$ missing) तत्त्व° (for तद°) $K_2$ B Dn $D_4$ $_5$ भाविनी, Dc $G_4$ $M_1$ कामिनी

**34** $^a$) $K_2$ B Dn $D_4$ $_6$ $T_2$ $G_3$ दमयत्यपि, $D_5$ यतीति (for यन्ती तु) $K_3$ दृसम्, $D_2$ दृष्ट्वा, $D_5$ दुःखम् (for दुष्टम्) — $^b$) $D_2$ उपलक्ष्य — $^c$) $T_1$ $M_2$ °शोक , $T_2$ $G_2$ $_4$ $M_1$ कोप (for रोष°)

**35** $^a$) Ś$_1$ $K_1$ $_3$ हि (for तु) $Dc_1$ $Dn_1$ $D_2$ क्रुद्ध (for क्षुद्र°) — $^b$) $B_3$ $D_1$ उद्यत° (for आतुर°) — $^c$) Ś$_1$ $K_2$ दुर्धर्षं, $D_4$ $_6$ उद्धर्षांत् (for दुर्धर्षां)

**36** $^a$) $K_3$ दमयतीति, B (except $B_2$) $D_4$ °यत्यपि, $D_2$ यती च (cf $34^a$) — $^b$) $B_3$ पतिना च विना°, $B_4$ पतिराज्यनिरा — $^c$) $Dn_2$ $D_5$ अतीव; $D_1$ अतीते — $^d$) $K_2$ $B_1$ $_4$ Dn $D_5$ रुषान्विता (for रुषा किल)

**37** $^a$) $K_3$ $B_4$ Dn $D_5$ यथह $T_1$ राज्ञो (for अन्य) — $^b$) $K_4$ न कामये, $M_2$ विचिंतये — $^d$) $K_2$ Dn $D_{1-3}$ $_5$ गतासुर्, $B_4$ दग्ध° सन् $D_{1-3}$ मृगजीवक°, $T_1$ मृतजीवन , $T_2$ G ($G_1$ missing) गत° (cf $27^d$, $38^b$)

**38** $K_1$ $_4$ $D_5$ om $38^{ab}$ — $^b$) $K_2$ D (except Dc) तथा (for तया) $T_2$ G ($G_1$ missing) मृगजीवक (cf $27^d$, $37^d$) — $^c$) $D_5$ स पपाताशु मे

Colophon om in $D_3$ $Dn_2$ has a lacuna in place of it $G_1$ missing — *Major parvan* Ś$_1$ $K_1$ T $G_{2-4}$ आरण्य — *Sub parvan* N (except $Dn_2$, $D_3$ om ) $T_1$ (om sub parvan name) mention only नलोपाख्यान — *Adhy name* $K_3$ मृगव्याधशाप , $D_2$ दमयतीविलापे नलावलोकने ग्राहेण दमयतीग्रहणे व्याधेन ग्राहवधे दमयत्या व्याधशाप — *Adhy no* (figures, words or both) $Dn_1$ (*sup lin* ) ns 63 $D_1$ 65, T $G_{2-4}$ 60 (as in text) $M_1$ 61, $M_2$ 62 — *Śloka no* Dn 39, $D_1$ 38

## 61

☞ $G_1$ is missing up to $35^c$ ( cf v l 3 59 19), the MS is mostly ignored up to the end of the lacuna

**1** $^c$) $K_4$ $B_2$ (m as in text) घोर (for शून्य) — $^d$) Ś$_1$ जिल्लीक , $K_1$ क्षिल्लीक ; $K_3$ $D_5$ क्षिल्लीका , $K_4$ शृगाल°, $D_2$ जिल्लीका° , $G_3$ झल्लिका°

**2** $D_5$ om $2^{ab}$ — $^{ab}$) Ś$_1$ $K_3$ $_4$ $D_{1-3}$ मृग , $K_1$ -मरु- (for -रुरु ) $K_2$ B Dc Dn $D_4$ $_6$ सिंहद्वीपिरुरुव्याघ्र( $B_2$ सिंहव्याघ्ररुरुद्वीपि )महिषर्क्षगणैः( $B_3$ Dc मृगैः )युतं — $T_2$ $G_3$ om (hapl ) $2^{cd}$ — $^c$) Dc $D_4$ $_6$ °गणैः कीर्णं

**3** Some MSS show the spelling साल and [इं]गुदि — $^d$) $K_2$ B D स्यदनैश्च Ś$_1$ $K_1$ S (except $T_2$ $G_3$, $G_1$ missing) सशाल्मलैः ; $K_2$ $Dn_1$ $n_3$ सपाल्मकैः

काश्मर्यामलकप्लक्षकदम्बोदुम्बरावृतम् ॥ ४
बदरीबिल्वसंछन्नं न्यग्रोधैश्च समाकुलम् ।
प्रियालतालखर्जूरहरीतकविभीतकैः ॥ ५
नानाधातुशतैर्नद्धान्विविधानपि चाचलान् ।
निकुञ्जान्पक्षिसंघुष्टान्दरीश्चाद्भुतदर्शनाः ।
नदीः सरांसि वापीश्च विविधांश्च मृगद्विजान् ॥ ६
सा बहून्भीमरूपांश्च पिशाचोरगराक्षसान् ।
पल्वलानि तडागानि गिरिकूटानि सर्वशः ।
सरितः सागरांश्चैव ददर्शाद्भुतदर्शनान् ॥ ७
यूथशो ददृशे चात्र विदर्भाधिपनन्दिनी ।
महिषान्वराहान्गोमायूनृक्षवानरपन्नगान् ॥ ८
तेजसा यशसा स्थित्या श्रिया च परया युता ।
वैदर्भी विचरत्येका नलमन्वेषती तदा ॥ ९
नाबिभ्यत्सा नृपसुता भैमी तत्राथ कस्यचित् ।
दारुणामटवीं प्राप्य भर्तृव्यसनकर्शिता ॥ १०
विदर्भतनया राजन्विललाप सुदुःखिता ।
भर्तृशोकपरीताङ्गी शिलातलसमाश्रिता ॥ ११

दमयन्त्युवाच ।

सिंहोरस्क महाबाहो निषधानां जनाधिप ।
क्व नु राजन्गतोऽसीह त्यक्त्वा मां निर्जने वने ॥ १२

---

**4** $^{ab}$) Ś1 K1 °रोध्रबदि(K1 °द)रै° साल°, K2 D1 8 T1 2 (by corr) °लोध्रखदिरशाल°, K3 °रोध्रखदिरै° शाल°, K4 D2 3 °रोध्रखदिरशा(K4 °सा)ल°, B Dc Dn D4 °लोध्रखदिरसाल°, D5 जबूलोध्राक्षखदिरशाल° — K1 3 D1 om (hapl) 4$^{c}$–5$^{b}$ — $^{cd}$) S (mostly) कार्ष्मर्या Ś1 Dc2 काश्मर्यसलली(Dc2 °मलक)प्लक्ष-, K3 Dn D5 पद्मकामलकप्लक्ष- B -कदबोडुबरावृत, T2 G3 4 -कदबोदुबरान्वित

**5** K1 3 D1 om 5$^{ab}$ (cf v l 4) — $^{b}$) S (except T1, G1 missing) परिष्कृत (for समा°) — $^{cd}$) S1 पिद्दाल सालखर्जूर°, K1–3 Dc2 Dn D5 8 T1 प्रियालतालखर्जूर-हरीतकि°, K4 D1 प्रियालुसेलु(D1 °साल)खर्जूर, B पियाल (sic)तालखर्जूरहरीतकि(B1 3 °क)बि°, D2 3 प्रियालशाल-(D3 °द्रुम) खर्जूर° S (mostly) -विभीतकै°

**6** $^{a}$) Ś1 K1 °शतानीकान्, K3 D5 G2 4 °शतानद्धान्, D3 °समानद्धान्, M1 °शरानद्धान्, M2 °शतोद्भद्धान् — D4 om (hapl) 6$^{b}$–6$^{e}$ — $^{c}$) K3 B2 4 Dn D1 परि° (for पक्षि°) B3 M1 विकूजत्पक्षिसघुष्टा (M1 °ष्टान्); Dc D5 निकुजपक्षिसघुष्टा, T1 M2 सिंहर्क्षव्याघ्रसघुष्टान् — $^{e}$) K2 D5 नद्य (for नदी°) K2 Dn D5 वाप्य° (for वापी°) — $^{f}$) T1 वन्यानपि (for विवि°) B1 D1 मृगद्विपान् T2 G (G1 missing) विविधाश्चरतो द्विजान्

**7** $^{a}$) K3 B Dc2 D4 6 S (G1 missing) सु- (for सा) — $^{c}$) Ś1 K1 T2 G3 तडाकांश्च, K3 तडागाश्च; T1 M तटाकानि, G2 4 तटाकाश्च — $^{d}$) K1 °कुजाश्च, K3 °कूटाश्च G2 सर्वत — $^{e}$) K2 Dc Dn D4 6 निर्झराश्चैव, K3 4 D1 3 सगमा°, B2 3 जगमा°, D5 विविधा° S (G1 missing) सरित्स रासि च तथा (T2 G3 °दा) — $^{f}$) D5 S (G1 missing) °दर्शना° (or °ना)

**8** $^{a}$) K1 चाथ, B Dc D4 T2 G (G1 missing) तत्र (for चात्र) — $^{b}$) G4 विदर्भाणा च न° — $^{c}$) Hypermetric! Ś1 महिषान्व****यून्; K2 4 B1 Dc Dn D1 5 महिषाश्च वराहाश्च — $^{d}$) Ś1 K1 3 B3 4 D2 3 ऋक्षपन्नगवानरान् (B3 राक्षसान्), K2 Dn D5 ऋक्षाश्च वनपन्नगान्, K4 B1 D1 गोमायूनृक्षपन्नगान् (B1 °वानरान्), Dc2 G4 ऋक्षवानरपुगवान्, T1 ऋक्षपुगववानरान् — After 8, K4 reads 11

**9** $^{ab}$) Ś1 K B2 Dn D1–3 5 लक्ष्म्या स्थित्या (for स्थित्या श्रिया) K1 B (except B2) Dc D4 6 परमया (for च परया) B3 (*sup lin*) शुभा (for युता) — $^{c}$) S (G1 missing) विचचारैका — $^{d}$) K4 पतिम् (for नलम्) D5 सती, M2 सदा (for तदा) — After 9, B4 ins

257* अतिभीमे वने तत्र यूथभ्रष्टा मृगी यथा ।

**10** $^{a}$) Ś1 नातृप्यत्सा, K1 निवृत्तात्मा, D3 नाबिभेत्सा, D5 नाभ्यसूया (for नाबिभ्यत्सा) — $^{b}$) Ś1 K1 3 D2 3 तत्रापि Ś1 K1 B2 4 D4 6 कर्हिचित्; K4 वा क्व, D1 कुत्र° (for कस्य°) — K4 om 10$^{cd}$ — $^{d}$) Ś1 °दु खिता, Śm K2 3 Dn D1 5 °पीडिता, K1 B °कर्षिता

**11** K4 reads 11 after 8 — $^{d}$) K2 Dn D5 °मया श्रिता, K3 T1 °समाश्रया, T2 G (G1 missing) M शुभा श्रिता

**12** B3 Dc Dn3 D4 S om the ref — After the ref, B4 ins

258* यथोक्त च त्वया कान्त मत्समक्ष च मत्प्रियम् ।
स्मर्तुमर्हसि कल्याण वच॰ पार्थिवनन्दन ।,

*repeating* it after 14 ! — $^{a}$) K2 Dn D5 व्यूढोरस्क; B2 सिंहस्कध — $^{b}$) K2 B (except B4) Dn D4 5 नैषधाना Ś1 G4 नराधिप, D3 पते प्रभो D2 निषधाधिपते प्रभो — $^{c}$) S1 गत॰ सोसि, K2 3 Dn D5 गतोस्यद्य, K4 T2 (before corr) G2 4 M2 गतो मेसि, D1 2 T1 गतोसि स्व;

अश्वमेधादिभिर्वीर क्रतुभिः स्वाप्तदक्षिणैः ।
कथमिष्ट्वा नरव्याघ्र मयि मिथ्या प्रवर्तसे ॥ १३
यत्त्वयोक्तं नरव्याघ्र मत्समक्षं महाद्युते ।
कर्तुमर्हसि कल्याण तदृतं पार्थिवर्षभ ॥ १४
यथोक्तं विहगैर्हंसैः समीपे तव भूमिप ।
मत्सकाशे च तैरुक्तं तदवेक्षितुमर्हसि ॥ १५
चत्वार एकतो वेदाः साङ्गोपाङ्गाः सविस्तराः ।
स्वधीता मानवश्रेष्ठ सत्यमेकं किलैकतः ॥ १६
तस्मादर्हसि शत्रुघ्न सत्यं कर्तुं नरेश्वर ।
उक्तवानसि यद्वीर मत्सकाशे पुरा वचः ॥ १७
हा वीर ननु नामाहमिष्टा किल तवानघ ।
अस्यामटव्यां घोरायां किं मां न प्रतिभाषसे ॥ १८
भर्त्सयत्येष मां रौद्रो व्यात्तास्यो दारुणाकृतिः ।
अरण्यराट् क्षुधाविष्टः किं मां न त्रातुमर्हसि ॥ १९
न मे त्वदन्या सुभगे प्रिया इत्यब्रवीस्तदा ।
तामृतां कुरु कल्याण पुरोक्तां भारतीं नृप ॥ २०
उन्मत्तां विलपन्तीं मां भार्यामिष्टां नराधिप ।
ईप्सितामीप्सितो नाथ किं मां न प्रतिभाषसे ॥ २१
कृशां दीनां विवर्णां च मलिनां वसुधाधिप ।
वस्त्रार्धप्रावृतामेकां विलपन्तीमनाथवत् ॥ २२
यूथभ्रष्टामिवैकां मां हरिणीं पृथुलोचन ।
न मानयसि मानार्ह रुदतीमरिकर्शन ॥ २३

---

$D_3$ गवो यासि, $M_1$ गतोसीति — $^d$) $K_2$ Dn $D_6$ विसृज्य (for त्यक्त्वा मा) K (except $K_1$) $B_{1.4}$ D (except $D_{1.4.6}$) $T_1$ विजने (for निर्जने)

**13** $^b$) $Ś_1$ वीरदक्षिणै, $K_{1.3.4}$ Dn $D_{1-3.5}$ $G_4$ भूरि°, $K_3$ $B_{1.3}$ $D_{4.6}$ चाप्त, T $G_{2.3}$ $M_2$ स्वाप्त — $^c$) $G_2$ किमिष्ट्वा त्व नर° — $D_5$ om (hapl) $13^d$–$14^a$

**14** $D_5$ om $14^a$ (cf v l 13) — $^a$) $K_3$ B ($B_1$ marg) Dc Dn $D_{4.6}$ नरश्रेष्ठ, $D_{2.3}$ महाराज — $^b$) $K_1$ मत्समीपे, $T_2$ G ($G_1$ missing) वने स्वस्मिन् $T_1$ महावने — $^c$) $Ś_1$ $K_{3.4}$ $B_1$ Dn $D_{2.3.5}$ स्मर्तुम् (for कर्तुम्) — $^d$) $K_3$ $B_3$ Dn $D_5$ वचन, $T_1$ तत्सर्वं, $M_2$ तत्सत्य $T_1$ पार्थिवोत्तम, $T_2$ G ($G_1$ missing) पुरुषर्षभ — After 14, $B_4$ repeats 258*

**15** $^a$) $K_3$ B Dc Dn $D_{4.6}$ यथोक्त; $D_5$ यथोक्तैर् $K_4$ भूप (for हंसै) $D_2$ यथोक्त च विहगैश्च — $^b$) $D_6$ ममापि (for समीपे) $K_{1.3}$ $B_3$ पार्थिव, $D_2$ नैषध (for भूमिप) — $^c$) $K_3$ मत्समीपे $K_2$ Dn $D_6$ मत्समक्ष यदुक्त च — $^d$) $K_1$ तत्समीक्षितु

**16** $^a$) $D_1$ ह्येकतो (for ए) | B Dc $D_{4.6}$ $T_1$ एकतश्चतु ($B_3$ श्चा)रो वेदा (cf 1 1 $208^a$ and v l) — $^c$) $Ś_1$ $K_1$ $B_{1.4}$ $D_3$ अधीता°, $T_1$ स्वाधीतास्, $G_2$ स्वधीत $Ś_1$ K Dn $D_{1.5}$ मनुजव्याघ्र; $D_{2.3}$ पुरुषव्याघ्र, $T_1$ ते नरश्रेष्ठ — After 16 $B_4$ ins

259* अश्वमेधसहस्र च सत्य च तुलया धृतम् ।
अश्वमेधसहस्रात्तु सत्यमेवातिरिच्यते ।

[=(var) 1 69 22 C 12 6002 C 13 $3651^{cd}$–$3652^{ab}$, etc]

**17** $K_3$ om $17^{ab}$ — $^a$) $Ś_1$ $K_{1.4}$ $D_{1-3}$ राजेन्द्र (for शत्रुघ्न)

**18** $^a$) $M_1$ नाथ (for वीर) $K_{2.4}$ $B_3$ Dn $D_{2.5}$ $M_2$ नल, $B_{1.4}$ Dc $D_{4.6}$ तत्र (for ननु) $D_1$ हा वीर नरनाथाह, $D_3$ हा वीर जीवितात्काम — $^b$) $Dn_1$ $n_3$ $D_5$ नष्टा (for इष्टा) $K_1$ $T_2$ $G_{3.4}$ transp किल and तव — $^d$) B (except $B_1$) Dc $D_{4.6}$ कस्मान्न (for किं मा न) $K_3$ $T_1$ $G_4$ $M_1$ मा (for मां)

**19** $^a$) $K_3$ Dn $D_{3.5}$ भक्षयति (!), B Dc $D_{4.6}$ कर्ष° (for भर्त्स°) Dc [ए]त्र, $D_6$ [अ]घ (for [ए]ष) $Ś_1$ $K_{1.4}$ $D_{1-3}$ दुष्टो, $K_3$ व्याधो (for रौद्रो) $G_4$ भर्त्सयत्यतिरौद्रोय — $^d$) $D_3$ प्रतिभाषसे (for त्रातुमर्हसि), cf $18^d$

**20** $^a$) N काचिद्धि; $G_2$ सुभगा; $M_1$ काचिद्दे — $^b$) $Ś_1$ $K_{1.3.4}$ B Dc $D_{1.4.6}$ प्रियेत्यसकृदब्रवी° ($K_{3.4}$ Dc $D_1$ °ब्रवीत्), $K_2$ Dn $D_{2.3.5}$ प्रियास्तीत्यब्रवी सदा ($D_2$ °त्यसकृद्वदन्, $D_3$ °त्यसकृद्वदन्), $T_2$ $G_3$ प्रिया इत्यब्रवीस्सदा — $^d$) $D_2$ दारुणा नृप; $G_2$ (by transp) नृप भारतीं $K_2$ $D_5$ मम, $K_3$ इव, $T_1$ नल (for नृप)

**21** $^a$) $T_1$ उन्मत्तवद्विलपतीं — $Ś_1$ $K_1$ om $21^c$–$22^b$ — $^c$) $K_3$ Dn $D_5$ [ऽ]सि त्व (for नाथ) — $^d$) = $18^d$, $24^d$ $D_4$ $G_4$ $M_1$ मा (for मां) $T_1$ M प्रतिनंदसे

**22** $Ś_1$ $K_1$ om $22^{ab}$ (cf v l 21) — $^a$) T $G_3$ $M_2$ मा (for च) — $^c$) Dc सवृतामेका

**23** $^b$) $Ś_1$ $K_{1.3}$ हरिणेक्षण; $K_4$ $D_{1.5}$ हरिणेक्षणा, $D_{2.3}$ हरिणेक्षण; $T_1$ $G_2$ पृथुलोचना — $^c$) $K_2$ Dn $D_6$ मामार्यं; $T_1$ मे नाथ, $G_3$ मानार्हां $Ś_1$ $K_1$ नाश्वासयसि कस्मात्त्व, $K_4$ $D_{1-3}$ न मां नयसि कस्मात्त्व — $^d$) K (except $K_1$) Dn $D_{2.3.6}$ $T_2$ $G_3$ रुदतीम् Some N MSS कर्षण

**24** $^b$) $D_6$ अहमै° (for मामिहै°) $Dc_1$ एकाकिनी $B_1$

महाराज महारण्ये मामिहैकाकिनीं सतीम् ।
आभाषमाणां स्वां पत्नीं किं मां न प्रतिभाषसे ॥ २४
कुलशीलोपसंपन्नं चारुसर्वाङ्गशोभनम् ।
नाद्य त्वामनुपश्यामि गिरावस्मिन्नरोत्तम ।
वने चास्मिन्महाघोरे सिंहव्याघ्रनिषेविते ॥ २५
शयानमुपविष्टं वा स्थितं वा निषधाधिप ।
प्रस्थितं वा नरश्रेष्ठ मम शोकविवर्धन ॥ २६
कं नु पृच्छामि दुःखार्ता त्वदर्थे शोककर्शिता ।
कच्चिद्दृष्टस्त्वयारण्ये संगत्येह नलो नृपः ॥ २७
को नु मे कथयेदद्य वनेऽस्मिन्विष्ठितं नलम् ।
अभिरूपं महात्मानं परव्यूहविनाशनम् ॥ २८
यमन्वेषसि राजानं नलं पद्मनिभेक्षणम् ।
अयं स इति कस्याद्य श्रोष्यामि मधुरां गिरम् ॥ २९
अरण्यराडयं श्रीमांश्चतुर्दंष्ट्रो महाहनुः ।
शार्दूलोऽभिमुखः प्रैति पृच्छाम्येनमशङ्किता ॥ ३०
भवान्मृगाणामधिपस्त्वमस्मिन्कानने प्रभुः ।
विदर्भराजतनयां दमयन्तीति विद्धि माम् ॥ ३१
निषधाधिपतेर्भार्यां नलस्यामित्रघातिनः ।
पतिमन्वेषतीमेकां कृपणां शोककर्शिताम् ।
आश्वासय मृगेन्द्रेह यदि दृष्टस्त्वया नलः ॥ ३२
अथ वारण्यनृपते नलं यदि न शंससि ।
मामदस्व मृगश्रेष्ठ विशोकां कुरु दुःखिताम् ॥ ३३

---

सती Ś1 K B1 Dn D1–5 ह्य(K2 3 B1 Dn D5 अ)हमेका॰किनी सती — $^{c}$) Ś1 K B3 Dn D1–3 5 दमयत्यभिभाषे स्वा (Ś1 त्वा), B1 2 4 Dc D4 6 T1 स्व(B1 स्वां, B2 स, T1 स्वत्)पत्नीमभिभाषतीं — $^{d}$) = $18^{d}$, $21^{d}$ Dc1 G2 M मा (for मां)

**25** M1 om $25^{ab}$ — $^{a}$) K2 B Dc Dn D2 4–6 ॰पसपन्न (Dn1 ॰न्ना), K3 D3 ॰पपन्न च, T2 G (G1 missing) M2 ॰पसपन्ना — $^{b}$) B D4 ॰दर्शन, Dc Dn2 D2 3 5 6 ॰शोभन, Dn1 शोभना; T2 G (G1 missing) M2 ॰शोभना — After $25^{ab}$, T2 G2–4 M2 ins

260* अनुव्रता महाराज किं मा न प्रतिभाषसे ।
[ Posterior half = $18^{d}$, $21^{d}$, $24^{d}$ ]

— $^{c}$) D1 कदा (for नाद्य) K2 त्वा (for त्वा) K2 Dn D5 प्रति॰ (for अनु) — $^{d}$) T2 G3 4 अद्य (for अस्मिन्) — $^{e}$) Ś1 K1 वनेष्वस्मिन्

**26** $^{a}$) Ś1 D2 च (for वा) — $^{b}$) D2 3 मनुजाधिप, T1 G3 4 वसुधा॰ — $^{c}$) B Dc D4 6 उपस्थित, D2 प्रस्थितो वा B3 5 Dc D4 6 नरव्याघ्र, T2 (by corr ) G (G1 missing) M नृपश्रेष्ठ — $^{d}$) K2 Dn3 D5 ॰विवर्धन, D1 ॰विवर्धन॰, S (G1 missing) ॰निबर्हण (T1 ॰विनाशन)

**27** $^{a}$) Ś1 K3 4 Dc2 D1 3 S (G1 missing) किं (for कं) Ś1 K1 पश्यामि (for पृच्छामि) S1 B1 Dc D6 शोकार्ता — $^{b}$) Ś1 B D6 त्वदर्थं, K4 त्वत्कृते Some MSS कर्षिता, K1 ॰पीडिता — $^{d}$) T2 G3 4 M [इ]ति (for [इ]ह)

**28** $^{a}$) B4 मा (for मे) K1 को नु मे कथये**, K2 Dn1 n2 D5 को नु मे वाथ प्रष्टव्य , Dn3 को नु मे वा* कथयेत् — $^{b}$) K2 Dn D5 प्रस्थित, K3 4 B D1–3 धिष्ठित (for विष्ठित) Ś1 बल, B1 4 Dc D4 6 S (except M1) नृप (for नलम्) — $^{c}$) T1 महाकुलं; T2 G (G1 missing) अनुरूप (for अभि॰) — $^{d}$) Dc D4 6 Cnp परव्यसननाशन

**29** $^{a}$) Ś1 K1 यमन्वेषि च — $^{b}$) Ś1 K3 4 D1–3 बाल , K2 D5 महा , T1 M2 बाले (for नल) — $^{c}$) T1 इति च (for स इति) — $^{d}$) G2 मधुरा गिर॰

**30** $^{b}$) K2 पत्रश्रेष्ठो, D1 चतुर्दंतो — $^{c}$) K2 D5 ह्येति, B Dc Dn D4 6 [अ]भ्येति, D2 3 याति (for प्रैति) K4 शार्दूलो मामभिमुख — $^{d}$) Ś1 B4 प्रेक्षाम्येनम्, K1 प्रक्षा॰, K2 Dn D5 T2 (before corr ) व्रजा॰, K3 B2 3 Dc D2 6 प्रक्ष्या॰, K4 प्रख्या॰, D1 3 4 M2 प्रेक्ष्या॰ — After 30, B4 ins

261* इति भ्रमन्ती ददर्श शार्दूलं च महाहनुम् ।
तमुवाच रुदन्ती तु त्वमेवात्र नराधिप॰ ।

**31** $^{c}$) T1 G2 M2 तनया — $^{d}$) K1 दमयर्ती तु (for ॰यन्तीति)

**32** $^{a}$) Dc D3 भार्या — $^{b}$) Ś1 ॰कर्षित॰, K1 3 B3 ॰कर्षिण , K2 D1 5 ॰कर्षण, K4 कर्शन, D2 3 कर्शिन॰ — $^{d}$) T1 दु॰ख॰, some MSS कर्षिता — $^{e}$) Dc मृगेंद्र स्त्व (for मृगेन्द्रेह) — D2 om (hapl ) $32^{f}$–$33^{c}$ — After 32, S (except M2 , G1 missing) ins

262* सिंहस्कन्धो महाबाहु पद्मपत्रनिभेक्षण॰ ।

**33** D2 om $33^{abc}$ (cf v l 32) — $^{a}$) Ś1 K1 अथारण्यस्य नृपते, K2 Dn D5 अथ वा त्व वनपते — $^{b}$) K1 शससे, D5 दृष्टवान्; S (G1 missing) पश्यसि — $^{c}$) Ś1 खादस्व, K Dn D1 3 5 खादय; B3 वदस्व , G2 अदस्त्व॰, G4

श्रुत्वारण्ये विलपितं ममैष मृगराट् स्वयम् ।
यात्येतां मृष्टसलिलामापगां सागरगमाम् ॥ ३४
इमं शिलोच्चयं पुण्यं शृङ्गैर्बहुभिरुच्छ्रितैः ।
विराजद्भिर्दिवस्पृग्भिर्नैकवर्णैर्मनोरमैः ॥ ३५
नानाधातुसमाकीर्णं विविधोपलभूषितम् ।
अस्यारण्यस्य महतः केतुभूतमिवोच्छ्रितम् ॥ ३६
सिंहशार्दूलमातङ्गवराहर्क्षमृगायुतम् ।
पतत्रिभिर्बहुविधैः समन्तादनुनादितम् ॥ ३७
किंशुकाशोकबकुलपुंनागैरुपशोभितम् ।
सरिद्भिः सविहंगाभिः शिखरैश्चोपशोभितम् ।
गिरिराजमिमं तावत्पृच्छामि नृपतिं प्रति ॥ ३८
भगवन्नचलश्रेष्ठ दिव्यदर्शन विश्रुत ।
शरण्य बहुकल्याण नमस्तेऽस्तु महीधर ॥ ३९
प्रणमे त्वाभिगम्याहं राजपुत्री निबोध माम् ।
राज्ञः स्नुषां राजभार्यां दमयन्तीति विश्रुताम् ॥ ४०
राजा विदर्भाधिपतिः पिता मम महारथः ।
भीमो नाम क्षितिपतिश्चातुर्वर्ण्यस्य रक्षिता ॥ ४१
राजसूयाश्वमेधानां क्रतूनां दक्षिणावताम् ।
आहर्ता पार्थिवश्रेष्ठः पृथुचार्वञ्चितेक्षणः ॥ ४२
ब्रह्मण्यः साधुवृत्तश्च सत्यवागनसूयकः ।

---

आदस्व, M1 अदस्व Ś1 K (except K2) D1 3 मृगेंद्राद्य, B2 नृपश्रेष्ठ T1 M2 मा भक्षयित्वा शार्दूल — $^{d}$) K2 Dn D5 दु खादस्माद्विमोचय

**34** $^{a}$) K3 [ऽ]पि त त्वाद्य, T1 विलपतीं (for विलपित) — $^{b}$) Dc ममैव, T1 मामेका, M2 ममैषा K2 Dn D5 न मामाश्वासयत्यय — $^{c}$) K2 Dn D5 यामी(Dn2 मि)मा; B2 (m as in text) D1 याम्येता, Dc यद्येता, T2 G (G1 missing) यात्येष Ś1 K Dn D1–3 5 स्वादु (for मृष्ट°) — $^{d}$) K4 अपेता, D5 अपारा (for आपगा) B1 सागरा गना, T2 G (G1 missing) सागरोपमा

**35** G1 resumes from 35$^{cd}$ — $^{a}$) T2 G (G1 missing) पृच्छे (for पुण्य) — $^{b}$) K1 T1 M1 उच्छ्रित — $^{c}$) Ś1 K1 3 विजयद्भिर्, T2 G (G1 missing) विराजित (for जद्भिर्) K1 D3 4 S (G1 missing) दिविस्पृग्भिर्, K2 Dn D5 इवानेकैर्, K4 नैकवर्णै, B2 मुनियुतैर् (for दिव ) — $^{d}$) Ś1 एकवर्णैर्, K4 शोभनैश्च; B2 दिवस्पृग्भिर् (for नैक ) B Dc D4 6 T1 G1 M2 मनोहरै° D3 नैकवर्णमनोपम

**36** $^{b}$) Ś1 K1 3 विविधद्रुमभूषित, B1 विविधोपलसे वित, B3 Dc D1 4 T1 G2 शोभित — T1 om (hapl ) 36$^{c}$–38$^{b}$ — $^{d}$) Ś1 K1–3 Dn D5 इवोत्थित; B Dc D1 3 T2 M2 इव स्थित, D4 6 अवस्थित (for इवोच्छ्रितम्)

**37** T1 om 37 (cf v l 36) — $^{ab}$) Cf 2$^{ab}$ K4 मृगान्वित, D1–3 मृगैर्युत, G1 °समाकुल (for °मृगायुतम्) Ś1 K1 3 सिंहमातगशार्दूलवराहर्क्षगणायुत (K3 मृगायुत); K2 सिंहशार्दूलमातगवराहर्क्षमृगातक — $^{c}$) K3 पृभिर्मृगैर्बहु

**38** T1 om 38$^{ab}$ (cf. v l 36) — $^{ab}$) Ś1 K1 विशो काशोक , B Dc D4 किंशुकाशोकसरलै (B2 वनै°) पुना गैर्, D1–3 °वकुलै° पुनागैर् K4 अभि (for उप ) — After 38$^{ab}$, K2 B (except B1) Dc Dn D4 6 ins

263* कर्णिकारधवप्लक्षै सुपुष्पैरुपशोभितम् ।

— K1 4 om 38$^{cd}$ — $^{d}$) B1 3 M1 शिखिभि (for शिखरै ) S1 B2 Dc D4 om च S1 उपशोभितै , K2 Dn D5 6 च समाकुल, T2 G3 4 M1 च विराजित, G1 चापि शोभित, G2 च विनादित, M2 चाभिशोभित — After 38$^{cd}$, T2 G2–4 M1 ins

264* पृथिव्या रुचिराकार चूडामणिमिव स्थितम् ।

— $^{e}$) Ś1 अह, B2 अमु; D3 इद (for इम) — $^{f}$) Ś1 प्रेक्षा मि, K1 4 B Dc D4 T1 G4 प्र(B1 प्रे)क्ष्यामि, K3 वक्ष्यामि K4 नल, B2 D1–3 T1 G1 2 M पतिं, G4 प्रिय (for प्रति) K4 (by corr ) प्रवक्ष्यामि पतिं नल

**39** $^{b}$) K4 (marg sec m as in text) दिग्विदिश (for दिव्यदर्शन) Some MSS विश्रुत — $^{c}$) T2 G (except G1) नमस्ते (for शरण्य) — After 39, K4 reads 41$^{cd}$

**40** $^{a}$) K2 4 D4 त्वभिगम्याह; B2–4 Dc D5 त्वाभि गम्येह (D5 °ह), D1–3 त्वामुपागम्य, T2 G2–4 त्वामह मैमीं B1 प्रणमेह्यभिगम्याह, G1 प्रणमाम्यभिगम्याह — M1 om 40$^{cd}$ — $^{c}$) Ś1 K (except K2) D1–3 T1 M2 राजस्नुषा B2 राजभार्या राजवधू — $^{d}$) K1 4 विश्रुता

**41** $^{a}$) K2 Dn D5 विदर्भराजाधिपति — $^{b}$) K4 मही धर (for महा ) — D1–3 read 43$^{cd}$ after 41$^{ab}$, K4 reads 41$^{cd}$ after 39 — $^{d}$) K1 3 D2 3 T1 G2 4 चातु° र्वर्णस्य

**42** $^{a}$) B (except B2) M वाजपेया° — $^{b}$) Ś1 K1 यज्ञाना (for क्रतू ) — $^{c}$) Some MSS श्रेष्ठ — $^{d}$) =1 58 50$^{d}$ D1–3 पृथुवक्षा° शुभेक्षण

**43** $^{a}$) K1 ब्राह्मण्य°, K4 सुरूप° — D1–3 read 43$^{cd}$ after 41$^{ab}$ — $^{c}$) Ś1 K Dn D1–3 5 6 वीर्यसपन्न°; Dc

शीलवान्सुसमाचारः पृथुश्रीर्धर्मविच्छुचिः ॥ ४३
सम्यग्गोप्ता विदर्भाणां निर्जितारिगणः प्रभुः ।
तस्य मां विद्धि तनयां भगवंस्त्वामुपस्थिताम् ॥ ४४
निषधेषु महाशैल श्वशुरो मे नृपोत्तमः ।
सुगृहीतनामा विख्यातो वीरसेन इति स्म ह ॥ ४५
तस्य राज्ञः सुतो वीरः श्रीमान्सत्यपराक्रमः ।
क्रमप्राप्तं पितुः स्वं यो राज्यं समनुशास्ति ह ॥ ४६
नलो नामारिदमनः पुण्यश्लोक इति श्रुतः ।
ब्रह्मण्यो वेदविद्वाग्मी पुण्यकृत्सोमपोऽग्निचित् ॥ ४७
यष्टा दाता च योद्धा च सम्यक्चैव प्रशासिता ।
तस्य मामचलश्रेष्ठ विद्धि भार्यामिहागताम् ॥ ४८
त्यक्तश्रियं भर्तृहीनामनाथां व्यसनान्विताम् ।
अन्वेषमाणां भर्तारं तं वै नरवरोत्तमम् ॥ ४९
खमुल्लिखद्भिरेतैर्हि त्वया शृङ्गशतैर्नृपः ।
कच्चिद्दृष्टोऽचलश्रेष्ठ वनेऽस्मिन्दारुणे नलः ॥ ५०
गजेन्द्रविक्रमो धीमान्दीर्घबाहुरमर्षणः ।
विक्रान्तः सत्यवाग्धीरो भर्ता मम महायशाः ।
निषधानामधिपतिः कच्चिद्दृष्टस्त्वया नलः ॥ ५१
किं मां विलपतीमेकां पर्वतश्रेष्ठ दुःखिताम् ।
गिरा नाश्वासयस्यद्य स्वां सुतामिव दुःखिताम् ॥ ५२

---

D4 सुसदाचार , T G सत्यवाञ्च्छूर॰

**44** $^{b}$) T G2–4 निहतारिगण (T1 G4 ॰ण) — $^{d}$) B1 4 M भगवतसुपस्थिता, B2 3 Dc D4 भवत समुपस्थिता (B3 ॰पागता), T G भगवन्समुप

**45** $^{a}$) Ś1 K D1–3 महाराज, B1 महासेन॰, Dn D5 6 महाराज॰, T1 G1 M2 महीपाल॰ — $^{b}$) K3 B3 Dn D5 6 मे नरोत्तम , D4 नृपसत्तम — $^{c}$) Hypermetric ! Ś1 K1 3 4 B (except B3) Dn D6 T G (all om सु-) गृहीत-नामा (K3 T1 ॰म ), K2 D5 गृहीतमानो, D1 (? gloss) सुप्रसिद्धनामा D2 विर्मेद्र, T2 G (except G1) विद्वद्भिर् D3 (corrupt) सुगृहीत न मे ख्याता — $^{d}$) B3 4 T2 G3 4 श्रुत , M1 स्मृत (for स्म ह)

**46** $^{a}$) D5 महा- (for सुतो) — $^{c}$) B Dc D4 इह (B1 इद), S (except M1) तु यो (for पितु॰) K1 स्वस्य, K3 चाय, B M1 स्वतु, D5 स्व वै, T G M2 राज्य (for स्व यो) — $^{d}$) S1 K3 राज्य स्व(K3 स)मनुशासति, K1 B1 3 Dc D4 M1 यो राज्यमनुशास्ति ह (K1 M1 वै), D1–3 राज्य स्वमनुशास्ति च, T G M2 पितु॰ स्वमुप(T1 M2 समुप॰, G1 समनु)-शासति

**47** $^{a}$) K2 Dn D5 6 नलो नामारिहा श्याम॰ (Dn3 श्रीमान्) — $^{b}$) D1 3 प्रकाशित॰ (for इति श्रुत ) Ś1 K1 4 स ह, K3 Dc D2 4 T2 G3 M1 स्मृत॰ (for श्रुत॰) — $^{c}$) M1 पुण्यश्लोक इति ख्यात॰ (see below) — $^{d}$) G4 ब्रह्मण्य॰ (for पुण्यकृत्) B Dc Dn D4–6 [ऽ]ग्निमान्, D1 [ऽ]ग्निकृत् M1 ब्रह्मण्यो वेदवित्तम (cf 265*)

**48** $^{b}$) G2 त्वेव, M2 एव (for चैव) — After 48$^{ab}$, T2 G3 4 ins

265* पुण्यश्लोक इति ख्यातो ब्रह्मण्यो वेदवित्तम ।
[Cf v l 47 ]

— $^{c}$) K2 Dn D6 6 अबला श्रेष्ठा (for अचल॰) — M2 om (hapl ) 48$^{d}$–50$^{c}$ — $^{d}$) K1 उपागत॰ (for इहागताम्)

**49** M2 om 49 (cf v l 48) — $^{a}$) B2 D5 त्यक्त प्रिया, T G3 M1 त्यक्ता श्रिया G2 4 इह प्राप्ताम् (for भर्तृ॰) — $^{b}$) B1 ॰र्दिता, G2 4 ॰ह्रुता (for ॰न्विताम्) — $^{d}$) T2 G3 वने, G2 4 नल (for त वै) S1 K B4 D (except Dc D4) त्व मा पर्वतसत्तम

**50** M2 om 50$^{abc}$ (cf v l 48) — $^{a}$) Ś1 K1 3 खमुत्पतद्भिर्, K2 B1 3 Dc2 Dn D5 6 समुल्लिखद्भिर्, K4 D1–3 समुत्पतद्भिर् — $^{b}$) T2 G3 गिरे (for नृप ) — $^{c}$) Ś1 K1 नगश्रेष्ठ, K3 D1 नरश्रेष्ठ॰; G1 नृपश्रेष्ठ. — $^{d}$) K2 Dn D6 6 वनेस्मिन्वा नलो नृप॰

**51** $^{a}$) B1 G2 महेंद्र॰, B3 D4 स चेंद्र॰, Dc corrupt, T2 G2 3 मृगेंद्र॰ — $^{b}$) T1 G1 M2 अरिंदम (for अमर्षण॰) — $^{c}$) D1 3 विद्वांश्च (for विक्रान्त ) K2 Dn D1 5 6 सत्त्ववान्, B2 T2 G3 सत्त्ववाग्, T1 M2 सत्यवान् K (except K1) B1 Dc Dn D4–6 T2 G1 3 वीरो, D1–3 सौम्यो — $^{d}$) K1 T2 G (except G1) transp भर्ता and मम — G1 om 51$^{e}$–53$^{b}$ — $^{f}$) B4 त्वयाचल, Dc2 T2 G3 ॰नघ॰; G2 4 ॰नघ — D1 3 ins after 51 D2 subst for 51$^{ef}$

266* यदि दृष्ट॰ क्वचित्ते स नलो राजा मम प्रिय॰ ।

T G2–4 M ins after 51

267* महीधरसमो धैर्ये महीधर महीपति॰ ।,

— a line curiously ignored altogether in P P S Sastri's ed of the Southern Recension !

**52** G1 om 52 (cf v l 51) — $^{a}$) S (except M2, G1 om ) विलपतीं किमेका मा — $^{b}$) N (except Dc D4) विह्वला (for दु॰खिताम्) — $^{c}$) T2 G3 भीतामाश्वासयस्वाद्य

वीर विक्रान्त धर्मज्ञ सत्यसंध महीपते ।
यद्यस्यस्मिन्वने राजन्दर्शयात्मानमात्मना ॥ ५३
कदा नु स्निग्धगम्भीरां जीमूतस्वनसंनिभाम् ।
श्रोष्यामि नैषधस्याहं वाचंताममृतोपमाम् ॥ ५४
वैदर्भीत्येव कथितां शुभां राज्ञो महात्मनः ।
आम्नायसारिणीमृद्धां मम शोकनिबर्हिणीम् ॥ ५५
इति सा तं गिरिश्रेष्ठमुक्त्वा पार्थिवनन्दिनी ।
दमयन्ती ततो भूयो जगाम दिशमुत्तराम् ॥ ५६
सा गत्वा त्रीनहोरात्रान्ददर्श परमाङ्गना ।
तापसारण्यमतुलं दिव्यकाननदर्शनम् ॥ ५७
वसिष्ठभृग्वत्रिसमैस्तापसैरुपशोभितम् ।
नियतैः संयताहारैर्दमशौचसमन्वितैः ॥ ५८
अब्भक्षैर्वायुभक्षैश्च पत्राहारैस्तथैव च ।
जितेन्द्रियैर्महाभागैः स्वर्गमार्गदिदृक्षुभिः ॥ ५९
वल्कलाजिनसंवीतैर्मुनिभिः संयतेन्द्रियैः ।
तापसाध्युषितं रम्यं ददर्शाश्रममण्डलम् ॥ ६०
सा दृष्ट्वाश्रमपदं नानामृगनिषेवितम् ।
शाखामृगगणैश्चैव तापसैश्च समन्वितम् ॥ ६१
सुभ्रूः सुकेशी सुश्रोणी सुकुचा सुद्विजानना ।
वर्चस्विनी सुप्रतिष्ठा स्वञ्चितोद्यतगामिनी ॥ ६२
सा विवेशाश्रमपदं वीरसेनसुतप्रिया ।
योषिद्रत्नं महाभागा दमयन्ती मनस्विनी ॥ ६३

— d) K4 S (G1 om) स्व (for स्वा) T G3 M2 मानद (for दुःखिताम्) D1 सुतामिव सुदु°

53 G1 om 53ab (cf v l 51) — b) K3 T1 धर्म (for सध) — c) K1 B2 Dc Dn2 D1-4 अस्मिन्घोरे, B3 यद्यप्यस्मिन्, T2 G3 यद्यस्त्वस्मिन् T2 G3 4 गिरौ (for वने) Ś1 अस्मिन्घोरवटे राजन्, K4 वने घोरे महाराजन्, T1 G2 यद्यस्मिन्विपिने राजन्, M2 यद्यप्यस्मिन्वनोद्देशे

54 a) K3 4 B1 4 Dn D5 6 कदा सु, B2 D1 3 कदा चित् — b) K3 °स्वनसंभवा, B °स्वननिस्वनां, Dc D4 °घननिःस्वना

55 a) T2 G (except G1) M1 वैदर्म्येहीति (for र्भीत्येव) K2 Dn D5 6 विस्पष्टा (for कथिता) — b) D1 3 श्रुता, T1 अस्य, G1 तस्य (for शुभा) T2 G (except G1) M1 राज्ञा महात्मना — D1 om 55cd — c) S आत्माभिधायिनी (G1 याहिनी, M2 सारिणी) मृद्धा — d) Ś1 K Dn D2 3 5 6 विनाशि(K4 D3 श)नीं, B4 Dc D4 °निबर्हणीं — After 55, N (except D1) ins

268* भीतामाश्वासय च मा नृपते धर्मवत्सल ।

[K3 B1 Dn D5 6 श्वासयत मा K3 B1 वत्सला ]

56 a) Ś1 K (except K2) B2 नृप (for गिरि)

57 d) Ś1 K Dn D1-3 5 6 °शोभित, Dc1 D4 T2 (before corr) G1 दर्शित; T2 (after corr) G3 °सनिभ

58 Ś1 K3 om (hapl) 58ab — a) Some MSS वदिष्ट K2 सघैस्, G4 °सदृशैस् (hypermetric) M2 °मुख्यैस्

59 a) D3 अशुभक्षैर्वायुभक्षै° — b) K1 D4 पर्णाहारै

— c) K3 महाबोधै°, T1 राज (for भागै) — d) T2 G3 मार्गं

60 b) Dc2 D1 3 सजितेंद्रियै° — c) Dc पुण्य (for रम्य) — d) Dc D2 ददर्श मुनिमडल

61 a) G1 सा च दृष्ट्वाश्रम° — b) B2 मृगचारु, Dc °चारुमृग° — G1 reads 61cd after 62, M2, after 63 — d) T2 G (except G1) [उ]पशोभित; M समाश्वसत् (for समन्वित) — Ś1 K Dn D1-3 5 6 subst for 61 T1 (om line 1) ins after 63

269* नानामृगगणैर्जुष्टं शाखामृगगणैर्युतम् ।
तापसैः समुपेतं च सा दृष्ट्वैव समाश्वसत् ।

[(L 1) K1 2 Dn D5 6 °मृगगणायुत — (L 2) D2 3 सैः सयुत तच्च ]

— After 61, T2 G (except G1) ins

270* सा दृष्ट्वाश्रमपदं दमयन्ती समाश्वसत् ।

[Cf 61a and 269* (line 2)]

62 a) K3 सुकेशी चैव, K4 सधूमकेशी (for सुभ्रू सुकेशी) — b) K2 D6 शुचि शुद्धद्विजा°, K3 सुकुमारा शुभानना, T2 G2-4 सुकुचा सुभुजा, G1 सुकुमारी द्विजा° — c) K4 मनस्विनी, B Dc D4 स्व(B1 4 अ)चिष्मती (for वर्च°) — d) Ś1 D1 3 सु(Ś1m श्री)सितायतलोचना, K Dn D2 5 6 स्व(K3 अ)सितायतलोचना, T2 G2 3 स्वचितोद्धतगामिनी — After 62, G1 reads 61cd

63 G1 om 63 — d) Ś1 K1 2 4 Dn D1-3 5 T1 तप°, K3 यश (for मन) — After 63, M2 reads 61cd, while T1 ins line 2 of 269* On the other hand, T2 G2-4 ins after 63

साभिवाद्य तपोवृद्धान्विनयावनता स्थिता ।
स्वागतं त इति प्रोक्ता तैः सर्वैस्तापसैश्च सा ॥ ६४
पूजां चास्या यथान्यायं कृत्वा तत्र तपोधनाः ।
आस्यतामित्यथोचुस्ते ब्रूहि किं करवामहे ॥ ६५
तानुवाच वरारोहा कच्चिद्भगवतामिह ।
तपस्यग्निषु धर्मेषु मृगपक्षिषु चानघाः ।
कुशलं वो महाभागाः स्वधर्मचरणेषु च ॥ ६६
तैरुक्ता कुशलं भद्रे सर्वत्रेति यशस्विनी ।
ब्रूहि सर्वानवद्याङ्गि का त्वं किं च चिकीर्षसि ॥ ६७
दृष्ट्वैव ते परं रूपं द्युतिं च परमामिह ।
विस्मयो नः समुत्पन्नः समाश्वसिहि मा शुचः ॥ ६८

अस्यारण्यस्य महती देवता वा महीभृतः ।
अस्या नु नद्याः कल्याणि वद सत्यमनिन्दिते ॥ ६९
साब्रवीत्तानृषीन्नाहमरण्यस्यास्य देवता ।
न चाप्यस्य गिरेर्विप्रा न नद्या देवताप्यहम् ॥ ७०
मानुषीं मां विजानीत यूयं सर्वे तपोधनाः ।
विस्तरेणाभिधास्यामि तन्मे शृणुत सर्वशः ॥ ७१
विदर्भेषु महीपालो भीमो नाम महाद्युतिः ।
तस्य मां तनयां सर्वे जानीत द्विजसत्तमाः ॥ ७२
निषधाधिपतिर्धीमान्नलो नाम महायशाः ।
वीरः संग्रामजिद्विद्वान्मम भर्ता विशां पतिः ॥ ७३
देवताभ्यर्चनपरो द्विजातिजनवत्सलः ।

---

271* आश्वासिता तदा भैमी तापसै सह सगता ।,
— a line again ignored in P P S Sastri's ed of the Southern Recension ( cf 267* )

**64** [a]) T2 G (except G1) M1 अभिवाद्य (om सा) K1 3 T2 G (except G1) ततो वृद्धान् — [b]) K4 चिंतया वनसस्थिता — K3 om 64[c]–71[b] — [d]) K4 D2 T1 G1 3 तथा, D1 तदा, D3 स्थिता (for च सा) B Dc D4 6 तै सर्वैस्तापसोत्तमै — After 65, T1 M2 ins

272* पूजा चक्रे यथान्यायमृषीणा सा मनस्विनी ।
[ Cf 65[ab] and v l ]

**65** K3 om 65 (cf v l 64) — [ab]) T1 G1 M2 ततस्ते पूजिता विप्रा प्रयतेंद्रियमानसा — [c]) D3 अवोचस्ते, G2 4 अवोचुस्ते (for अथो°) — [d]) Ś1 K1 B2 D1 करवाम (Ś1 °णि) ते, B1 3 4 Dc D4 6 T G °म च (for °महे)

**66** K3 om 66 (cf v l 64) — [a]) B Dc D4 महाभागा (for वरा°) — [c]) B3 4 Dn2 n3 D4 6 G1 तपःस्वग्निषु T1 M धर्मे च (for धर्मेषु) — [d]) T1 G1 M2 सर्वेषु मृगपक्षिषु, T2 G2–4 नित्ययज्ञेषु चानघा — After 66[cd], S ins

273* अपि स्वाध्याययोगेषु धर्मदेहेषु वा पुन ।
[ T1 °योगेषु (for °देहेषु) T2 G3 4 M1 चाप्युत (for वा पुन ) ]

— [e]) S प्रियतपा (for महा°) — [f]) Ś1 K1 B3 4 Dc Dn2 n3 (by corr ) D1 6 स्वधर्मो°

**67** K3 om 67 (cf v l 64) Before 67, T2 G (except G1) M1 ins बृहदश्व — [a]) T1 G1 M2 तैश्चोक्त. Ś1 K1 सर्वे (for भद्रे) — [b]) S तपस्विभि, a few MSS यशस्विनि

**68** K3 om 68 (cf v l 64) — [d]) B3 D4 6 सा विश्वसिहि (for समा°) Some MSS शुच

**69** K3 om 69 (cf v l 64) — [ab]) Ś1 K3 4 B D देवी स्व (for महती) K1 देवी स्वसुड (sic) वास्य (for महती देवता वा) Ś1 B Dc Dn D3–6 उताहो (Ś1 D3 °त वा) स्य, K3 4 D2 सुता वास्य (for देवता वा ) M1 गिरे शुभे (for महीभृत ) — [c]) Ś1 नो; B Dc Dn D4 6 च, D2 3 हि (for नु) — [d]) Ś1 स्वार्थेम्, K1 B3 Dc Dn2 D4 6 का स्व, D2 स्वार्थम् (for सत्यम्) B3 Dc Dn2 D4 6 शुचिस्मिते (for अनिन्दिते)

**70** K3 om 70 (cf v l 64) — [b]) K1 T2 G3 4 transp अरण्यस्य and अस्य — Ś1 K3 om (hapl ) 70[cd] — [c]) K4 D3 चास्यापि, D1 चास्यास्य, D2 चैवास्य (for चाप्यस्य) — [d]) B3 4 [अ]स्मि, T2 G3 4 M1 हि (for [अ]पि) K1 4 Dn D2 3 5 नैव नद्याश्च (K4 D3 °स्तु) देवता, D1 नद्या नैवास्मि देवता

**71** K3 om 71[ab] (cf v l 64) — [a]) D2 3 विजानीध्व — [b]) G1 तपस्विन (for तपो°) — [d]) Ś1 K1 तत्त्वत, K3 सर्वत

**72** [b]) B3 नाम्ना भीमो (for भीमो नाम) K3 Dn D5 महीपति (for महा ) K4 भीमो भीमपराक्रम (epic tag!) — K3 om 72[c]–77[b]

**73** K3 om 73 (cf v l 72) — [c]) T2 G (except G1) M1 नैक (for वीर ) K4 नित्य (for विद्वान्) — [d]) K4 transp मम and भर्ता

**74** K3 om 74 (cf v l 72) — [a]) D1 देवानामर्चन

गोप्ता निषधवंशस्य महाभागो महाद्युतिः ॥ ७४
सत्यवाग्धर्मवित्प्राज्ञः सत्यसंधोऽरिमर्दनः ।
ब्रह्मण्यो दैवतपरः श्रीमान्परपुरंजयः ॥ ७५
नलो नाम नृपश्रेष्ठो देवराजसमद्युतिः ।
मम भर्ता विशालाक्षः पूर्णेन्दुवदनोऽरिहा ॥ ७६
आहर्ता क्रतुमुख्यानां वेदवेदाङ्गपारगः ।
सपत्नानां मृधे हन्ता रविसोमसमप्रभः ॥ ७७
स कैश्चिन्निकृतिप्रज्ञैरकल्याणैर्नराधमैः ।
आहूय पृथिवीपालः सत्यधर्मपरायणः ।
देवने कुशलैर्जिह्मैर्जितो राज्यं वसूनि च ॥ ७८
तस्य मामवगच्छ त्वं भार्यां राजर्षभस्य वै ।
दमयन्तीति विख्यातां भर्तृदर्शनलालसाम् ॥ ७९
सा वनानि गिरींश्चैव सरांसि सरितस्तथा ।
पल्वलानि च रम्याणि तथारण्यानि सर्वशः ॥ ८०
अन्वेषमाणा भर्तारं नलं रणविशारदम् ।
महात्मानं कृतास्त्रं च विचरामीह दुःखिता ॥ ८१
कच्चिद्भगवतां पुण्यं तपोवनमिदं नृपः ।
भवेत्प्राप्तो नलो नाम निषधानां जनाधिपः ॥ ८२
यत्कृतेऽहमिदं विप्राः प्रपन्ना भृशदारुणम् ।
वनं प्रतिभयं घोरं शार्दूलमृगसेवितम् ॥ ८३
यदि कैश्चिदहोरात्रैर्न द्रक्ष्यामि नलं नृपम् ।
आत्मानं श्रेयसा योक्ष्ये देहस्यास्य विमोचनात् ॥८४
को नु मे जीवितेनार्थस्तमृते पुरुषर्षभम् ।
कथं भविष्याम्यद्याहं भर्तृशोकाभिपीडिता ॥ ८५
एवं विलपतीमेकामरण्ये भीमनन्दिनीम् ।
दमयन्तीमथोचुस्ते तापसाः सत्यवादिनः ॥ ८६

---

पर , $M_2$ गुरुपादार्चनरत — $^b$) $K_4$ (before corr ) $B_3$ $D_3$ वल्लभ — $K_3$ om (hapl ) 74$^{cd}$ — $^d$) Ś$_1$ $K_1$ $_4$ Dn $D_{1-3}$ $_5$ महातेजा महाबल

**75** $K_2$ om 75 (cf v l 72) — $^a$) $K_1$ $B_2$ $_4$ Dn $D_5$ $T_1$ $G_1$ सत्यवान् B (except $B_4$) Dc $D_4$ $_6$ अस्त्र (for धर्म )

**76** $K_2$ om 76 (cf v l 72) $T_2$ $G_{2-4}$ om 76$^{ab}$ — $^a$) $Dc_2$ $D_6$ $M_1$ नर॰ (for नृप ) — $^c$) $K_4$ B (except $B_4$) Dc $D_1$ $_4$ $_6$ स मे (for मम)

**77** $K_2$ om 77$^{ab}$ (cf v l. 72) — $^c$) $B_1$ (? gloss) रणे (for मृधे) — $^d$) $B_1$ $_3$ Dc $D_1$ सोमसमद्युति॰, $B_2$ $D_4$ $_6$ सोमानलद्युति॰

**78** $^a$) $T_1$ $G_1$ $M_2$ धूर्तैर् (for कैश्चिन्) $B_4$ $D_3$ निकृत प्रज्ञै॰ — $^b$) Ś$_1$ $K_1$ $_3$ $_4$ $D_1$ नृपोत्तम , $B_1$ $_4$ $T_1$ नराधिप , $B_3$ M नराधिपै॰ $K_2$ Dn $D_5$ अनार्यैरकृतात्मभि॰ ; $D_2$ $_3$ वचयित्वा महायशा॰ ($D_3$ मना॰) — $^f$) $K_2$ Dn $D_5$ $G_4$ हृत , $T_2$ $G_3$ हृतो (for जितो) $K_1$ (? gloss) धनानि (for वसूनि ) — After 78, S ins

274* विवासितश्च नगराद्वनवासमुपेयिवान् ।

**79** $^b$) Ś$_1$ $G_1$ च , $K_1$ ह (for वै) — $^d$) $K_2$ Dn $D_5$ $M_2$ भर्तुर्दर्शनलालसा , B Dc $D_4$ $_6$ भर्तृव्यसनकर्षिता Cf Hopkins *Great Epic*, Parallel Phrases, No 165 (p 424)

**80** $K_1$ om 80$^{bc}$ — $^c$) $T_1$ पर्वताना च , $G_1$ तपोवनानि (for पल्वलानि च) S$_1$ $K_2$ $_4$ Dn $D_{1-3}$ $_5$ च सर्वाणि ; $K_3$ गिरींश्चैव , $B_2$ विचित्राणि , $M_1$ च पुण्यानि (for च रम्याणि)

**81** $^a$) Cf 49$^c$ $T_1$ $G_1$ $M_2$ अन्वेषती तु ($T_1$ स), $T_2$ $G_3$ $M_1$ अन्वेषती तु , $G_2$ $_4$ अन्वेषयती (for ॰माणा) $B_1$ $_3$ स वीरं (for भर्तारं) — $^b$) $G_1$ वीर (for रण ) — $^c$) $D_2$ वै (for च) $B_2$ Dc $D_4$ $_6$ धर्मात्मान कृतज्ञ च ($D_6$ कृतप्रज्ञ) — $^d$) $D_4$ $_5$ सु॰ (for [दु]ह) $T_1$ चरामीह सुदु॰खिता

**82** $^a$) $K_2$ Dn $D_5$ रम्य (for पुण्य) — $^b$) $T_1$ $G_1$ $_2$ $M_2$ महत् (for नृप॰) — $G_4$ om (hapl ) 82$^c$–84$^b$ — $^c$) $G_1$ transp भवेत् and प्राप्त — $^d$) S (except $M_2$, $G_4$ om ) नरा॰ (for जना॰)

**83** $G_4$ om 83 (cf v l 82) — $^a$) $T_2$ $G_2$ $_3$ $M_1$ तत्कृते॰ $K_4$ अहो (for इद) $K_2$ $_3$ B D (except $D_{1-3}$) $M_2$ ब्रह्मन्, $T_1$ दुर्ग, $G_1$ दु॰ख (for विप्रा॰) — $^b$) $K_1$ स प्राप्ता भृश॰ , $G_1$ प्राप्त नाम्भृश — $^c$) $B_1$ रौद्र (for घोर ) — $^d$) $D_5$ सिंहशार्दूल , $G_1$ शार्दूलवृक॰

**84** $G_4$ om 84$^{ab}$ (cf v l 82) — $^b$) B (except $B_3$) $D_4$ $_6$ पश्यामि (for द्रक्ष्या॰) — $^d$) Ś$_1$ K (except $K_2$) समापनात्, $D_2$ $_3$ S विमोक्षणात् — After 84, $K_4$ $D_1$ $_2$ ins

275* नारीणामधमा नारी या भर्तुः प्राणसक्षये ।
पश्चाज्जीवति निस्तेजा कलेव शशिनो दिवा ।

**85** $^a$) $B_2$ न (for को) B $Dn_3$ $D_4$ $_6$ हि (for नु) — $^b$) $K_3$ $G_2$ पुरुषोत्तम

**86** $^a$) Ś$_1$ K D (except $D_5$) $G_1$ तथा (for एव) — $^d$) Ś$_1$ K D (except $D_{2-4}$ $_6$) सत्यदर्शिन॰

निशाकाले स्मरंस्तस्याः श्लोकमेकं स्म गायति ॥ १४
स वै भ्रमन्महीं सर्वां क्वचिदासाद्य किंचन ।
वसत्यनर्हस्तद्दुःखं भूय एवानुसंस्मरन् ॥ १५
सा तु तं पुरुषं नारी कृच्छ्रेऽप्यनुगता वने ।
त्यक्ता तेनाल्पपुण्येन दुष्करं यदि जीवति ॥ १६
एका बालानभिज्ञा च मार्गाणामतथोचिता ।
क्षुत्पिपासापरीता च दुष्करं यदि जीवति ॥ १७
श्वापदाचरिते नित्यं वने महति दारुणे ।
त्यक्ता तेनाल्पपुण्येन मन्दप्रज्ञेन मारिष ॥ १८
इत्येवं नैषधो राजा दमयन्तीमनुस्मरन् ।
अज्ञातवासमवसद्राज्ञस्तस्य निवेशने ॥ १९

इति श्रीमहाभारते आरण्यकपर्वणि चतुःषष्टितमोऽध्यायः ॥ ६४ ॥

## ६५

बृहदश्व उवाच ।
हृतराज्ये नले भीमः सभार्ये प्रेष्यतां गते ।
द्विजान्प्रस्थापयामास नलदर्शनकाङ्क्षया ॥ १
संदिदेश च तान्भीमो वसु दत्त्वा च पुष्कलम् ।
मृगयध्वं नलं चैव दमयन्तीं च मे सुताम् ॥ २
अस्मिन्कर्मणि निष्पन्ने विज्ञाते निषधाधिपे ।
गवां सहस्रं दास्यामि यो वस्तावानयिष्यति ।
अग्रहारं च दास्यामि ग्रामं नगरसंमितम् ॥ ३

---

**15** $^{a}$) K2 3 Dn D5 वि- (for वै) M1 कृत्स्ना (for सर्वां) — $^{b}$) S नासाद्य (for आसाद्य) K4 वेतन (for किंचन) — $^{c}$) D2 दुःखं तु (for तद्दुःखं) — $^{d}$) T1 M2 अभि (for अनु-) D6 भूय एवेत्यनुसरन्
**16** K4 om (hapl) $16^{a}$–$19^{b}$ — $^{a}$) M1 च (for तु) — $^{b}$) D2 कृच्छ्रेष्वनु° — $^{c}$) = $18^{c}$ B3 D4 6 S (except T1 M2) °भाग्येन — $^{d}$) = $17^{d}$ D2 सुदुःखं (for दुष्करं)
**17** S1 K3 4 D4 om 17 (S1 K D4 hapl, for K4 cf v l 16) — $^{a}$) G1 एकात्मा न लभेत्ता च — $^{b}$) D3 दुःखानाम् (for मार्गाणाम्) B2 3 अयथोचिता, D1 एव शोचते G1 2 मार्गमाणा तथोचिता — $^{c}$) B D6 Dn D8 °परीतागी, G1 °परीता च — $^{d}$) = $16^{d}$ G1 स तु (for यदि)
**18** K4 M1 om 18 (for K4 cf v l 16), D6 om $18^{ab}$ — $^{c}$) = $16^{c}$ S1 K (K4 om) B D (except D1) °भाग्येन — $^{d}$) Ś1 मदभाग्येन, K1 मदपुण्येन, D3 ता तु शोचामि
**19** K4 om $19^{ab}$ (cf v.l 16) — $^{a}$) B2 D4 6 एष (for एव) — $^{c}$) K2 Dn D5 न्यवसत् (for अवसत्) — $^{d}$) D5 transp राज्ञ° and तस्य

Colophon Dn2 has a lacuna in place of it — *Major parvan* S1 K1 T G2–4 आरण्य — *Sub parvan* N (except Dn2) T1 G1 M1 (all om sub parvan name) mention only नलोपाख्यान — *Adhy name* D2 ऋतुपर्णनगरे नलनिवास — *Adhy no* (figures, words or both) Dn1 (*sup lin*) n3 67, D1 70, T G M2 (after corr) 64 (as in text), M1 65, M2 (before corr) 66 — *Śloka no* K2 20, Dn D1 *19*

### 65

**1** $^{b}$) K1 च वन, S [ऽ]दर्शन (M1 [ऽ]प्रख्यता) (for प्रेष्यता) — $^{c}$) D3 (marg *sec m*) सप्रेष° (for प्रस्थाप°) — $^{d}$) Ś1 K1 D6 °लालस
**2** $^{a}$) T2 G2 3 स (for च) — $^{b}$) K1 B2–4 D4 M2 सु, K4 D6 तु; D2 [अ]ति- (for च) M1 दत्त्वा च वसु पु° — $^{c}$) B D4 6 यूय (for चैव)
**3** $^{a}$) B1 T2 G3 तस्मिन् K2 B3 D (except D1–3) सपन्ने (for निष्पन्ने) — $^{b}$) D6 वसुधाधिपे — $^{c}$) T2 G3 सहसा वसु दास्यामि — K1 om (hapl) $3^{d}$–$4^{c}$, Ś1 D3 om (hapl) $3^{de}$ — $^{d}$) K2 D5 transp य and व S (except G1 M1) वा (for वस्) D1 यो वस्ता चानयिष्यति — $^{e}$) K2 B3 Dn D4 6 अग्रहाराश्च — $^{f}$) K3 ग्राम नगरसनिभ, B2 4 ग्रामान्नगरसमितान् — After 3, S ins
304* हिरण्य च सुवर्णं च दासीदास तथैव च ।

विचिन्वानोऽथ वैदर्भीमपश्यद्राजवेश्मनि ।
पुण्याहवाचने राज्ञः सुनन्दासहितां स्थिताम् ॥ ६
मन्दप्रख्यायमानेन रूपेणाप्रतिमेन ताम् ।
पिनद्धां धूमजालेन प्रभामिव विभावसोः ॥ ७
तां समीक्ष्य विशालाक्षीमधिकं मलिनां कृशाम् ।
तर्कयामास भैमीति कारणैरुपपादयन् ॥ ८
सुदेव उवाच ।
यथेयं मे पुरा दृष्टा तथारूपेयमङ्गना ।
कृतार्थोऽस्म्यद्य दृष्ट्वेमां लोककान्तामिव श्रियम् ॥ ९
पूर्णचन्द्राननां श्यामां चारुवृत्तपयोधराम् ।
कुर्वन्ती प्रभया देवीं सर्वा वितिमिरा दिशः ॥ १०
चारुपद्मपलाशाक्षीं मन्मथस्य रतीमिव ।
इष्टां सर्वस्य जगतः पूर्णचन्द्रप्रभामिव ॥ ११
विदर्भसरसस्तस्माद्दैवदोषादिवोद्धृताम् ।
मलपङ्कानुलिप्ताङ्गीं मृणालीमिव तां भृशम् ॥ १२
पौर्णमासीमिव निशां राहुग्रस्तनिशाकराम् ।
पतिशोकाकुलां दीनां शुष्कस्रोतां नदीमिव ॥ १३
विध्वस्तपर्णकमलां वित्रासितविहंगमाम् ।
हस्तिहस्तपरिक्लिष्टां व्याकुलामिव पद्मिनीम् ॥ १४

---

**4** K1 om $4^{abc}$ (cf v l 3) — $^{a}$) Ś1 B D4 6 T G शक्यमिह (for शक्याविह) S1 [आ]गतु (for [आ]नेतु) — $^{b}$) Ś1 K4 B2 3 D1 G2 4 दमयन्तीं S1 च मे सुता, D1 नल च वा, G2 4 नल तथा (for नलोऽपि वा) — $^{c}$) T1 M2 प्र (for ऽपि) Ś1 गवां सहस्र दास्यामि, K3 ज्ञातेपि च प्रदास्यामि — $^{d}$) K3 चैव शत, K4 शतशत, G1 शतदश (for दशशत) B3 गवा दशगुण शत

**5** $^{c}$) T2 G (except G1) M1 राष्ट्रेषु — $^{d}$) K4 transp सह and भार्यया — After 5, Dn D1 ins
305* नैव क्वापि प्रपश्यन्ति नल वा भीमपुत्रिकाम् ।

**6** After $6^{cd}$, S ins
306* कृशा विवर्णा मलिना भर्तृशोकपरायणाम् ।

☞ Some of the stanzas from 7 to 25 agree, in part almost verbatim, with parts of adhy 18, 19, 21, 29 of the Sundarakāṇḍa of the Rāmāyaṇa (ed Gorresio)

**7** = (var) Rām 5 18 4 — $^{a}$) K3 B Dn D4–6 मद (for मन्द) — $^{c}$) K2 3 B1 2 D (except D1 2) निबद्धा; B4 विबद्धा (for पिनद्धा)

**8** = (var) Rām 5 18 22 — $^{c}$) T1 वैदर्भी (for भैमीति) — $^{d}$) D2 G1 कारणैरुपपादिभि — After 8, K4 reads an addl colophon

**9** = (var) Rām 5 18 $23^{cd}$, $27^{ab}$ — M2 om the ref — G4 द्विज (for सुदेव उ°) — $^{a}$) S (except T1 M2) वै (for मे) — $^{b}$) G1 दिव्य (for तथा°) — $^{c}$) K4 [ग]व; D3 [ग]ता (for [इ]मा) — $^{d}$) K4 नल° (for लोक)

**10** = (var) Rām 5 18 24 — $^{a}$) K2 Dn1 n2 पूर्ण चन्द्रनिभा — $^{c}$) S1 K1 D2 3 कुर्वती, K3 4 B1–4 D1 4 6 M2 कुर्वतीं, D6 कुर्वती Dc1 D1 देवी, M2 तत्र

**11** = (var) Rām 5 18 26 — $^{a}$) B1 3 4 Dn विशालाक्षीं — $^{b}$) K1 G1 रतिं यथा, T1 M2 [इ]व ता रतिं (for रतीमिव) — D3 G4 om $11^{cd}$ — $^{c}$) K2 Dn D6 इष्टा समस्तलोकस्य

**12** = (var) Rām 5 19 $15^{cd}$, 18 $16^{cd}$ — $^{b}$) B3 D1 T2 G2 3 M1 दैवयोगाद्, G4 देववोषाद्, M2 देवयोगाद् (for दैवदोषाद्) K4 मृणालीमिव चोद्धृता — $12^{cd}$ = (var) Rām 5 15 $37^{ab}$ — $^{c}$) D4 6 मलपंकाभि° — $^{d}$) K3 व्याकुला, B1 3 तादृशीं, Dn D5 चोद्धृता (for तां भृशम्) Ś1 K1 4 D1 2 व्याकुलामिव पद्मिनीं, K2 (corrupt) मृणाली च वचोद्धृता; D3 मृणालीमचिरोद्धृता, S (except T1 G1 M2) प्रम्लाना नलिनीमिव

**13** = (var) Rām 5 21 $14^{ab}$, $15^{cd}$ — $^{a}$) K3 4 Dn1 D5 पूर्णं (for पौर्णं) Ś1 कला (for निशा) — $^{b}$) K1 दिवाकर — $^{c}$) B D4 6 बाला (for दीना) G1 शोकेन पक्लिता दीना — $^{d}$) K1 M2 शुष्कतोया, B (except B2) शुष्कस्रोतो, T2 G3 कृशस्रोता, G2 4 कृतस्रोता

**14** = (var) Rām 5 21 $14^{cd}$–$15^{ab}$ — $^{a}$) D1 विध्वस्तपत्र, G4 पर्णविहगा — $^{b}$) D1 वित्रस्तविहगाकुला — $^{c}$) Ś1 K B2 D T2 G3 परामृष्टा (B2 D4 6 परिक्षिप्ता) — $^{d}$) Ś1 K3 आकुलाम् G2 आकुला पद्मिनीमिव

**15** = (var) Rām 5 21 $16^{cd}$–$17^{ab}$ — $^{a}$) D2 T

सुकुमारीं सुजाताङ्गीं रत्नगर्भगृहोचिताम् ।
दह्यमानामिवोष्णेन मृणालीमचिरोद्धृताम् ॥ १५
रूपौदार्यगुणोपेतां मण्डनार्हाममण्डिताम् ।
चन्द्रलेखामिव नवां व्योम्नि नीलाभ्रसंवृताम् ॥ १६
कामभोगैः प्रियैर्हीनां हीनां बन्धुजनेन च ।
देहं धारयतीं दीनां भर्तृदर्शनकाङ्क्षया ॥ १७
भर्ता नाम परं नार्या भूषणं भूषणैर्विना ।
एषा विरहिता तेन शोभनापि न शोभते ॥ १८
दुष्करं कुरुतेऽत्यर्थं हीनो यदनया नलः ।
धारयत्यात्मनो देहं न शोकेनावसीदति ॥ १९
इमामसितकेशान्तां शतपत्रायतेक्षणाम् ।
सुखार्हां दुःखितां दृष्ट्वा ममापि व्यथते मनः ॥ २०
कदा नु खलु दुःखस्य पारं यास्यति वै शुभा ।
भर्तुः समागमात्साध्वी रोहिणी शशिनो यथा ॥ २१
अस्या नूनं पुनर्लाभान्नैषधः प्रीतिमेष्यति ।
राजा राज्यपरिभ्रष्टः पुनर्लब्ध्वेव मेदिनीम् ॥ २२
तुल्यशीलवयोयुक्तां तुल्याभिजनसंयुताम् ।
नैषधोऽर्हति वैदर्भीं तं चेयमसितेक्षणा ॥ २३
युक्तं तस्याप्रमेयस्य वीर्यसत्त्ववतो मया ।
समाश्वासयितुं भार्यां पतिदर्शनलालसाम् ॥ २४
अयमाश्वासयाम्येनां पूर्णचन्द्रनिभाननाम् ।
अदृष्टपूर्वां दुःखस्य दुःखार्तां ध्यानतत्पराम् ॥ २५

बृहदश्व उवाच ।

एवं विमृश्य विविधैः कारणैर्लक्षणैश्च ताम् ।
उपगम्य ततो भैमीं सुदेवो ब्राह्मणोऽब्रवीत् ॥ २६
अहं सुदेवो वैदर्भि भ्रातुस्ते दयितः सखा ।

---

$G_{3\ 4}$ सुकुमारा $G_1$ विशालाक्षीं (for सुजा°) — $^b$) $Ś_1$ $K_3$ B (except $B_3$) Dc $D_{3\ 4\ 6}$ °गृहोषिता; M °गृहोपमा — $^c$) $Ś_1$ $K_{1-3}$ Dn $D_{3\ 5}$ [अ]र्केण (for [उ]ष्णेन) — $^d$) $M_1$ नलिनीम् (for मृणालीम्) $K_{2\ 3}$ $B_1$ Dc Dn $D_5$ इव चोद्धृता (for अचिरो°)

**16** $16^b$ = Rām 5 18 $16^d$

**17** = (var) Rām 5 19 $23^{cd}$–$24^{ab}$ — $Ś_1$ $K_{1\ 3}$ read $16^{cd}$ after 17 — $^c$) $Ś_1$ $K_1$ भीम, $K_4$ Dn $D_5$ दीन (for दीना) $D_3$ देह सधारयती हि — $^d$) $G_1$ °काङ्क्षिणी

**18** = (var) Rām 5 19 $25^{cd}$–$26^{ab}$ — $^a$) $K_1$ हि भूषण, $T_1$ $G_1$ हि परम (for नाम पर) $K_4$ $Dc_1$ भार्या- (for नार्या) $Ś_1$ भर्तारं परम नार्या — $^b$) $K_1$ परम (for भूषण) — $^c$) $K_{2\ 4}$ $B_3$ D (except $D_{4-6}$) हि (for वि-) $K_3$ एषा हि तेन रहिता — $^d$) $S_1$ K $B_1$ D (except $D_{4\ 6}$) शोभमाना, $T_2$ $G_{2\ 3}$ शोभनार्हा, $G_4$ भूषणार्हा (for शोभना पि) $M_1$ वि (for न)

**19** = (var) Rām 5 19 $26^{cd}$–$27^{ab}$ (*repeated* in Rām with v l) — $^a$) $K_2$ Dn $D_5$ [ऽ]त्यस (for ऽत्यर्थं) $T_2$ $G_{3\ 4}$ दुष्कर कर्म कुरुते — $^b$) $K_2$ $T_1$ हीनो अयानया $K_3$ [अ]निल, $G_1$ $M_1$ प्रभु: (for नल:) — $^d$) $K_2$ Dn $D_5$ अपि (for अव)

**20** = (var) Rām 5 19 $27^{cd}$–$28^{ab}$ — $^a$) $T_{1\ 2}$ (before corr) G (except $G_1$) ह्यसित° (for असित°) — $^b$) $T_1$ $G_2$ शतपत्रनिभेक्षणा — $^d$) $K_3$ B (except $B_3$) $D_{3\ 4\ 6}$ $G_{1\ 2}$ व्यथित (for व्यथते)

**21** $21^{ab}$ = (var) Rām 5 19 $28^{cd}$ — $^b$) $T_1$ $G_1$ गच्छसि (for यास्य°) $K_4$ $D_{1\ 2}$ भामिनी (for वै शुभा) — $^d$) $S_1$ $K_4$ $D_{1-3\ 5}$ $G_1$ शशिना (for शशिनो)

**22** = (var) Rām 5 19 $22^{cd}$–$23^{ab}$ — $^a$) $S_1$ भैम्या (for लाभान्) — $^b$) $D_2$ सुखम्, $G_1$ प्रियम् (for प्रीतिम्) — $^c$) $G_1$ राज्याद् (for राज्य) — $^d$) $K_3$ $B_1$ Dn $D_5$ लब्ध्वा च, $T_2$ G (except $G_1$) प्राप्येव (for लब्ध्वेव)

**23** = (var) Rām 5 19 32 — $^a$) $T_2$ G °वृत्ता — $^b$) $Ś_1$ $K_2$ $B_{1\ 3}$ Dc Dn $D_5$ $G_1$ °संवृता; T $G_{2-4}$ °लक्षणा

**24** = (var) Rām 5 29 6 — $^a$) $T_1$ युक्त चास्या°; $G_1$ युक्तमस्या°; $G_4$ वियुक्तस्या° — $^b$) $T_1$ $M_2$ तस्य सत्त्व°, $T_2$ $G_3$ वीर्यसत्य° — $^d$) $K_1$ भर्तृ

**25** $25^{ab}$ = (var) Rām 5 30 $7^{ab}$ (ed N S P), $25^{cd}$ = (var) 5 29 $7^{ab}$ (ed Gorresio) — $^a$) K Dn $D_{1-3\ 5}$ S अहम्, $B_4$ स्वयम् (for अयम्) $B_2$ $D_{4\ 6}$ [ए]ना (for [ए]नां) — $^{cd}$) $T_2$ G (except $G_1$) $M_1$ अदृष्टदुःखा दुःखार्ता ध्यानरोदनतत्परा

**26** $^b$) $B_1$ धृता, Dc शुभा (for च ताम्) — $^c$) $Ś_1$ $K_2$ $B_3$ Dn $D_{1\ 5}$ $T_2$ $G_3$ उपागम्य $T_2$ G देवीं (for भैमीं) — $^d$) $D_5$ $T_1$ $G_{1\ 2}$ $M_2$ वाक्यम् (for ब्राह्मणो)

**27** Before 27, $B_1$ (marg) Dc $D_{1-3}$ M ins सुदेव

भीमस्य वचनाद्राज्ञस्त्वामन्वेष्टुमिहागतः ॥ २७
कुशली ते पिता राज्ञि जनित्री भ्रातरश्च ते ।
आयुष्मन्तौ कुशलिनौ तत्रस्थौ दारकौ च ते ।
त्वत्कृते बन्धुवर्गाश्च गतसत्त्वा इवासते ॥ २८
अभिज्ञाय सुदेवं तु दमयन्ती युधिष्ठिर ।
पर्यपृच्छत्ततः सर्वान्क्रमेण सुहृदः स्वकान् ॥ २९
रुरोद च भृशं राजन्वैदर्भी शोककर्शिता ।
दृष्ट्वा सुदेवं सहसा भ्रातुरिष्टं द्विजोत्तमम् ॥ ३०
ततो रुदन्तीं तां दृष्ट्वा सुनन्दा शोककर्शिताम् ।
सुदेवेन सहैकान्ते कथयन्तीं च भारत ॥ ३१
जनित्र्यै प्रेषयामास सैरन्ध्री रुदते भृशम् ।
ब्राह्मणेन समागम्य तां वेद यदि मन्यसे ॥ ३२
अथ चेदिपतेर्माता राज्ञश्चान्तःपुरात्तदा ।
जगाम यत्र सा बाला ब्राह्मणेन सहाभवत् ॥ ३३
ततः सुदेवमानाय्य राजमाता विशां पते ।
पप्रच्छ भार्या कस्येयं सुता वा कस्य भामिनी ॥ ३४
कथं च नष्टा ज्ञातिभ्यो भर्तुर्वा वामलोचना ।
त्वया च विदिता विप्र कथमेवंगता सती ॥ ३५
एतदिच्छाम्यहं त्वत्तो ज्ञातुं सर्वमशेषतः ।
तत्त्वेन हि ममाचक्ष्व पृच्छन्त्या देवरूपिणीम् ॥ ३६
एवमुक्तस्तया राजन्सुदेवो द्विजसत्तमः ।
सुखोपविष्ट आचष्ट दमयन्त्या यथातथम् ॥ ३७

इति श्रीमहाभारते आरण्यकपर्वणि पञ्चषष्टितमोऽध्यायः ॥ ६५ ॥

---

ड° (resp सुदेव) — $^{b}$) T1 मातुले (for भ्रा°) G2 4 विदित (for दयित°)

**28** $^{a}$) S राजा (for राज्ञि) — $^{b}$) K2 4 B2 D (except Dc1) T2 G जननी (for जनित्री) T1 जनितृभ्रातृभिश्च ते — K3 om 28$^{cd}$ — $^{d}$) K2 B1 2 4 Dn D3 4 6 G1 तौ (for ते) — After 28$^{cd}$, M ins

307* किं तु राजा दृढ भीमो जनित्री भ्रातरश्च ते ।
[ Posterior half = 28$^{b}$ ]

— $^{e}$) K3 4 Dc1 M2 बधुवर्गे B1-3 Dc D3 4 6 ते (for च) — $^{f}$) K4 सत्त्वहीना (for गत°) — After 28, K2 B (except B1) Dc Dn D6 ins

308* अन्वेष्टारो ब्राह्मणाश्च भ्रमन्ति शतशो महीम् ।

**29** Before 29, S1 K1-3 B D (except D1 2) T1 G1 M2 read बृहदश्व ड — $^{a}$) K2 4 Dc2 Dn D6 त (for तु) — $^{b}$) K4 विशा पते (for युधि°) — $^{c}$) K4 D3 M2 तदा (for तत°) K2 Dn D6 पर्यपृच्छत तान्सर्वान्

**30** $^{a}$) K4 D1 2 बाला (for राजन्) — $^{b}$) Ś1 K1 B1 2 D2 3 कर्षिता — K4 om (hapl) 30$^{c}$-31$^{b}$ — $^{d}$) S1 K1 मित्र (for इष्ट)

**31** K4 om 31$^{ab}$ (cf v l 30) — $^{a}$) T G3 4 M2 रुद(M2 द)तीं तामथो दृष्ट्वा, G1 2 M1 रुदतीं ता (M1 by transp ता रुदतीं) तथा दृष्ट्वा — $^{b}$) Ś1 K1 3 B1 2 4 D3 4 6 कर्षिता (or ता), K2 Dc Dn D1 5 T1 G1 M कर्शिता — $^{c}$) M1 तथै (for सहै)

**32** $^{a}$) K2 Dn D5 जनित्र्या, B1 2 4 जनन्यै°, B3 D1 4 6 जनन्यै K2 B3 Dn D1 5 कथयामास — $^{b}$) B Dc सैरिंध्री (also in the Virāṭa, *passim*), G1 सैरंध्रीं Ś1 K1 B4 T1 G1 रुदती (G1 °तीं) भृश, K2 D5 रोदितीति वै, K4 Dc रुदतीति वै, D1 T2 G3 रुदि(D1 °द)तीति च, G2 रोदतेति च, G4 रोदितीति च; M1 रोदते भृश — $^{c}$) K2 Dn D5 T2 G सहा° (for समा°) — $^{d}$) B2-4 Dc D1 3 4 6 वेत्थ, G1 2 4 विद्धि (for वेद)

**33** $^{b}$) Ś1 चेदिपुरात्, K3 M2 चात पुरे; M1 चांत°पुर K1 तुत (sic), K4 तत, G1 M2 तथा (for तदा) — $^{d}$) K4 सम गता (for सहाभवत्)

**34** $^{d}$) K2 B D (except D1-3) भाविनी (for भामिनी)

**35** $^{b}$) K1 भर्तुश्चासितलोचना

**36** $^{ab}$) Ś1 K1-3 Dc D5 तत्त्व, K4 B Dn D1 4 6 श्रोतु, D2 3 ज्ञातु (for त्वत्तो) K4 D1-3 तत्त्व, B Dn D4 6 त्वत्त° (for ज्ञातु) — $^{c}$) D3 सत्येन (for तत्त्वे°) Ś1 K1 D1 S (except G1 M1) च (for हि) K3 4 Dc समा° (for ममा°) — $^{d}$) T2 (by corr) पृच्छे त्वा (for पृच्छन्त्या) T1 G1 त्व द्विजोत्तम; G4 दिव्यरूपिणीं, M2 देववर्णिनीं

**37** $^{a}$) T1 G1 M2 ततो (for तया) — $^{b}$) D1 सुदेवो हि द्विजोत्तम — $^{c}$) K3 Dn2 D2 T1 G2 आचष्टे, Dc चाचष्ट — $^{d}$) T1 G1 M2 दमयतीं

Colophon om in D2 Dn2 has a lacuna in place of it — *Major parvan* Ś1 K1 T G2-4 आरण्य — *Sub parvan* N (except Dn2, D2 om) T1 G1 (all om

# ६६

सुदेव उवाच ।
विदर्भराजो धर्मात्मा भीमो भीमपराक्रमः ।
सुतेयं तस्य कल्याणी दमयन्तीति विश्रुता ॥ १
राजा तु नैषधो नाम वीरसेनसुतो नलः ।
भार्येयं तस्य कल्याणी पुण्यश्लोकस्य धीमतः ॥ २
स वै द्यूते जितो भ्रात्रा हृतराज्यो महीपतिः ।
दमयन्त्या गतः सार्धं न प्रज्ञायत कर्हिचित् ॥ ३
ते वयं दमयन्त्यर्थे चरामः पृथिवीमिमाम् ।
सेयमासादिता बाला तव पुत्रनिवेशने ॥ ४
अस्या रूपेण सदृशी मानुषी नेह विद्यते ।
अस्याश्चैव भ्रुवोर्मध्ये सहजः पिप्लुरुत्तमः ।
श्यामायाः पद्मसंकाशो लक्षितोऽन्तर्हितो मया ॥ ५
मलेन संवृतो ह्यस्यास्तन्वभ्रेणेव चन्द्रमाः ।
चिह्नभूतो विभूत्यर्थमयं धात्रा विनिर्मितः ॥ ६
प्रतिपत्कलुषेवेन्दोर्लेखा नाति विराजते ।
न चास्या नश्यते रूपं वपुर्मलसमाचितम् ।
असंस्कृतमपि व्यक्तं भाति काञ्चनसंनिभम् ॥ ७
अनेन वपुषा बाला पिप्लुनानेन चैव ह ।
लक्षितेयं मया देवी पिहितोऽग्निरिवोष्मणा ॥ ८
बृहदश्व उवाच ।
तच्छ्रुत्वा वचनं तस्य सुदेवस्य विशां पते ।
सुनन्दा शोधयामास पिप्लुप्रच्छादनं मलम् ॥ ९

---

sub parvan name) mention only नलोपाख्यान — *Adhy no* (figures, words or both) Dn1(*sup lin*) ns 68, D1 71, T G M2 (after corr) 65 (as in text), M1 66, M2 (before corr) 67 — *Śloka no* Dn D1 39

## 66

1 $^a$) G1 द्युतिमान् (for धर्मात्मा) — $^b$) K2 Dc Dn D5 भीमो नाम महाद्युति, G1 श्रीमान्सत्यपराक्रम॰

2 D2 om 2$^{ab}$ — $^a$) B D4 6 वीरो, T1 G1 धीमान् (for नाम) — $^c$) D2 नलस्य राज्ञो दयिता — $^d$) T1 विश्रुता, G1 समता (for धीमत)

3 $^a$) K2 4 Dn D2 3 5 द्यूतेन, B2 वै द्यूत (for वै द्यूते) S राजा (for भ्रात्रा) Dc D1 स द्यूते निर्जितो भ्रात्रा — $^b$) B महामना॰ (for मही॰) — $^c$) T1 दमयन्त्यास्तु यो भर्ता, G1 दमयन्त्या च सहित॰ — $^d$) K2 B D (except Dc2 D1 3) प्राज्ञायत, K4 प्रज्ञायेत K1 D5 कुत्रचित्, K3 Dn कस्यचित्; B2 कचन, D2 (m as in text) G4 किंचन T1 G1 नलो न ज्ञायते नृप॰

4 $^a$) Some MSS दमयन्त्यर्थं — $^c$) D2 [अ]साभिस (for बाला) — $^d$) Dn3 D3 पुत्रि, S देवि (for पुत्र) D2 स्वपुरेत्र निवे॰

5 $^b$) Dc D5 मानुषे K2 B (except B1) Dn D5 न हि, D3 नात्र, T1 G1 M2 नैव (for नेह) Ś1 K1 3 4 D2 मानुषी नोपपद्यते — $^c$) Ś1 K D (except D4 6) ह्येष (K3 एष) (for चैव) — $^d$) T1 G1 2 4 विप्लुद्रु(T1 ॰रु)त्तम॰ — After 5$^{cd}$, T1 ins

309* स दृष्टो बहुशो नाथ लक्षितोऽन्तर्हितो मया ।

— $^e$) G1 स दृष्टो बहुशो नाथ (of 309*)

6 $^a$) Dc तस्या॰, D1 [ऽ]प्यस्या॰ (for ह्यस्या॰) — $^b$) K3 4 B2 4 Dn D5 छन्नोभ्रेण, D1 2 महाभ्रेण; D3 स्तोकाभ्रेण — $^c$) D6 चिह्नरूपो; T1 ऋद्धिभूतो T2 G M1 स चा(G1 सदा)त्यर्थं (for विभू॰)

7 $^a$) T1 G1 2 च (for [इ]व) K3 B1 3 4 D (except D1 3 5) ॰त्कलुषसैंदोर्; T2 G3 (corrupt) ॰त्कलुषेनेंदोर्, G4 (corrupt) ॰त्कलुषो वेदो — $^b$) T G1-3 लेखेव न विरा॰, G4 लेखा नातीव राजते — $^c$) K3 D5 क चास्या, B4 नैतस्या, D3 न तस्या, T2 G2-4 अस्यास्तु (for न चास्या) K3 4 Dc D2 3(marg sec m) 5 T G M2 दृश्यते, K3 गम्य॰; D1 M1 विश्व॰ (for नश्य॰) Ś1 K1 3 4 D1 2 3 (marg sec m) दिव्य (for रूप) — $^d$) K1 रूप T2 G2-4 मलसमन्वित — $^e$) K3 B (except B1) Dn D3 5 अभि (for अपि) — $^f$) T1 भवत्यस्य स्वभावत॰

8 $^b$) T1 विप्लुना॰, G1 4 विप्रुषा॰ K3 D1 2 3 तेन (for [अ]नेन) K3 D1-3 T G चैव हि, K4 B Dc Dn D4 6 सूचिता (for चैव ह) K3 (corrupt) पिप्लुनानेस्वरतिता, D5 तिलकेन च चैव ह — $^c$) G1 चैव (for देवी) — $^d$) Ś1 निन्हुतो॰, K1 निहुतो, K2 B2 4 Dn D5 G1 निभृतो॰, K3 4 D2 निहितो॰, D3 निहतो

9 N (except B2 3) G4 om the ref — $^a$) K4 तस्य सद्वचन श्रुत्वा — $^d$) G1 4 विप्रुद, G2 विप्लुत् (for पिप्लु)

स मलेनापकृष्टेन पिप्लुस्तस्या व्यरोचत ।
दमयन्त्यास्तदा व्यभ्रे नभसीव निशाकरः ॥ १०
पिप्लुं दृष्ट्वा सुनन्दा च राजमाता च भारत ।
रुदन्त्यौ तां परिष्वज्य मुहूर्तमिव तस्थतुः ।
उत्सृज्य बाष्पं शनकै राजमातेदमब्रवीत् ॥ ११
भगिन्या दुहिता मेऽसि पिप्लुनानेन सूचिता ।
अहं च तव माता च राजन्यस्य महात्मनः ।
सुते दशार्णाधिपतेः सुदाम्नश्चारुदर्शने ॥ १२
भीमस्य राज्ञः सा दत्ता वीरबाहोरहं पुनः ।
त्वं तु जाता मया दृष्टा दशार्णेषु पितुर्गृहे ॥ १३
यथैव ते पितुर्गेहं तथेदमपि भामिनि ।
यथैव हि ममैश्वर्यं दमयन्ति तथा तव ॥ १४
तां प्रहृष्टेन मनसा दमयन्ती विशां पते ।
अभिवाद्य मातुर्भगिनीमिदं वचनमब्रवीत् ॥ १५
अज्ञायमानापि सती सुखमस्म्युषितेह वै ।
सर्वकामैः सुविहिता रक्ष्यमाणा सदा त्वया ॥ १६
सुखात्सुखतरो वासो भविष्यति न संशयः ।
चिरविप्रोषितां मातर्मामनुज्ञातुमर्हसि ॥ १७
दारकौ च हि मे नीतौ वसतस्तत्र बालकौ ।
पित्रा विहीनौ शोकार्तौ मया चैव कथं नु तौ ॥ १८
यदि चापि प्रियं किंचिन्मयि कर्तुमिहेच्छसि ।
विदर्भान्यातुमिच्छामि शीघ्रं मे यानमादिश ॥ १९
बाढमित्येव तामुक्त्वा हृष्टा मातृष्वसा नृप ।
गुप्तां बलेन महता पुत्रस्यानुमते ततः ॥ २०
प्रस्थापयद्राजमाता श्रीमता नरवाहिना ।
यानेन भरतश्रेष्ठ स्वन्नपानपरिच्छदाम् ॥ २१

---

10 ᵃ) T1 °मृष्टेन (for कृष्टेन) — ᵇ) T1 G3 विप्लुस, G1 विप्रुद, G4 विप्रुद् (for पिप्लुस्) D5 तस्या, T2 G3 4 अस्या (for तस्या) K1 4 तस्यावरोचत, T1 सद्यो विरोचत, G1 तस्या अरो , G2 अस्यावरो — ᶜ) Ś1 K3 B4 D2 3 तथा; K1 2 B2 Dn D5 यथा (for तदा) — ᵈ) Ś1 नभस्येव K4 B1 3 (m as in text) Dc D1 S दिवाकर

11 ᵃ) K3 T1 G3 4 विप्लु; G1 विप्रुद (for पिप्लु) — ᵇ) B4 T2 G (except G1) विशां पते, D4 6 [अ]प भारत (for च भारत)

12 ᵃ) T1 विप्लुतानेन, G1 विप्रुणा ; G3 4 विप्लुना° — ᵈ) K3 4 B D (except D2 3 5) राज्ञस्तस्य म — ᶠ) T1 G1 M2 चारुलोचने

13 ᶜ) Ś1 K1 च (for तु) — ᵈ) K4 D2 3 5 दशार्णस्य, T1 °र्णे तु T1 M2 (by transp ) गृहे पितु°

14 K3 om 14ᵃᵇ — ᵇ) B1 तवे° (for तथे ) K3 B4 Dn D4 6 [ए]व (for [इ]दम्) K3 B Dn D3 4 6 G1 मम, D1 इति (for अपि) B D (except D1 2 6) G1 भाविनि — D2 om 14ᶜᵈ — ᶜ) B1 यथेद S1 K B1 3 D (except D4 6 D2 om ) च, B4 [इ]द (for हि) — ᵈ) D5 [ए]व ते (for तव) K1 तथैव तव भामिनि

15 ᵃ) B2–4 G1 सा प्र , Dc D1 T1 सप्र ; M2 ततो हृष्टेन — ᶜ) Hypermetric! K3 B Dn D4–6 S प्रणम्य (for अभिवाद्य)

16 ᵇ) T2 G2–4 सुखमध्युषिता Ś1 K1 2 Dn D5 T2 G3 त्वयि, B3 [इ]ति वै (for [इ]ह वै) — ᵈ) K4 B1 transp सदा and त्वया

17 ᵃ) Ś1 K3 B D4 6 सुखतर G1 वासो (for वासो) — ᶜ) K3 Dc D1 4 5 चिरविप्रोषिता, K4 D3 चिर विप्रोषिता, B1 चिर पर्युषिता

18 G1 transp 18 and 19 — ᵃ) K1 B4 अपि, T1 G1 M2 चैव (for च हि) K3 T1 G1 हीनौ (for नीतौ) — ᵈ) T1 G1 M2 चापि (for चैव)

19 G1 transp 18 and 19, B D4 6 G1 transp 19ᵃᵇ and 19ᶜᵈ — ᵃᵇ) K3 4 Dc D3 S (except M2) वापि, B D4 चैव; D3 वा मे (for चापि) K4 D2 कर्तुं (for किंचिन्) S मम (for मयि) K4 D2 किंचिद् (for कर्तुम्) — ᶜ) Ś1 K4 B Dc Dn1 n3 D2 5 6 विदर्भां (for °र्भान्) B D4 6 गतुम् (for यातुम्) — ᵈ) T1 M2 transp शीघ्र and यान

20 ᵃ) T2 G2–4 प्राह (for उक्त्वा) T1 G1 M2 बाढमित्येवमुक्त्वा ता — ᵇ) K4 T1 तदा (for नृप) — ᵈ) Ś1 स्थिता, G1 तथा (for ततः) D2 3 पुत्रस्यानुमतेन ता — After 20, M2 ins

310* प्राहिणोद्दमयन्तीं तां सदा विप्रपुरस्कृताम् ।

21 ᵃ) K1 2 B Dn D2 4–6 T2 G1 3 M1 प्रा (for प्र ) — ᵇ) Dn D4 6 श्रीमती B3 D4 शीघ्रवाहिना — ᵈ) Ś1 K1 T1 सान्नपानपरिच्छदा (T1 द), K3 D4–6 T2 G3 स्वन्नपानपरिच्छदा (D4 द), K3 G2 4 स्वन्नपानपरिच्छद, D2 3 G1 शुभाख्येन (D3 स्वर्णजाल , G1 स्वनमान ) परिच्छदा

22 ᵃ) K1 transp तत and सा — ᵇ) Ś1 K2–4 B3

ततः सा नचिरादेव विदर्भानगमच्छुभा ।
तां तु बन्धुजनः सर्वः प्रहृष्टः प्रत्यपूजयत् ॥ २२
सर्वान्कुशलिनो दृष्ट्वा बान्धवान्दारकौ च तौ ।
मातरं पितरं चैव सर्वं चैव सखीजनम् ॥ २३
देवताः पूजयामास ब्राह्मणांश्च यशस्विनी ।
विधिना परेण कल्याणी दमयन्ती विशां पते ॥ २४
अतर्पयत्सुदेवं च गोसहस्रेण पार्थिवः ।
प्रीतो दृष्ट्वैव तनयां ग्रामेण द्रविणेन च ॥ २५
सा व्युष्टा रजनीं तत्र पितुर्वेश्मनि भामिनी ।
विश्रान्ता मातरं राजन्निदं वचनमब्रवीत् ॥ २६

इति श्रीमहाभारते आरण्यकपर्वणि षट्षष्टितमोऽध्यायः ॥ ६६ ॥

## ६७

दमयन्त्युवाच ।
मां चेदिच्छसि जीवन्तीं मातः सत्यं ब्रवीमि ते ।
नरवीरस्य वै तस्य नलस्यानयने यत ॥ १
बृहदश्व उवाच ।
दमयन्त्या तथोक्ता तु सा देवी भृशदुःखिता ।
बाष्पेण पिहिता राजन्नोत्तरं किंचिदब्रवीत् ॥ २
तदवस्थां तु तां दृष्ट्वा सर्वमन्तःपुरं तदा ।
हाहाभूतमतीवासीद्भृशं च प्ररुरोद ह ॥ ३
ततो भीमं महाराज भार्या वचनमब्रवीत् ।
दमयन्ती तव सुता भर्तारमनुशोचति ॥ ४
अपकृष्य च लज्जां मां स्वयमुक्तवती नृप ।
प्रयतन्तु तव प्रेष्याः पुण्यश्लोकस्य दर्शने ॥ ५

---

Dns D2 3 (before corr ) 4 6 विदर्भाम् K3 Dn D5 पुन°, B3 D2 4 6 शुभा — d) T1 G1 M2 वैदर्भी (for प्रहृष्ट ) K3 Dn D5 G4 सम° (for प्रत्य°)

**23** c) Ś1 K D (except D4) चोभौ (for चैव)

**24** b) D4 T2 G2-4 M1 तप° (for यश°) — T2 G3 om (hapl ) 24c–26b — c) Hypermetric ! K2 4 B Dn D4-6 परेण विधिना देवी (K4 हृष्टा, B D4 6 तात), K3 Dc2 D2 S (T2 G3 om ) विधिना तेन (K3 °नापर , D2 °नापार , T1 M °नानेन) कल्याणी, text as in Ś1 K1 Dc1 D1 3 !

**25** T2 G3 om 25 (cf v l 24) — c) Ś1 D2 स्व- तनया, K1 सुतनया, K3 [ए]व कल्याणी, K4 [अ]थ तनया (for [ए]व तनया) — d) D2 ग्रामाणि नगराणि च

**26** T2 G3 om 26ab (cf v l 24) — a) Ś1 व्युषिता, K1 3 व्युषित्वा, Dc1 सा व्युष्ट्वा, D2 साप्युष्य, G2 M2 साप्युष्य, G4 M1 सा व्युष्य (for सा व्युष्टा) D5 6 T1 रजनी Dc D1 ता तु (for तत्र) — b) K3 B D (except D1 2) भाविनी — d) Dc D1 भैमी (for इद)

Colophon om in K2 Dn D2 5 — *Major parvan* S1 K1 T G2-4 आरण्य — *Sub parvan* S1 K1 3 B Dc D1 3 4 6 T1 G1 (all om sub parvan name) mention only नलोपाख्यान — *Adhy name* D3 दमयतीविदर्भगमन — *Adhy no* (figures, words or both) D1 72, T G M2 66 (as in text), M1 67 — *Śloka no* D1 28

**67**

**1** b) D5 (? gloss) वदामि (for ब्रवीमि) — cd) K1 3 4 B Dn D1-3 5 चैतस्य (for वै तस्य) T1 G1 M2 नलस्यान्वेषणे यत्न क्रियतामि(G1 कर्तव्य इ)ति साम्प्रत, T2 G2-4 M1 नलस्य नरवीरस्य यतस्वानयने पुन° (M1 तत°)

**2** All MSS om the ref ! — a) T2 G (except G1) M1 सा (for तु) B3 दमयतीं तथेत्युक्त्वा — b) T2 G (except G1) M1 देवी सुभृश° — c) Ś1 K1 बाप्पेन विहिता, K2 4 B Dn D3 4 6 T2 G3 °नापिहिता K2 3 B3 D (except D4 6) राज्ञी, K4 देवी

**3** a) K3 ततो (for तु ता) Ś1 प्राप्ता (for दृष्ट्वा) — b) T2 G2-4 सहसात° — c) G1 अभूत्तत्र (for अतीवासीद्) — d) B D4 6 चैव (for च प्र-)

**4** a) S1 K1 4 D2 महाभागा, K3 Dn D5 T2 G1 3 °राज, Dc D1 °बाहु (for °राज) — c) S नृप भृश (T1 M2 -सुता) (for तव सुता)

**5** a) Ś1 Dc1 मा, K3 4 Dn D2 3 मा (for मा) — b) T2 G2-4 विभो (for नृप) — c) B2-4 D4 6 T1 M2 प्रयतता, D1 प्रयातु च, D2 प्रगच्छतु, T2 G3 प्रेष्यता च (for

तया प्रचोदितो राजा ब्राह्मणान्वशवर्तिनः ।
प्रास्थापयद्दिशः सर्वा यतध्वं नलदर्शने ॥ ६
ततो विदर्भाधिपतेर्नियोगाद्ब्राह्मणर्षभाः ।
दमयन्तीमथो दृष्ट्वा प्रस्थिताः सेत्यथाब्रुवन् ॥ ७
अथ तानब्रवीद्भैमी सर्वराष्ट्रेष्विदं वचः ।
ब्रुवध्वं जनसंसत्सु तत्र तत्र पुनः पुनः ॥ ८
क्व नु त्वं कितव छित्त्वा वस्त्रार्धं प्रस्थितो मम ।
उत्सृज्य विपिने सुप्तामनुरक्तां प्रियां प्रिय ॥ ९
सा वै यथा समादिष्टा तत्रास्ते त्वत्प्रतीक्षिणी ।
दह्यमाना भृशं बाला वस्त्रार्धेनाभिसंवृता ॥ १०
तस्या रुदन्त्याः सततं तेन शोकेन पार्थिव ।
प्रसादं कुरु वै वीर प्रतिवाक्यं ददस्व च ॥ ११
एतदन्यच्च वक्तव्यं कृपां कुर्याद्यथा मयि ।
वायुना धूयमानो हि वनं दहति पावकः ॥ १२
भर्तव्या रक्षणीया च पत्नी हि पतिना सदा ।
तन्नष्टमुभयं कस्माद्धर्मज्ञस्य सतस्तव ॥ १३
ख्यातः प्राज्ञः कुलीनश्च सानुक्रोशश्च त्वं सदा ।
संवृत्तो निरनुक्रोशः शङ्के मद्भाग्यसंक्षयात् ॥ १४
स कुरुष्व महेष्वास दयां मयि नरर्षभ ।
आनृशंस्यं परो धर्मस्त्वत्त एव हि मे श्रुतम् ॥ १५

---

प्रयतन्तु) G1 ब्राह्मणा॰ सर्वत॰ प्रेष्या — d) Ś1 K D (except D4 6) मार्गणे (for दर्शने), cf v l 6

6 K4 om (hapl) 6 Before 6, T1 G1 2 4 M2 ins बृहदश्व॰ — a) G2 4 M2 तथा (for तया) K3 Dn D5 प्रदेशितो, K3 D2 3 नोदितो, B2 बोधितो — c) Ś1 D3 T1 G1 2 प्रस्थाप॰ D2 प्रस्थापयन्नुवाचेद — d) K1 3 D (except D4 6) ॰मार्गणे, cf v l 5

7 b) Ś1 K D (except D4 6) ब्राह्मणास्तदा, T1 G1 ॰णास्तु ते, G1 द्विजपुंगव (for ब्राह्मणर्षभा) — c) K1 अथो पृष्ट्वा, K3 D5 अथोत्सृष्ट्वा, Dn1 n2 n3 (before corr) अथो सृत्वा, D2 ततो दृष्ट्वा, T1 तथासाद्य ; T2 G2–4 M2 अथापृच्छ्य, G1 तदापृच्छ्य, M1 समापृच्छ्य (for अथो दृष्ट्वा) — d) K3 Dn D5 ते तथा ; D2 स तथा (for सेत्यथा॰)

8 b) T2 G2–4 सर्वदेशेष्विद (G4 ॰त्वय) पृथक् — c) Ś1 K1 ब्रूयास्थ, K3 4 Dn D4 5 Cn ब्रूयास्त (D4 ॰स्त), K3 ब्रूयु॰ स्व, B1–3 D6 ब्रूयास्त्व, D3 ब्रूयाच्च, S (except M1) ब्रूत वै, text (ब्रुवध्व) as in B4 M1 Cnp ❀ Cn ब्रुवध्वमिति पाठे स्वार्थस्तङ्ग ! ❀ B D4 6 राजससत्सु, D3 5 जनसंघ तु (D3 ॰घेषु) Dc D1 ब्रूयास्त(D1 ॰स्थ)राजमसत्सु, D2 कथयध्व स ससत्सु

9 =3 72 18 — a) Dc D1 कुत्र (for क्व नु) Ś1 K1 किं (for त्व) T2 (by corr) G3 छित्त्व (for छित्त्वा) — b) T2 G2–4 वासोर्धं K3 D5 तदा (for मम) — c) D2 विजने (for विपिने)

10 =(var) 3 72 19 — a) D2 सा वै त्वया, G1 सा तथैव K3 Dn D5 त्वया दृष्टा, K4 त्वयादिष्टा, D2 यथा दिष्टा, G1 समादिश्य — b) K2–4 B D2–6 तथास्ते, Dc Dn D1 तथा ते (Dn2 वै) S1 K1 Dc Dn2 D1 तत् ; G1 स्व (for त्वत्) K4 (by corr) G1 प्रतीक्षणे, Dc ॰क्षते, a few MSS ॰प्रतीक्षणी — c) T2 G2–4 M1 [अ]निश (for भृश) — d) K3 4 Dn D5 ॰नापि, D3 ॰न च, D4 ॰नासि; T G (except G1) ॰नैव (for ॰नाभि)

11 =(var) 3 72 20 — c) B3 D2 मे (for वै) T2 G2–4 देव (for वीर) — d) K1 2 4 D (except D3) वदस्व; T1 G1 M2 प्रयच्छ (for ददस्व) K3 M2 मे (for च)

12 a) K3 Dn D5 एवम् (for एतद्) T2 G2–4 M1 चान्यच्च (for अन्यच्च) B1 2 Dc D1 4 6 वक्तव्य — b) K3 B3 मम (for मयि) — c) S1 K1 3 4 D2 ध्माय॰ (for धूय) K3 B1 Dc D1 [ऽ]पि (for हि) — d) K1 3 दहाति (for दहति) — After 12, M1 ins

311* तथा दहति शोकाग्निर्हृदय मम नित्यश ।

13 a) K4 सातंव्या; M2 कर्तव्या K4 रक्षितव्या च — b) K4 S (except T1) पत्नी पत्या (G2 4 पत्नया) हि (G1 च) नित्यदा (K4 सर्वदा, T2 G3 नित्यत )

14 a) Ś1 K1 ज्ञातप्रज्ञ॰ (for ख्यात प्राज्ञ॰) K1 नस्त्व (for ॰नश्च) — b) K1 T1 G1 2 M च वै, K2 3 Dn D3 5 भवान्; T2 G3 4 च सन् (for च त्व) K4 D2 सर्वदा (for त्व सदा) Dc D1 सानुक्रोशमति सदा त्व apparently does *not* make position here ! — c) T2 G2–4 सद्वृत्तो (for संवृत्तो)

15 a) K3 Dc Dn D1 5 तत् (for स) T1 2 (by corr) G3 4 M2 कुरु त्व (for कुरुष्व) Ś1 महीष्वास, K3 Dn D5 नरव्याघ्र — b) G2 4 कृपा मयि K1 3 4 B D4 6 नरेश्वर; G4 नराधिप — d) K4 श्रुत, B Dc D1 4 G1 मया, T1 M2 श्रुतो (for हि मे) K2 3 B1 D (except D4. 6) T2 G3 श्रुत , K4 T1 M2 मया (for श्रुतम्)

16 a) D2 सतत (for यदि य ) — b) Ś1 K2–4 D

एवं ब्रुवाणान्यदि वः प्रतिब्रूयाद्धि कश्चन ।
स नरः सर्वथा ज्ञेयः कश्चासौ क्व च वर्तते ॥ १६
यच्च वो वचनं श्रुत्वा ब्रूयात्प्रतिवचो नरः ।
तदादाय वचः क्षिप्रं ममावेद्यं द्विजोत्तमाः ॥ १७
यथा च वो न जानीयाच्चरतो भीमशासनात् ।
पुनरागमनं चैव तथा कार्यमतन्द्रितैः ॥ १८
यदि वासौ समृद्धः स्याद्यदि वाप्यधनो भवेत् ।
यदि वाप्यर्थकामः स्याज्ज्ञेयमस्य चिकीर्षितम् ॥ १९
एवमुक्तास्त्वगच्छंस्ते ब्राह्मणाः सर्वतोदिशम् ।
नलं मृगयितुं राजंस्तथा व्यसनिनं तदा ॥ २०
ते पुराणि सराष्ट्राणि ग्रामान्घोषांस्तथाश्रमान् ।
अन्वेषन्तो नलं राजन्नाधिजग्मुर्द्विजातयः ॥ २१
तच्च वाक्यं तथा सर्वे तत्र तत्र विशां पते ।
श्रावयांचक्रिरे विप्रा दमयन्त्या यथेरितम् ॥ २२

इति श्रीमहाभारते आरण्यकपर्वणि सप्तषष्टितमोऽध्यायः ॥ ६७ ॥

## ६८

बृहदश्व उवाच ।
अथ दीर्घस्य कालस्य पर्णादो नाम वै द्विजः ।
प्रत्येत्य नगरं भैमीमिदं वचनमब्रवीत् ॥ १
नैषधं मृगयानेन दमयन्ति दिवानिशम् ।

---

(except D8 4 6) कथचन (for हि कश्चन) — c) K2 Dn D5 नल (for नर) — d) Ś1 K1 क्क (for कश्च) K2 3 Dn D5 तु, K4 स (for the *second* च)

**17** a) Ś1 K3 T2 G3 M1 यश्च वो, K3 Dc Dn D1 5 6 यश्चैव, K4 यश्चेद, B D4 यदि वो, D2 यथेव, D8 यथैव (for यच्च वो) B2 ब्रूयात् (for श्रुत्वा) — b) B3 श्रुत्वा प्रति, G3 4 प्रतिब्रूयाद् (by transp) D2 त्वया प्रतिवचो मम — c) K3 4 D (except D4 6) तस्य (for क्षिप्रं)

**18** a) Dc D1 अथ (for यथा) K1 2 4 B Dn (Dn3 m as in text) D4 5 T2 G1 3 M2 Cnp वच (B3 च न); K3 यूय, Dc D1 वाच (for च व) K3 B2 D2 T1 वि (for न) Ś1 यथा वो न तु जानीया — b) Ś1 त्वरित, K1 चरित, K2 Dn D5 ब्रुवतो, T2 G3 चरन्निर् B2 Dn D5 मम शासनात्, M2 भीमचोद° — c) Dc D1 सन्निर्, G2 4 चेह (for चैव) — d) Ś1 यथा, Dc D1 इह (for तथा)

**19** a) K3 B (except B3) D1 M1 चासौ (for वा°) — K3 om (hapl) 19^bc — b) T1 वापिधनो, M1 चाप्य धनो Dc D1 T3 G2–4 [ऽ]पि वा (for भवेत्) — c) M2 अथ (for यदि) S1 K1 वासौ विरूप, K2 4 Dn D2 3 5 वाप्यसमर्थ (for वाप्यर्थकाम) — d) Ś1 K1 3 B Dc D1 4 6 तस्य (for अस्य) T2 G3 विवक्षित (for चिकी°)

**20** Before 20, T2 G2 3 M1 ins बृहदश्व — a) K4 त्वगच्छत, Dc1 D1 तु गच्छते, D2 त्वगच्छन्वै — b) B T1 2 (by corr) G1 °दिश — d) B1 4 Dn D4–6 G1 transp तथा and तदा K1 B2 D3 G4 तदा (for तथा) K3 T1 तथा, B2 नृप, Dc D1 भवेत् (for तदा)

**21** a) K3 T1 च, G1 सु° (for स) — b) D6 T2 G3 4 तदा° (for तथा) — c) T1 अन्विषते, T2 G2–4 M1 अन्विच्छतो — d) D2 विजग्मुस्ते (for नाधिजग्मुर्) B3 द्विजोत्तमा

**22** a) T2 G2–4 तस्या (for तच्च) K4 D2 तत, M1 तदा (for तथा) D5 सर्व (for सर्वे) — c) Ś1 K1 3 4 D2 3 5 वीर, G1 सर्वे (for विप्रा) — d) K3 D3 5 तथेरित; Dc1 D1 यथेप्सित, D3 T2 G2–4 यथोदित

Colophon om in D3 — *Major parvan* Ś1 K1 T G आरण्य — *Sub parvan* N (D3 om) (om sub-parvan name) mentions only नलोपाख्यान — *Adhy no* (figures, words or both) K1 T G M2 67 (as in text), Dn (Dn1 *sup lin*) M2 (before corr) 69, D1 73, M1 68 — *Śloka no* Dn 50, D1 22

अयोध्यां नगरीं गत्वा भाङ्गस्वरिरुपस्थितः ॥ २
श्रावितश्च मया वाक्यं त्वदीयं स महाजने ।
ऋतुपर्णो महाभागो यथोक्तं वरवर्णिनि ॥ ३
तच्छ्रुत्वा नाब्रवीत्किंचिदृतुपर्णो नराधिपः ।
न च पारिषदः कश्चिद्भाष्यमाणो मयासकृत् ॥ ४
अनुज्ञातं तु मां राज्ञा विजने कश्चिदब्रवीत् ।
ऋतुपर्णस्य पुरुषो बाहुको नाम नामतः ॥ ५
सूतस्तस्य नरेन्द्रस्य विरूपो ह्रस्वबाहुकः ।
शीघ्रयाने सुकुशलो मृष्टकर्ता च भोजने ॥ ६
स विनिःश्वस्य बहुशो रुदित्वा च मुहुर्मुहुः ।
कुशलं चैव मां पृष्ट्वा पश्चादिदमभाषत ॥ ७
वैषम्यमपि संप्राप्ता गोपायन्ति कुलस्त्रियः ।
आत्मानमात्मना सत्यो जितस्वर्गा न संशयः ।
रहिता भर्तृभिश्चैव न क्रुध्यन्ति कदाचन ॥ ८
विषमस्थेन मूढेन परिभ्रष्टसुखेन च ।
यत्सा तेन परित्यक्ता तत्र न क्रोद्धुमर्हति ॥ ९
प्राणयात्रां परिप्रेप्सोः शकुनैर्हृतवाससः ।
आधिभिर्दह्यमानस्य श्यामा न क्रोद्धुमर्हति ॥ १०
सत्कृतासत्कृता वापि पतिं दृष्ट्वा तथागतम् ।
भ्रष्टराज्यं श्रिया हीनं श्यामा न क्रोद्धुमर्हति ॥ ११
तस्य तद्वचनं श्रुत्वा त्वरितोऽहमिहागतः ।
श्रुत्वा प्रमाणं भवती राज्ञश्चैव निवेदय ॥ १२
एतच्छ्रुत्वाश्रुपूर्णाक्षी पर्णादस्य विशां पते ।
दमयन्ती रहोऽभ्येत्य मातरं प्रत्यभाषत ॥ १३

---

ऋतुपर्णम्, K3. 4 M1 भार्गस्वरिर् (K4 रिम्), B भागस्वरिम्, Dn D4 6 भागासुरिम्, D5 भागासुरिर्, D8 (? gloss) ऋतुपर्णं, T1 भागस्वरिर्, G1 भागस्करिर्; G2 भागस्वरिम्, G4 भागस्वरिर्, M2 as in text! Dc D1 मार्गं चाभिमुख स्थित, D2 भार्ग्रेवस्वरित स्थित; T2 G3 भास्वरीं समुपेयुषा Cf v l 3 69 10 70 2, 6, 71 30, 72 11, 74 28, 76 18

**3** a) Dc Dn1 D1 5 M2 श्रावित च; D2 श्रावितस्य K1 त्वदीय मे (for मया वाक्य) — b) K1 सहावाक्य (for त्वदीय स) Ś1 मे, K3 D5 च; B1-3 सु (for स) K3 त्वदीय च सभासने; T2 G (except G1) त्वदीय जनसंसदि — c) Here and below B (mostly) ऋतपर्णो K D3 5 T2 G (except G1) M1 महाभागे — d) K4 यथावद् (for यथोक्त)

**4** b) K1 महामना; B2 महीपति, D8 महानृप (for नरा) — c) T1 G1 M1 न चास्य (G1 तत्रासौ) पार्षद कश्चिद् — d) G3 भाष्यमाणे T2 G2-4 M1 (by transp) [S]सकृन्मया

**6** a) K2 Dn2 n3 D5 ततस् (for सूतस्) D2 न च तत्र नृपेंद्रस्य — c) T1 G1 दीर्घयाने, M2 शीघ्रयान K3 4 Dc D1 3 6 T G2-4 च (for सु) K2 B Dn D2 4 6 शीघ्रयानेषु कुशलो — d) K2 3 B4 Dn3 D3-5 मिष्ट (for मृष्ट)

**7** b) K2 B3 Dn D5 पुन पुन (for मुहुर्मुहु) — c) D1 व्याकुल (for कुशल) D2 स च (for चैव)

**8** 8 ff = (var) 3 72 25 ff — b) B3 T2 (by corr) G2-4 गोपयति — G1 om 8cd — c) D3 6 सद्यो (for सत्यो) — d) K3 4 Dn D1 2 3 (before corr) 5 जित (K4 त)स्वर्गो — e) B Dc D4 6 T1 G3 M2 साध्व्यो (B4 सत्या), T2 G1 3 4 M1 चापि (for चैव) — f) K2 Dn D5 G1 कुप्यति M1 कथचन — After 8, K1 B D (except D2 3 5) S ins

312* प्राणाश्चारित्रकवचान्धारयन्ति वरस्त्रिय ।

[K1 S (except M2) कवचा Dc D1 प्राण चा(D1 णाश्चा)रित्रक चैव Dc D1 कुल (for वर) B4 S धारयतीह (G4 ति हि) सत्स्त्रिय ]

**9** c) B3 पत्या (for यत्सा) K3 [अ]नेन, K3 T2 G (except G1) वने; K1 [अ]न्येन (for तेन) — d) S1 K1 ततो (for तत्र)

**11** K4 D3 transp 11ab and 11cd — d) = 10d Ś1 K Dn D1-3 5 क्षुधित व्यसनाप्लुत (K1 नान्वित; K4 D2 3 नप्लुत)

**12** a) T2 G2-4 एतच्छ्रुत्वा शुभ वाक्य — d) T2 G2-4 M राज्ञे (for राज्ञश्च) K1 4 B2 चैव (for चैव)

**13** Before 13, T G1 3 M ins बृहदश्व — a) T1 G1 M2 एव (for एतत्) K3 विशालाक्षी (for [अ]श्रुपूर्णाक्षी) — c) K2 D5 T2 G2-4 ततोऽभ्येत्य, Dc D1 वचोऽभ्येत्य, D2 महाराज (for रहो) — d) D3 सर्वं मात्रे न्यवेदयत् — After 13, G1 ins

313* अयमर्थो मृषा न स्याद्ब्राह्मणस्य कथचन ।

**14** b) G3 M2 भीमो (for भीमे) K2 3 B2 Dn D5 G1 कश्च (for कथ) — c) S1 K Dc Dn D1-3 5 नियो-

अयमर्थो न संवेद्यो भीमे मातः कथंचन ।
त्वत्संनिधौ समादेक्ष्ये सुदेवं द्विजसत्तमम् ॥ १४
यथा न नृपतिर्भीमः प्रतिपद्येत मे मतम् ।
तथा त्वया प्रयत्तव्यं मम चेत्प्रियमिच्छसि ॥ १५
यथा चाहं समानीता सुदेवेनाशु बान्धवान् ।
तेनैव मङ्गलेनाशु सुदेवो यातु माचिरम् ।
समानेतुं नलं मातरयोध्यां नगरीमितः ॥ १६
विश्रान्तं च ततः पश्चात्पर्णादं द्विजसत्तमम् ।
अर्चयामास वैदर्भी धनेनातीव भामिनी ॥ १७
नले चेहागते विप्र भूयो दास्यामि ते वसु ।
त्वया हि मे बहु कृतं यथा नान्यः करिष्यति ।
यद्भर्त्राहं समेष्यामि शीघ्रमेव द्विजोत्तम ॥ १८
एवमुक्तोऽर्चयित्वा तामाशीर्वादैः सुमङ्गलैः ।
गृहानुपययौ चापि कृतार्थः स महामनाः ॥ १९
ततश्चानाय्य तं विप्रं दमयन्ती युधिष्ठिर ।
अब्रवीत्संनिधौ मातुर्दुःखशोकसमन्विता ॥ २०
गत्वा सुदेव नगरीमयोध्यावासिनं नृपम् ।
ऋतुपर्णं वचो ब्रूहि पतिमन्यं चिकीर्षती ।
आस्थास्यति पुनर्भैमी दमयन्ती स्वयंवरम् ॥ २१
तत्र गच्छन्ति राजानो राजपुत्राश्च सर्वशः ।
यथा च गणितः कालः श्वोभूते स भविष्यति ॥ २२
यदि संभावनीयं ते गच्छ शीघ्रमरिंदम ।
सूर्योदये द्वितीयं सा भर्तारं वरयिष्यति ।
न हि स ज्ञायते वीरो नलो जीवन्मृतोऽपि वा ॥ २३
एवं तया यथोक्तं वै गत्वा राजानमब्रवीत् ।
ऋतुपर्णं महाराज सुदेवो ब्राह्मणस्तदा ॥ २४

इति श्रीमहाभारते आरण्यकपर्वणि अष्टषष्टितमोऽध्यायः ॥ ६८ ॥

---

क्ष्येह (Ś$_1$ °क्ष्येते), B D$_{4}$ $_{6}$ समा(D$_4$ मया)योक्ष्ये — $^{d}$) S$_1$ K Dc D$_{1-3}$ $_5$ सुदेव ब्राह्मण यथा (Ś$_1$ K$_1$ $_4$ D$_2$ तथा)

**15** $^{a}$) S$_1$ K$_{1-3}$ D$_2$ $_5$ च, D$_8$ (by corr ) T$_2$ G$_3$ स, G$_1$ M तु (for न) — $^{b}$) K$_3$ नैव तत्, K$_4$ D$_3$ मे मतिं, G$_1$ धर्मेत (for मे मतम्) — $^{c}$) Ś$_1$ K$_2$ B$_2$ Dn D$_{1-3}$ T$_1$ G$_1$ $_2$ $_4$ प्रकर्तव्य, K$_1$ Dc$_2$ D$_4$ °पत्तव्य, K$_3$ °मतव्य, K$_4$ B$_4$ T$_2$ G$_3$ M °वक्तव्य — $^{d}$) B$_3$ यदि मत् (for मम चेत्) B$_1$ D$_5$ S transp प्रिय and इच्छसि

**16** $^{a}$) B D$_4$ यथैवाह समा°, Dc$_2$ यथा त्वाह समा°; D$_3$ $_6$ यथाह सुसमा(D$_6$ ससुपा)नीता — $^{b}$) S [इ]ह (for [आ]शु) K$_2$ D$_5$ बधुवत् (for बान्ध°) — $^{c}$) S श्च (for [आ]शु) — $^{e}$) S$_1$ समायातु, K$_3$ समानीते, G$_2$ $_4$ M$_1$ तमा नेतु — $^{f}$) Dc T$_1$ G$_1$ अयोध्यानगरीमित (T$_1$ G$_1$ °रीं प्रति) — After 16, S ins

314* ऋतुपर्णस्य भवने निवसन्तमरिंदमम् ।

**17** $^{a}$) K$_2$ B Dn D$_4$ $_6$ तु (for च) — $^{c}$) Ś$_1$ K$_1$ $_3$ अतर्पयत (K$_3$ °च्च), K$_2$ Dc D$_1$ $_3$ $_5$ तर्पयामास — $^{d}$) K$_1$ भारत, K$_2$ B D (except Dn$_1$ D$_{1-3}$) भाविनी — After 17, S ins

315* उवाच चैन महता सपूज्य द्रविणेन वै ।

**18** $^{a}$) G$_3$ M$_2$ चैवा° (for चेहा°) B$_2$ ब्रह्मन्, Dn$_2$ तत्र (for विप्र) — $^{d}$) K$_2$ Dn D$_6$ यदन्यो न (for यथा नान्य ) — $^{e}$) K$_1$ (corrupt) यच्छच्च ह समे°

**19** $^{ab}$) S$_1$ G$_2$ उक्त्वा° (for उक्तो°) Ś$_1$ साशीर्वादै (sic) (for तामाशी°) K$_2$ Dn D$_2$ $_5$ स एवमुक्तोथा(D$_2$ °क्त्वा चा)श्वास्य (for $^{a}$) K$_1$ $_3$ B$_2$ Dc D$_1$ $_3$ $_4$ $_6$ T$_1$ M$_2$ समगलै°, D$_2$ तथाविध (for सुम°) — $^{c}$) K$_2$ $_4$ Dn$_1$ n$_2$ D$_5$ उपाययौ, B$_4$ Dc D$_1$ S अनु(G$_1$ अथ)ययौ — $^{d}$) S$_1$ स महामना, K$_{1-3}$ Dn D$_{4-6}$ सुमहा°, K$_4$ G$_1$ M$_1$ सु(G$_1$ तु)-महातपा, Dc D$_1$ स (D$_1$ सु-) महायशा

**20** $^{a}$) T G$_{2-4}$ M भूयश्च (for ततश्च) D$_4$ आनाय्य, T$_1$ चानीय (for चानाय्य) K$_2$ $_4$ Dc Dn D$_{1-3}$ $_5$ G$_1$ तत सुदेवमाभाष्य (K$_4$ °नामान, Dc D$_1$ $_3$ G$_1$ °मानाय्य)

**21** $^{b}$) S (except T$_1$ M$_2$) अयोध्या तत्र त नृप — $^{d}$) S चिकीर्षति (G$_1$ वरिष्यति) (for चिकीर्षती) Ś$_1$ K$_1$ सामात्य सपुरोहित, K$_2$ D$_5$ सपत्नमिव कामग, K$_3$ B Dc Dn D$_{1-4}$ $_6$ सपतत्रिव कामग (K$_3$ D$_3$ त ); K$_4$ इद द्विजवरोत्तम — $^{e}$) D$_2$ $_3$ (marg *sec m* ) करिष्यति (for आस्था°)

**22** $^{a}$) K$_3$ D$_1$ तत्रागच्छति — $^{c}$) K$_2$ Dn G$_1$ तथा च, M$_2$ याथावद् (for यथा च) K$_1$ यथा च गणिते काले, D$_3$ $_5$ यथावगणित काल — $^{d}$) B$_1$ स-, T$_2$ G$_{2-4}$ M$_2$ च (for स)

**23** Ś$_1$ K$_3$ D$_2$ om (hapl ) 23$^{abcd}$ — $^{a}$) K$_1$ $_4$ B$_3$ $_4$ Dc D$_1$ $_3$ $_5$ T G$_2$ $_3$ M यदि सभाव(*or* वि)नीयस्ते (T$_1$ M$_2$ या ते) — $^{d}$) B$_2$ वर वै (for भर्तार ) K$_1$ वरमेष्यति (for वरयि°) — $^{e}$) M transp न and स K$_1$ $_3$ B$_4$ D$_3$ T$_1$ स, K$_4$ D$_1$ वि (for स) — $^{f}$) B Dn D$_2$ $_4$ $_6$

# ६९

बृहदश्व उवाच ।
श्रुत्वा वचः सुदेवस्य ऋतुपर्णो नराधिपः ।
सान्त्वयञ्श्लक्ष्णया वाचा बाहुकं प्रत्यभाषत ॥ १
विदर्भान्यातुमिच्छामि दमयन्त्याः स्वयंवरम् ।
एकाह्ना हयतत्त्वज्ञ मन्यसे यदि बाहुक ॥ २
एवमुक्तस्य कौन्तेय तेन राज्ञा नलस्य ह ।
व्यदीर्यत मनो दुःखात्प्रदध्यौ च महामनाः ॥ ३
दमयन्ती भवेदेतत्कुर्याद्दुःखेन मोहिता ।
अस्मदर्थे भवेद्वायमुपायश्चिन्तितो महान् ॥ ४
नृशंसं बत वैदर्भी कर्तुकामा तपस्विनी ।
मया क्षुद्रेण निकृता पापेनाकृतबुद्धिना ॥ ५
स्त्रीस्वभावश्चलो लोके मम दोषश्च दारुणः ।
स्यादेवमपि कुर्यात्सा विवशा गतसौहृदा ।
मम शोकेन संविग्ना नैराश्यात्तनुमध्यमा ॥ ६
न चैवं कर्हिचित्कुर्यात्सापत्या च विशेषतः ।
यदत्र तथ्यं पथ्यं च गत्वा वेत्स्यामि निश्चयम् ।
ऋतुपर्णस्य वै काममात्मार्थं च करोम्यहम् ॥ ७
इति निश्चित्य मनसा बाहुको दीनमानसः ।

---

T3 (by corr ) G3 नलो जीवति वा न वा, D3 नलो जीवेन्म्रियेत वा

24 $^{c}$) K1 4 D1 तयोक्तं; K3 Dn D5 यथोक्तो; D2 नियुक्तो

Colophon om in D2 — *Major parvan* Ś1 K1 T G2–4 आरण्य — *Sub parvan* N (D2 om ) T1 (om sub parvan name ) mention only नलोपाख्यान — *Adhy name* B4 सुदेववाक्य — *Adhy no* (figures, words or both) Dn (Dn1 *sup lin* ) M2 (before corr ) 70, D1 74, T G M2 (after corr ) 68 (as in text), M1 69 — *Śloka no* Dn D1 27

## 69

1 $^{a}$) T2 G3 वाच — $^{b}$) B (as usual) ऋतपर्णो T1 G1 M3 जनाधिप — After 1$^{ab}$, T2 G2–4 ins
316* सारथीन्स समानीय वार्ष्णेयप्रभृतीन्नृप ।
कथयामास यद्वृत्तं ब्राह्मणेन श्रुतं तथा ।
बाहुकं च समाहूय दमयन्त्याः स्वयंवरम् ।

2 $^{a}$) K (except K1) B Dc Dn D2–6 विदर्भां (B1 वैदर्भीं) K3 B Dc Dn2 n3 D4 6 M2 गन्तुमिच्छामि — $^{c}$) K4 एकाह्ने, D1 2 एकाह्नात् — $^{d}$) K3 वक्ष्य (for मन्य )

3 $^{a}$) S1 K1 एवमुक्ते तु, B1 D3 6 क्तस्तु — $^{b}$) B2 4 Dc1 Dn3 D4 S च (for ह) — $^{c}$) B3 4 व्यदीर्यतेव हृदय — $^{d}$) K3 D5 प्रहृष्टश्च, T2 G3 4 स(G4 स )प्रदध्यौ (for प्रदध्यौ च) Ś1 महामति; K1 महीपति, K3 महाद्युति, T1 G1 M2 महायशा

4 $^{a}$) K1 2 Dn D4 6 वदेदेतत्, K4 न चैवेद, D1–3 कथ चैतत्, T2 G भवेदेव (G1 वचो नैतत्) (for भवेदेतत्) — $^{b}$) T2 G (except G1) किं तु (for कुर्याद्) — $^{c}$) G (except G3) M अस्मदर्थे — $^{d}$) B D4 6 उपाय परिचिंतित

5 $^{a}$) Ś1 सत्व, D3 कर्म, T1 G1 M सा तु (for बत) — $^{b}$) Ś1 K1 2 B1 3 4 Dn D4 6 T2 G3 भर्तृकामा K1 मनस्विनी, K3 Dc T1 G1 M यश — $^{c}$) Ś1 निहिता, K1 निहता (for निकृता) — $^{d}$) Ś1 K D (except D4 6) कृपणा पापबुद्धिना

6 $^{a}$) Ś1 K1 4 B3 T2 G3 स्त्रीस्वभावश्च चपल; K3 स्त्रीस्वभावाच्च [च]पला; T1 G1 3 4 M2 स्त्रीभावश्चपलो लोके. — $^{c}$) D3 एतद् (for एवम्) D2 स्यादेव नैव सा कुर्यात् — $^{d}$) K3 Dn1 n3 विवासाद्, D3 ममापि, D5 विवास- (for विवशा) K1 काममोहिता (for गत) — $^{e}$) T1 G1 M2 दोषेण (for शोकेन) K3 सतप्ता, K4 विवशा (for संविग्ना) — $^{f}$) Ś1 एकाह्नात् (for नैराश्यात्)

7 $^{a}$) Ś1 न मैव, K2 4 Dn D1–3 5 नैव सा; K3 S न सैव (G1 नस्त्वैन) (for न चैव) — $^{c}$) G1 transp तथ्य and पथ्य Ś1 K Dn D1 2 5 य(S1 K1 3 त)दत्र सत्य वासत्य, B D4 6 यदत्रातथ्य (B3 थ्या) तथ्य (B4 पथ्य) च, Dc सत्य यदत्रासत्य वा, D3 सत्य वा यदि वासत्य — $^{d}$) K5 निश्चित — $^{e}$) T2 G2–4 कार्यं यद् (for वै कामम्) — $^{f}$) K5 आत्मनश्च, Dc1 D4 6 आत्मार्थे च, T2 G3 ममार्थं च, G4 मदर्थं च

8 $^{a}$) D2 स वि (for इति) — $^{d}$) K2 Dn D5 जनाधिप; Dc नरेश्वर (for नरा )

29

कृताञ्जलिरुवाचेदमृतुपर्णं नराधिपम् ॥ ८
प्रतिजानामि ते सत्यं गमिष्यसि नराधिप ।
एकाह्ना पुरुषव्याघ्र विदर्भनगरीं नृप ॥ ९
ततः परीक्षामश्वानां चक्रे राजन्स बाहुकः ।
अश्वशालामुपागम्य भाङ्गस्वरिनृपाज्ञया ॥ १०
स त्वर्यमाणो बहुश ऋतुपर्णेन बाहुकः ।
अध्यगच्छत्कृशानश्वान्समर्थानध्वनि क्षमान् ॥ ११
तेजोबलसमायुक्तान्कुलशीलसमन्वितान् ।
वर्जिताल्लँक्षणैर्हीनैः पृथुप्रोथान्महाहनून् ।
शुद्धान्दशभिरावर्तैः सिन्धुजान्वातरंहसः ॥ १२
दृष्ट्वा तानब्रवीद्राजा किंचित्कोपसमन्वितः ।
किमिदं प्रार्थितं कर्तुं प्रलब्धव्या हि ते वयम् ॥ १३
कथमल्पबलप्राणा वक्ष्यन्तीमे हया मम ।
महानध्वा च तुरगैर्गन्तव्यः कथमीदृशैः ॥ १४

बाहुक उवाच ।

एते हया गमिष्यन्ति विदर्भान्नात्र संशयः ।
अथान्यान्मन्यसे राजन्ब्रूहि कान्योजयामि ते ॥ १५

ऋतुपर्ण उवाच ।

त्वमेव हयतत्त्वज्ञः कुशलश्चासि बाहुक ।
यान्मन्यसे समर्थांस्त्वं क्षिप्रं तानेव योजय ॥ १६

बृहदश्व उवाच ।

ततः सदश्वांश्चतुरः कुलशीलसमन्वितान् ।

---

**9** K1 om (hapl) 9$^{ab}$ — $^{a}$) Dc अभि° (for प्रति°) Ś1 K (K1 om) D (except D4 6) वाक्य (for सत्य) — $^{b}$) N (K1 om) गमिष्यामि — $^{c}$) K3 4 D1 2 एकाह्नात्, B D4 5 एकाहात् — $^{d}$) K3 4 D1 विदर्भा नगरीमित (K3 °रीं नृप), B1 3 4 D4 6 विदर्भनगर नृप, D2 विदर्भा नगराधिप; D3 विदर्भानगरीं त्वत°, T2 G2–4 M1 विदर्भनगर ध्रुव — After 9, D3 (marg sec m) ins

317* एवमुक्तोऽब्रवीद्राजा बाहुकं प्रहसंस्तदा ।
यद्येव भविता श्वो वै किं ते काम करोम्यहम् ।

**10** $^{b}$) D2 (by transp) राजश्चक्रे, S चक्रे राजा — D1 om (hapl) 10$^{c}$–11$^{b}$ — $^{c}$) G1 उपागत — $^{d}$) Ś1 भर्गश्वरि°, K1 भगस्वरि°, K2 Dn D3 4 6 T2 (before corr) G3 भागासुरि°, K3 4 D2 5 M भार्गस्वरि°; B1 3 4 भागसुरि°; Dc1 भागासुरि°, Dc2 भृगासुरि°, T1 G1 2 4 भागस्व- (G1 °स्क)रि°, text as in B2!

**11** D1 om 11$^{ab}$ (cf v l 10) — $^{a}$) S1 K1 3 D2 3 5 स वार्यमाणो, B4 M स त्वार्यं°, G1 सत्वर्यं° K4 बहुधा, Dc च भृशम् (for बहुश) — After 11$^{ab}$, K1 B D (except D1–3 5) ins

318* अश्वाञ्जिज्ञासमानो वै विचार्य च पुन पुन ।

— $^{c}$) D5 T1 M2 अभ्य , D5 अथा° (for अध्य°) — $^{d}$) K4 D1 2 सुवेगान् (for समर्थान्)

**12** K3 om 12$^{bc}$ — $^{b}$) =17$^{b}$ D2 °समायुतान्, M1 °जवान्वितान् — $^{d}$) K4 पृथुनासान्, D3 °घोणान्; D5 °श्रेष्ठान् D2 महानूजून्, D5 महाबलान् — $^{e}$) Dc देशान्, S शुभान् (for शुद्धान्) — After 11, S ins

319* दृश्यमानान्कृशानङ्गैर्जवेनाप्रतिमान्पथि ।
[M कृशैर् (for कृशान्) T1 भुवि (for पथि)]

**13** $^{ab}$) T2 G2–4 तान्दृष्ट्वा दुर्बलान्राजा (G4 °लानश्वान्) प्राह कोप° — $^{c}$) K4 D1 2 कर्म (for कर्तुं) — $^{d}$) K2 B Dn D4 6 T2 G2–4 न (for हि) Dc corrupt

**14** $^{b}$) S1 K1 3 वहिष्यति, K2 D1 2 T2 G2–4 वहतीमे; D3 वास्यतीमे S (except T1) रथ (for मम) Cf 22$^{b}$ — $^{c}$) K2 B Dc Dn D4 6 महदध्वानमपि च, D3 5 महानध्वायमपि च, T1 G1 M1 महान्तमपि चाध्वान, T2 G2–4 M2 महानध्वा स चैकाह्ना — $^{d}$) K2 B Dn D3–4 6 T1 M गतव्य, G1 गताह

**15** After the ref, K2 B4 Dn D6 ins

320* एको ललाटे द्वौ मूर्ध्नि द्वौ द्वौ पार्श्वोपपार्श्वयो ।
द्वौ द्वौ वक्षसि विज्ञेयौ प्रयाणे चैक एव तु ।

[This, being the *rahasya*, should not have been divulged here! ❀ Cn एको ललाटे इति श्लोक क्वचित्र दृश्यते । ❀]

— $^{a}$) B2 वै तान् (for हया) — $^{b}$) Ś1 K2 3 B1 Dc D1 2 विदर्भा नात्र — $^{c}$) K2 B Dn D4 6 यान् (for अथ) T2 G (except G1) अथान्यान्ब्रूहि राजेन्द्र — $^{d}$) K3 कान्, T2 G (except G1) हयान् (for ब्रूहि) K2 B Dn D2 4–6 G1 M2 तान्, K3 अन्यान् (for कान्) Ś1 K1 D1 योजयाम्यह, D2 योजये हयान् — After 15, D3 (erroneously) ins an addl colophon

**16** T1 G4 राजा (for ऋतु उ°) — $^{b}$) K2 B Dn D4 6 कुशलो ह्यसि — $^{c}$) G1 समर्थाश्वान् (for समर्थांस्त्व) — $^{d}$) D2 तान्विनि- (for तानेव)

**17** All MSS om the ref! — $^{b}$) = 12$^{b}$ M1 °जवान्वितान् — $^{c}$) K4 स नलो (for कुशलो) — $^{d}$) K4 रथे तत , D2 नलो रथे (by transp), D3 तथा नल , T2

योजयामास कुशलो जवयुक्तान्रथे नलः ॥ १७
ततो युक्तं रथं राजा समारोहत्त्वरान्वितः ।
अथ पर्यपतन्भूमौ जानुभिस्ते हयोत्तमाः ॥ १८
ततो नरवरः श्रीमान्नलो राजा विशां पते ।
सान्त्वयामास तानश्वांस्तेजोबलसमन्वितान् ॥ १९
रश्मिभिश्च समुद्यम्य नलो यातुमियेष सः ।
सूतमारोप्य वार्ष्णेयं जवमास्थाय वै परम् ॥ २०
ते चोद्यमाना विधिना बाहुकेन हयोत्तमाः ।
समुत्पेतुरिवाकाशं रथिनं मोहयन्निव ॥ २१
तथा तु दृष्ट्वा तानश्वान्वहतो वातरंहसः ।
अयोध्याधिपतिर्धीमान्विस्मयं परमं ययौ ॥ २२
रथघोषं तु तं श्रुत्वा हयसंग्रहणं च तत् ।
वार्ष्णेयश्चिन्तयामास बाहुकस्य हयज्ञताम् ॥ २३
किं नु स्यान्मातलिरयं देवराजस्य सारथिः ।
तथा हि लक्षणं वीरे बाहुके दृश्यते महत् ॥ २४
शालिहोत्रोऽथ किं नु स्याद्धयानां कुलतत्त्ववित् ।
मानुषं समनुप्राप्तो वपुः परमशोभनम् ॥ २५
उताहो स्विद्भवेद्राजा नलः परपुरंजयः ।
सोऽयं नृपतिरायात इत्येवं समचिन्तयत् ॥ २६
अथ वा यां नलो वेद विद्यां तामेव बाहुकः ।
तुल्यं हि लक्षये ज्ञानं बाहुकस्य नलस्य च ॥ २७
अपि चेदं वयस्तुल्यमस्य मन्ये नलस्य च ।
नायं नलो महावीर्यस्तद्विद्यस्तु भविष्यति ॥ २८
प्रच्छन्ना हि महात्मानश्चरन्ति पृथिवीमिमाम् ।
दैवेन विधिना युक्ताः शास्त्रोक्तैश्च विरूपणैः ॥ २९
भवेत्तु मतिभेदो मे गात्रवैरूप्यतां प्रति ।

---

G2-4 रथोत्तमे, M2 रथेन तु

18 a) T2 G2-4 सन्नद्धस्तु, M1 तथा युक्त (for ततो युक्तं)

19 a) T2 G2-4 प्रीतो (for श्रीमान्)

20 a) D1 तस्मिन्रथे, D2 रश्मिभिस्तु — b) Dc गतुम् (for यातुम्) D2 नलो याति सुवेगत, T2 G2-4 नलो गतु प्रचक्रमे — d) Ś1 नैषध, K1 नैषध° (for वै परम्)

21 a) K3 4 Dn1 D1 2 ते नोद्यमाना K3 4 D (except D3 4 6) विधिवद्, T1 G1 M1 बहुधा — c) N अथा° (for इवा ) — d) Dc (? erroneous gloss) बाहुक (for रथिनं) D2 S (except M1) मोहयति च

22 a) K1 B1 2 4 Dc D6 T1 (by transp ) दृष्ट्वा तु, K4 D1 2 च दृष्ट्वा B3 दृष्ट्वा तथा तु ता — b) B1 2 4 Dc वहवो; Dn3 D3 4 वहतो, T1 व्रजतो (for वहतो) Ś1 K3 4 D1 2 मनोमारुतरहस — c) Ś1 K Dn D6 T2 G1 3 4 श्रीमान् (for धीमान्) — d) G1 गत (for ययौ)

23 a) K3 4 Dc D1 2 T2 G2-4 च (for तु) T2 G2-4 तत् (for त) K2 3 D5 दृष्ट्वा (for श्रुत्वा) — b) T1 G1 M1 हयाना ग्रहण K1 च त, Dc Dn2 च यत्

24 a) K1 श्चेष (for अय) — c) K2 B Dc Dn D4 6 तल्ल् (for हि)

25 a) K3 तु, K4 T G1-3 [ऽ]पि; D1-3 M1 हि (for ऽथ) — c) B Dc D1 2 मानुष्य B1 अनुसप्राप्तो, T1 G1 परम प्राप्तो (for समनु ) — d) D3 परमगर्हित, D5 °दु खित (for परमशोभनम्=परम्+अशोभनम् Commonly, though erroneously, taken as a compound परम + शोभनम्!)

26 ab) D1 रथे, G1 नलो (for भवेद्) G1 भवेत् (for नल°) — c) K1 अय (for सोऽय) — d) K2 Dn D5 अनु (for सम°)

27 a) Ś1 K3 D1 अथ वाय, K2 Dn (Dn3 m as in text) D5 अथ चेह (for अथ वा या) Ś1 K Dn (Dn3 m as in text) D1-3 5 विद्या (for वेद) Dc अथ वा नलतु ल्योय, T G अथ वाय नलाश्रात (T1 G1 द्वेद) — b) Ś1 K1-3 Dn (Dn3 m as in text) D5 वेत्ति; D2 विद्यात्, D3 विद्यात् (for विद्या) K3 तामेष, Dc वेत्ति च (for तामेव) G1 विद्यामेव स वा°

28 S1 K1 D1 2 G2 om (hapl ) 28ab — a) K3 चेय, B Dc D4 6 चापि, T2 G3 4 M1 चाद्य (for चेदं) — b) K2 4 Dn D3 5 बाहुकस्य, T2 G1 3 अद्य (G1 स्ति) मन्ये (for अस्य मन्ये) — c) K4 यथा (for नाय) S1 K1 3 स्वतोनेन नल (Ś1 लो) मन्ये — d) K2 B3 Dn D5 च (for तु)

29 b) Ś1 K1 3 वसुधातले, T2 G3 4 वसुधामिमा (for पृथिवी ) — K1 om 29c-30d — d) T2 G2-4 सयुक्ताश्च Ś1 D2 3 विभूषणै ; K2 Dn D1 5 निरूपणै ; T1 M1 विरूपिता°; G1 निरूपित°, M2 विरूपकै° B Dc D4 6 प्रच्छन्नाश्चापि रूपत°

प्रमाणात्परिहीनस्तु भवेदिति हि मे मतिः ॥ ३०
वयःप्रमाणं तत्तुल्यं रूपेण तु विपर्ययः ।
नलं सर्वगुणैर्युक्तं मन्ये बाहुकमन्ततः ॥ ३१
एवं विचार्य बहुशो वार्ष्णेयः पर्यचिन्तयत् ।
हृदयेन महाराज पुण्यश्लोकस्य सारथिः ॥ ३२
ऋतुपर्णस्तु राजेन्द्र बाहुकस्य हयज्ञताम् ।
चिन्तयन्मुमुदे राजा सहवार्ष्णेयसारथिः ॥ ३३
बलं वीर्यं तथोत्साहं हयसंग्रहणं च तत् ।
परं यत्नं च संप्रेक्ष्य परां मुदमवाप ह ॥ ३४

इति श्रीमहाभारते आरण्यकपर्वणि एकोनसप्ततितमोऽध्यायः ॥ ६९ ॥

# ७०

बृहदश्व उवाच ।
स नदीः पर्वतांश्चैव वनानि च सरांसि च ।
अचिरेणातिचक्राम खेचरः खे चरन्निव ॥ १
तथा प्रयाते तु रथे तदा भाङ्गस्वरिर्नृपः ।
उत्तरीयमथापश्यद्भ्रष्टं परपुरंजयः ॥ २
ततः स त्वरमाणस्तु पटे निपतिते तदा ।
ग्रहीष्यामीति तं राजा नलमाह महामनाः ॥ ३
निगृह्णीष्व महाबुद्धे हयानेतान्महाजवान् ।

**30** K1 om 30 (cf v l 29) — a) D2 न वेत्तु (for भवेत्तु) K3 B4 Dn D5 न, B1 स्व· (for तु) — b) Dc D1 गात्रवैषम्यता, T1 G1 चि( G गा )त्रवैरूप्यक — c) D5 प्रमाणतस्तत्प्रमाण, T2 G2-4 M1 प्रमाणपरिहीन( M1 °ण )स्तु — d) D3 न भवेत्तु (for भवेदिति) N (except Ś1 K3, K1 om) मतिर्मम (for हि मे मति°)

**32** a) Dc D4 6 बहुधा (for °शो) T2 G2-4 इत्येव बहुशो धीमान् — b) Ś1 T1 परिचिंतयत्, K3 Dn1 n2 D5 6 T2 G3 M1 पर्य(Dn2 °रि ; D5 °धि)चिंतयन्, B1 3 4 Dc प्रत्यचिंतयत्, D1 सम° ; D2 त्वस्य° — d) K1 धीमत· (for सारथि)

**33** S1 K4 M1 om (hapl) 33 — a) K1 D2 T2 G2-4 ऋतुपर्णस्य, K3 Dn D3 5 °श्च K1 2 Dn D1-3 5 T2 G2-4 राजेंद्रो, B2 राजर्षिर्, T1 G1 M2 हृष्टैव — c) S (M1 om) वीर (for राजा)

**34** a) K2 Dn D5 ऐकाग्र्य च, T1 G1 M2 बल शौर्य K2 Dn2 D5 यथोत्साह, K3 M1 अथो° — b) K3 D5 T2 G2-4 °सग्रहणे Dc Dn2 n3 D2 च यत्, T2 G2-4 तथा — c) Dc पर प्रयत्न स°, T2 G2-4 कौशल चापि स° — d) Ś1 G4 च, T1 G1 2 M2 स· (for ह)

Colophon om in D2 — *Major parvan* Ś1 K1 T G2-4 आरण्य — *Sub parvan* N (except B4, D2 om) T1 M1 (all om sub-parvan name) mention only नलोपाख्यान — *Adhy name* B4 ऋतुपर्णप्रयाण — *Adhy no* (figures, words or both) Dn (Dn1 *sup lin*) M2 (before corr) 71, D1 75, T G M2 69 (as in text), M1 70 — *Śloka no* Dn 36, D1 34

## 70

**1** b) M1 वनान्युपवनानि च — c) K4 (before corr) Dc1 T2 (before corr) G3 4 अभि (for अति) — d) K1 D1-3 M खचर, K4 विचरन्, T2 G1 3 स्वदन·

**2** a) Ś1 नृपे (for रथे) — b) =6b K4 D3 6 S तथा (for तदा) K3 4 D2 भार्गस्वरि, B Dc1 Dn D3 4 6 T2 (after corr) G3 भागा( B1 °ग, B3 4 °ग· ; D3 °गि )सुरि°, Dc2 भृगासुरि, D1 5 M1 भार्गस्वरि ; T1 2 (before corr) G1 2 4 भागस्व( G1 °स्क )रि°, M2 भार्ङ्गस्वरि° Ś1 भार्गश्वरितो नृप, K1 भगस्वरिरथो नृप°, K2 सुरथेन महाजना° — K2 om 2c-3d — c) B1 2 अथो, B4 Dn1 n3 D4 6 T2 (after corr) G3 अथो° ; T1 तथा°, T2 (before corr) G2 4 तदा (for अथा°)

**3** K2 om 3 (cf v l 2) — b) K4 D1 नृप, D5 तथा (for तदा) — c) Ś1 K3 च (for [इ]ति) — d) D2 प्राह (for आह)

**4** a) D2 महाबाहो (for °बुद्धे) — b) T2 G2-4 M1 मनो° (for महा°) — c) S1 K1-3 Dn1 D1 3 5 G1 एन, B3 4 Dc T G2-4 M1 एतन् (for एत) D5 वै (for मे) D2 वार्ष्णेय त्वब्रवीद्राजा — d) D2 3 T1 G1 आ( D2 चा )

ततो गच्छेत धर्मज्ञ रुद्रकोटिं समाहितः ।
पुरा यत्र महाराज ऋषिकोटिः समाहिता ।
प्रहर्षेण च संविष्टा देवदर्शनकाङ्क्षया ॥ १२४
अहं पूर्वमहं पूर्वं द्रक्ष्यामि वृषभध्वजम् ।
एवं संप्रस्थिता राजन्नृषयः किल भारत ॥ १२५
ततो योगेश्वरेणापि योगमास्थाय भूपते ।
तेषां मन्युप्रणाशार्थमृषीणां भावितात्मनाम् ॥ १२६
सृष्टा कोटिस्तु रुद्राणामृषीणामग्रतः स्थिता ।
मया पूर्वतरं दृष्ट इति ते मेनिरे पृथक् ॥ १२७
तेषां तुष्टो महादेव ऋषीणामुग्रतेजसाम् ।
भक्त्या परमया राजन्वरं तेषां प्रदिष्टवान् ।
अद्य प्रभृति युष्माकं धर्मवृद्धिर्भविष्यति ॥ १२८
तत्र स्नात्वा नरव्याघ्र रुद्रकोट्यां नरः शुचिः ।
अश्वमेधमवाप्नोति कुलं चैव समुद्धरेत् ॥ १२९
ततो गच्छेत राजेन्द्र संगमं लोकविश्रुतम् ।
सरस्वत्या महापुण्यमुपासन्ते जनार्दनम् ॥ १३०
यत्र ब्रह्मादयो देवा ऋषयः सिद्धचारणाः ।
अभिगच्छन्ति राजेन्द्र चैत्रशुक्लचतुर्दशीम् ॥ १३१
तत्र स्नात्वा नरव्याघ्र विन्देद्बहु सुवर्णकम् ।
सर्वपापविशुद्धात्मा ब्रह्मलोकं च गच्छति ॥ १३२
ऋषीणां यत्र सत्राणि समाप्तानि नराधिप ।
सत्रावसानमासाद्य गोसहस्रफलं लभेत् ॥ १३३

इति श्रीमहाभारते आरण्यकपर्वणि अशीतितमोऽध्यायः ॥ ८० ॥

---

$T_2$ $G_1$ $_3$ °गता°, $G_2$ °गत° $T_1$ (corrupt) ऋषिकोससमागता° — [c]) $Ś_1$ K ($K_3$ missing) $B_1$ Dn $D_3$ हर्षेण महता विष्टा, $B_{2-4}$ Dc $D_4$ $_6$ हर्षेण च समावि , $D_1$ $_2$ हर्षेण महता तिष्ठे($D_2$ °ष्ठ)द्, $M_1$ हर्षेण महता युक्ता — [f]) $K_3$ Dc Dn रुद्र (for देव°)

**125** [a]) $T_1$ अह पूर्वं समासाद्य — [b]) $Ś_1$ $K_1$ प्रेक्षामि (for द्रक्ष्यामि) S (except $T_1$ $G_1$ $M_2$) द्रक्ष्यामीति वृषध्वज

**126** $K_1$ om 126 — [c]) $K_3$ Dn $D_8$ $G_4$ योगी (for योगे )

**127** [a]) $Ś_1$ सृष्ट्वा; $T_2$ $G_1$ $_3$ दृष्टा (for सृष्टा) $K_3$ Dn $D_8$ कोटीति; $K_4$ Dc $D_1$ $_2$ कोटी तु, $D_4$ $_6$ तु कोटी (for कोटिस्तु) B सृष्टा तु कोटिरुद्राणा ($B_3$ रुद्रकोटीणा) — [b]) $Ś_1$ $K_1$ $_4$ $T_2$ $G_3$ स्थिता° (for स्थिता) — [c]) $K_2$ पूर्वं नर, $G_4$ पूर्वंमय $Ś_1$ $K_1$ $B_3$ दृष्ट, $D_2$ $_5$ दृष्टा (for दृष्ट°)

**128** [a]) $K_4$ $D_1$ $_2$ एव (for तेषा) $T_1$ $G_1$ $M_2$ दृष्टो (for तुष्टो) $Ś_1$ $K_2$ Dn $D_8$ महादेव° — [b]) $Ś_1$ Dn $D_8$ मुनीना (for ऋषीणाम्) $Ś_1$ $K_1$ $_4$ Dn $D_1$ $_2$ $_5$ भाविता त्मना (cf 126[d]) — [f]) $Ś_1$ धर्मबुद्धिर्, $B_2$ $D_4$ $_6$ धर्मे बुद्धिर्.

**129** $K_4$ om (hapl) 129[b]–132[a], $K_1$ om 129[c]–131[b]

**130** $K_1$ $_4$ om 130 (cf v l 129) — [a]) $Ś_1$ सरस्वतीं; $B_1$ Dc $D_2$ S त्या $S_1$ महापुण्याम्; $G_1$ °राज — [d]) $B_1$ $_2$ उपासते, $D_3$ उपासीत $K_2$ Dn $D_1$ $_2$ $_5$ केशव समुपासते, $M_1$ जनार्दनमुपासते

**131** $K_4$ om 131, $K_1$ om 131[ab] (cf v l 129) — [b]) $K_2$ Dn ऋषयश्च तपोधना° — [d]) $B_2$ $D_4$ चैत्रे (for चैत्र ) $S_1$ $K_1$ $G_2$ चैत्र ($S_1$ चैत्र ) शुक्लत्रयोदशीं

**132** $K_4$ om 132[a] (cf v l 129) — [b]) $S_1$ लभेद् (for विन्देद्) — [d]) $D_4$ $_6$ शक्रलोक (for ब्रह्म°) $D_1$ $_2$ $T_1$ $G_1$ M स गच्छति; $T_2$ $G_{2-4}$ गमिष्यति $Ś_1$ $K_1$ ब्रह्मलोके महीयते ($K_1$ °त्ति)

**133** [b]) $K_1$ समस्तानि (for समा°) T G समवाप्नोति मानव° — [c]) $Ś_1$ $K_1$ $_2$ Dn $D_8$ $T_1$ $M_2$ तत्रावसानम्, $T_2$ G तत्र च स्नानम्

Colophon $K_3$ missing — *Major parvan* $Ś_1$ $K_1$ $Dn_2$ T $G_{2-4}$ $M_1$ आरण्य — *Sub parvan* $Dn_3$ $T_1$ तीर्थयात्रा $Ś_1$ $K_1$ $_2$ B Dc $Dn_1$ $n_2$ $D_1$ $_2$ $_{4-6}$ $T_2$ $G_{1-3}$ (all om sub parvan name) mention only पुलस्त्यतीर्थयात्रा, $K_4$ $D_3$, likewise, only पुलस्त्ययात्रा — *Adhy no* (figures, words or both) $Dn_1$ $n_2$ 82, $Dn_3$ $M_2$ (before corr ) 83, $D_1$ 86, S ($M_2$ after corr ) 81 — *Śloka no* $Dn_1$ $n_2$ 28, $Dn_3$ 29, $D_1$ 145

# 81

☞ 1–127[ab] is missing in $K_3$ (cf v l 3 79 1), the MS is mostly ignored here up to the end of the lacuna

**1** [a]) $M_1$ पापानि (for पापेभ्यो) $K_1$ $_2$ Dn यत्र मुच्यते ;

## ८१

पुलस्त्य उवाच ।

ततो गच्छेत राजेन्द्र कुरुक्षेत्रमभिष्टुतम् ।
पापेभ्यो विप्रमुच्यन्ते तद्गताः सर्वजन्तवः ॥ १
कुरुक्षेत्रं गमिष्यामि कुरुक्षेत्रे वसाम्यहम् ।
य एवं सततं ब्रूयात्सोऽपि पापैः प्रमुच्यते ॥ २
तत्र मासं वसेद्वीर सरस्वत्यां युधिष्ठिर ।
यत्र ब्रह्मादयो देवा ऋषयः सिद्धचारणाः ॥ ३
गन्धर्वाप्सरसो यक्षाः पन्नगाश्च महीपते ।
ब्रह्मक्षेत्रं महापुण्यमभिगच्छन्ति भारत ॥ ४
मनसाप्यभिकामस्य कुरुक्षेत्रं युधिष्ठिर ।
पापानि विप्रणश्यन्ति ब्रह्मलोकं च गच्छति ॥ ५
गत्वा हि श्रद्धया युक्तः कुरुक्षेत्रं कुरूद्वह ।
राजसूयाश्वमेधाभ्यां फलं प्राप्नोति मानवः ॥ ६
ततो मचक्रुकं राजन्द्वारपालं महाबलम् ।
यक्षं समभिवाद्यैव गोसहस्रफलं लभेत् ॥ ७
ततो गच्छेत धर्मज्ञ विष्णोः स्थानमनुत्तमम् ।
सततं नाम राजेन्द्र यत्र संनिहितो हरिः ॥ ८
तत्र स्नात्वार्चयित्वा च त्रिलोकप्रभवं हरिम् ।
अश्वमेधमवाप्नोति विष्णुलोकं च गच्छति ॥ ९
ततः पारिप्लवं गच्छेत्तीर्थं त्रैलोक्यविश्रुतम् ।
अग्निष्टोमातिरात्राभ्यां फलं प्राप्नोति मानवः ॥ १०
पृथिव्यास्तीर्थमासाद्य गोसहस्रफलं लभेत् ।
ततः शालूकिनीं गत्वा तीर्थसेवी नराधिप ।
दशाश्वमेधिके स्नात्वा तदेव लभते फलम् ॥ ११

---

$M_1$ यत्र नश्यति (for विप्रमु°) — $^{d}$) $K_2$ Dn दर्शनात्, $T_1$ तद्गत्वा (for तद्गता°) $K_1$ स्नानमात्रेण सर्वश , $M_2$ प्रविष्ट स्यैव भारत

**2** $^{a}$) $D_{1\,2}$ $G_1$ °क्षेत्रे — $^{d}$) $Ś_1$ $D_1$ $K_{1\,2}$ सोपि पापात्, $K_3$ $B_{2\,4}$ Dn सर्वपापै , $K_4$ सर्वपापात् $B_3$ विमुच्यते — After 2, $K_4$ Dn $D_{1\,2}$ ins

389* पासवोऽपि कुरुक्षेत्रे वायुना समुदीरिता ।
अपि दुष्कृतकर्माण नयन्ति परमा गतिम् ।
दक्षिणेन सरस्वत्या दृषद्वत्युत्तरेण च ।
ये वसन्ति कुरुक्षेत्रे ते वसन्ति त्रिविष्टपे ।
[Lines 3–4 = (var ) 175 ]

**3** $^{a}$) $Ś_1$ K ($K_3$ missing) $D_5$ वै स , $D_1$ वास (for मास) $B_2$ $D_{4\,6}$ S (except $T_1$ $G_1$ $M_2$) धीर (for वीर) — $^{b}$) $B_2$ जनेश्वर, $D_6$ $M_1$ नराधिप; T G $M_2$ युधा वर (for युधि°) — $D_2$ om $3^{c}$–$4^{b}$ — $^{c}$) $K_{1\,2}$ $D_5$ तत्र (for यत्र) — $^{d}$) $K_1$ सिद्धा (sic) चारणतापसा , B $D_{4\,6}$ यत्र सिद्धर्षिचारणा°

**4** $D_2$ om $4^{ab}$ (of v l 3) — $^{a}$) $M_2$ चैव (for यक्षा°) — $^{c}$) $T_1$ ब्रह्मक्षेत्रे $Ś_1$ $K_1$ महत्पुण्यम्

**5** $^{a}$) = 3 80 $45^{a}$ $T_1$ मनागप्यभिकामस्य; $T_2$ $G_3$ मनसा गतु°, $G_{1\,2\,4}$ मनसा मुक्ति° — $^{b}$) S (except $M_1$) युधा वर (for युधि°) — $Ś_1$ om $5^{c}$–$6^{b}$ — $^{d}$) Dc S स्वर्गे लोक, $D_{1\,2}$ स्वर्गलोके $D_1$ महीयते, S स गच्छति

**6** $Ś_1$ om $6^{ab}$ (of v l. 5) — $^{cd}$) $Ś_1$ K ($K_3$ missing) D (except $D_{3\,4\,6}$) फल प्राप्नोति च तदा ($K_1$ नर°, $K_4$ $D_{1\,2}$ तथा) राजसूयाश्वमेधयो°

**7** $^{a}$) $Ś_1$ मदाक्रुक, $K_1$ मदक्रुक , $K_2$ अक्रुणक; $K_4$ मचकुण; $B_2$ मरुतक, $B_4$ मवक्रक (m अरणक), Dc $D_4$ मचकुक; Dn मकु($Dn_1$ °क)णक; $D_1$ मस्कुणक, $D_2$ मकुणक, $D_5$ व ब्हुक (sic), $T_2$ $G_3$ स्यमतक, $G_2$ चमन्तुक, $G_4$ तुमन्तुक; $M_1$ मचन्तुक, $M_2$ चमदुक (for मचक्रुक) — $Ś_1$ K ($K_3$ missing) Dn $D_5$ नाम (for राजन्) $D_3$ ततोर्ध्वचक्रक राजन्

**8** $^{b}$) $Ś_1$ $K_1$ T $G_{3\,4}$ विष्णुस्थानम् $Ś_1$ $K_1$ अरिंदम

**9** $^{a}$) $Ś_1$ $D_1$ च गत्वा, $K_{1\,2}$ च नत्वा, $K_4$ $D_{2\,3}$ [अ]भिगम्य, B Dc $D_{4\,6}$ च दृष्ट्वा (for [अ]र्चयित्वा) $K_4$ $D_3$ [अ]थ, $D_2$ [अ]पि (for च) — $^{b}$) $K_{1\,4}$ $D_{1\,2}$ त्रैलोक्य° (for त्रिलोक°) — $^{d}$) Dc $D_1$ T G स (for च)

**10** $^{a}$) $K_4$ $D_{1\,2}$ S (except $T_1$ $M_1$) परिप्लव — $^{d}$) $D_1$ S (except $T_1$ $M_1$) आप्नोति, $D_6$ चा° (for प्रा°) $K_3$ Dn $D_5$ भारत (for मानव°)

**11** $^{a}$) $Ś_1$ K ($K_3$ missing) Dn $D_{1\,2\,5}$ $G_2$ पृथिवी , $T_1$ $M_1$ °व्या (for °व्यास्) $B_{1\,4}$ आगम्य (for आसाद्य) — $^{b}$) $G_{1\,2\,4}$ $M_2$ गोसहस्रमवाप्नुयात् — $^{c}$) $T_2$ $G_3$ शल्मलिक, $G_2$ शलूलिक, $M_2$ शाकलिनीं — $^{e}$) $K_{3\,4}$ Dn $D_{1\,2\,5}$ दशाश्वमेधे स्नात्वा च, $G_{1\,4}$ °मेधके स्नात्वा — $^{f}$)

सर्पदर्वीं समासाद्य नागानां तीर्थमुत्तमम् ।
अग्निष्टोममवाप्नोति नागलोकं च विन्दति ॥ १२
ततो गच्छेत धर्मज्ञ द्वारपालं तरन्तुकम् ।
तत्रोष्य रजनीमेकां गोसहस्रफलं लभेत् ॥ १३
ततः पञ्चनदं गत्वा नियतो नियताशनः ।
कोटितीर्थमुपस्पृश्य हयमेधफलं लभेत् ।
अश्विनोस्तीर्थमासाद्य रूपवानभिजायते ॥ १४
ततो गच्छेत धर्मज्ञ वाराहं तीर्थमुत्तमम् ।
विष्णुर्वाराहरूपेण पूर्वं यत्र स्थितोऽभवत् ।
तत्र स्नात्वा नरव्याघ्र अग्निष्टोमफलं लभेत् ॥ १५
ततो जयन्त्या राजेन्द्र सोमतीर्थं समाविशेत् ।
स्नात्वा फलमवाप्नोति राजसूयस्य मानवः ।
एकहंसे नरः स्नात्वा गोसहस्रफलं लभेत् ॥ १६
कृतशौचं समासाद्य तीर्थसेवी कुरूद्वह ।
पुण्डरीकमवाप्नोति कृतशौचो भवेन्नरः ॥ १७
ततो मुञ्जवटं नाम महादेवस्य धीमतः ।
तत्रोष्य रजनीमेकां गाणपत्यमवाप्नुयात् ॥ १८
तत्रैव च महाराज यक्षी लोकपरिश्रुता ।
तां चाभिगम्य राजेन्द्र पुण्याँल्लोकानवाप्नुयात् ॥१९
कुरुक्षेत्रस्य तद्द्वारं विश्रुतं भरतर्षभ ।
प्रदक्षिणमुपावृत्य तीर्थसेवी समाहितः ॥ २०
संमिते पुष्कराणां च स्नात्वार्च्य पितृदेवताः ।
जामदग्न्येन रामेण आहृते वै महात्मना ।
कृतकृत्यो भवेद्राजन्नश्वमेधं च विन्दति ॥ २१
ततो रामह्रदान्गच्छेत्तीर्थसेवी नराधिप ।
यत्र रामेण राजेन्द्र तरसा दीप्ततेजसा ।
क्षत्रमुत्साद्य वीर्येण ह्रदाः पञ्च निवेशिताः ॥ २२
पूरयित्वा नरव्याघ्र रुधिरेणेति नः श्रुतम् ।

---

Dn D5 तदेव फलमाप्नुयात्

**12** D3 om 12[c]–14[d] — [a]) Ś1 सर्पिदर्शीं; K2 Dn D1 5 सर्पदेवीं, B1 सर्पिदार्वीं, B2 सार्पदीर्वीं, B3 सर्पि दर्वीं, B4 सर्पिदेवीं; Dc सर्पिदघ्ना, D4 6 सर्पग्रीवीं — [d]) T2 G3 4 स (for च) B Dc2 T2 G3 गच्छति (for विन्दति)

**13** D3 om 13 (cf. v l 12) G1 damaged — [b]) K1 तरन्नुक, K4 D4 तुरङ्गुक, B1 2 अनतक, B4 अवसक, Dc वमतक, D5 तरइक, T G2 3 अरुन्तुक; G1 M2 अरन्तुक, G4 अरिंतुद; M1 अरिंदुक (for तरन्तुकम्)

**14** D3 om 14[abcd] (cf v l. 12) — [a]) T1 G1 पचवटीं; M °वट — [c]) Dc D4 om आगम्य (for आसाद्य)

**15** M2 om 15–16 — [c]) Ś1 B4 Dc D1–3 वराह° (for वाराह ) — [d]) M1 transp पूर्वं and यत्र B (except B1) D3 4 6 पुरा (for पूर्वं) S विभु° (G4 भुवि) (for ऽभवत्) — [e]) D3 (*sup lin* as in text) यत्र (for तत्र) K2 4 Dc Dn D5 नरश्रेष्ठ

**16** T1 G1 4 M2 om 16 (for M2 cf v l 15) — [b]) T2 G3 अनुमजेत्, G2 समामजेत् (for °विशेत्) — [c]) K4 स्नात्वा च फलमाप्नोति — [d]) D1 भारत (for मानव ) — [e]) D5 एकाह च; T2 G3 एकाह्नेन (for एकहंसे)

**17** [b]) K1 2 Dn D5 नराधिप (for कुरू ) — [c]) S पौंडरीकम् — [d]) Ś1 Dc तु स , K (K3 missing) Dn D1–3 G1 च स ; B1 सदा; B2 4 D4 6 स च (for नर°)

**18** [a]) B3 4 D4 6 T2 G3 मु(B3 म)जावट — [b]) K2 4 Dc Dn D5 स्थाणो स्थान (K4 Dc by transp स्थान स्थाणोर्) महात्मन — [c]) K2 Dn D5 उपोष्य (for तत्रोष्य)

**19** M2 om 19 — [b]) K1 D3 यक्षिणीं लोकविश्रुता, K2 D1 2 यक्षिणी °विश्रुता, B2 3 D4 6 यक्षीं °परिश्रुता — [c]) Ś1 K1 2 B Dn D3–6 स्नात्वा (for तां चा°) D1 2 तत्र स्नात्वाभिगत्वा च — [d]) Ś1 D1–4 6 सर्वकामान्, K (K3 missing) B Dn D5 सर्वान्कामान्, Dc सर्वकामम्; T1 पुण्यलोकम्; M1 सर्वेलोकान्

**20** [d]) S1 K1 D1 2 M1 नराधिप (for समा°)

**21** [a]) B3 समिता, Dn °त (!) (for °ते) B D3 4 6 तु (for च) — [d]) Ś1 K1 आहृतानि, K2 Dn हृत तस्सु (!), K4 आहितानि; B3 Dc M1 आहृतो वै; Dc प्राकृते वै, D1 2 आहृत सन्, D5 कृत तस्सु , T G2 4 M2 आहृते सु , G1 (corrupt) ह्रदाते सु (for आहृते वै) — [f]) Ś1 T2 G2–4 अश्वमेधफल लभेत्, K1 °मवाप्नुयात्

**22** [a]) B Dc Dn3 D3 4 6 M रामह्रद, G2 4 रक्तह्रदान् T1 पश्येत्, G2 4 पश्यन् — [b]) K2 Dn D5 समाहित (for नरा°), cf 20[d] — [c]) K2 Dn D5 तत्र, D3 अत्र (for यत्र) — [e]) K4 D3 उत्सार्य, B3 उत्सृज्य, T2 G (except G1) आसाद्य (for उत्साद्य) Ś1 K1 2 B1 Dn D5 वीरेण — [f]) Ś1 K1 प्रकल्पिता (for निवे°)

**23** [b]) T G रुधिरस्येति K2 B3 Dn D5 विश्रुत, T1

पितरस्तर्पिताः सर्वे तथैव च पितामहाः ।
ततस्ते पितरः प्रीता राममूचुर्महीपते ॥ २३
राम राम महाभाग प्रीताः स्म तव भार्गव ।
अनया पितृभक्त्या च विक्रमेण च ते विभो ।
वरं वृणीष्व भद्रं ते किमिच्छसि महाद्युते ॥ २४
एवमुक्तः स राजेन्द्र रामः प्रहरतां वरः ।
अब्रवीत्प्राञ्जलिर्वाक्यं पितॄन्स गगने स्थितान् ॥ २५
भवन्तो यदि मे प्रीता यद्यनुग्राह्यता मयि ।
पितृप्रसादादिच्छेयं तपसाप्यायनं पुनः ॥ २६
यच्च रोषाभिभूतेन क्षत्रमुत्सादितं मया ।
ततश्च पापान्मुच्येयं युष्माकं तेजसा ह्यहम् ।
ह्रदाश्च तीर्थभूता मे भवेयुर्भुवि विश्रुताः ॥ २७
एतच्छ्रुत्वा शुभं वाक्यं रामस्य पितरस्तदा ।
प्रत्यूचुः परमप्रीता रामं हर्षसमन्विताः ॥ २८
तपस्ते वर्धतां भूयः पितृभक्त्या विशेषतः ।
यच्च रोषाभिभूतेन क्षत्रमुत्सादितं त्वया ॥ २९
ततश्च पापान्मुक्तस्त्वं कर्मभिस्ते च पातिताः ।
ह्रदाश्च तव तीर्थत्वं गमिष्यन्ति न संशयः ॥ ३०
ह्रदेष्वेतेषु यः स्नात्वा पितॄन्संतर्पयिष्यति ।
पितरस्तस्य वै प्रीता दास्यन्ति भुवि दुर्लभम् ।
ईप्सितं मनसः कामं स्वर्गलोकं च शाश्वतम् ॥ ३१
एवं दत्त्वा वरान्राजन्रामस्य पितरस्तदा ।
आमन्त्र्य भार्गवं प्रीतास्तत्रैवान्तर्दधुस्तदा ॥ ३२
एवं रामह्रदाः पुण्या भार्गवस्य महात्मनः ।
स्नात्वा ह्रदेषु रामस्य ब्रह्मचारी शुभव्रतः ।
राममभ्यर्च्य राजेन्द्र लभेद्बहु सुवर्णकम् ॥ ३३
वंशमूलकमासाद्य तीर्थसेवी कुरूद्वह ।
स्ववंशमुद्धरेद्राजन्स्नात्वा वै वंशमूलके ॥ ३४
कायशोधनमासाद्य तीर्थं भरतसत्तम ।
शरीरशुद्धिः स्नातस्य तस्मिंस्तीर्थे न संशयः ।
शुद्धदेहश्च संयाति शुभाँल्लोकाननुत्तमान् ॥ ३५
ततो गच्छेत राजेन्द्र तीर्थं त्रैलोक्यविश्रुतम् ।

---

$M_3$ न श्रुति — $^d$) N ($K_3$ missing) प्र (for च) — $^f$) $K_2$ $B_4$ Dn $D_{1\ 2\ 5}$ नराधिप (for महीं°)

**24** For 24–32, cf passage 71* of the Ādi (vol 1, p 33), and Sukthankar, "Epic Studies (VI)," *ABORI* 18 6 — Before 24, $B_{1\ 3\ 4}$ Dc Dn ins पितर ऊचु — $^d$) B $D_{4\ 6}$ [ऽ]नघ (for विभो) — $^f$) $T_2$ G (except $G_1$) $M_3$ यदिच्छसि B $D_{4\ 6}$ महामते

**25** $^a$) S तु (for स) — $^d$) $K_4$ $D_{1\ 2}$ तान्, Dc स्वान् (for स)

**26** $^a$) $K_4$ $D_{1\ 2}$ भवन्तोद्य यदि प्रीता — $^c$) $K_2$ $B_{1\ 3}$ Dn $D_5$ पितृप्रसादम् — $^d$) $K_{3\ 4}$ Dn $D_5$ तपआप्यायन, $D_1$ तपसोप्या°, $T_1$ $G_{3\ 4}$ तप स्वाध्यायन

**27** $27^{ab}$ = (var) $29^{cd}$ — $^c$) S (except $G_1$ $M_1$) तु (for च) $Ś_1$ $K_1$ $D_3$ तत पापात्प्रमुच्येय — $^d$) $K_1$ भवता (for युष्माक) $Ś_1$ ह्यय, Dn $D_5$ [अ]प्यह (for ह्यहम्)

**28** $^d$) B $D_{3\ 4\ 6}$ तोष° (for हर्ष°)

**30** $K_1$ om $30^{ab}$ (with 29) — $^a$) $K_2$ तु (for त्व) — $^b$) $Ś_1$ न (for च) $K_{2\ 4}$ Dn $D_{1\ 2\ 5}$ पतितास्ते स्व कर्मभि, B Dc $D_{3\ 4\ 6}$ $M_1$ निहतास्ते स्व($D_3$ *sup lin* °स्तेन)कर्मभि ($D_3$ णा)

**31** $^a$) $K_{3\ 4}$ Dc Dn $D_5$ S (except $M_1$) ह्रदेषु तेषु T $G_{2-4}$ $M_1$ (by transp) स्नात्वा य — $G_1$ om $31^{cdef}$ — $^e$) $K_2$ $B_4$ Dn $D_5$ च मन°, $D_{1\ 2}$ मनसा (for मनस) $T_1$ समीप्सित मन काम, $M_3$ स इप्सित मन काम — $^f$) $K_4$ Dc $D_{1-3}$ S ($G_1$ om) स्वर्गवास

**32** $^a$) $K_4$ B $D_4$ $T_1$ $G_{3\ 4}$ वर (for वरान्) — $^e$) $K_2$ Dn $D_5$ प्रीत्या (for प्रीतास्) — $^d$) $K_{1\ 3}$ Dc Dn $D_5$ अतर्हिता (for °र्दधु) $K_1$ ययु°, $K_3$ B Dn $D_5$ S (except $G_1$ M) तत ; $K_4$ स्वय (for तदा)

**33** $K_4$ om $33^a$–$34^b$ — $^d$) $D_3$ S शुचि (for शुभ°) — $T_1$ om $33^c$–$35^b$

**34** $T_1$ om 34, $K_4$ om $34^{ab}$ (cf v l 33) — $^a$) $K_1$ $Dc_1$ Dn $D_{3-5}$ वशमूलक आ — $^c$) $D_3$ $G_1$ स (for स्व) $T_2$ $G_3$ श्रीमान् (for राजन्) $K_3$ Dn स्वय समुद्धरे द्राजन्

**35** $T_1$ om $35^{ab}$ (cf v l 33) — $^{cd}$) $K_4$ B Dc $D_{1-4\ 6}$ $M_1$ शरीरशुद्धिमा($M_1$ °द्धि प्रा)प्नोति The same MSS except Dc स्नातस्तस्मिन् (for तस्मिंस्तीर्थे) — $^f$) $D_{1\ 2}$ $G_4$ शुद्धा° (for शुभा)

लोका यत्रोद्धृताः पूर्वं विष्णुना प्रभविष्णुना ॥ ३६
लोकोद्धारं समासाद्य तीर्थं त्रैलोक्यविश्रुतम् ।
स्नात्वा तीर्थवरे राजँल्लोकानुद्धरते स्वकान् ।
श्रीतीर्थं च समासाद्य विन्दते श्रियमुत्तमाम् ॥ ३७
कपिलातीर्थमासाद्य ब्रह्मचारी समाहितः ।
तत्र स्नात्वार्चयित्वा च दैवतानि पितॄंस्तथा ।
कपिलानां सहस्रस्य फलं विन्दति मानवः ॥ ३८
सूर्यतीर्थं समासाद्य स्नात्वा नियतमानसः ।
अर्चयित्वा पितॄन्देवानुपवासपरायणः ।
अग्निष्टोममवाप्नोति सूर्यलोकं च गच्छति ॥ ३९
गवांभवनमासाद्य तीर्थसेवी यथाक्रमम् ।
तत्राभिषेकं कुर्वाणो गोसहस्रफलं लभेत् ॥ ४०
शङ्खिनीं तत्र आसाद्य तीर्थसेवी कुरूद्वह ।
देव्यास्तीर्थे नरः स्नात्वा लभते रूपमुत्तमम् ॥ ४१
ततो गच्छेत राजेन्द्र द्वारपालमरन्तुकम् ।
तस्य तीर्थं सरस्वत्यां यक्षेन्द्रस्य महात्मनः ।
तत्र स्नात्वा नरो राजन्नग्निष्टोमफलं लभेत् ॥ ४२
ततो गच्छेत धर्मज्ञ ब्रह्मावर्तं नराधिप ।
ब्रह्मावर्ते नरः स्नात्वा ब्रह्मलोकमवाप्नुयात् ॥ ४३
ततो गच्छेत धर्मज्ञ सुतीर्थकमनुत्तमम् ।
यत्र संनिहिता नित्यं पितरो दैवतैः सह ॥ ४४
तत्राभिषेकं कुर्वीत पितृदेवार्चने रतः ।
अश्वमेधमवाप्नोति पितृलोकं च गच्छति ॥ ४५
ततोऽम्बुवश्यं धर्मज्ञ समासाद्य यथाक्रमम् ।
कोशेश्वरस्य तीर्थेषु स्नात्वा भरतसत्तम ।
सर्वव्याधिविनिर्मुक्तो ब्रह्मलोके महीयते ॥ ४६

---

**36** $M_3$ om $36^a$–$37^d$ — $^a$) $Ś_1$ K ($K_3$ missing) D (except $D_{4\ 6}$) धर्मज्ञ (for राजेन्द्र) — $36^b = 37^b$ — $Ś_1$ $D_2$ om (hapl.) $36^c$–$37^b$ — $^c$) $B_{2\ 3}$ $T_1$ $M_1$ लोकयात्रोद्धृता॰, $G_4$ लोको यत्रोद्धृत॰ — $36^d$ = 5 13 $9^b$

**37** $Ś_1$ $D_2$ om $37^{ab}$, $M_3$ om $37^{abcd}$ (cf v l 36) — $^b$) = $36^b$ $K_1$ तीर्थं ते लोकविश्रुत, $K_2$ Dn $D_8$ तीर्थं त्रैलोक्यपूजित, $T_1$ G (except $G_3$) तीर्थसेवी कुरूद्वह (=$41^b$) — After $37^c$, $K_3$ Dn $D_{2\ 5}$ ins

390* स्नात्वा नियतमानस ।
अर्चयित्वा पितॄन्देवान्

**38** $D_2$ om $38^a$–$39^c$ — $^a$) $D_1$ कपिल; S कापिल (for कपिला) — $G_4$ om $38^c$–$39^b$ — $^d$) $Ś_1$ $K_1$ पितॄन्देवांस्तथैव च, $K_{3\ 4}$ Do Dn $D_8$ पितॄन्स्तान्दैवतान्यपि (Do नि च), $B_2$ देवानि स्वपितॄंस्तथा, $D_1$ पितॄंश्च देवतास्तथा, $D_{4\ 6}$ देवानिह पितॄंस्तथा, $G_1$ देवतांश्च पितॄंस्तदा — $^f$) $K_4$ $D_{1\ 3}$ S ($G_4$ om) भारत (for मानव)

**41** $^a$) $D_{1\ 2}$ M तत (for तत्र) $T_2$ $G_3$ चासाद्य $Ś_1$ शङ्खिनीं स्व समासाद्य, $K_1$ B Do $D_{8\ 4\ 6}$ $T_1$ शङ्खिनीतीर्थमासाद्य — $^b$) B $D_{4\ 6}$ नराधिप, $D_1$ यथाक्रम (for कुरू॰) — $^d$) $S_1$ $K_1$ तीर्थम्, B $D_{3\ 4\ 6}$ वीर्यम् (for रूपम्)

**42** $K_4$ $D_{2,\ 4}$ om 42, $G_4$ om $42^b$–$44^a$ — $42^{ab}$ = (var) $13^{ab}$ — $^b$) $Ś_1$ $B_2$ $Dc_2$ अरु($Ś_1$ अरं)तकं, $K_3$ $Dn_1$ $n_3$ $D_5$ तरडक, $B_1$ $D_3$ मनतक, $B_{3\ 4}$ अवर्णक; $Dn_2$ $D_6$ मचक्रुक, $T_1$ मल्दक, $T_2$ $G_3$ अरुंदुक, M अनुत्तम (for अरन्तुकम्) $K_1$ ब्रह्मावर्तं नरोत्तम — $^c$) $K_{1\ 2}$ Dn $D_{1\ 6}$ $G_2$ तद्य, $B_2$ $D_3$ (*sup lin* as in text) यस्य, $M_1$ तत्र (for तस्य) $T_1$ $G_1$ $M_2$ समासाद्य, $T_2$ $G_3$ महापुण्य (for सरस्वत्या) — $D_{2\ 4}$ $G_3$ om $42^{ef}$, $G_1$ om $42^f$–$44^c$

**43** $G_{1\ 4}$ om 43 (cf v l 42) — $^a$) $S_1$ ब्रह्मज्ञ, $K_2$ $B_4$ Dn $D_5$ S राजेंद्र (for धर्मज्ञ) — $K_3$ om (hapl) $43^b$–$44^a$ — $^b$) $Ś_1$ $D_5$ नरोत्तम, Dn नरोत्तम (for नरा॰) $K_4$ द्वारपालमरतुक (=$42^b$) — $^d$) $T_2$ $G_{2\ 3}$ लभते रूपमुत्तम

**44** $G_1$ om $44^{abc}$, $K_3$ $G_4$ om $44^a$ (cf v l 42, 43) — $^a$) $S_1$ $K_4$ धर्मात्मन्; Dn $D_5$ $T_1$ M राजेंद्र, $T_2$ $G_{2\ 3}$ धर्मात्मा (for धर्मज्ञ) — $^b$) Cf v l $46^b$ $K_4$ वसुतीर्थम् (for सुतीर्थकम्) — $^c$) $K_3$ Do Dn $D_5$ T $G_{2-4}$ तत्र (for यत्र) $D_{1\ 2}$ S राजन् (for नित्य) — $^d$) A few MSS देवतै $K_1$ देवता॰ पितृभि॰ सह

**45** $^d$) $Dc_2$ $T_2$ G (except $G_1$) स (for च)

**46** $^a$) $K_1$ $G_{2\ 4}$ ततोंबुपश्य, $K_2$ Dn $D_5$ त्रुम($K_2$ ॰मा) स्या; $B_2$ भवत्या, $B_3$ ॰म्युपत्या, Do त्रुवत्या; $D_{3\ 4\ 6}$ ततो युवत्या; $T_1$ $M_1$ वपश्यन्, $M_2$ ॰बपश्य $K_4$ $D_{1\ 2}$ ततो भवस्य धर्मात्मन् — $^b$) $K_3$ Dn $D_5$ सुतीर्थकमनुत्तम (=$44^b$) — $^c$) $K_{1\ 2}$ $B_{1-3\ 5}$ कामेश्वरस्य, $K_4$ $B_{2\ 4}$ Do Dn $D_{4\ 6}$ काशी॰, $G_3$ M केशे $Ś_1$ K ($K_3$ missing) Dn $D_{1\ 2}$ तीर्थे च (for तीर्थेषु)

**47** $^b$) $K_1$ $M_3$ तत्र (for यत्र) $K_4$ निश्चित; B $D_{4\ 6}$ पार्थिव; $T_2$ $G_{2-4}$ धीमत (for भारत) $Ś_1$ स्नात्वा यस्तत्र

मातृतीर्थं च तत्रैव यत्र स्नातस्य भारत ।
प्रजा विवर्धते राजन्ननन्तां चाश्नुते श्रियम् ॥ ४७
ततः शीतवनं गच्छेन्नियतो नियताशनः ।
तीर्थं तत्र महाराज महदन्यत्र दुर्लभम् ॥ ४८
पुनाति दर्शनादेव दण्डेनैकं नराधिप ।
केशानभ्युक्ष्य वै तस्मिन्पूतो भवति भारत ॥ ४९
तीर्थं तत्र महाराज श्वानलोमापहं स्मृतम् ।
यत्र विप्रा नरव्याघ्र विद्वांसस्तीर्थतत्पराः ॥ ५०
श्वानलोमापनयने तीर्थे भरतसत्तम ।
प्राणायामैर्निर्हरन्ति श्वलोमानि द्विजोत्तमाः ।
पूतात्मानश्च राजेन्द्र प्रयान्ति परमां गतिम् ॥ ५१
दशाश्वमेधिकं चैव तस्मिंस्तीर्थे महीपते ।
तत्र स्नात्वा नरव्याघ्र गच्छेत परमां गतिम् ॥ ५२
ततो गच्छेत राजेन्द्र मानुषं लोकविश्रुतम् ।
यत्र कृष्णमृगा राजन्व्याधेन परिपीडिताः ।
अवगाह्य तस्मिन्सरसि मानुषत्वमुपागताः ॥ ५३
तस्मिंस्तीर्थे नरः स्नात्वा ब्रह्मचारी जितेन्द्रियः ।
सर्वपापविशुद्धात्मा स्वर्गलोके महीयते ॥ ५४
मानुषस्य तु पूर्वेण क्रोशमात्रे महीपते ।
आपगा नाम विख्याता नदी सिद्धनिषेविता ॥ ५५
श्यामाकभोजनं तत्र यः प्रयगच्छति मानवः ।
देवान्पितॄंश्च उद्दिश्य तस्य धर्मफलं महत् ।
एकस्मिन्भोजिते विप्रे कोटिर्भवति भोजिता ॥ ५६
तत्र स्नात्वार्चयित्वा च दैवतानि पितॄंस्तथा ।

---

भारत — $^c$) T2 G2–4 प्रज्ञा (for प्रजा) K1 [अ]भिवर्धते, D8 स° (for वि°) Ś1 प्रजाभिर्विधिना राजन् — $^d$) K1 D1 3 प्राप्नुते, K4 चाप्नुते; B3 चाप्नुयात्, Dc लभते Dn D5 अतन्द्रीं (D5 महतीं) श्रियमश्नुते

**48** G4 om 48$^a$–50$^b$ — $^a$) K3 D6 सीत°, Dn D5 सीता° (for शीत°) — $^c$) K4 (by transp) तत्र तीर्थं, S (except G1 M1, G4 om) तीर्थे तत्र — $^d$) T1 लभेद् (for महद्) M2 मनुष्याणा सुदुर्लभ

**49** G4 om 49 (cf v l 48) — $^a$) K4 गमनाद् (for दर्शनाद्) K3 Dn3 D8 5 G1 M एकं, D1 2 चैक, T1 एन (for एव) K2 Dn D5 पुराभिगमनादेक (Dn2° व) — $^b$) ❀ Arj दण्डेनैक नराधिपेति । एकमिति तृतीयार्थे द्वितीया । ❀ Ś1 K (K3 missing) Dn D5 दृष्ट्मेक, D1 2 स्नात्वा चैक, D8 दृष्टेनैव, G2 कुलमेक (for दण्डेनैक) — $^c$) G1 2 M केशेना° (for केशाना°) Dc1 चैतस्मिन्, Dn (Dn1 by corr) D1 2 चैकस्मिन् (for वै त°)

**50** G4 om 50$^{ab}$ (cf v l 48) — $^a$) K4 transp तीर्थं and तत्र B Dc D3 4 5 तत्र तीर्थवर चान्यत् (Dc स्नात्वा; D3 राजन्) — K2 om 50$^b$–51$^a$ — $^b$) Cf 51$^a$ and v l K1 B3 D4 6 स्वान(D6 स्वानु)लो°, B1 स्नानलो°, Dc नखलो°, Dn1 n3 श्वाविल्लो°, D1 स्नान लो Dn2 महद न्यत्र दुर्लभ (= 48$^d$) — $^c$) K4 B Dn2 D6 तत्र — After 50, B D (except D2 5) T2 G (except G1) ins

391* गतिं गच्छन्ति परमा स्नात्वा भरतसत्तम ।

[ B3 Dn3 D1 4 6 प्रीतिं (for गतिं) T2 G2–4 स्नाता (for स्नात्वा) ]

**51** K2 om 51$^a$ (cf v l 50), Dc1 D3 om 51$^{ab}$ — $^a$) Cf 50$^b$ and v l K1 B1 2 Dc2 D4 6 स्वान(D6 स्वानु)लो°, K4 Dn श्वाविल्लो°, B4 स्नात्वा लो , D1 2 स्थाने लो° — $^c$) Ś1 विहिंसति, K1 विहसति, D1 2 न्यस्तलोमा, T1 निर्हरत, T2 G3 4 हरंतीह (for निर्हरन्ति) D3 M1 ब्रह्म यामेन निघ्नति — $^d$) Ś1 K3 B Dc Dn D3–6 स्वलोमानि, K1 स्वालोमानि, D1 2 निरजस्का, T1 M2 श्वानलोमा, T2 G1 3 4 श्वानलोमाद्, G2 corrupt

**52** $^a$) T2 G2–4 चापि (for चैव) — $^b$) K1 Dc महामते, M2 महायशा (for मही°) D1 2 तीर्थं भुवि सुदुर्लभ — $^c$) D1 2 गत्वा तत्र नर° — $^d$) K1 लभते; B1 4 D6 गच्छति, D1 2 गच्छते, D3 गच्छेच्च

**53** $^c$) B तत्र (for यत्र) Dc D4 6 कृष्णा मृगा — $^d$) N (K3 missing) शरपीडिता — S1 K1 G1 om 53$^{ef}$ — $^e$) Hypermetric! K2 B D (except D1–3) S (except M1, G1 om) वि (for अव°) K4 D3 अवगाह्य सरस्तस्मि, D1 2 अवगाह्य जल तस्मि

**54** $^b$) K2 B Dn D4–6 समाहित (for जित°)

**56** $^a$) S1 श्यामक, K (K3 missing) Dc D1 2 4–6 श्यामाक (for श्यामाक-) Dn श्यामाक भोजने तत्र (!) — $^c$) N (K3 missing) T2 G3 समुद्दिश्य, G1 4 च वोद्दिश्य, M चैवोद्दिश्य (for च उद्दिश्य) — D3 G4 om 56$^e$–57$^d$

**57** D6 G4 om 57 (cf v.l 56) — $^b$) Cf v l 64$^b$ Ś1 स्वान्पितॄन्दैवतानि च, K1 Dc T1 G2 M2 पितॄन्स्वान् दै (K1 T1 M2 दे)वतानि च, K2 4 Dn पितॄन्दैवतानि च,

उषित्वा रजनीमेकामग्निष्टोमफलं लभेत् ॥ ५७
ततो गच्छेत राजेन्द्र ब्रह्मणः स्थानमुत्तमम् ।
ब्रह्मोदुम्बरमित्येव प्रकाशं भुवि भारत ॥ ५८
तत्र सप्तर्षिकुण्डेषु स्नातस्य कुरुपुंगव ।
केदारे चैव राजेन्द्र कपिष्ठलमहात्मनः ॥ ५९
ब्रह्माणमभिगम्याथ शुचिः प्रयतमानसः ।
सर्वपापविशुद्धात्मा ब्रह्मलोकं प्रपद्यते ॥ ६०
कपिष्ठलस्य केदारं समासाद्य सुदुर्लभम् ।
अन्तर्धानमवाप्नोति तपसा दग्धकिल्बिषः ॥ ६१
ततो गच्छेत राजेन्द्र सरकं लोकविश्रुतम् ।
कृष्णपक्षे चतुर्दश्यामभिगम्य वृषध्वजम् ।
लभते सर्वकामान्हि स्वर्गलोकं च गच्छति ॥ ६२
तिस्रः कोट्यस्तु तीर्थानां सरके कुरुनन्दन ।
रुद्रकोटिस्तथा कूपे ह्रदेषु च महीपते ।
इलास्पदं च तत्रैव तीर्थं भरतसत्तम ॥ ६३
तत्र स्नात्वार्चयित्वा च पितॄन्देवांश्च भारत ।
न दुर्गतिमवाप्नोति वाजपेयं च विन्दति ॥ ६४
किंदाने च नरः स्नात्वा किंजप्ये च महीपते ।
अप्रमेयमवाप्नोति दानं जप्यं च भारत ॥ ६५
कलश्यां चाप्युपस्पृश्य श्रद्दधानो जितेन्द्रियः ।
अग्निष्टोमस्य यज्ञस्य फलं प्राप्नोति मानवः ॥ ६६
सरकस्य तु पूर्वेण नारदस्य महात्मनः ।
तीर्थं कुरुवरश्रेष्ठ अनाजन्मेति विश्रुतम् ॥ ६७
तत्र तीर्थे नरः स्नात्वा प्राणांश्चोत्सृज्य भारत ।
नारदेनाभ्यनुज्ञातो लोकान्प्राप्नोति दुर्लभान् ॥ ६८
शुक्लपक्षे दशम्यां तु पुण्डरीकं समाविशेत् ।

---

D$_{1\,2}$ पितृंश्च देवतानपि (D$_2$ °नि च), T$_2$ G$_3$ पितॄस्तान्देव तानि च

**58** $^{a}$) K$_1$ B D$_4$ धर्मज्ञ (for राजेन्द्र) — $^{b}$) Ś$_1$ K$_1$ D$_8$ ब्रह्मस्थानमनुत्तम — $^{c}$) Ś$_1$ K$_1$ एतत्; B$_{2-4}$ Dc D$_{4\,6}$ एव (for एव) G$_4$ ब्रह्मणोदरमित्येव — $^{d}$) Dn$_2$ (? gloss) प्रख्यात (for प्रकाश) S (except M$_1$) भरतर्षभ (for भुवि भा )

**59** $^{a}$) Ś$_1$ K$_{1\,4}$ Dc ब्रह्मर्षि ; K$_2$ समेषु ( for सप्तर्षि ) — $^{b}$) Ś$_1$ K$_2$ Dn D$_5$ नरपुंगव, K$_1$ B$_{2-4}$ D$_{3\,4\,6}$ T$_1$ भरतर्षभ; K$_4$ Dc M$_1$ कुरुनंदन, G$_4$ कुरुसत्तम — $^{d}$) K (K$_3$ missing) कपिल(D$_5$ ष्ठ)स्य महा°, T G M$_2$ कपिष्ठ(T$_2$ G$_{3\,4}$ कपिंज)लमहामुने

**60** $^{a}$) Ś$_1$ K$_2$ D$_5$ G$_2$ अधिगत्वा; K$_{1\,4}$ B$_1$ D$_{1\,2}$ अभिगत्वा, D$_3$ M$_2$ अधिगम्य (for अभिगम्य) Ś$_1$ K$_{1\,2}$ B$_1$ D$_{1\,2\,5}$ G$_2$ च; K$_4$ [आ]शु (for [अ]थ)

**61** $^{a}$) K$_1$ Dn$_2$ D$_{1\,3}$(*sup lin*)$_{4\,6}$ कपिलस्य च, K$_2$ D$_5$ कपिस्थलस्य; D$_3$ कपिपापिष्ठ°, T$_2$ G$_3$ कपिंजलस्य

**62** $^{b}$) Ś$_1$ शनकं, K$_1$ T$_1$ M$_2$ शरक, K$_2$ Dn$_{1\,n2}$ D$_5$ T$_2$ G$_{2-4}$ शकर, M$_1$ शरभ (cf v l 63$^{b}$, 67$^{a}$) — $^{c}$) B$_4$ D$_1$ S कृष्णपक्ष (T$_1$ तत कृष्ण°) — $^{e}$) B$_{1\,2\,4}$ Dn$_1$ n$_3$ D$_4$ लभेत K$_1$ सर्वकामाश्च, B$_2$ कामान्वै; T$_1$ कामानि

**63** $^{b}$) K$_1$ शनके, B$_1$ Dn$_1$ T$_1$ M$_2$ शरके; B$_2$ सवके, D$_3$ सरके, T$_2$ G शकरे; M$_2$ शरभे (cf v l 62$^{b}$, 67$^{a}$) — $^{c}$) S$_1$ K$_1$ D$_5$ भद्रकोट्या; K$_2$ B$_{1\,2\,4}$ Dc D$_{1\,2\,4}$ रुद्रकोटी, K$_4$ Dn D$_3$ (*sup lin*) °कोट्या; D$_3$ (orig) M$_2$ कोटिं (for °कोटिस्) T$_2$ G$_{3-4}$ रुद्रकोट्या तु (G$_3$ °कोट्यस्तु) पुण्याया — $^{d}$) B D$_{3\,4\,6}$ममतत° (for मही°) — D$_5$ om (hapl) 63$^{c}$–65$^{b}$ — $^{e}$) S$_1$ K$_{1\,4}$ D$_{1\,3}$ इडास्पद, T G शुद्धा(G$_1$ इळा)स्पद

**64** D$_5$ om 64 (cf v l 63) — $^{b}$) Cf v l 57$^{b}$ Ś$_1$ K$_1$ Dc पितॄन्स्वान्दैवतानि च; K$_4$ स्वपितॄंश्चैव तानि च, B Dn D$_{4\,6}$ दैवतानि पितॄनपि (B$_2$ तॄस्तथा, Dn D$_{4\,5}$ °तॄनथ), D$_{1-3}$ स्वपितॄन्दै(D$_3$ °न्दे)वतानि च, M$_1$ पितॄन्देवास्तथैव च — T$_1$ M$_2$ om (hapl) 64$^{c}$–65$^{d}$

**65** D$_5$ om 65$^{ab}$, T$_1$ M$_2$ om 65 (cf v l 63, 64) — $^{b}$) Ś$_1$ Dc D$_{1\,2}$ T$_2$ G$_{2\,4}$ किंजपे च (Dc$_2$ °प्येन) — $^{d}$) B D$_{4\,6}$ तथैव च (for च भारत) D$_3$ तदानत तथैव च

**66** $^{a}$) Ś$_1$ कोलश्या; K$_2$ B$_{3\,4}$ D$_1$ कलस्या B$_{1\,2\,4}$ Dc$_2$ Dn D$_{3\,4\,6}$ T$_2$ (by corr) G$_3$ वार्युपस्पृश्य — $^{b}$) Ś$_1$ K$_1$ ब्रह्मचारी (for श्रद्द°)

**67** $^{a}$) K$_1$ T$_1$ M$_2$ शरकस्य, D$_5$ T$_2$ G$_{2-4}$ शकरस्य, M$_1$ शरभस्य (cf v l 62$^{b}$, 63$^{b}$) — $^{c}$) K$_2$ Dn D$_{1\,2\,5}$ G$_2$ M$_1$ तीर्थं कुरुकुलश्रेष्ठ; B D$_{3\,4\,6}$ कुरुश्रेष्ठ शुभ तीर्थं — $^{d}$) Dn$_2$ अबाजन्मेति(!), D$_{1\,2}$ अन्यज , D$_3$ मम ज°

**68** K$_1$ om (hapl) 68$^{a}$–70$^{b}$ — $^{a}$) D$_3$ transp तत्र and स्नात्वा K$_4$ D$_{1\,2}$ तस्मिन् (for तत्र) — $^{b}$) Ś$_1$ K$_{2\,4}$ D (except D$_{4\,6}$) om च — $^{d}$) Dc D$_{1-5}$ आप्नोति (for प्रा ) K$_2$ Dn D$_5$ [अ]नुत्तमान् (for दुर्ले )

**69** K$_1$ om 69 (cf v.l 68) — $^{a}$) B$_1$ S शुक्लपक्ष

तत्र स्नात्वा नरो राजन्पुण्डरीकफलं लभेत् ॥ ६९
ततस्त्रिविष्टपं गच्छेत्त्रिषु लोकेषु विश्रुतम् ।
तत्र वैतरणी पुण्या नदी पापप्रमोचनी ॥ ७०
तत्र स्नात्वार्चयित्वा च शूलपाणिं वृषध्वजम् ।
सर्वपापविशुद्धात्मा गच्छेत परमां गतिम् ॥ ७१
ततो गच्छेत राजेन्द्र फलकीवनमुत्तमम् ।
यत्र देवाः सदा राजन्फलकीवनमाश्रिताः ।
तपश्चरन्ति विपुलं बहुवर्षसहस्रकम् ॥ ७२
दृषद्वत्यां नरः स्नात्वा तर्पयित्वा च देवताः ।
अग्निष्टोमातिरात्राभ्यां फलं विन्दति भारत ॥ ७३
तीर्थे च सर्वदेवानां स्नात्वा भरतसत्तम ।
गोसहस्रस्य राजेन्द्र फलं प्राप्नोति मानवः ॥ ७४
पाणिखाते नरः स्नात्वा तर्पयित्वा च देवताः ।
राजसूयमवाप्नोति ऋषिलोकं च गच्छति ॥ ७५

ततो गच्छेत राजेन्द्र मिश्रकं तीर्थमुत्तमम् ।
तत्र तीर्थानि राजेन्द्र मिश्रितानि महात्मना ॥ ७६
व्यासेन नृपशार्दूल द्विजार्थमिति नः श्रुतम् ।
सर्वतीर्थेषु स स्नाति मिश्रके स्नाति यो नरः ॥ ७७
ततो व्यासवनं गच्छेन्नियतो नियताशनः ।
मनोजवे नरः स्नात्वा गोसहस्रफलं लभेत् ॥ ७८
गत्वा मधुवटीं चापि देव्यास्तीर्थं नरः शुचिः ।
तत्र स्नात्वार्चयेद्देवान्पितॄंश्च प्रयतः शुचिः ।
स देव्या समनुज्ञातो गोसहस्रफलं लभेत् ॥ ७९
कौशिक्याः संगमे यस्तु दृषद्वत्याश्च भारत ।
स्नाति वै नियताहारः सर्वपापैः प्रमुच्यते ॥ ८०
ततो व्यासस्थली नाम यत्र व्यासेन धीमता ।
पुत्रशोकाभितप्तेन देहत्यागार्थनिश्चयः ॥ ८१
कृतो देवैश्च राजेन्द्र पुनरुत्थापितस्तदा ।

---

$K_{3}$ Dn $D_{5}$ च (for तु) — $^{d}$) S पौंडरीक° ($G_{4}$ सर्वयज्ञ°)

**70** $K_{1}$ om $70^{ab}$ (cf v l 68) — $^{a}$) T G तत्र (for ततस्) B $D_{4}$ त्रिपिष्टप — $^{d}$) $K_{1, 2}$ Dn $D_{5}$ $T_{2}$ $G_{2-4}$ पापप्रणाशिनी

**72** $^{b}$) $T_{1}$ $G_{1, 2, 4}$ $M_{2}$ फलजी($G_{2}$ $M_{2}$ °ल जी)वनम् (cf $^{d}$) — $^{c}$) $K_{3}$ B D (except Dc) $T_{1}$ तत्र, $K_{4}$ अत्र (for यत्र) — $^{d}$) G $M_{2}$ फलजी($G_{2}$ $M_{2}$ °ल जी)वनम् (cf $^{b}$) — $^{f}$) $K_{1, 4}$ B $D_{3, 4, 6}$ $M_{2}$ °सहस्रिक — After 72, $T_{2}$ G ins

392* तत्र स्नात्वा नरो राजन्सर्वयज्ञफलं लभेत् ।

**73** $G_{1}$ om $73^{ab}$ — $^{a}$) $B_{2-4}$ दृशाद्वत्या — $K_{1}$ om $73^{c}$–$74^{d}$ — $^{d}$) $K_{5}$ $T_{2}$ $G_{2, 4}$ मानव° (for भारत)

**74** $K_{1}$ $D_{2}$ om 74 (for $K_{1}$ cf v l 73), Dc om $74^{c}$–$75^{b}$ — $^{c}$) $B_{1}$ (m as in text) गोसहस्र च रा° — $^{d}$) $Ś_{1}$ $K_{2}$ Dn $D_{1, 5}$ $T_{1}$ M विंदति; $B_{2, 3}$ $D_{4, 6}$ आप्नोति (for प्राप्नोति)

**75** $K_{1}$ transp $75^{ab}$ and $75^{cd}$ Dc om $75^{ab}$ (cf v l 74) — $^{a}$) $B_{2}$ $D_{4}$ पाणिख्याते; $B_{3}$ $T_{1}$ $G_{4}$ M °पाते; $G_{1}$ °पादे, $M_{2}$ °पाने $K_{2}$ तर्प्य (for स्नात्वा) — $M_{2}$ om (hapl) $75^{b}$–$78^{c}$ — After $75^{ab}$, $K_{2}$ Dn $D_{5}$ *repeat* $73^{cd}$ — $^{c}$) B $D_{4, 6}$ $T_{2}$ $G_{3, 4}$ अवाप्नुते ($B_{4}$ अवाप्नोति) राजसूय, $D_{3}$ अवाप्नुयाद्राजसत्र — $^{d}$) $T_{2}$ $G_{3, 4}$ स (for च) $K_{2}$ Dn $D_{5}$ विंदति (for गच्छति)

**76** $M_{2}$ om 76 (cf v l 75) — $^{a}$) B $D_{3, 4, 6}$ धर्मज्ञ (for राजेन्द्र) — $^{b}$) B $Dc_{2}$ $D_{3, 4, 6}$ लोकविश्रुत (for तीर्थमु°) — $^{c}$) T $G_{1-3}$ यत्र (for तत्र) $D_{1, 2}$ T $G_{1-3}$ सर्वाणि (for राजेन्द्र) $M_{1}$ तत्र सर्वाणि तीर्थानि

**77** $M_{2}$ om 77 (cf v l 75) — $^{a}$) $K_{4}$ $D_{1, 2}$ $T_{2}$ $G_{1-3}$ नरशार्दूल, $M_{1}$ वेदविदुषा — $^{b}$) $G_{1, 2, 4}$ द्विजार्थे (for द्विजार्थम्) — After 77, $K_{1}$ ins

393* स वै स्नात्वार्चयित्वा च मिश्रके पितृदेवता° ।

**78** $M_{2}$ om $78^{abc}$ (cf v l 75) — $^{a}$) T G गत्वा (for गच्छेन्)

**79** T G om 79 — $^{a}$) $Ś_{1}$ मधुवट, $K_{3}$ $B_{3}$ $D_{5}$ °मतीं, $M_{1}$ °पदीं; $M_{2}$ °द्वतीं $K_{3}$ $B_{1, 2}$ Dn M चैव (for चापि) — $^{b}$) $K_{3}$ $Dc_{1}$ Dn M तीर्थे; B $D_{6}$ स्थान, $D_{4}$ स्नान (for तीर्थं) $D_{3}$ अनुत्तम (for नर° शुचि°) — $^{c}$) K ($K_{3}$ missing) $Dc_{2}$ Dn $D_{1-3, 5}$ स्नात्वार्चयित्वा च — $^{d}$) $Ś_{1}$ $K_{2, 4}$ Dc Dn $D_{1-3, 5}$ $M_{2}$ पितॄन् ($Dn_{3}$ $D_{3}$ पितृ) देवांश्च पूरुषः, $K_{1}$ देवान्पितॄंश्च पूरुष ; $M_{1}$ पितॄंश्च प्रयतस्तु य°

**80** $^{b}$) B दृशद्वत्या° — $^{c}$) $Ś_{1}$ $K_{1}$ स्नायात् (*for* स्नाति) $Ś_{1}$ सु°, $K_{1}$ तु; $K_{4}$ Dc $D_{1-3}$ यो (for वै)

**81** $^{d}$) $K_{2, 4}$ Dc Dn $D_{3}$ देहत्यागे कृता मति ; B $D_{4, 6}$ $G_{1}$ M देहत्यागाय ($M_{2}$ °गश्च) निश्चय

**82** $^{a}$) $K_{2, 4}$ Dc Dn $D_{3, 5}$ ततो (*for* कृतो) $Ś_{1}$ $K_{2}$ Dn $D_{5}$ तु (for च) S (except $M_{1}$) कृतो वै देवराजेन

अभिगम्य स्थलीं तस्य गोसहस्रफलं लभेत् ॥ ८२
किंदत्तं कूपमासाद्य तिलप्रस्थं प्रदाय च ।
गच्छेत परमां सिद्धिमृणैर्मुक्तः कुरूद्वह ॥ ८३
अहश्च सुदिनं चैव द्वे तीर्थे च सुदुर्लभे ।
तयोः स्नात्वा नरव्याघ्र सूर्यलोकमवाप्नुयात् ॥ ८४
मृगधूमं ततो गच्छेत्त्रिषु लोकेषु विश्रुतम् ।
तत्र गङ्गाह्रदे स्नात्वा समभ्यर्च्य च मानवः ।
शूलपाणिं महादेवमश्वमेधफलं लभेत् ॥ ८५
देवतीर्थे नरः स्नात्वा गोसहस्रफलं लभेत् ।
अथ वामनकं गच्छेत्त्रिषु लोकेषु विश्रुतम् ॥ ८६
तत्र विष्णुपदे स्नात्वा अर्चयित्वा च वामनम् ।
सर्वपापविशुद्धात्मा विष्णुलोकमवाप्नुयात् ॥ ८७
कुलंपुने नरः स्नात्वा पुनाति स्वकुलं नरः ।
पवनस्य ह्रदं गत्वा मरुतां तीर्थमुत्तमम् ।
तत्र स्नात्वा नरव्याघ्र वायुलोके महीयते ॥ ८८
अमराणां ह्रदे स्नात्वा अमरेषु नराधिप ।
अमराणां प्रभावेन स्वर्गलोके महीयते ॥ ८९
शालिहोत्रस्य राजेन्द्र शालिशूर्पे यथाविधि ।
स्नात्वा नरवरश्रेष्ठ गोसहस्रफलं लभेत् ॥ ९०
श्रीकुञ्जं च सरस्वत्यां तीर्थं भरतसत्तम ।
तत्र स्नात्वा नरो राजन्नग्निष्टोमफलं लभेत् ॥ ९१
ततो नैमिषकुञ्जं च समासाद्य कुरूद्वह ।
ऋषयः किल राजेन्द्र नैमिषेयास्तपोधनाः ।
तीर्थयात्रां पुरस्कृत्य कुरुक्षेत्रं गताः पुरा ॥ ९२

---

— $^{c}$) $K_3$ $B_1$ Dn $D_5$ $M_1$ अभिगत्वा $K_3$ $T_2$ $G_3$ $M_1$ तत्र, $T_1$ चैव (for तस्य)

**83** $G_4$ om 83–84 — $K_4$ om (hapl) $83^{b}$–$84^{c}$ — $^{c}$) S (except $M_1$, $G_4$ om) गच्छेत्परमिकां सिद्धिं — $^{d}$) $B_1$ $_4$ $D_5$ $M_1$ युधिष्ठिर; $B_3$ $_3$ $D_4$ $_6$ नरेश्वर (for कुरू°) — After 83, $K_3$ B Dc Dn $D_4$ $_6$ $M_1$ ins

394* वेदीतीर्थे नरः स्नात्वा गोसहस्रफलं लभेत् ।

**84** $G_4$ om 84, $K_4$ om $84^{abc}$ (cf v l 83) — $^{a}$) $Ś_1$ $K_1$ बहु च; $K_2$ $D_5$ आह्न च; $D_1$ $_3$ अहं च, $D_3$ अह्न च, $T_2$ $G_3$ हयश्च; $M_2$ अह च $D_4$ $T_2$ $G_1$ $_3$ सुदिनश्च, $M_1$ [अ]नुदिन (for सुदिन) — $^{b}$) B $D_4$ $_6$ M तु (for च) $K_3$ Dc Dn $D_1$ $_2$ $_5$ द्वे तीर्थे लोकविश्रुते, $D_3$ तीर्थे चैव सुदुर्लभे, $T_1$ द्वे तीर्थेषु सुदुर्लभे — $^{c}$) T $G_2$ $_3$ तत्र (for तयोः)

**85** $T_1$ om 85–90 — $^{a}$) $D_4$ $_6$ नृगधूम, S ($T_1$ om) व्यग. — $^{c}$) B $D_4$ $_6$ रुद्रपदे (for गङ्गा°) $Ś_1$ K ($K_3$ missing) Dc Dn $D_{1-3}$ $_5$ तत्राभिषेकं कुर्वीत — After $85^{c}$, $G_1$ reads $89^{b}$–$90^{b}$, om $85^{d}$–$86^{b}$ — $^{d}$) $Ś_1$ K ($K_3$ missing) D (except $D_4$ $_6$) गङ्गाया नृप($Ś_1$ $K_1$ कुरु)सत्तम; T G ($T_1$ $G_1$ om) ह्यर्चयित्वा च भारत. — $^{e}$) $Ś_1$ K ($K_3$ missing) D (except $D_4$ $_6$) अर्चयित्वा (for शूल°) B $D_4$ $_6$ $M_1$ महात्मानम् (for महा°)

**86** $T_1$ om 86, $B_3$ $G_1$ om. $86^{ab}$ (for $T_1$ $G_1$ cf v l 85) — $^{ab}$) $Ś_1$ K ($K_3$ missing) Dn $D_1$ $_2$ $_5$ देव्या तीर्थे, B Dc $D_4$ $_6$ कोटि (for देव°) — $^{c}$) $Ś_1$ K ($K_3$ missing) D (except $D_4$ $_6$) ततो (for अथ) B $D_4$ $_6$ $M_1$ गत्वा (for गच्छेत्)

**87** $K_4$ $T_1$ om 87 (for $T_1$ cf v l 85) — $^{a}$) $T_2$ $G_2$ $_3$ विष्णुह्रदे — $^{b}$) B $D_4$ $_6$ S ($T_1$ om) समभ्यर्च्य; $D_3$ पूजयित्वा (for अर्च°) — $^{d}$) $Ś_1$ $K_1$ Dc च गच्छति, $K_3$ Dn $D_1$ $_2$ $_5$ स गच्छति (for अवा°)

**88** $D_1$ $T_1$ om 88 (for $T_1$ cf v l 85) — $^{b}$) $Ś_1$ $K_1$ च कुलं; $D_3$ स्वजन (for स्वकुल) $Ś_1$ $K_1$ महत्, $K_3$ Dn $D_5$ तत, $D_3$ नृप (for नर) — $^{c}$) $K_3$ Dn $D_5$ ह्रदे स्नात्वा — $^{f}$) $K_2$ $B_4$ Dn $D_5$ विष्णु° (for वायु°)

**89** $D_5$ $T_1$ om 89 (for $T_1$ cf v l 85), $T_2$ $G_3$ om 89–90, $G_1$ om $89^{a}$ — $^{b}$) $Ś_1$ ह्यमरेषु, $G_2$ अमरे च (for अमरेषु) $K_1$ $_2$ $B_{2-4}$ Dn $D_{3-6}$ समभ्यर्च्योम($D_3$ °र्च्य न)-राधिप — $^{c}$) $G_2$ $_3$ $M_2$ प्रसादेन (for प्रभा°) — After 89, $Ś_1$ $K_1$ $B_1$ $_3$ Dc $D_3$ ins

395* अमरैः सह सयाति विमानवरमास्थितः ।

**90** T $G_3$ om 90 (cf v l 85, 89) — $^{a}$) $K_3$ $B_4$ Dn $D_5$ तीर्थे ($B_4$ $Dn_3$ तीर्थे) च (for राजेन्द्र) — $^{b}$) $Ś_1$ शालिशीर्षे, $K_1$ °शीर्ये; $K_3$ B Dc Dn $D_1$ $_2$ $_4$ $_6$ °सूर्ये, $K_4$ $D_3$ $_5$ होत्रे

**91** $D_2$ om 91 — $^{a}$) $T_2$ $G_{2-4}$ श्रीकुब्जे च $K_3$ $Dn_2$ $_3$ $D_5$ $T_1$ $G_1$ $M_1$ सरस्वत्याः, $B_1$ समासाद्य $Ś_1$ श्रीकुञ्जरं सरस्वत्याः — Dc om (hapl) $91^{b}$–$93^{a}$ — $^{b}$) $T_2$ $G_2$ $_3$ तीर्थे. — $Ś_1$ $M_1$ om (hapl) $91^{c}$–$93^{b}$ — $^{c}$) $K_3$ Dn $D_5$ नरश्रेष्ठ (for नरो राजन्) — $^{d}$) S ($M_1$ om) ष्टोममवाप्नुयात्

**92** $Ś_1$ Dc $M_1$ om 92 (cf v l 91) — $^{a}$) $T_1$ $G_1$ $M_2$ नैमिशकुञ्ज; $T_2$ $G_{2-4}$ नैमिशकुब्ज — $^{b}$) B $D_4$ $_6$

ततः कुब्जः सरस्वत्यां कृतो भरतसत्तम ।
ऋषीणामवकाशः स्याद्यथा तुष्टिकरो महान् ॥ ९३
तस्मिन्कुब्जे नरः स्नात्वा गोसहस्रफलं लभेत् ।
कन्यातीर्थे नरः स्नात्वा अग्निष्टोमफलं लभेत् ॥ ९४
ततो गच्छेन्नरव्याघ्र ब्रह्मणः स्थानमुत्तमम् ।
तत्र वर्णावरः स्नात्वा ब्राह्मण्यं लभते नरः ।
ब्राह्मणश्च विशुद्धात्मा गच्छेत परमां गतिम् ॥ ९५
ततो गच्छेन्नरश्रेष्ठ सोमतीर्थमनुत्तमम् ।
तत्र स्नात्वा नरो राजन्सोमलोकमवाप्नुयात् ॥ ९६
सप्तसारस्वतं तीर्थं ततो गच्छेन्नराधिप ।
यत्र मङ्कणकः सिद्धो महर्षिर्लोकविश्रुतः ॥ ९७
पुरा मङ्कणको राजन्कुशाग्रेणेति नः श्रुतम् ।
क्षतः किल करे राजंस्तस्य शाकरसोऽस्रवत् ॥ ९८
स वै शाकरसं दृष्ट्वा हर्षाविष्टो महातपाः ।
प्रनृत्तः किल विप्रर्षिर्विस्मयोत्फुल्ललोचनः ॥ ९९
ततस्तस्मिन्प्रनृत्ते वै स्थावरं जङ्गमं च यत् ।
प्रनृत्तमुभयं वीर तेजसा तस्य मोहितम् ॥ १००
ब्रह्मादिभिः सुरै राजन्नृषिभिश्च तपोधनैः ।
विज्ञप्तो वै महादेव ऋषेरर्थे नराधिप ।
नायं नृत्येद्यथा देव तथा त्वं कर्तुमर्हसि ॥ १०१
ततः प्रनृत्तमासाद्य हर्षाविष्टेन चेतसा ।
सुराणां हितकामार्थमृषिं देवोऽभ्यभाषत ॥ १०२
अहो महर्षे धर्मज्ञ किमर्थं नृत्यते भवान् ।
हर्षस्थानं किमर्थं वा तवाद्य मुनिपुंगव ॥ १०३
ऋषिरुवाच ।
किं न पश्यसि मे देव कराच्छाकरसं स्रुतम् ।

---

सुदुर्लभ, S ($M_1$ om ) यथाक्रम (for कुरू°) — $^d$) Some MSS नैमिशेयास्र $K_3$ Dn $D_5$ तपस्विन° (for तपो°) — After 92, $T_2$ $G_{2-4}$ ins

396* तत्र तीर्थे नर° स्नात्वा वाजिमेधफलं लभेत् ।

**93** $Ś_1$ $M_1$ om $93^{ab}$, Dc om $93^a$ (cf v l 91) — $^a$) $K_{1\ 4}$ $B_{2-4}$ $D_{3\ 4\ 6}$ $T_1$ $M_2$ तत्र (for तत°) $B_3$ $D_1$ $T_1$ कुज°, $D_3$ कुज, $D_5$ कुजाः, $T_2$ $G_{3\ 4}$ कुब्ज (for कुब्ज°), cf 94 $K_1$ $T_1$ $G_1$ $M_3$ सरस्वत्या, $Dn_1$ $n_3$ $D_5$ $G_4$ $M_1$ °त्या — $^c$) $Ś_1$ ऋषीणा सावकाश° स्याद्, $D_5$ °णाम वकाशस्य; $T_2$ $G_{2-4}$ °णामुपकार° स्याद् — $^d$) $D_{1,\ 2}$ पुष्टि करो $Ś_1$ $K_1$ $T_1$ $G_1$ $M_3$ भवेत् (for महान्)

**94** $K_4$ om (hapl ) $94^b$–$95^c$ — $^b$) $S_1$ $K_{1\ 2}$ D (except $D_{4\ 6}$) $T_1$ $G_1$ $M_2$ अग्निष्टोमफल ल° (= $94^d$) — After $94^{ab}$, $K_{1\ 2}$ B D (except $D_{1\ 2\ 5}$) $T_2$ $G_{1\ 2\ 4}$ ins

397* ततो गच्छेत धर्मज्ञ कन्यातीर्थमनुत्तमम् ।

— $^d$) $Ś_1$ $K_{1\ 2}$ D (except $D_{4\ 6}$) $T_1$ $G_1$ $M_2$ गोसहस्र-फल; $T_2$ $G_{2-4}$ अग्निष्टोम° (cf $94^b$)

**95** $K_4$ om $95^{abc}$ (cf v l 94), $D_3$ om $95^{ab}$ — $^a$) $K_3$ Dn $D_5$ ततो गच्छेत राजेन्द्र — $^b$) $Ś_1$ $K_{1\ 2}$ Dc $Dn_1$ $n_3$ $D_{1\ 2\ 5}$ $T_1$ $G_1$ $M_2$ तीर्थम् (for स्थानम्) $Dn_2$ ब्रह्म-तीर्थमनुत्तम — $^c$) $K_1$ S (except $G_1$) यत्र (for तत्र) S (except $G_1$ $M_1$) वर्णांतर° Dc तत्र स्नात्वा नरो राजन् — $^e$) $Ś_1$ $K_1$ $D_4$ $T_1$ $G_1$ तु (for च) — $^f$) $T_2$ $G_{2-4}$ गच्छेत्परमिका गतिं

**96** $^c$) B $D_{4\ 6}$ $T_1$ $G_1$ नरव्याघ्र (for °श्रेष्ठ)

☞ This story of Maṅkaṇaka (st 98–115) recurs almost *verbatim* in B 9 38 39 ff, which is a part of the Baladevatīrthayātrā

**98** $^d$) $T_2$ $G_{1-3}$ M तत्र (for तस्य)

**99** $^b$) $Ś_1$ K ($K_3$ missing) Dn $D_{1-3\ 5}$ प्रनृत्तवान् (for महा ) — $Ś_1$ K $Dn_1$ $n_3$ $D_{1\ 2\ 5}$ om $99^{cd}$ — $99^d$ = (var ) 1 122 $18^b$, 126 $1^b$, etc

**100** $D_2$ om $100^c$–$101^a$ — $^a$) $K_3$ $B_4$ Dn $D_5$ $M_1$ तु (for वै)

**101** $D_2$ om $101^a$ (cf v l 100) — $^a$) B $D_{3\ 4\ 6}$ ततो देवैर् (for सुरै राजन्) $M_1$ ततो ब्रह्मादिभिर्देवै — $^d$) $Ś_1$ $K_{1\ 4}$ Dc $D_{3\ 4}$ मुनेर् (for ऋषेर्) — $^e$) S (except $M_1$) यथा न नृत्यते दे°

**102** $^a$) $Ś_1$ K ($K_3$ om ) Dc Dn $D_{1,\ 2}$ त प्रनृत्त समासाद्य, B $D_{3\ 4\ 6}$ $M_2$ ततो देवो मुनिं दृष्ट्वा — $^{cd}$) $B_{1-3}$ $D_{3\ 4\ 6}$ $M_1$ नृत्यतमब्रवीच्चैन सुराणा हितकाम्यया

**103** $^a$) $K_{3\ 4}$ Dn $D_{1\ 2\ 3}$ (*sup lin* ) $_6$ भो भोः $B_{1-3}$ Dc $D_3$ (orig ) $_{4\ 5}$ हहो; T $G_{2\ 3}$ $M_2$ विभो; $G_4$ विप्रो (for अहो) — $^c$) $D_8$ किमिव (for किमर्थं) $K_4$ Dc $D_{1\ 2}$ च, $D_3$ ते (for वा)

**104** After the ref, $S_1$ $K_1$ B D (except $D_{1\ 2\ 5}$) ins

398* तपस्विनो धर्मपथे स्थितस्य द्विजसत्तम ।
[ = B 9 38 $45^{ab}$ — $K_1$ मुनिपुंगव, $D_5$ सुरसत्तम (for द्विज°) ]

यं दृष्ट्वाहं प्रनृत्तो वै हर्षेण महतान्वितः ॥ १०४

पुलस्त्य उवाच ।

तं प्रहस्याब्रवीद्देवो मुनिं रागेण मोहितम् ।
अहं वै विस्मयं विप्र न गच्छामीति पश्य माम् ॥ १०५
एवमुक्त्वा नरश्रेष्ठ महादेवेन धीमता ।
अङ्गुल्यग्रेण राजेन्द्र स्वाङ्गुष्ठस्ताडितोऽनघ ॥ १०६
ततो भस्म क्षताद्राजन्निर्गतं हिमसंनिभम् ।
तद्दृष्ट्वा व्रीडितो राजन्स मुनिः पादयोर्गतः ॥ १०७
नान्यं देवमहं मन्ये रुद्रात्परतरं महत् ।
सुरासुरस्य जगतो गतिस्त्वमसि शूलधृक् ॥ १०८
त्वया सृष्टमिदं विश्वं त्रैलोक्यं सचराचरम् ।
त्वामेव भगवन्सर्वे प्रविशन्ति युगक्षये ॥ १०९
देवैरपि न शक्यस्त्वं परिज्ञातुं कुतो मया ।
त्वयि सर्वे च दृश्यन्ते सुरा ब्रह्मादयोऽनघ ॥ ११०
सर्वस्त्वमसि लोकानां कर्ता कारयिता च ह ।
त्वत्प्रसादात्सुराः सर्वे मोदन्तीहाकुतोभयाः ।
एवं स्तुत्वा महादेवं स ऋषिः प्रणतोऽभवत् ॥ १११

ऋषिरुवाच ।

त्वत्प्रसादान्महादेव तपो मे न क्षरेत वै ॥ ११२

पुलस्त्य उवाच ।

ततो देवः प्रहृष्टात्मा ब्रह्मर्षिमिदमब्रवीत् ।
तपस्ते वर्धतां विप्र मत्प्रसादात्सहस्रधा ॥ ११३
आश्रमे चेह वत्स्यामि त्वया सार्धं महामुने ।
सप्तसारस्वते स्नात्वा अर्चयिष्यन्ति ये तु माम् ॥ ११४
न तेषां दुर्लभं किंचिदिह लोके परत्र च ।
सारस्वतं च ते लोकं गमिष्यन्ति न संशयः ॥ ११५

---

— a) Ś1 K1 D1 2 मे विप्र, K2 B Dc Dn D4 6 मे ब्रह्मन्, T1 देवेश (for मे देव) — b) B2-4 D4 6 क्षतात् (for करात्) — c) D1 2 हि, D3 4 6 M1 स (for [अ]ह) K2 B Dn D1 3 4 6 M [ऽ]ह, D2 य, D5 [ऽ]स्मि (for वै)

105 All MSS except T2 G3 M om the ref — b) K4 Dc D1 2 S मुनिं (as in text), the rest ऋषिं — c) Ś1 च, K (K3 om) Dn D1 2 5 तु; Dc न (for वै) — d) D1 2 T2 G2 3 M2 पश्या (for गच्छा) B1 3 4 D4 6 M1 [इ]ह (for [इ]ति) Ś1 K1 वै (for माम्) Dc गच्छामीति प्रपश्य मा

106 b) B Dc D3 4 6 T1 G1 M1 वै तदा (for धीमता) — c) S (except M1) अगुष्ठाग्रेण — d) Ś1 D1 2 स्वोंगुष्टस्, T2 G2-4 स्वागुलिस् Dc T G [ऽ]भवत्, D1 2 पुन ; D3 यथा (for ऽनघ) M2 स्वागुष्ठास्ताडितोभवत्

107 b) B D4 6 निःसृत (for निर्गत) — c) Ś1 K1 4 यद्; K2 B1 Dc Dn1 D3 4 6 S (except T1) स (for तद्)

108 Before 108, T G3 4 ins ऋषि° — a) K4 B1 4 Dc D1 2 4 6 M1 अन्य(Dc न्या)द् K2 4 B2-4 D देवात् (for देवम्) K2 B3 Dn D5 पर मेने (for अह मन्ये) — Ś1 om 108c — c) K1 D1 2 G1 चराचरस्य M1 त्रयाणामपि लोकाना

109 a) K2 4 Dn D1 4 सर्वम् (for सृष्टम्) K2 4 Dn D1-3 सृष्ट, Dc S (except M1) सर्वं (for विश्व) — c) S1 K1 4 Dc D1 2 त्वामेव सर्वं विशति, K2 Dn D5 त्वमेव सर्वान्ग्रससि — d) Ś1 K (K3 missing) Dn D1 2 5 पुनरेव, Dc पुनश्चैव (for प्रविशन्ति)

110 a) S (except G4) शक्य ते (for शक्यस्त्व) — b) S पर (for परि) — c) K2 Dn D5 सर्वे प्र, K4 B2-4 D3 4 6 T1 G1 M2 सर्वेश, B1 D1 2 सर्वे स्म, Dc सर्वेण (for सर्वे च)

111 a) K1 G4 M1 सर्व, K4 D5 शर्वस्, Dc कार्यस्, G1 गतिस् (for सर्वस्) — d) K4 D1 2 मोदते ह्यकुतो°; S (except M1) निवसत्य — e) Dc1 S (except M1) उक्त्वा (for स्तुत्वा) — f) K4 ऋषिभि, Dc S (except M1) ऋषि° स (by transp) K4 B Dc [ऽ]ब्रवीत् (for ऽभवत्) K2 Dn D1 2 5 ऋषिर्वचनमब्रवीत्

113 All MSS om the ref (here as in the previous stanza) — K4 om 113ab (with 112) — d) T2 G2-4 सहस्रश° (for °धा)

114 a) T G3 4 चैव (for चेह) — b) K2 Dn D5 त्वया सह T2 G2-4 मुने वने (for महा°) — d) S यो मामर्चयिता द्विज (T1 °यते नर, G2 M °यते द्विज)

115 a) S तस्य (for तेषा) — c) Dc त, T G2 3 वै (for ते) B D4 6 गच्छेत्सारस्वत चापि, M1 गच्छेत्सारस्वताश्चैव — d) B D4 6 M1 लोकान्ना(B2 D4 6 क ना) स्त्यत्र सशय — After 115, N (K3 missing) T2 ins

399* एवमुक्त्वा महादेवस्तत्रैवान्तरधीयत ।

ततस्त्वौशनसं गच्छेत्त्रिषु लोकेषु विश्रुतम् ।
यत्र ब्रह्मादयो देवा ऋषयश्च तपोधनाः ॥ ११६
कार्तिकेयश्च भगवांस्त्रिसंध्यं किल भारत ।
सांनिध्यमकरोत्तत्र भार्गवप्रियकाम्यया ॥ ११७
कपालमोचनं तीर्थं सर्वपापप्रमोचनम् ।
तत्र स्नात्वा नरव्याघ्र सर्वपापैः प्रमुच्यते ॥ ११८
अग्नितीर्थं ततो गच्छेत्तत्र स्नात्वा नरर्षभ ।
अग्निलोकमवाप्नोति कुलं चैव समुद्धरेत् ॥ ११९
विश्वामित्रस्य तत्रैव तीर्थं भरतसत्तम ।
तत्र स्नात्वा महाराज ब्राह्मण्यमभिजायते ॥ १२०
ब्रह्मयोनिं समासाद्य शुचिः प्रयतमानसः ।
तत्र स्नात्वा नरव्याघ्र ब्रह्मलोकं प्रपद्यते ।
पुनात्यासप्तमं चैव कुलं नास्त्यत्र संशयः ॥ १२१
ततो गच्छेत राजेन्द्र तीर्थं त्रैलोक्यविश्रुतम् ।
पृथूदकमिति ख्यातं कार्तिकेयस्य वै नृप ।
तत्राभिषेकं कुर्वीत पितृदेवार्चने रतः ॥ १२२
अज्ञानाज्ज्ञानतो वापि स्त्रिया वा पुरुषेण वा ।
यत्किंचिदशुभं कर्म कृतं मानुषबुद्धिना ॥ १२३
तत्सर्वं नश्यते तस्य स्नातमात्रस्य भारत ।
अश्वमेधफलं चापि स्वर्गलोकं च गच्छति ॥ १२४
पुण्यमाहुः कुरुक्षेत्रं कुरुक्षेत्रात्सरस्वतीम् ।
सरस्वत्याश्च तीर्थानि तीर्थेभ्यश्च पृथूदकम् ॥ १२५
उत्तमे सर्वतीर्थानां यस्त्यजेदात्मनस्तनुम् ।
पृथूदके जप्यपरो नैनं श्वोमरणं तपेत् ॥ १२६
गीतं सनत्कुमारेण व्यासेन च महात्मना ।
वेदे च नियतं राजन्नभिगच्छेत्पृथूदकम् ॥ १२७
पृथूदकात्पुण्यतमं नान्यत्तीर्थं नरोत्तम ।
एतन्मेध्यं पवित्रं च पावनं च न संशयः ॥ १२८

---

**116** Before 116, T $G_{2-4}$ ins पुलस्त्य — [a]) $B_1$ $D_c$ च (for तु) $D_c$ $T_2$ $G_{1\,2\,4}$ [उ]शनस (for [औ]श°)
**117** [c]) $K_1$ $D_{1\,2}$ तस्मै, $K_{2\,4}$ $D_c$ $D_n$ $D_8$ $T_1$ $G_1$ नित्य (for तत्र)
**118** [a]) Ś$_1$ $K_1$ $D_2$ नाम (for तीर्थं) — [b]) $D_2$ तीर्थं पापप्र°, T $G_{2-4}$ सर्वपापप्रणाशन
**119** [b]) $D_{c1}$ नरोत्तम, $D_{c2}$ नराधिप (for नर°) $B_{1\,3\,4}$ स्नात्वा भरतसत्तम, $B_2$ $D_4$ स्नात्वा च भरतर्षभ — [c]) $S_1$ $K_4$ $D_{1\,2}$ अग्निष्टोमम्
**120** $S_1$ $D_{1\,2}$ om 120[c]–121[b] — [c]) $K_1$ $D_c$ नरो राजन्; $K_2$ $D_n$ $D_5$ नरश्रेष्ठ, $K_4$ $B_3$ $T_1$ $M_1$ नरव्याघ्र (for महा°) — [d]) $K_{1\,2}$ $D_n$ $D_5$ अधिगच्छति (for अभि°)
**121** $S_1$ $D_{1\,2}$ om 121[ab] (cf v l 120) — [e]) $S_1$ $K_1$ स्वकुल, $D_8$ (*sup lin* as in text) च कुल (for [आ]सप्तम) $D_8$ वीर (for चैव) — [f]) Ś$_1$ $K_1$ $D_8$ (*sup lin* as in text) सप्तम नात्र संशय
**122** [c]) $T_2$ $G_{2-4}$ समासाद्य, $M_2$ इति ख्यात — [d]) S (except $M_1$) धीमत॰ (for वै नृप) — After 122[cd], $D_8$ ins (the superfluous gloss)

400* पाप प्रणश्यते तत्र स्नातमात्रस्य भारत।
[Cf 124[ab] ]

**124** [a]) Ś$_1$ तेन; K ($K_3$ missing) B D (except $D_2$) $M_1$ तत्र, $M_2$ तात (for तस्य) — [c]) $K_{2\,4}$ $D_n$ $D_{1\,2\,5}$ चास्य (for चापि) — [d]) $T_1$ स (for च) $K_1$ विंदति (for गच्छति) B $D_{4\,5}$ लभते स्वर्गमेव च, $M_1$ लभते नात्र संशय.
**125** [b]) Ś$_1$ K ($K_3$ missing) $D_n$ $D_{1-5}$ $T_2$ $G_{1-3}$ $M_2$ सरस्वती
**126** $K_4$ om (hapl )126–127, $D_1$ om 126[ab] — [a]) $K_1$ $D_n$ $D_8$ उत्तम — [c]) $D_{n2}$ $n_3$ $D_5$ जाप्य°; $T_1$ जप° (for जप्य°) — [d]) Ś$_1$ नून, $K_1$ $B_{3\,4}$ $D_c$ $D_{4\,6}$ नैव (for नैन) Ś$_1$ भवेत् (for तपेत्) $K_2$ $D_n$ $D_5$ नैतस्य मरण भवेत्, $D_2$ नैवात्मा मरण व्रजेत्
**127** $K_4$ $B_3$ om 127 (for $K_4$ cf v l 126) $K_3$ resumes from 127[cd] — [a]) T $G_{2-4}$ श्रुत, $M_2$ पीत (for गीत) — [b]) $B_2$ व्यासेन च महर्षिणा, $T_2$ $G_{3\,4}$ °नापि च धीमता — [c]) $K_2$ $D_n$ $D_5$ एव स ($D_{n2}$ सु°) (for वेदे च) $K_3$ पूर्वं सारस्वत राजन्
**128** [a]) Ś$_1$ $K_{1\,4}$ $D_{1\,2}$ $T_1$ $G_1$ पुण्यतर, $K_2$ $D_n$ तीर्थतम, $T_2$ $G_{2-4}$ तीर्थंतर — [b]) $K_1$ नास्तीवान्यत्, $K_3$ $M_1$ नान्यतीर्थं, $G_1$ नास्ति तीर्थं Ś$_1$ $K_{1\,3}$ $D_n$ $D_5$ कुरूद्वह, $K_3$ $D_c$ $D_{1\,2}$ नराधिप, $B_{1\,4}$ $M_1$ युधिष्ठिर — $T_1$ $M_2$ om (hapl ) 128[c]–130[b] — [c]) $K_2$ $D_n$ $D_5$ तन्मेध्य तत् (for एतन्मेध्य)
**129** $D_4$ om 129[a]–130[b], $T_1$ $M_2$ om 129 (cf v l 128) — [b]) To remove the hiatus between the padas,

तत्र स्नात्वा दिवं यान्ति अपि पापकृतो जनाः ।
पृथूदके नरश्रेष्ठ प्राहुरेवं मनीषिणः ॥ १२९
मधुस्रवं च तत्रैव तीर्थं भरतसत्तम ।
तत्र स्नात्वा नरो राजन्गोसहस्रफलं लभेत् ॥ १३०
ततो गच्छेन्नरश्रेष्ठ तीर्थं देव्या यथाक्रमम् ।
सरस्वत्यारुणायाश्च संगमं लोकविश्रुतम् ॥ १३१
त्रिरात्रोपोषितः स्नात्वा मुच्यते ब्रह्महत्यया ।
अग्निष्टोमातिरात्राभ्यां फलं विन्दति मानवः ।
आसप्तमं कुलं चैव पुनाति भरतर्षभ ॥ १३२
अवतीर्णं च तत्रैव तीर्थं कुरुकुलोद्वह ।
विप्राणामनुकम्पार्थं दर्भिणा निर्मितं पुरा ॥ १३३
व्रतोपनयनाभ्यां वा उपवासेन वा द्विजः ।
क्रियामन्त्रैश्च संयुक्तो ब्राह्मणः स्यान्न संशयः ॥ १३४
क्रियामन्त्रविहीनोऽपि तत्र स्नात्वा नरर्षभ ।
चीर्णव्रतो भवेद्विप्रो दृष्टमेतत्पुरातने ॥ १३५
समुद्राश्चापि चत्वारः समानीताश्च दर्भिणा ।
येषु स्नातो नरव्याघ्र न दुर्गतिमवाप्नुयात् ।
फलानि गोसहस्राणां चतुर्णां विन्दते च सः ॥ १३६
ततो गच्छेत राजेन्द्र तीर्थं शतसहस्रकम् ।
साहस्रकं च तत्रैव द्वे तीर्थे लोकविश्रुते ॥ १३७
उभयोर्हि नरः स्नात्वा गोसहस्रफलं लभेत् ।
दानं वाप्युपवासो वा सहस्रगुणितं भवेत् ॥ १३८
ततो गच्छेत राजेन्द्र रेणुकातीर्थमुत्तमम् ।
तत्राभिषेकं कुर्वीत पितृदेवार्चने रतः ।
सर्वपापविशुद्धात्मा अग्निष्टोमफलं लभेत् ॥ १३९
विमोचनमुपस्पृश्य जितमन्युर्जितेन्द्रियः ।

---

Ś$_1$ त्वपि, K$_1$ ह्यपि, K$_2$ Dn D$_5$ G$_4$ येपि, K$_3$ ये च (for अपि) K$_{1\,2}$ Dn D$_5$ G$_{1\,4}$ नरा ; D$_3$ (*sup lin*) दिव (for जना ) D$_{1\,2}$ स्वशरीरेण मानवा° — $^c$) K$_4$ नर° स्नात्वा (for नर°) — $^d$) Ś$_1$ K$_{1\,2}$ Dn D$_{3.5}$ एवमाहुर् (for प्राहुरेव)

**131** M$_1$ om 131$^{ab}$ — $^a$) Ś$_1$ K$_{1\,2}$ Dn D$_5$ गच्छेत राजेंद्र — $^b$) K$_3$ Dn D$_5$ तीर्थं मेध्य, D$_{1\,2}$ तीर्थसेवी (for तीर्थं देव्या) — T$_2$ G$_3$ om 131$^c$–132$^d$ — $^c$) Ś$_1$ K$_3$ D$_{1\,2}$ सरस्वत्य(K$_3$ °स्यो )रुणा° — $^d$) G$_{2\,4}$ M$_1$ सगमे

**132** T$_2$ G$_3$ om 132 (cf v.l 131) — $^a$) Ś$_1$ K$_1$ D$_2$ मारव (for मानव°) B D$_{4\,6}$ M$_1$ फल चैव समश्नुते — $^{ef}$) Ś$_1$ सप्तम च (for आसप्तमं) B D$_{4.6}$ M$_1$ पुनात्यासप्तम चैव कुल नास्त्यत्र सशय (≈ 121$^{ef}$)

**133** $^a$) K$_2$ Dn D$_5$ अर्धकील; K$_3$ B Dc D$_{1-4\,6}$ अवकीर्णं; T$_1$ G$_1$ °चीर्णं — G$_{3\,4}$ हि (for च) — $^d$) Ś$_1$ (*sup lin*) दक्षिणा; K$_2$ Dn ब्रह्मणा, S शार्ङ्गिणा (M$_1$ दक्षिणा)

**134** $^a$) K$_{1\,3\,4}$ B Dc Dn$_2$ n$_3$ D$_{2-4}$ G$_3$ च (for वा) — $^b$) To remove the hiatus between the pādas, Ś$_1$ K$_{1\,2}$ B Dc Dn D$_{1\,3-6}$ [अ]प्युपवासेन, D$_2$ [अ]त्युप°; T$_2$ G$_{1\,3\,4}$ M$_2$ ह्युप ; K$_2$ Dn D$_5$ [अ]प्युत वासेन — After 134$^{ab}$, Ś$_1$ D$_{1\,2}$ read 135 — $^d$) K$_3$ तत्र स्नात्वा महाभुज

**135** Ś$_1$ D$_{1\,2}$ read 135 after 134$^{ab}$ — $^a$) Ś$_1$ K$_{1\,3\,4}$ D$_2$ वा (for ऽपि) D$_3$ क्रियामन्त्रैरुपेतश्च — $^b$) D$_2$ ब्राह्मण° स्यान्न सशय°, T$_2$ G$_{2-4}$ स्नात्वा च भरतर्षभ — $^c$) K$_2$ चीर्णमती; D$_6$ चीर्णं मती K$_2$ Dn D$_5$ विद्वान् (for विप्रो) Ś$_1$ K$_{1\,3\,4}$ D$_{1-3}$ चीर्णव्रतोपनयन (K$_1$ °ने; D$_3$ °न) — $^d$) G$_4$ दृष्टमे तत् B$_1$ Dn T$_1$ G$_{1\,4}$ पुरातनै, B$_{2-4}$ Dc D$_{4\,6}$ °न Ś$_1$ K$_{1\,3\,4}$ D$_{1-3}$ उपवाससमन्वित°

**136** $^a$) K$_3$ [अ]त्र (for [अ]पि) — $^b$) T G शार्ङ्गिणात्र, M$_1$ दर्भिणात्र, M$_2$ दर्विणा च (for समानीताश्च) K$_4$ सुदर्भिणा, S समाहि(G$_1$ °हृ )ता (for च दर्भिणा) D$_3$ आनीता सुमहात्मना — $^c$) K$_2$ Dn D$_{5}$ तेषु; B$_2$ D$_3$ S (except M$_1$) यत्र; D$_{4\,6}$ तत्र (for येषु) B$_{2-4}$ Dc D$_{4\,6}$ T$_1$ G$_2$ M$_1$ स्नात्वा (for स्नातो) Ś$_1$ K$_{1-3}$ B$_3$ Dn D$_{1\,2\,5}$ नरश्रेष्ठ — $^f$) K$_1$ फल, K$_3$ तु वै, D$_5$ पुन , T$_2$ G$_3$ [ऽ]पि स ; G$_4$ हि स (for च स°) Ś$_1$ K$_1$ D$_{1-3}$ चत्वार्याप्नोति मानव ; M$_1$ चतुर्णां स च विन्दति

**137** $^a$) K Dn D$_{1-3\,5}$ धर्मज्ञ (for राजेन्द्र) — $^b$) K$_{1\,3}$ Dc D$_{1-3}$ M शतसहस्रिक; D$_5$ °स्रश ; G$_4$ बहुसहस्रक — $^c$) K$_{1\,4}$ D$_{1-3}$ G$_{1\,4}$ साहस्रिकं, K$_3$ Dn$_1$ T G$_{2\,3}$ सहस्रकं; M$_2$ सहस्रिकं

**138** $^a$) Ś$_1$ K$_1$ एतयोर्हि K$_3$ om (hapl ) 138$^c$–139$^f$, G$_2$ om 138$^{cd}$. — $^c$) Dc D$_{3\,4}$ M$_1$ च (for the first वा) — $^d$) B$_{1\,3\,4}$ Dc °गुणितो, B$_2$ D$_{4\,6}$ °समितो

**139** K$_3$ om 139 (cf v l 138) — $^c$) K$_2$ Dn तीर्थाभिषेकं — After 139, S reads 147–148

**140** $^a$) Dc D$_{3\,4\,6}$ G$_1$ M विमोचन उप° — Ś$_1$ K$_1$ T$_1$ G$_1$ M$_2$ om (hapl ) 140$^c$–141$^b$ — $^c$) B$_{1-3}$ Dc D$_{4\,6}$ पापै° (for दोषै ). T$_2$ G (G$_1$ om ) प्रतिग्रह( G$_2$ °हा ; G$_4$ °ह )गतै° पापै — $^d$) T$_2$ G (G$_1$ om ) च (for स).

समेष्यति त्वया चैव तेन सार्धमनुव्रज ॥ १०६
मया च सह धर्मज्ञ तीर्थान्येतान्यनुव्रज ।
प्राप्स्यसे महतीं कीर्तिं यथा राजा महाभिषः ॥ १०७
यथा ययातिर्धर्मात्मा यथा राजा पुरूरवाः ।
तथा त्वं कुरुशार्दूल स्वेन धर्मेण शोभसे ॥ १०८
यथा भगीरथो राजा यथा रामश्च विश्रुतः ।
तथा त्वं सर्वराजभ्यो भ्राजसे रश्मिवानिव ॥ १०९
यथा मनुर्यथेक्ष्वाकुर्यथा पूरुर्महायशाः ।
यथा वैन्यो महातेजास्तथा त्वमपि विश्रुतः ॥ ११०
यथा च वृत्रहा सर्वान्सपत्नान्निर्दहत्पुरा ।
तथा शत्रुक्षयं कृत्वा प्रजास्त्वं पालयिष्यसि ॥ १११
स्वधर्मविजितामुर्वीं प्राप्य राजीवलोचन ।
ख्यातिं यास्यसि धर्मेण कार्तवीर्यार्जुनो यथा ॥ ११२

वैशंपायन उवाच ।

एवमाश्वास्य राजानं नारदो भगवानृषिः ।
अनुज्ञाप्य महात्मानं तत्रैवान्तरधीयत ॥ ११३
युधिष्ठिरोऽपि धर्मात्मा तमेवार्थं विचिन्तयन् ।
तीर्थयात्राश्रयं पुण्यमृषीणां प्रत्यवेदयत् ॥ ११४

इति श्रीमहाभारते आरण्यकपर्वणि त्र्यशीतितमोऽध्यायः ॥ ८३ ॥

---

D1-3 M2 त्वया राजन्, Dn D4 5 T G महाराज, M1 त्वया सार्धं (for त्वया चैव) — d) M1 चैवम् (for सार्धम्) T2 G2-4 लोमश सुमहातपा॰

**107** B2 om 107ab — a) Dn D5 मयापि, T2 G2-4 एतेन (for मया च) — b) Ś1 K2 ॰क्रम, K3 4 D8 ॰क्रम, Dn D5 ॰क्रमात् (for ॰व्रज) — T2 G3 om 107cd — c) Ś1 K1 2 परमा (for महतीं) T1 G1 सिद्धिं (for कीर्तिं) — d) S (T2 G3 om) महाभिषक्

**108** a) T2 G3 तीर्थज्ञो, G2 4 धर्मज्ञो (for धर्मात्मा) — K3 om (hapl) 108b–109a — c) S1 K1 2 भरत॰, B1 2 Dn D5 त्व राज॰ (for त्व कुरु॰)

**109** K3 om 109a (cf v l 102), T2 G2-4 om 109cd — c) K2 सर्वराजन्यो, K3 सर्वं राजन्ये, D5 च स राजन्यो, T1 G1 M2 अपि राजेंद्र (for सर्वराजभ्यो) — d) K1 2 B Dc2 D1 2 4 6 राजसे T1 M2 रश्मिमानिव

**110** K1 2 om 110 — b) B Dn2 D4 ॰रथ॰ (for ॰यशा) — c) K3 4 B Dc Dn1 D2 6 यथा वैण्यो Ś1 Dn D1 3 5 महाराज

**111** a) K4 स, B D4 6 वै (for च) — b) Ś1 K1 2 व्यदहत्, K4 D1-3 S अदहत्, B Dc Dn D5 8 निर्दहन् (for निर्दहत्) — After 111ab, N (except D1 2) ins

453* त्रैलोक्य पालयामास देवराड्विगतज्वर ।

— d) K3 4 B D M त्व प्रजा॰ (by transp), T2 G2-4 प्रजा स

**112** a) S1 K1 2 स्वधर्मेण विजित्योर्वीं, B1 ॰र्मविजिता मुर्वीं, B4 ॰र्मेणार्जितामुर्वीं, T2 G2 ॰र्मविजित सर्वं — c) Dc कीर्ति S1 यास्यति, G1 प्राप्स्यसि B D1 6 वीर्येण, Dn1 T2 G3 धर्मज्ञ M1 कर्मणा यास्यसि ख्यातिं — d) K1 3 4 B1 3 D2 3 M ॰वीर्योर्जुनो

**113** S1 K1 2 T2 G2-4 om the ref — b) Ś1 K1 2 मुनिसत्तम॰ (for भग॰) — c) K3 4 B Dn D3-6 M1 ॰शान, Dc D1 2 G4 M2 ॰राज, G1 ॰ज्ञान (for ॰त्मान)

**114** Ś1 om 114cd — c) K1 3 4 ॰मय, K3 ॰श्रिय, Dn D5 T G M2 ॰श्रित (G4 ॰श्रुत) (for ॰श्रय)

Colophon — *Major parvan* S1 K1 2 Dn1 n2 T G2-4 M1 आरण्य — *Sub parvan* T1 तीर्थयात्रा All MSS except T1 (om sub-parvan name) mention only पुलस्त्यतीर्थयात्रा, followed by समाप्ता (K1 B3 D4 G1 om समाप्ता) — *Adhy no* (figures, words or both) Dn1 85, Dn2 M2 (before corr) 86, D1 89, S (M2 after corr) 84 — *Śloka no* Dn1 131, Dn2 130, Dn3 133, D1 112

## 84

**1** d) B D4 M1 इदमाह (for प्राह राजा)

**2** Before 2, B1 3 4 Dc D4 6 ins युधिष्ठिर उ॰ — a) B D4 6 तु स नर॰ (for स पुरुष॰) — d) S (except M1) प्र॰ (for वि॰)

**3** b) K1 3 4 B1 2 Dn3 D3 4 T2 G1 3 4 तपोधनः — c) K4 भूतशताखेषु, D1 2 ॰सर्पेषु, D3 ॰सत्रेषु — d) K4 D2 3 इव प्रभो, B D4 6 ॰मम प्रभु॰ (B2 ममप्रभ); M1 इवाजित

**4** a) D4 रुपेता॰ (for छेना॰) — b) S1 K1 Dn1 n2 D5 ॰निघातिनी, G4 M1 ॰निषू(M1 ॰निसू)दनौ — d) K3

# ८४

वैशंपायन उवाच ।
भ्रातॄणां मतमाज्ञाय नारदस्य च धीमतः ।
पितामहसमं धौम्यं प्राह राजा युधिष्ठिरः ॥ १
मया स पुरुषव्याघ्रो जिष्णुः सत्यपराक्रमः ।
अस्त्रहेतोर्महाबाहुरमितात्मा विवासितः ॥ २
स हि वीरोऽनुरक्तश्च समर्थश्च तपोधन ।
कृती च भृशमप्यस्त्रे वासुदेव इव प्रभुः ॥ ३
अहं ह्येतावुभौ ब्रह्मन्कृष्णावरिनिघातिनौ ।
अभिजानामि विक्रान्तौ तथा व्यासः प्रतापवान् ।
त्रियुगौ पुण्डरीकाक्षौ वासुदेवधनंजयौ ॥ ४
नारदोऽपि तथा वेद सोऽप्यशंसत्सदा मम ।
तथाहमपि जानामि नरनारायणावृषी ॥ ५
शक्तोऽयमित्यतो मत्वा मया संप्रेषितोऽर्जुनः ।
इन्द्रादनवरः शक्तः सुरसूनुः सुराधिपम् ।
द्रष्टुमस्त्राणि चादातुमिन्द्रादिति विवासितः ॥ ६
भीष्मद्रोणावतिरथौ कृपो द्रौणिश्च दुर्जयः ।
धृतराष्ट्रस्य पुत्रेण वृता युधि महाबलाः ।
सर्वे वेदविदः शूराः सर्वेऽस्त्रकुशलास्तथा ॥ ७
योद्धुकामश्च पार्थेन सततं यो महाबलः ।
स च दिव्यास्त्रवित्कर्णः सूतपुत्रो महारथः ॥ ८
सोऽश्ववेगानिलबलः शरार्चिस्तलनिस्वनः ।
रजोधूमोऽस्त्रसंतापो धार्तराष्ट्रानिलोद्धतः ॥ ९
निसृष्ट इव कालेन युगान्तज्वलनो यथा ।
मम सैन्यमयं कक्षं प्रधक्ष्यति न संशयः ॥ १०
तं स कृष्णानिलोद्धूतो दिव्यास्त्रजलदो महान् ।
श्वेतवाजिबलाकाभृद्गाण्डीवेन्द्रायुधोज्ज्वलः ॥ ११

---

S यथा (for तथा) K3 4 D3 T G परतपौ (T3 G3 प°) — c) T1 G2 4 M त्रियुग

**5** a) D1 T2 G3 4 यथा (for तथा) Ś1 वेदात् (for वेद) — b) K3 Dn1 n3 D5 यो (for सो°) T2 G2–4 तथा (for सदा) — c) T1 G1 M2 यथा (for तथा) Ś1 K1 2 ताव् (for [अ]हम्) K4 D1 2 T1 अभि (for अपि)

**6** a) B Dc D4 6 श(B स)र्वेमाराधयस्वेति — b) K1 2 4 B3 4 Dc Dn1 n2 D1 4 5 G4 स, T1 तु (for स) — c) Ś1 इन्द्रारुणवर, K4 D2 S °दनवम° Ś1 K3 Dc शक्रः, K2 Dn1 n2 D1–3 शक्र — d) B1–3 D4 6 °पुत्र° (for °सूनु°)

**7** b) B सु (B4 स), M1 तु (for च) Ś1 K1 2 G1 दुर्जयौ; M2 °या — d) B3 G1 घृता युधि; T2 (before corr) सुवृता सु°, T2 (after corr) G3 सुकृता सु, G2 सुघृता सु, G4 सुमता सु Ś1 K D (except D4 6) महारथा — f) K3 D1–3 5 M1 सर्वास्त्रकुशला°, B D4 सर्वेऽस्त्रविदुष, Dn D6 सर्वास्त्रविदुष, T2 G3 सर्वे सुकुशला K3 4 Dc D1–3 रणे, G2 सदा (for तथा) — After 7, S (except G1 3) ins

454* सर्वे महारथा° ख्याता° सर्वे जितपरिश्रमा ।

[T3 मुख्या (for ख्याता) G4 सर्वे रथिमहामुख्या (for the prior half) G2 सर्वेमितपराक्रमा (for the posterior half)]

**8** a) Ś1 K1–3 B Dc Dn D5 6 T G1 3 4 °कामाश्च, K4 D1 2 कामस्तु, D3 °काम° स — b) K2 B Dc Dn D4–6 T2 G1 3 ये (B Dc D4–6 T3 [by corr] ते, G1 वै) महाबला° — Dc om 8c–10d, D2 om (hapl) 8c–9c — c) D3 M1 सर्वे° (for स च) — d) S1 K1 2 °मना, K3 B3 °बल° (for °रथ)

**9** Dc om 9, D2 om 9a (cf v l 8) — a) K B Dn2 D1 3–6 T2 G2 सोस्त्र, Dn1 n3 योस्त्र° — c) Ś1 B D4 6 G1 °धूमास्त्र°; K3 °धूम्रोस्त्र B Dn D4–6 M2 -सपातो, K2 सत्रासो

**10** Dc om 10 (cf v l 8) — b) K4 B D (Dc om) S (except G2 4) युगाते ज्व° Ś1 K B1 2 D (Dc om) M2 महान् (for यथा) — D1 2 om (hapl) 10c–11b — d) S (except M1) महाबल (for न सशय°)

**11** D1 2 om 11ab (cf v l 10) — a) Ś1 K1 2 स च (for त स) — b) Dn °ज्वलनो (for °जलदो)! — c) S1 K1 बलाकाभिर्, K2 °श्यो, K3 °भो, Dc °वान्; D1 2 M1 धृग्, D3 °सृग्; D5 श्च — d) Ś1 ज्वल, B1 2 Dn1 D4 स्त्वण°, B3 र्जुन°, D3 °ज्वर°

**12** a) Ś1 K2–4 Dn D1–3 M1 सरब्ध°, K1 B Dc D4 6

समेष्यति त्वया चैव तेन सार्धमनुव्रज ॥ १०६
मया च सह धर्मज्ञ तीर्थान्येतान्यनुव्रज ।
प्राप्स्यसे महतीं कीर्तिं यथा राजा महाभिषः ॥ १०७
यथा ययातिर्धर्मात्मा यथा राजा पुरूरवाः ।
तथा त्वं कुरुशार्दूल स्वेन धर्मेण शोभसे ॥ १०८
यथा भगीरथो राजा यथा रामश्च विश्रुतः ।
तथा त्वं सर्वराजभ्यो भ्राजसे रश्मिवानिव ॥ १०९
यथा मनुर्यथेक्ष्वाकुर्यथा पूरुर्महायशाः ।
यथा वैन्यो महातेजास्तथा त्वमपि विश्रुतः ॥ ११०
यथा च वृत्रहा सर्वान्सपत्नान्निर्दहत्पुरा ।
तथा शत्रुक्षयं कृत्वा प्रजास्त्वं पालयिष्यसि ॥ १११
स्वधर्मविजितामुर्वीं प्राप्य राजीवलोचन ।
ख्यातिं यास्यसि धर्मेण कार्तवीर्यार्जुनो यथा ॥ ११२

वैशंपायन उवाच ।

एवमाश्वास्य राजानं नारदो भगवानृषिः ।
अनुज्ञाप्य महात्मानं तत्रैवान्तरधीयत ॥ ११३
युधिष्ठिरोऽपि धर्मात्मा तमेवार्थं विचिन्तयन् ।
तीर्थयात्राश्रयं पुण्यमृषीणां प्रत्यवेदयत् ॥ ११४

इति श्रीमहाभारते आरण्यकपर्वणि त्र्यशीतितमोऽध्यायः ॥ ८३ ॥

---

D1-3 M2 त्वया राजन्, Dn D4 5 T G महाराज, M1 त्वया सार्धं (for त्वया चैव) — $^{d}$) M1 चैवम् (for सार्धम्) T2 G2-4 लोमश सुमहातपाः

**107** B2 om $107^{ab}$ — $^{a}$) Dn D5 मयापि, T2 G2-4 एतेन (for मया च) — $^{b}$) Ś1 K2 °क्रम, K3 4 D8 °क्रम, Dn D5 °क्रमात् (for °व्रज) — T2 G3 om $107^{cd}$ — $^{c}$) Ś1 K1 2 परमां (for महतीं) T1 G1 सिद्धिं (for कीर्तिं) — $^{d}$) S (T2 G3 om) महाभिषक्

**108** $^{a}$) T2 G3 तीर्थज्ञो, G2 4 धर्मज्ञो (for धर्मात्मा) — K3 om (hapl) $108^{b}$–$109^{a}$ — $^{c}$) Ś1 K1 2 भरत°, B1 2 Dn D5 त्व राज° (for त्व कुरु°)

**109** K3 om $109^{a}$ (cf v l 102), T2 G2-4 om $109^{cd}$ — $^{c}$) K2 सर्वराजन्यो, K3 सर्वं राजन्ये, D5 च स राजन्यो, T1 G1 M3 अपि राजेंद्र (for सर्वराजभ्यो) — $^{d}$) K1 2 B Dc2 D1 2 4 6 राजसे T1 M2 रश्मिमानिव

**110** K1 2 om 110 — $^{b}$) B Dn3 D4 °रथ° (for °यशाः) — $^{c}$) K3 4 B Dc Dn1 D2 6 यथा वैण्यो S1 Dn D1 2 5 महाराज

**111** $^{a}$) K4 स, B D4 6 वै (for च) — $^{b}$) Ś1 K1 2 न्यदहत्, K1 D1-3 S अदहत्, B Dc Dn D5 6 निर्दहन् (for निर्दहत्) — After $111^{ab}$, N (except D1 2) ins

453* त्रैलोक्यं पालयामास देवराड्विगतज्वरः ।

— $^{d}$) K3 4 B D M त्वं प्रजाः (by transp), T2 G2-4 प्रजा स

**112** $^{a}$) S1 K1 2 स्वधर्मेण निजिम्योर्वीं, B1 °र्मांविजिता मुर्वीं, B4 °र्मेणार्जितामुर्वीं, T2 G3 °र्मंविजित मत्वं — $^{c}$) Dc कीर्तिं S1 यास्यति, G1 प्राप्स्यसि B D4 6 वीर्येण, Dn1 T2 G3 धर्मज्ञ M1 कर्मणा यास्यसि ख्यातिं — $^{d}$) K1 3 4 B1 2 D2 3 M °वीर्योर्जुनो

**113** Ś1 K1 2 T2 G2-4 om the ref — $^{b}$) Ś1 K1 2 मुनिसत्तम (for भग°) — $^{c}$) K3 4 B Dn D3-6 M1 °राज, Dc D1 2 G4 M2 °राज, G1 °ज्ञान (for °त्मान)

**114** Ś1 om $114^{cd}$ — $^{c}$) K1 2 4 °मय, K3 °श्रिय; Dn D6 T G M2 °श्रित (G4 °श्रुत) (for °श्रय)

Colophon — *Major parvan* Ś1 K1 2 Dn1 n2 T G2-4 M1 आरण्य — *Sub parvan* T1 तीर्थयात्रा All MSS except T1 (om sub parvan name) mention only पुलस्त्यतीर्थयात्रा, followed by समाप्ता (K1 B2 D4 G1 om समाप्ता) — *Adhy no* (figures, words or both) Dn1 85, Dn3 M2 (before corr) 86, D1 89, S (M2 after corr) 84 — *Śloka no* Dn1 131, Dn2 130, Dn3 133, D1 112

# 84

**1** $^{d}$) B D4 M1 इदमाह (for प्राह राजा)

**2** Before 2, B1 3 4 Dc D4 6 ins युधिष्ठिर उ — $^{a}$) B D4 6 तु स नर° (for स पुरुष°) — $^{d}$) S (except M1) प्र° (for त्रि°)

**3** $^{b}$) K1 3 4 B1 2 Dn3 D3 4 T2 G1 3 4 तपोधन — $^{c}$) K4 भृशदात्रेषु, D1 2 °सर्थेषु, D3 °सत्रेषु — $^{d}$) K4 D3 5 इव प्रभो, B D4 6 -सम प्रभु° (B3 समप्रभ); M1 इवाजित

**4** $^{a}$) D4 स्रोता° (for स्रोता°) — $^{b}$) Ś1 K1 Dn1 n2 D5 °विधानिनौ, G4 M1 °निपू(M1 °निसू)दनौ — $^{d}$) K1

दिशस्तीर्थानि शैलांश्च शृणु मे गदतो नृप ॥ २

पूर्वं प्राचीं दिशं राजन्राजर्षिगणसेविताम् ।
रम्यां ते कीर्तयिष्यामि युधिष्ठिर यथास्मृति ॥ ३

तस्यां देवर्षिजुष्टायां नैमिषं नाम भारत ।
यत्र तीर्थानि देवानां सुपुण्यानि पृथक्पृथक् ॥ ४

यत्र सा गोमती पुण्या रम्या देवर्षिसेविता ।
यज्ञभूमिश्च देवानां शामित्रं च विवस्वतः ॥ ५

तस्यां गिरिवरः पुण्यो गयो राजर्षिसत्कृतः ।
शिवं ब्रह्मसरो यत्र सेवितं त्रिदशर्षिभिः ॥ ६

यदर्थं पुरुषव्याघ्र कीर्तयन्ति पुरातनाः ।
एष्टव्या बहवः पुत्रा यद्येकोऽपि गयां व्रजेत् ॥ ७

महानदी च तत्रैव तथा गयशिरोऽनघ ।
यत्रासौ कीर्त्यते विप्रैरक्षय्यकरणो वटः ।
यत्र दत्तं पितृभ्योऽन्नमक्षय्यं भवति प्रभो ॥ ८

सा च पुण्यजला यत्र फल्गुनामा महानदी ।
बहुमूलफला चापि कौशिकी भरतर्षभ ।
विश्वामित्रोऽभ्यगाद्यत्र ब्राह्मणत्वं तपोधनः ॥ ९

गङ्गा यत्र नदी पुण्या यस्यास्तीरे भगीरथः ।
अयजत्तात बहुभिः क्रतुभिर्भूरिदक्षिणैः ॥ १०

पाञ्चालेषु च कौरव्य कथयन्त्युत्पलावतम् ।
विश्वामित्रोऽयजद्यत्र शक्रेण सह कौशिकः ।
यत्रानुवंशं भगवाञ्जामदग्न्यस्तथा जगौ ॥ ११

---

ज्ञुमतान्) $M_1$ ब्राह्मणाश्चैव ये पुण्या° — $^b$) $M_1$ तत्रासन् (for आश्रमान्) — $^c$) $M_1$ अथ (for दिशस्) $T_2$ $G_{2.3}$ तीर्थांश्च (for तीर्थानि) — $^d$) Dn $D_{2.5}$ S (except $M_1$) वदतो Do मम ; Dn $D_{2.3}$ S (except $T_1$) [ऽ]नघ (for नृप) — After 2, B Do Dn $D_{4.6}$ $T_2$ (marg ) $G_3$ ins

455* याञ्श्रुत्वा गदतो राजन्विशोको भवितासि ह ।
द्रौपद्या चानया सार्धं भ्रातृभिश्च नरेश्वर ।
श्रवणाच्चैव तेषां त्वं पुण्यमाप्स्यसि पाण्डव ।
गत्वा शतगुणं चैव तेभ्य एव नरोत्तम ।

**3** $^a$) $Ś_1$ पूर्वां प्राचीं, $T_2$ $G_{2-4}$ शृणु पूर्वां — $^b$) $K_1$ B $D_{1.2.6}$ $M_1$ ब्रह्मर्षि°, $T_2$ $G_{3.4}$ देवर्षि° — $^c$) $K_4$ $B_3$ Dn $D_5$ कथ° (for कीर्त°) — $^d$) $Ś_1$ $K_{1.2}$ यथाविधि, $K_4$ $D_{3.4.6}$ यथाश्रुति, $B_2$ महामते

**4** $^b$) S (except $T_2$ $G_3$) नैमिशं $Ś_1$ $K_{1.2}$ भरतर्षभ (for नाम भारत) — $^c$) B Do $D_{4.6}$ तत्र ($Do_1$ अत्र) (for यत्र) — $^d$) B Dn $D_{3-6}$ पुण्यानि च (for सुपु°)

**5** $^{ab}$) $D_3$ transp पुण्या and रम्या S (except $T_2$ $G_3$) नाम (for पुण्या), and पुण्या (for रम्या) $Ś_1$ $K_{1.2.4}$ $D_{1.2}$ °पूजिता (for °सेविता) B $D_4$ देवर्षिपितृसेविता (for $^b$) — $^d$) $Ś_1$ $K_2$ सावित्री ; $K_1$ सावित्रौ ; $K_3$ सान्निध्य°

**6** $^a$) K $B_3$ $D_{1-3,5}$ $T_1$ $G_{1.2}$ $M_1$ यस्या° — $^b$) $K_{3.4}$ $D_{1.2}$ S सेवित°, Do °सत्तम — $^c$) $K_{2.3}$ $D_3$ $G_1$ ब्रह्म-शिरो; $K_4$ $D_1$ गय($K_4$m धर्म)शिरो; $D_2$ गयसरो — $^d$) $K_3$ त्रिदशालयैः

**7** $^a$) $Dn_2$ $n_3$ यदर्थे — $^b$) $T_1$ $G_1$ पुरा नरा° (for °तना°) — $7^{cd}$=3 82 $85^{ab}$ — $^d$) $B_3$ यद्यप्येको (by transp ), $T_1$ $G_1$ M यदि कश्चिद् — After 7, $K_{1.2.4}$ (om line 2) Do (om line 2) Dn $D_{4.6}$ $T_2$ $G_{2-4}$ ($G_{3.4}$ both om line 2) ins

456* यजेत वाश्वमेधेन नीलं वा वृषमुत्सृजेत् ।
उत्तारयति संतत्या दश पूर्वान्दशावरान् ।

[ (L 1) = 3 82 $85^{cd}$ $T_2$ $G_{2-4}$ गौरीं वा वरयेत्कन्यां (for the prior half) ]

**8** $^b$) $Ś_1$ $D_{1-3}$ यथा (for तथा) $Ś_1$ K Dn $D_{1-3.5}$ $M_2$ नृप (for ऽनघ) — $^c$) $D_{4.6}$ देवैर् (for विप्रैर्) — $^f$) $K_3$ B $Do_2$ $Dn_1$ $n_3$ $D_{3.4.6}$ $G_2$ अक्षय° $T_2$ $G_{3-4}$ ध्रुव° (for प्रभो)

**9** $^a$) Dn $D_5$ तत्र (for यत्र) $Ś_1$ $K_1$ पुण्याश्रमजला यत्र — $^b$) $Ś_1$ $K_4$ $Dn_1$ $n_3$ $D_3$ $G_2$ $M_2$ फल्गु नाम, Do $Dn_2$ $D_{1.2.5}$ फल्गुर्नाम — $^c$) $D_{1.2.4.6}$ वापि ; S (except $M_1$) चैव (for चापि) — $^e$) $Ś_1$ $K_2$ [ऽ]भ्ययाद्यत्र ; $K_1$ B Do Dn $D_{1.2.4-6}$ °भ्यगा°, $K_3$ $D_3$ °प्यगा° — $M_2$ om (hapl ) $9^f$–$11^c$

**10** $M_2$ om 10 (cf v l 9) — $^c$) Dn तत्र (for तात) ; $D_6$ बहुभी राजा (for तात बहुभि°) $K_3$ पुण्याभि°, B $D_{4.6}$ $T_1$ $G_1$ $M_1$ बहुश° (for °भि°)

**11** $M_2$ om $11^{abc}$ (cf v l 9), $K_3$ om $11^{ab}$ — $^a$) $K_4$ $B_{1.2}$ Do $D_{1-4.6}$ पञ्चालेषु — $^b$) $K_{1.4}$ $Dn_1$ $n_3$ $D_{1-3}$ $M_1$ वनं ; $B_2$ °वृत, Do °ल्लित (for °वतम्) — $^c$) $T_1$ पिबत्सोम (for °यजद्यत्र) — $^d$) Dn $D_{2.5}$ पुत्रेण (for शक्रेण) $K_{3.4}$ B Do $D_{1.2.4.6}$ यज्ञं परमशोभनं — $^e$) $K_4$ $T_2$ G तत्र (for यत्र) $D_{1.4.6}$ [आ]श्रम (for [अ]नु) — $^f$) $Ś_1$ K B Do $D_{1.2.4.6}$ जमदग्निस् (for जामदग्न्यस्) $D_{1.2.5}$ $G_2$ $M_1$ तदा (for तथा) $B_3$ [ए]व च (for जगौ)

सततं शरधाराभिः प्रदीप्तं कर्णपावकम् ।
उदीर्णोऽर्जुनमेघोऽयं शमयिष्यति संयुगे ॥ १२
स साक्षादेव सर्वाणि शक्रात्परपुरंजयः ।
दिव्यान्यस्त्राणि बीभत्सुस्तत्त्वतः प्रतिपत्स्यते ॥ १३
अलं स तेषां सर्वेषामिति मे धीयते मतिः ।
नास्ति त्वतिक्रिया तस्य रणेऽरीणां प्रतिक्रिया ॥ १४
तं वयं पाण्डवं सर्वे गृहीतास्त्रं धनंजयम् ।
द्रष्टारो न हि बीभत्सुर्भारमुद्यम्य सीदति ॥ १५
वयं तु तमृते वीरं वनेऽस्मिन्द्विपदां वर ।
अवधानं न गच्छामः काम्यके सह कृष्णया ॥ १६
भवानन्यद्वनं साधु बह्वन्नं फलवच्छुचि ।
आख्यातु रमणीयं च सेवितं पुण्यकर्मभिः ॥ १७
यत्र कंचिद्वयं कालं वसन्तः सत्यविक्रमम् ।
प्रतीक्षामोऽर्जुनं वीरं वर्षकामा इवाम्बुदम् ॥ १८
विविधानाश्रमान्कांश्चिद्द्विजातिभ्यः परिश्रुतान् ।
सरांसि सरितश्चैव रमणीयांश्च पर्वतान् ॥ १९
आचक्ष्व न हि नो ब्रह्मन्रोचते तमृतेऽर्जुनम् ।
वनेऽस्मिन्काम्यके वासो गच्छामोऽन्यां दिशं प्रति ॥

इति श्रीमहाभारते आरण्यकपर्वणि चतुरशीतितमोऽध्यायः ॥ ८४ ॥

# ८५

वैशंपायन उवाच ।
तान्सर्वानुत्सुकान्दृष्ट्वा पाण्डवान्दीनचेतसः ।
आश्वासयंस्तदा धौम्यो बृहस्पतिसमोऽब्रवीत् ॥ १
ब्राह्मणानुमतान्पुण्यानाश्रमान्भरतर्षभ ।

---

स(D6 स)वर्षन्; D5 सनद्ध ; M2 सतत — b) Dn D5 सुदीप्त — c) N अर्जुनोदीरितो मेघ° — d) Ś1 K1 2 [अ]संशय (for संयुगे)

**13** a) Ś1 K1 2 T1 M2 इव (for एव) Dc कार्याणि (for सर्वाणि) K4 साक्षादेव स स° ; D8 साक्षाद्देवस्स स° — Ś1 om (hapl) from शक्रात् up to अस्त्राणि — d) Dn D6 ततश्च, S यथावत् (M1 सयत°) (for तत्त्वत)

**14** c) D1 2 नास्मिन् (for नास्ति) Ś1 त्वतिकृते, K1 तत्वकृता; K2 4 B D त्वति(D1 2 अति, D8 त्वयि)कृता; K3 त्वनिकृतौ, T1 त्वयि क्रिया, M1 त्वत्र क्रिया (for त्वति क्रिया) Ś1 K B1 3 D2 3. 5 नाम (K1 तात), B2 4 Dn D1 4 6 [अ]र्थाना, Dc [अ]स्त्राणा (for तस्य)

**15** a) B2 Dn1 n3 D1–3 ते वय (B2m तत्त्वय) (for त वय) T1 द्रष्टुमिच्छाम° (for पाण्डव सर्वे) — b) K3 4 D (except D4 6) अरिंदम (for धन°)

**16** b) MSS वर , वर also (for वर) — c) T G2 3 अवसान (for °धान) T1 पश्याम (for गच्छा°)

**17** a) G3 4 यद्यद् (for अन्यद्) M1 तस्माद् (for साधु) — b) S ब्रह्माढ्य (T1 ब्रह्मण्य) (for बह्वन्न) S (except M1) जल° (G1 बल°) (for फल°) K3 B3 4 D1 T1 G2 M2 शुचि° — c) Ś1 K1 2 तु, K4 ते, D8 मे, D5 वा, M1 नः (for च)

**18** a) Ś1 कचिद्; K3 क च; B2 3 Dn3 D8 G1 2 किंचिद् (for कंचिद्) — c) K4 M1 °क्षेमा°, G3 4 °क्षामा° (for °क्षामो°) — d) Ś1 K4 वस्तुकामा°; K1 वर्ति°, K3 वसु°, Dc वर्षाकाले, Dn D1 वृष्टिकामा; D2 3 M वसु , D5 वसु°.

**19** b) Ś1 B1 Dn D3 5 M2 प्रति° (for परि) T1 द्विजातिजनविश्रुतान्; M1 सर्वदिग्भ्य° परि°

**20** a) K4 B1 4 D (except D4–6) मे (for नो)

Colophon — *Major parvan* Ś1 K1 2 Dn2 T G M1 आरण्य — *Sub-parvan* K4 B1 2 Dc Dn3 D4 G1 M2 तीर्थयात्रा, Ś1 K1–3 B3 4 Dn1 n3 D1–3 5 (marg sec m) (all om sub parvan name) mention only धौम्यतीर्थयात्रा — *Adhy name* Dc युधिष्ठिरवाक्य — *Adhy no* (figures, words or both) Dn1(*sup lin*) n2 86, Dn3 M2 (before corr) 87, D1 90, S (M2 after corr) 85 — *Śloka no* Dn 21

**85**

**1** c) Dn तथा (!), T1 M ततो (for तदा)
**2** a) Ś1 K1 2 °भिमतान्, B Dc D4 6 °नुगवान् (for

दिशस्तीर्थानि शैलांश्च शृणु मे गदतो नृप ॥ २
पूर्वं प्राचीं दिशं राजन्राजर्षिगणसेविताम् ।
रम्यां ते कीर्तयिष्यामि युधिष्ठिर यथास्मृति ॥ ३
तस्यां देवर्षिजुष्टायां नैमिषं नाम भारत ।
यत्र तीर्थानि देवानां सुपुण्यानि पृथक्पृथक् ॥ ४
यत्र सा गोमती पुण्या रम्या देवर्षिसेविता ।
यज्ञभूमिश्च देवानां शामित्रं च विवस्वतः ॥ ५
तस्यां गिरिवरः पुण्यो गयो राजर्षिसत्कृतः ।
शिवं ब्रह्मसरो यत्र सेवितं त्रिदशर्षिभिः ॥ ६
यदर्थं पुरुषव्याघ्र कीर्तयन्ति पुरातनाः ।
एष्टव्या बहवः पुत्रा यद्येकोऽपि गयां व्रजेत् ॥ ७

महानदी च तत्रैव तथा गयशिरोऽनघ ।
यत्रासौ कीर्त्यते विप्रैरक्षय्यकरणो वटः ।
यत्र दत्तं पितृभ्योऽन्नमक्षय्यं भवति प्रभो ॥ ८
सा च पुण्यजला यत्र फल्गुनामा महानदी ।
बहुमूलफला चापि कौशिकी भरतर्षभ ।
विश्वामित्रोऽभ्यगाद्यत्र ब्राह्मणत्वं तपोधनः ॥ ९
गङ्गा यत्र नदी पुण्या यस्यास्तीरे भगीरथः ।
अयजत्तात बहुभिः क्रतुभिर्भूरिदक्षिणैः ॥ १०
पाञ्चालेषु च कौरव्य कथयन्त्युत्पलावतम् ।
विश्वामित्रोऽयजद्यत्र शक्रेण सह कौशिकः ।
यत्रानुवंशं भगवाञ्जामदग्न्यस्तथा जगौ ॥ ११

---

°शुमतान्) $M_1$ ब्राह्मणाश्चैव ये पुण्या — $^b$) $M_1$ तत्रासन् (for आश्रमान्) — $^c$) $M_1$ अथ (for दिशस्) $T_2$ $G_{2.3}$ तीर्थांश्च (for तीर्थानि) — $^d$) Dn $D_{2.5}$ S (except $M_1$) वदतो Dc मम, Dn $D_{2.5}$ S (except $T_1$) [ऽ]नघ (for नृप) — After 2, B Dc Dn $D_{4.6}$ $T_2$ (marg) $G_3$ ins

455* याश्श्रुत्वा गदतो राजन्विशोको भवितासि ह ।
द्रौपद्या चानया सार्धं भ्रातृभिश्च नरेश्वर ।
श्रवणाच्चैव तेषां त्वं पुण्यमाप्स्यसि पाण्डव ।
गत्वा शतगुणं चैव तेभ्य एव नरोत्तम ।

**3** $^a$) $Ś_1$ पूर्वां प्राचीं; $T_2$ $G_{2-4}$ शृणु पूर्वां — $^b$) $K_1$ B $D_{1.2.6}$ $M_1$ ब्रह्मर्षि°; $T_2$ $G_{3.4}$ देवर्षि° — $^c$) $K_4$ $B_2$ Dn $D_5$ कथ° (for कीर्त°) — $^d$) $Ś_1$ $K_{1.2}$ यथाविधि, $K_4$ $D_{3.4.6}$ यथाश्रुति; $B_2$ महामते

**4** $^b$) S (except $T_2$ $G_3$) नैमिशं $Ś_1$ $K_{1.2}$ भरतर्षभ (for नाम भारत) — $^c$) B Dc $D_{4.6}$ तत्र ($Dc_1$ अत्र) (for यत्र) — $^d$) B Dn $D_{3-6}$ पुण्यानि च (for सुपु°)

**5** $^{ab}$) $D_3$ transp पुण्या and रम्या S (except $T_2$ $G_3$) नाम (for पुण्या), and पुण्या (for रम्या) $Ś_1$ $K_{1.2.4}$ $D_{1.2}$ °पूजिता (for °सेविता) B $D_4$ देवर्षिपितृसेविता (for $^b$) — $^d$) $Ś_1$ $K_3$ सावित्री; $K_1$ सावित्रौ; $K_3$ सानिध्य

**6** $^a$) K $B_3$ $D_{1-3.5}$ $T_1$ $G_{1.2}$ $M_1$ यस्या — $^b$) $K_{3.4}$ $D_{1.2}$ S सेवित°; Dc सत्तम — $^c$) $K_{2.3}$ $D_5$ $G_1$ ब्रह्म°शिरो, $K_4$ $D_1$ गय($K_{4m}$ धर्म)शिरो, $D_2$ गयसरो — $^d$) $K_3$ त्रिदशालयैः

**7** $^a$) $Dn_3$ ns यदर्थे — $^b$) $T_1$ $G_1$ पुरा नरा° (for तना°) — $7^{cd}$ = 3 82 85$^{ab}$ — $^d$) $B_3$ यद्यप्येको (by transp), $T_1$ $G_1$ M यदि कश्चिद् — After 7, $K_{1.2.4}$ (om line 2) Dc (om line 2) Dn $D_{4.6}$ $T_2$ $G_{2-4}$ ($G_{3.4}$ both om line 2) ins

456* यजेत वाश्वमेधेन नीलं वा वृषमुत्सृजेत् ।
उत्तारयति संतत्या दश पूर्वान्दशावरान् ।

[(L 1) = 3 82 85$^{cd}$ $T_2$ $G_{2-4}$ गौरीं वा वरयेत्कन्यां (for the prior half)]

**8** $^b$) $Ś_1$ $D_{1-3}$ यथा (for तथा) $Ś_1$ K Dn $D_{1-3.5}$ $M_2$ नृप (for ऽनघ) — $^c$) $D_{4.6}$ देवैर् (for विप्रैर्) — $^f$) $K_3$ B $Dc_2$ $Dn_1$ ns $D_{3.4.6}$ $G_1$ अक्षय $T_2$ $G_{2-4}$ ध्रुव (for प्रभो)

**9** $^a$) Dn $D_5$ तत्र (for यत्र) $Ś_1$ $K_1$ पुण्याश्रमजला यत्र — $^b$) $Ś_1$ $K_4$ $Dn_1$ ns $D_3$ $G_2$ $M_2$ फल्गु नाम, Dc $Dn_2$ $D_{1.2.5}$ फल्गुनाम — $^c$) $D_{1.2.4.6}$ वापि, S (except $M_1$) चैव (for चापि) — $^e$) $Ś_1$ $K_2$ [ऽ]भ्ययाद्यत्र; $K_1$ B Dc Dn $D_{1.2.4-6}$ ऽभ्यगा°, $K_3$ $D_3$ °भ्यगा° — $M_2$ om (hapl) 9$^f$–11$^c$

**10** $M_2$ om 10 (cf v l 9) — $^c$) Dn तत्र (for तात) | $D_5$ बहुभी राजा (for तात बहुभि) $K_3$ पुण्याभि, B $D_{4.6}$ $T_1$ $G_1$ $M_1$ बहुश (for °भि°)

**11** $M_2$ om 11$^{abc}$ (cf v l 9), $K_3$ om 11$^{ab}$ — $^a$) $K_4$ $B_{1.2}$ Dc $D_{1-4.6}$ पञ्चालेषु — $^b$) $K_{1.4}$ $Dn_1$ ns $D_{1-3}$ $M_1$ °वन; $B_2$ °वृत; Dc °लित (for °वतम्) — $^c$) $T_1$ पिबत्सोम (for °यजद्यत्र) — $^d$) Dn $D_{3.5}$ पुत्रेण (for शक्रेण) $K_{3.4}$ B Dc $D_{1.2.4.6}$ यज्ञ परमशोभन — $^e$) $K_4$ $T_2$ G तत्र (for यत्र) $D_{1.4.6}$ [आ]श्रम (for [अ]नु) — $^f$) $Ś_1$ K B Dc $D_{1.2.4.6}$ जमदग्निस् (for जामदग्न्यस्) $D_{1.3.5}$ $G_2$ $M_1$ सदा (for तथा) $B_3$ [ए]व च (for जगौ)

40

विश्वामित्रस्य तां दृष्ट्वा विभूतिमतिमानुषीम् ।
कन्यकुब्जेऽपिबत्सोममिन्द्रेण सह कौशिकः ।
ततः क्षत्रादपाक्रामद्ब्राह्मणोऽस्मीति चाब्रवीत् ॥ १२
पवित्रमृषिभिर्जुष्टं पुण्यं पावनमुत्तमम् ।
गङ्गायमुनयोर्वीर संगमं लोकविश्रुतम् ॥ १३
यत्रायजत भूतात्मा पूर्वमेव पितामहः ।
प्रयागमिति विख्यातं तस्माद्भरतसत्तम ॥ १४
अगस्त्यस्य च राजेन्द्र तत्राश्रमवरो महान् ।
हिरण्यबिन्दुः कथितो गिरौ कालंजरे नृप ॥ १५
अत्यन्यान्पर्वतान्राजन्पुण्यो गिरिवरः शिवः ।
महेन्द्रो नाम कौरव्य भार्गवस्य महात्मनः ॥ १६
अयजद्यत्र कौन्तेय पूर्वमेव पितामहः ।
यत्र भागीरथी पुण्या सदस्यासीद्युधिष्ठिर ॥ १७
यत्रासौ ब्रह्मशालेति पुण्या ख्याता विशां पते ।
धूतपाप्मभिराकीर्णा पुण्यं तस्याश्च दर्शनम् ॥ १८
पवित्रो मङ्गलीयश्च ख्यातो लोके सनातनः ।
केदारश्च मतङ्गस्य महानाश्रम उत्तमः ॥ १९
कुण्डोदः पर्वतो रम्यो बहुमूलफलोदकः ।
नैषधस्तृषितो यत्र जलं शर्म च लब्धवान् ॥ २०
यत्र देववनं रम्यं तापसैरुपशोभितम् ।
बाहुदा च नदी यत्र नन्दा च गिरिमूर्धनि ॥ २१
तीर्थानि सरितः शैलाः पुण्यान्यायतनानि च ।
प्राच्यां दिशि महाराज कीर्तितानि मया तव ॥ २२
तिसृष्वन्यासु पुण्यानि दिक्षु तीर्थानि मे शृणु ।
सरितः पर्वतांश्चैव पुण्यान्यायतनानि च ॥ २३

इति श्रीमहाभारते आरण्यकपर्वणि पञ्चाशीतितमोऽध्यायः ॥ ८५ ॥

---

**12** $^a$) K3 D1 3 °मित्रस्तु (for °मित्रस्य) — $^b$) T1 G1 स्वति°, T2 G2–4 चाति° (for अति°) — $^c$) K3 D8 5 S (except G4) कन्या°, K4 B1 3 4 Dc Dn3 कान्य° (for कन्य°) — $^d$) Ś1 K1 मित्रेण (for इन्द्रेण) — $^e$) Ś1 K1 2 Dc D5 T2 G3 अपक्रामद् — $^f$) Ś1 K1 चाब्रुवन् (for चाब्रवीत्)

**14** $^b$) K3 सर्वलोक°, B1 सर्वमेव (for पूर्वमेव) — Ś1 om (hapl ) 14$^c$–17$^b$ — $^c$) K3 4 D1 3 प्रयाग इति

**15** Ś1 om 15 (cf v l 14) — $^a$) K3 4 D (except D2 4 6) G2 तु (for च) — $^b$) B4 S (except M1) °पद (for °वरो) K D (except D4 6) M2 नृप, B4 T G M1 महत् (for महान्), see below — After 15$^{ab}$, B2–4 Dc Dn D4 6 ins

457* तत्तथा तापसारण्य तापसैरुपशोभितम् ।

— $^d$) K2–4 Dn1 D3 5 कालिंजरे, T2 G कारजरे K D (except D4 6) M2 महान् (for नृप), see above

**16** Ś1 om 16 (cf v l 14) — $^a$) K4 इति (for अति) K3 B Dc D4 6 T2 G3 अस्त्यन्य° (K3 अनन्य, Dc अथान्य°, D4 T2 G3 अगस्त्य°, Dc आगस्त्य°) पर्वतो राजन्, Dn अ(Dn3 आ)गस्त्यपर्वतो रम्य° (!), D1 3 असत° पर्वतो यत्र, D5 अस्त्यन्यपर्वताद्रम्य°

**17** Ś1 om 17$^{ab}$ (cf v l. 14) — $^a$) K1 2 Dn D5 T2 G3–4 तत्र (for यत्र) — $^c$) B1–3 D5 तत्र (for यत्र) T1 G1 3 4 M2 गंगा (for पुण्या) — $^d$) K1 B Dn D1 4 6 G1 सरस्यासी°

**18** $^a$) Dn D1 3 5 T1 G1 M सा, T2 G2–4 च (for [अ]सौ) B4 पुण्यशालेति, Dc ब्रह्मवीलेति — $^c$) K3 Dn1 n3 D5 T1 G4 आकीर्णे Ś1 धूतपाप्मा विशाकीर्णा

**19** $^a$) Ś1 K3 4 मगलो यश्च, D1 3 मुद्गलीयश्च; D5 जागली° — $^b$) Ś1 K1 2 4 Dn D1–3 5 महात्मन° (for सना°) — $^c$) K1 3 D1–3 T1 G1 केदारस्य, B3 5 D4 6 °स्तु.

**20** $^b$) S1 K1 2 °फलागमः

**21** $^a$) Ś1 K1 2 Dn D3 5 पुण्य, M2 दिव्य (for रम्यं). — $^b$) D1 3 °सेवित (for °शोभितम्) — $^c$) T1 G1 3 4 M1 बहुला (for बाहुदा)

**22** K4 M2 om (hapl ) 22$^c$–23$^d$ — $^c$) T2 G3 4 पूर्वस्यां दिशि राजेंद्र

**23** K4 M2 om 23 (cf v l 22) — $^a$) Ś1 Dn3 D3 5 G1 M1 तिसृष्वन्यानि, K1 °स्तु, G3 4 त्रिष्वन्यानि च T1 G1 3 4 राजेंद्र (for पुण्यानि) — $^b$) D5 शृणु; T2 G2–4 सर्व° (for दिक्षु) S1 K1 2 सर्वासु (for तीर्थानि) Dc सर्वश°; D5 पाण्डव (for मे शृणु) — After 23$^{ab}$, D3 ins

458* विस्तारेण यथाबुद्धि दिक्षु तीर्थानि मे शृणु ।

— Ś1 K1 2 om 23$^{cd}$

Colophon om in B1. — *Major parvan* Ś1 K1 2 T G2–4 M1 आरण्य, B3 वन — *Sub parvan* B1 4 Dc

# ८६

धौम्य उवाच ।
दक्षिणस्यां तु पुण्यानि शृणु तीर्थानि भारत ।
विस्तरेण यथाबुद्धि कीर्त्यमानानि भारत ॥ १
यस्यामाख्यायते पुण्या दिशि गोदावरी नदी ।
बह्वारामा बहुजला तापसाचरिता शुभा ॥ २
वेण्णा भीमरथी चोभे नद्यौ पापभयापहे ।
मृगद्विजसमाकीर्णे तापसालयभूषिते ॥ ३
राजर्षेस्तत्र च सरिन्नृगस्य भरतर्षभ ।
रम्यतीर्था बहुजला पयोष्णी द्विजसेविता ॥ ४
अपि चात्र महायोगी मार्कण्डेयो महातपाः ।
अनुवंश्यां जगौ गाथां नृगस्य धरणीपतेः ॥ ५
नृगस्य यजमानस्य प्रत्यक्षमिति नः श्रुतम् ।
अमाद्यदिन्द्रः सोमेन दक्षिणाभिर्द्विजातयः ॥ ६
माठरस्य वनं पुण्यं बहुमूलफलं शिवम् ।
यूपश्च भरतश्रेष्ठ वरुणस्रोतसे गिरौ ॥ ७
प्रवेण्युत्तरपार्श्वे तु पुण्ये कण्वाश्रमे तथा ।
तापसानामरण्यानि कीर्तितानि यथाश्रुति ॥ ८
वेदी शूर्पारके तात जमदग्नेर्महात्मनः ।

---

T1 G1 तीर्थयात्रा Ś1 K1 3 4 B3 Dn D1–6 (all om sub parvan name) mention only धौम्यतीर्थयात्रा — *Adhy name* T2 G3 धौम्यप्राचीतीर्थगमन — *Adhy no* (figures, words or both) Dn1 (*sup lin*) n3 87, Dn3 M2 88, D1 91, T G M1 86 — *Śloka no* Dn 29, D1 25

## 86

**1** [ab]) T1 G1 3 4 M2 दक्षिणेन Ś1 K1 2 transp पुण्यानि and तीर्थानि K3 4 D1–3 पाडव (for भारत) T1 तीर्थानि भरतर्षभ (for [b]) — G1 om 1[cd] — [c]) B D4 6 यथान्याय (for °बुद्धि) — [d]) Ś1 K1 2 Dn D3 5 तानि वै, K3 4 B Dc D1 2 4 6 भूमिप, G2 M पार्थिव (for भारत)
**2** K1 om 2[a]–3[b] — [a]) T2 G2 4 बहुधारा व° — K3 om (hapl.) 2[d]–4[c] — [d]) K4 Dn D1–3 5 M1 शिवा (for शुभा)
**3** K1 om 3[ab], K3 om 3 (cf v l. 2) — [a]) Ś1 K2 वैणा; K4 D (except D1) वेणा, B वेण्वा Ś1 K2 M भैम रथी; T2 G हे(G1 भै)मवती K4 D (except D4 6) G1 चैव (for चोभे) — G4 om 3[cd] — [c]) Ś1 K1 पक्षि, K2 पक्ष (for द्विज°) — [d]) K4 Dc D1 2 T2 G2 3 °शोभिते
**4** K3 om 4[abc] (cf v l 2) — [a]) Dn D5 T2 G3 4 M तस्य (for तत्र) K1–4 Dc तु (for च) — [d]) Dc द्विज शोभिता — After 4, D1 ins lines 1–5 of 459*
**5** [b]) Ś1 K1 2 महामना°; K3 4 D (except D4 6) °यशा° — [c]) Ś1 अनुवेग, K1–3 D1 2 T2 G2–4 °वश — [d]) S1 K1 2 धरणीपते, K4 B1 2 D3 धरणीतले, S वसुधाधिप (M1 °तले)
**6** [b]) Ś1 K1 2 T1 वि° (for न°) — K1 3 (both om lines 4–5) B3 4 Dc Dn D1 4 6 ins after 6 (D1 however ins lines 1–5 after 4)

459* पयोष्ण्या यजमानस्य वाराहे तीर्थ उत्तमे ।
उद्धृत भूतलस्थ वा वायुना समुदीरितम् ।
पयोष्ण्या हरते तोय पापमामरणान्तिकम् ।
स्वर्गादुत्तुङ्गममल विषाण यत्र शूलिन ।
स्वमात्मविहित दृष्ट्वा मर्त्यं शिवपुर व्रजेत् । [5]
एकत सरित सर्वा गङ्गाद्या सलिलोच्चया ।
पयोष्णी चैकत पुण्या तीर्थेभ्यो हि मता मम ।

[(L 4) B4 Dc D4 6 स्वर्गम् (for स्वर्गाद्) B3 5 विभाम (for विषाण) — (L 5) D1 सद्य (for मर्त्य) — (L 6) Dc सशिलोच्चया (for सलिलो°)]

— On the other hand, B3 T2 G3 4 M2 ins after 6

460* मरुत परिवेष्टार सदस्याश्च दिवौकस ।

[B3 तस्यासन्पृथिवीपते (for the posterior half)]

**7** [a]) K3 मागधस्य, K4 मातस्य च (m मावरस्य), D5 माथुरस्य; G1 अमारस्य Ś1 K1 रम्य (for पुण्य)
**8** [a]) B D4 गात्रेषु, D6 गात्रे तु, Dc गा तत्र; Dn D5 मार्गे तु (for °पार्श्वे तु) Ś1 K1 2 प्रवेणी (Ś1 पूर्वेण) तूत्तरे पार्श्वे, K3 पूर्वेणोत्तरपार्श्वे च
**9** [a]) G1 4 वेदि° Ś1 शीर्पार्भके (sic), K3 4 B1 2 4 D3 5 सूर्पारके, T2 G3 M शूर्पाकरे; G4 शूर्पकरा K1 2 G4 तत्र, K3 तावज् (for तात) — [d]) K3 4 Dc D3 5 °पुरी

रम्या पाषाणतीर्था च पुरश्चन्द्रा च भारत ॥ ९
अशोकतीर्थं मर्त्येषु कौन्तेय बहुलाश्रमम् ।
अगस्त्यतीर्थं पाण्ड्येषु वारुणं च युधिष्ठिर ॥ १०
कुमार्यः कथिताः पुण्याः पाण्ड्येष्वेव नरर्षभ ।
ताम्रपर्णीं तु कौन्तेय कीर्तयिष्यामि तां शृणु ॥ ११
यत्र देवैस्तपस्तप्तं महदिच्छद्भिराश्रमे ।
गोकर्णमिति विख्यातं त्रिषु लोकेषु भारत ॥ १२
शीततोयो बहुजलः पुण्यस्तात शिवश्च सः ।
ह्रदः परमदुष्प्रापो मानुषैरकृतात्मभिः ॥ १३
तत्रैव तृणसोमाग्नेः संपन्नफलमूलवान् ।
आश्रमोऽगस्त्यशिष्यस्य पुण्यो देवसभे गिरौ ॥ १४
वैडूर्यपर्वतस्तत्र श्रीमान्मणिमयः शिवः ।
अगस्त्यस्याश्रमश्चैव बहुमूलफलोदकः ॥ १५
सुराष्ट्रेष्वपि वक्ष्यामि पुण्यान्यायतनानि च ।
आश्रमान्सरितः शैलान्सरांसि च नराधिप ॥ १६
चमसोन्मज्जनं विप्रास्तत्रापि कथयन्त्युत ।
प्रभासं चोदधौ तीर्थं त्रिदशानां युधिष्ठिर ॥ १७
तत्र पिण्डारकं नाम तापसाचरितं शुभम् ।
उज्जयन्तश्च शिखरी क्षिप्रं सिद्धिकरो महान् ॥ १८
तत्र देवर्षिवर्येण नारदेनानुकीर्तितः ।
पुराणः श्रूयते श्लोकस्तं निबोध युधिष्ठिर ॥ १९
पुण्ये गिरौ सुराष्ट्रेषु मृगपक्षिनिषेविते ।

---

चन्द्रा, B Dn D4 6 T2 G3 पुनश्चन्द्रा, D1 2 सरिच्चन्द्रा K4 [अ]थ (for च) Ś1 K1 2 पुरी चन्द्रनिभा नृप

**10** a) B Dc Dn D4 6 M1 तत्रैव, T G2-4 मत्स्येषु (for मर्त्येषु) Ś1 K1 2 4 D1 2 °तीर्था मर्त्ये च (K4 D1 2 °षु), D3 5 °तीर्थावर्तेषु, G1 °तीर्थमध्येषु — b) G1 पुण्य च (for कौन्तेय) Ś1 K2-4 D1-3 5 बहुलाश्रमा° (Ś1 K4 °मा, K2 °मा, D1 2 °मे), B D6 विपुलाश्रम, T2 G2-4 प्रबलाश्रम (G2 °म)

**11** b) K4 च भारत, D4 6 नराधिप (for नर°) K4 S पाण्ड्येषु (K4 पाण्ड्ये च) भरतर्षभ — c) Ś1 K2 ताम्रवर्णं, K1 °वर्ण्यं, K3 °पर्णा, Dc Dn2 D1 2 6 T1 M1 °पर्णी, D5 °पर्णां — d) Ś1 K1 2 B Dc D4 6 सत् (for ता) M1 देवाश्रमपद तथा

**12** c) Ś1 K D (except D4 6) गोकर्ण इति S1 K B1 2 4 Dn D3 5 6 विख्यातस — d) B3 विश्रुत, Dn D5 विश्रुत (for भारत)

**13** b) K3 श्रोत , B Dc Dn3 D4 6 तत्र, T2 G3 चात्र (for तात) K3 श्रवश्च स°, Dc शिलोच्चय (for शिवश्च स°) Ś1 K1 2 शुचि , Dn शुभ° (!), D3 श्रय° (for च स°) — M2 om 13d–15c — d) K1 श्रीमान्मणिमयो गिरि (cf 15b)

**14** K1 M2 om 14 (for M2 cf v l 13) — a) Ś1 K2 B2 3 तृणसोमाग, B1 °सोमाढ्य°, B4 °सोमाकै , Dc D4 6 °सोमाके, D5 °सोमागै , T G2-4 °धूमाग्ने Dn D1 2 तत्र वृक्षतृणाद्यैश्च — b) Ś1 K4 B Dn D1 2 5 T1 सपन्न°, M1 आश्रम° (for सपन्न ) — d) Dc2 G2 4 पुण्ये (for पुण्यो) Ś1 K2 D1 3 M1 देवसभो, K3 °सहो, K4 B2 (m as in text) Dn D2 4-6 °समो, Dc G4 °समे, T1 °सखे, T2 G3 °सभा , G2 °सहे Ś1 K (K1 om ) B3 (m as in text) D (except Dc) M1 गिरि

**15** M2 om 15abc (cf v l 13) — a) B Dn1 n3 D3 वैदूर्य° — b) Ś1 K1 2 गिरि°, B D1 2 4 शुभ° (for शिव ) — B3 om (hapl ) 15c–18b — c) G2 आश्रम Ś1 K1 2 B2 D6 तत्र (for चैव) K3 अगस्त्यस्याश्रमस्तैप

**16** B3 om 16 (cf v l 15) — G4 om 16cd — c) B4 Dn D3 5 चैव (for शैलान्)

**17** B3 om 17 (cf v l 15) — a) K1 चमसो मज्जन; K4 तमसा मज्जन (m as in text), B (B3 om ) Dc Dn D4 6 T2 (after corr ) G3 चमसोद्भेदन; T1 G1 तमसो मज्जन, T2 (before corr ) तपसोन्मज्जन, G2 4 तपसा (G4 °सो) मज्जन — b) B1 2 D4 6 तथैव, B4 तत्रैव T2 (before corr ) G2 4 रचयत्युत — c) B (B3 om ) D4 6 M चोदधे° M1 यत्र; M2 तत्र (for तीर्थ) — d) T G2-4 त्रिषु लोकेषु विश्रुत

**18** B3 om 18ab (cf v l 15), D2 om 18 — b) Ś1 K1 2 Dn D1 5 G1 M2 शिव (for शुभम्) — c) Ś1 K2 3 D5 ऊर्ज°, G4 मज्ज° (for उज्ज°), cf v l 20 also — d) Ś1 K3 Dc1 D3 G4 M2 क्षिप्र (for क्षिप्रं)

**19** a) S1 K3 4 B1 Dc Dn D1-3 5 देवर्षिवीरेण; B2-4 D4 6 °धीरेण — G4 om 19cd — d) K3 4 Dc D1 2 जनाधिप (for युधि°)

**20** B3 om 20cd — c) S1 K1-3 D5 ऊर्जयत° (Ś1 °त, K3 D5 °ते), G4 मज्जयते, cf. v l 18 also T G3 4 हि, G1 [ऽ]पि, G2 [ऽ]भि (for स) — After 20, T1

उज्जयन्ते स्म तत्राङ्गो नाकपृष्ठे महीयते ॥ २०
पुण्या द्वारवती तत्र यत्रास्ते मधुसूदनः ।
साक्षाद्देवः पुराणोऽसौ स हि धर्मः सनातनः ॥ २१
ये च वेदविदो विप्रा ये चाध्यात्मविदो जनाः ।
ते वदन्ति महात्मानं कृष्णं धर्मं सनातनम् ॥ २२
पवित्राणां हि गोविन्दः पवित्रं परमुच्यते ।
पुण्यानामपि पुण्योऽसौ मङ्गलानां च मङ्गलम् ॥ २३
त्रैलोक्यं पुण्डरीकाक्षो देवदेवः सनातनः ।
आस्ते हरिरचिन्त्यात्मा तत्रैव मधुसूदनः ॥ २४

इति श्रीमहाभारते आरण्यकपर्वणि षडशीतितमोऽध्यायः ॥ ८६ ॥

## ८७

धौम्य उवाच ।
अवन्तिषु प्रतीच्यां वै कीर्तयिष्यामि ते दिशि ।
यानि तत्र पवित्राणि पुण्यान्यायतनानि च ॥ १
प्रियङ्ग्वाम्रवनोपेता वानीरवनमालिनी ।
प्रत्यक्स्रोता नदी पुण्या नर्मदा तत्र भारत ॥ २
निकेतः ख्यायते पुण्यो यत्र विश्रवसो मुनेः ।
जज्ञे धनपतिर्यत्र कुबेरो नरवाहनः ॥ ३
वैडूर्यशिखरो नाम पुण्यो गिरिवरः शुभः ।
दिव्यपुष्पफलास्तत्र पादपा हरितच्छदाः ॥ ४
तस्य शैलस्य शिखरे सरस्तत्र च धीमतः ।

---

ins

461* एष नारायणः श्रीमान्क्षीरार्णवनिकेतनः ।
नागपर्यङ्कमुत्सृज्य ह्यागतो मधुरां पुरीम् ।

**21** $^{a}$) $K_{1.3}$ $B_2$ $T_2$ $G_{2.3}$ $M_2$ यत्र (for तत्र) — $^{b}$) $K_{3.4}$ $B_4$ D (except $D_{5.6}$) $G_4$ यत्रासौ — $G_4$ om $21^{cd}$, $G_1$ om (hapl.) $21^{d}$–$23^{c}$ — $^{d}$) $Ś_1$ $K_{1.2}$ पुरातनः

**22** $G_1$ om 22 (cf. v.l. 21), $K_4$ om $22^{ab}$ — $^{c}$) $K_4$ जगन्नाथ (for ते वदन्ति) $D_{1.2}$ M महाबाहो

**23** $G_1$ om $23^{abc}$ (cf. v.l. 21), $G_4$ om $23^{ab}$ — After $23^{ab}$, $T_1$ ins

462* मङ्गलं भगवान्विष्णुर्मङ्गलं मधुसूदनः ।
मङ्गलं पुण्डरीकाक्षो मङ्गलं गरुडध्वजः ।

**24** $^{a}$) Dn $D_5$ $T_2$ $G_3$ त्रैलोक्ये — After $24^{ab}$, N (except $K_3$) ins

463* अव्ययात्मा महात्मा च क्षेत्रज्ञः परमेश्वरः ।
[$Dn_1$ $n_3$ $D_{1.4-6}$ व्ययात्मा (for महात्मा) ]

— $^{d}$) $K_3$ Dc पुराणः (Dc तत्रैव) पुरुषोऽव्ययः

Colophon — *Major parvan*: $Ś_1$ $K_{1.3}$ $Dn_2$ T $G_{2-4}$ $M_1$ आरण्य° — *Sub-parvan*: $T_1$ तीर्थयात्रा. N $G_1$ (om. sub-parvan name) mention only धौम्यतीर्थ(Dn₂ om. तीर्थ)यात्रा. — *Adhy. name*: $T_2$ $G_3$ धौम्यदक्षिणतीर्थकथन. — *Adhy. no.* (figures, words or both): $Dn_1$ (*sup. lin.*) $n_2$ 88, $Dn_3$ $M_2$ 89, $D_1$ 92, T G $M_1$ 87. — *Śloka no.*: $Dn_1$ $n_3$ $D_1$ 27, $Dn_2$ 28.

## 87

**1** $^{a}$) Cn आनर्तेषु, Cnp अवन्तिषु (as in text); $T_1$ प्रतीच्यां राजशार्दूल — $B_1$ om $1^{cd}$ — $^{d}$) = 3 88 $1^{d}$. S (except $M_2$) तीर्थान्याय°

**2** $G_4$ om $2^{ab}$ — $^{a}$) $T_2$ $G_{2.3}$ प्रियङ्ग्वाम्रासवोपेता — $^{b}$) $Ś_1$ $K_{2.3}$ Dn $D_{1-3.5.6}$ °फल°, $B_2$ धन°, $B_4$ m $D_{4.6}$ °शालिनी — $^{c}$) $K_4$ तत्र, $B_1$ रम्या (for पुण्या). $K_3$ पुण्यश्रोता नदीं पुण्या — After 2, $K_1$ B Dc Dn $D_{4.6}$ ins

464* त्रैलोक्ये यानि तीर्थानि पुण्यान्यायतनानि च ।
सरिद्वनानि शैलेन्द्रा देवाश्च सपितामहाः ।
नर्मदायां कुरुश्रेष्ठ सह सिद्धर्षिचारणैः ।
स्नातुमायान्ति पुण्यौघैः सदा वारिषु भारत ।

[(L. 1) Posterior half = 3 87 $1^{d}$, 88 $1^{d}$ — (L. 3) Dc महर्षिसिद्धचारणा (for the posterior half) ]

**3** $^{a}$) $Ś_1$ $K_{1.2.4}$ Dn $D_{1-3.5}$ $M_2$ श्रूयते (for ख्या°) — $^{b}$) $K_{1.2}$ तत्र. $Ś_1$ विश्रवतो, $K_3$ $D_{3.5}$ विश्वावसोर्, $B_3$ विश्रवनो. $Ś_1$ $K_{1-3}$ $D_3$ मुनिः

**4** $^{a}$) $K_4$ B $Dn_1$ $D_3$ वैदूर्य° — $^{b}$) $Ś_1$ $K_{1.2}$ शुचिः; $K_{3.4}$ Dn $D_{3.5}$ M शिवः (for शुभः). — $^{c}$) $B_2$ Dn $D_{1.3.5}$ नित्य° — $^{d}$) $T_2$ $G_{2-4}$ हरिचन्दना (for °तच्छदाः)

रम्या पाषाणतीर्था च पुरश्चन्द्रा च भारत ॥ ९
अशोकतीर्थं मर्त्येषु कौन्तेय बहुलाश्रमम् ।
अगस्त्यतीर्थं पाण्ड्येषु वारुणं च युधिष्ठिर ॥ १०
कुमार्यः कथिताः पुण्याः पाण्ड्येष्वेव नरर्षभ ।
ताम्रपर्णीं तु कौन्तेय कीर्तयिष्यामि तां शृणु ॥ ११
यत्र देवैस्तपस्तप्तं महदिच्छद्भिराश्रमे ।
गोकर्णमिति विख्यातं त्रिषु लोकेषु भारत ॥ १२
शीततोयो बहुजलः पुण्यस्तात शिवश्च सः ।
ह्रदः परमदुष्प्रापो मानुषैरकृतात्मभिः ॥ १३
तत्रैव तृणसोमाग्नेः संपन्नफलमूलवान् ।
आश्रमोऽगस्त्यशिष्यस्य पुण्यो देवसभे गिरौ ॥ १४

वैडूर्यपर्वतस्तत्र श्रीमान्मणिमयः शिवः ।
अगस्त्यस्याश्रमश्चैव बहुमूलफलोदकः ॥ १५
सुराष्ट्रेष्वपि वक्ष्यामि पुण्यान्यायतनानि च ।
आश्रमान्सरितः शैलान्सरांसि च नराधिप ॥ १६
चमसोन्मज्जनं विप्रास्तत्रापि कथयन्त्युत ।
प्रभासं चोदधौ तीर्थं त्रिदशानां युधिष्ठिर ॥ १७
तत्र पिण्डारकं नाम तापसाचरितं शुभम् ।
उज्जयन्तश्च शिखरी क्षिप्रं सिद्धिकरो महान् ॥ १८
तत्र देवर्षिवर्येण नारदेनानुकीर्तितः ।
पुराणः श्रूयते श्लोकस्तं निबोध युधिष्ठिर ॥ १९
पुण्ये गिरौ सुराष्ट्रेषु मृगपक्षिनिषेविते ।

---

चद्रा, B Dn D4 6 T2 G3 पुनश्चद्रा; D1 2 सरिच्चद्रा K4 [अ]थ (for च) Ś1 K1 2 पुरी चद्रनिभा नृप

**10** a) B Dc Dn D4 6 M1 तत्रैव, T G2-4 मत्स्येषु (for मर्त्येषु) Ś1 K1 2 4 D1 2 °तीर्थो मर्त्ये च (K4 D1 2 °षु), D3 5 °तीर्थावर्तेषु, G1 °तीर्थमध्येषु — b) G1 पुण्य च (for कौन्तेय) Ś1 K2-4 D1-3 5 बहुलाश्रमा (Ś1 K4 °मा, K2 मा, D1 2 °मे), B D6 विपुलाश्रम, T2 G3-4 प्रबलाश्रम (G2 °म)

**11** b) K4 च भारत, D4 6 नराधिप (for नर°) K4 S पाण्ड्येषु (K4 पाण्ड्ये च) भरतर्षभ — c) Ś1 K2 ताम्रवर्णं; K1 °वर्ण्यं, K3 °पर्णा, Dc Dn2 D1 2 6 T1 M1 °पर्णी, D5 °पर्णां — d) S1 K1 2 B Dc D4 6 तत् (for ता) M1 देवाश्रमपद तथा

**12** c) Ś1 K D (except D4 6) गोकर्ण इति S1 K B1 2 4 Dn D3 5 6 विख्यातस् — d) B3 विश्रुत, Dn D5 विश्रुत (for भारत)

**13** b) K3 श्रोत, B Dc Dn3 D4 6 तत्र, T2 G3 चात्र (for तात) K3 श्रवश्च स°, Dc शिलोच्चय (for शिवश्च स°) Ś1 K1 2 शुचि, Dn शुभ (!), D3 श्चय (for च स°) — M2 om $13^{d}$–$15^{c}$ — d) K1 श्रीमान्मणिमयो गिरि (cf $15^{b}$)

**14** K1 M2 om 14 (for M2 cf v l 13) — a) Ś1 K2 B2 3 तृणसोमाग, B1 °सोमाढ्य°, B4 °सोमाकै, Dc D4 6 °सोमाके, D5 °सोमागै, T G2-4 °धूमाग्ने° Dn D1 2 तत्र वृक्षतृणाद्यैश्च — b) Ś1 K4 B Dn D1 2 5 T1 सपन्न°, M1 आश्रम (for सपन्न) — d) Dc2 G2 4 पुण्ये (for पुण्यो) S1 K2 D1 3 M1 देवसभो; K3 °सहो, K4 B2 (m as in text) Dn D2 4-6 °समो, Dc G4 °समे, T1 °सखे, T2 G3 °सभा°, G2 °सहे Ś1 K (K1 om) B2 (m as in text) D (except Dc) M1 गिरि°

**15** M2 om $15^{abc}$ (cf v l 13) — a) B Dn1 n2 D3 वैदूर्य° — b) Ś1 K1 2 गिरि°, B D1 2 4 शुभ° (for शिव) — B3 om (hapl) $15^{c}$–$18^{b}$ — c) G3 आश्रम Ś1 K1 2 B2 D6 तत्र (for चैव) K3 अगस्त्यस्याश्रमस्यैष

**16** B3 om 16 (cf v l 15) — G4 om $16^{cd}$ — c) B4 Dn D3 5 चैव (for शैलान्)

**17** B3 om 17 (cf v.l 15) — a) K1 चमसो मज्जन, K4 तमसा मज्जन (m as in text), B (B3 om) Dc Dn D4 6 T2 (after corr) G3 चमसोद्भेदन, T1 G1 तमसो मज्जन, T2 (before corr) तपसोन्मज्जन, G2 4 तपसा (G4 °सो) मज्जन — b) B1 2 D4 6 तथैव; B4 तत्रैव T2 (before corr) G2 4 रचयन्त्युत — c) B (B3 om) D4 6 M चोदधे M1 यत्र, M2 तत्र (for तीर्थं) — d) T G2-4 त्रिषु लोकेषु विश्रुत

**18** B3 om $18^{ab}$ (cf v l 15), D2 om 18 — b) Ś1 K1 2 Dn D1 5 G1 M2 शिव (for शुभम्) — c) Ś1 K2 3 D5 ऊर्ज°, G4 मज्ज° (for उज्ज°), cf v l 20 also — d) Ś1 K3 Dc1 D3 G4 M2 क्षिप्र (for क्षिप्रं)

**19** a) S1 K3 4 B1 Dc Dn D1-3 5 देवर्षिवीरेण, B2-4 D4 6 °धीरेण — G4 om $19^{cd}$ — d) K3 4 Dc D1 2 जनाधिप (for युधि°)

**20** B3 om $20^{cd}$ — c) S1 K1-3 D5 ऊर्जयत (Ś1 °त, K3 D5 °ते), G4 मज्जयते, cf v l 18 also T G1 4 हि, G1 [ऽ]पि, G2 [ऽ]भि (for स्म) — After 20, T1

प्रफुल्लनलिनं राजन्देवगन्धर्वसेवितम् ॥ ५
बह्वाश्चर्यं महाराज दृश्यते तत्र पर्वते ।
पुण्ये स्वर्गोपमे दिव्ये नित्यं देवर्षिसेविते ॥ ६
ह्रदिनी पुण्यतीर्था च राजर्षेस्तत्र वै सरित् ।
विश्वामित्रनदी पारा पुण्या परपुरंजय ॥ ७
यस्यास्तीरे सतां मध्ये ययातिर्नहुषात्मजः ।
पपात स पुनर्लोकाँल्लेभे धर्मान्सनातनान् ॥ ८
तत्र पुण्यह्रदस्तात मैनाकश्चैव पर्वतः ।
बहुमूलफलो वीर असितो नाम पर्वतः ॥ ९
आश्रमः कक्षसेनस्य पुण्यस्तत्र युधिष्ठिर ।
च्यवनस्याश्रमश्चैव ख्यातः सर्वत्र पाण्डव ।
तत्राल्पेनैव सिध्यन्ति मानवास्तपसा विभो ॥ १०
जम्बूमार्गो महाराज ऋषीणां भावितात्मनाम् ।
आश्रमः शाम्यतां श्रेष्ठ मृगद्विजगणायुतः ॥ ११
ततः पुण्यतमा राजन्सततं तापसायुता ।
केतुमाला च मेध्या च गङ्गारण्यं च भूमिप ।
ख्यातं च सैन्धवारण्यं पुण्यं द्विजनिषेवितम् ॥ १२
पितामहसरः पुण्यं पुष्करं नाम भारत ।
वैखानसानां सिद्धानामृषीणामाश्रमः प्रियः ॥ १३
अप्यत्र संस्तवार्थाय प्रजापतिरथो जगौ ।
पुष्करेषु कुरुश्रेष्ठ गाथां सुकृतिनां वर ॥ १४
मनसाप्यभिकामस्य पुष्कराणि मनस्विनः ।
पापानि विप्रणश्यन्ति नाकपृष्ठे च मोदते ॥ १५

इति श्रीमहाभारते आरण्यकपर्वणि सप्ताशीतितमोऽध्यायः ॥ ८७ ॥

**5** $^{b}$) Ś$_1$ K$_{1-3}$ D$_1$ $_2$ तस्य (for तत्र) Dn D$_3$ $_5$ पुण्य महीपते, T G तरुलता(T$_1$ °कुला, G$_1$ °वना)कुल (for तत्र च धीमत) — $^{c}$) K$_3$ प्रोत्फुल्लनलिन रा°; Dn D$_5$ फुल्लपद्म महाराज

**6** $^{c}$) K$_4$ रम्ये, Dn D$_{3-5}$ चैव, D$_6$ तत्र (for दिव्ये) — $^{d}$) K$_4$ मुनि°, T G M$_2$ देव (G$_1$ पुण्य) (for नित्य) Dn D$_3$ $_5$ देवर्षिगणसेविते

**7** $^{a}$) K$_1$ $_2$ ह्रादिनी; G$_1$ हृष्टानि, M$_2$ ह्रदनी — $^{b}$) Ś$_1$ K$_1$ $_2$ राजर्षे — $^{c}$) Ś$_1$ K D (except Dc D$_4$) राजन्, B$_1$ रम्या (for पारा) T$_1$ विश्वामित्रा नदिवरा; T$_2$ G$_3$ $_4$ विश्वामित्रेण तपसा, G$_2$ विश्वामित्रस्य नीवारा° — $^{d}$) T$_3$ G$_3$ $_4$ निर्मिता सर्वपावनी

**8** $^{a}$) Ś$_1$ गतो, K$_{1-3}$ D$_4$ $_6$ सभा (for सता) — $^{d}$) Ś$_1$ K$_2$ लेभे धर्म्यान्, K$_4$ D$_1$ $_2$ लेभे लोकान्, T$_2$ G$_2$ $_3$ M$_1$ लेभे पुण्यान्, G$_4$ पुण्यान् लेभे B D$_4$ $_6$ च शाश्वतान् (for सना°)

**9** $^{a}$) S$_1$ K$_1$ $_3$ $_4$ D$_1$ $_2$ यत्र (for तत्र) K$_3$ $_4$ Dn D$_{1-3}$ $_5$ G$_4$ M$_1$ पुण्यो ह्रद°, B Dc D$_4$ $_6$ M$_2$ पुण्या ह्रदा°, T$_1$ पुण्यतम° (for पुण्यह्रद°) S$_1$ K$_1$ $_2$ चैव; B$_1$ $_3$ तत्र, Dn D$_1$ $_5$ ख्यातो (for तात) — $^{b}$) S$_1$ K$_1$ $_2$ $_4$ B$_3$ $_4$ तत्र पर्वत°, B$_1$ पर्वतोत्तम° (for चैव पर्वत°) — $^{cd}$) N T$_1$ °फलोपेतस् N त्वसितो (K$_3$ प्रशितो, Dc D$_4$ $_5$ तुषितो) (for असितो)

**10** $^{a}$) M$_1$ कक्षदेवस्य — $^{b}$) S$_1$ K$_3$ पुत्र°, K$_1$ $_2$ पूत° (for पुण्य) K$_3$ यत्र (for तत्र) — $^{c}$) B$_3$ D$_4$ $_6$ T$_2$ G$_{3-4}$ तत्र (for चैव) — $^{d}$) Ś$_1$ K$_1$ $_2$ भारत (for पाण्डव) Dn D$_5$ विख्यातस्तत्र पाण्डव — $^{e}$) T$_1$ अल्पेनैव च कालेन; T$_2$ G$_{2-4}$ अल्पाल्पेनैव सिध्यति (T$_2$ G$_3$ [by corr] सिद्धा स्यु°)

**11** $^{a}$) K$_1$ $_3$ $_4$ D$_1$ $_2$ °मार्गे (for °मार्गो) — Ś$_1$ K$_1$ $_2$ D$_5$ G$_4$ om (hapl) $11^{b}$–$12^{a}$ — $^{b}$) K$_3$ $_4$ Dc D$_{1-3}$ S (G$_4$ om) मुनीना (for ऋषीणा) — $^{c}$) K$_3$ श्रम्यता, K$_4$ D$_3$ श्रीम°, Dc सरि°, D$_1$ $_2$ तप°, T$_2$ G$_3$ M श्राम्य°, G$_1$ श्राव्य° (for शाम्य°) — $^{d}$) K$_4$ °गण° पुन°; B$_3$ °गणावृत°, Dc$_1$ G$_1$ °गणायुत, Dc$_2$ °समायुत, Dn D$_4$ $_6$ °निषेवित°, T$_2$ G$_2$ $_3$ मृगपक्षिगणायुत°

**12** D$_3$ om $12^{ab}$, Ś$_1$ K$_1$ $_2$ D$_5$ G$_4$ om $12^{a}$ (cf v.l 11) — $^{a}$) K$_3$ $_4$ D$_1$ $_2$ T G$_{1-3}$ M$_2$ जबूमार्गो महाराज (=$11^{a}$) — $^{b}$) Ś$_1$ K$_1$ $_2$ $_4$ Dn D$_5$ T G तापसैर्युत° (Dn र्युता, T$_2$ G$_{2-4}$ °र्वृत), K$_3$ D$_1$ $_2$ तपसायुत — $^{d}$) Ś$_1$ K$_1$ गगाद्वारे; K$_3$ $_4$ Dn D$_{1-3}$ $_5$ M$_1$ °द्वार — $^{f}$) Ś$_1$ K$_1$ $_2$ तीर्थं, T$_2$ G$_{2-4}$ रम्य (for पुण्य) B$_3$ द्विजगणावृत, S मुनिनिषेवित — After 12, B$_3$ *repeats* $12^{ab}$ (v.l निवेदित for तापसायुता)

**13** $^{b}$) Ś$_1$ K Dn D$_3$ $_5$ M$_2$ नामत°; B$_3$ विश्रुत (for भारत)

**14** $^{a}$) K$_3$ सश्रवार्थाय, B$_{2-4}$ सभवा°, Dn D$_3$ $_5$ सश्रया°, T$_2$ G$_2$ $_3$ सस्तव पार्थं, G$_4$ सस्तवप्रास — $^{b}$) K$_1$ इम जगौ, B Dc D$_4$ $_6$ इमा जगौ, S उदाजगौ (T$_2$ [after corr] G$_3$ उपाजगौ) — $^{d}$) T G$_{2-4}$ M$_2$ शृणु, G$_1$ जगौ (for वर)

## ८८

धौम्य उवाच ।

उदीच्यां राजशार्दूल दिशि पुण्यानि यानि वै ।
तानि ते कीर्तयिष्यामि पुण्यान्यायतनानि च ॥ १
सरस्वती पुण्यवहा ह्रदिनी वनमालिनी ।
समुद्रगा महावेगा यमुना यत्र पाण्डव ॥ २
तत्र पुण्यतमं तीर्थं प्लक्षावतरणं शिवम् ।
यत्र सारस्वतैरिष्ट्वा गच्छन्त्यवभृथं द्विजाः ॥ ३
पुण्यं चाख्यायते दिव्यं शिवमग्निशिरोऽनघ ।
सहदेवोऽयजद्यत्र शम्याक्षेपेण भारत ॥ ४
एतस्मिन्नेव चार्थेयमिन्द्रगीता युधिष्ठिर ।
गाथा चरति लोकेऽस्मिन्गीयमाना द्विजातिभिः ॥ ५
अग्नयः सहदेवेन ये चिता यमुनामनु ।
शतं शतसहस्राणि सहस्रशतदक्षिणाः ॥ ६
तत्रैव भरतो राजा चक्रवर्ती महायशाः ।
विंशति सप्त चाष्टौ च हयमेधानुपाहरत् ॥ ७
कामकृद्यो द्विजातीनां श्रुतस्तात मया पुरा ।
अत्यन्तमाश्रमः पुण्यः सरकस्तस्य विश्रुतः ॥ ८
सरस्वती नदी सद्भिः सततं पार्थ पूजिता ।

---

**15** [a]) $T_2$ $G_3$ हि (for [अ]पि) — [b]) B $D_{4\,6}$ $M_1$ तप॰ (for मन ) — [c]) $Dn_1$ $n_3$ $D_{3\,5}$ चिप्रण(*or* ॰न)श्यति पापानि (by transp ) — [d]) $K_{1\,2}$ शोभते, $B_{3\,4}$ $D_{4-6}$ $T_1$ $G_1$ M पूज्य॰ (for मोद॰)

Colophon — *Major parvan* $Ś_1$ $K_{1\,2}$ $Dn_3$ T $G_{2-4}$ $M_1$ आरण्य — *Sub parvan* $T_1$ तीर्थयात्रा N (except $Dn_3$) (all om sub parvan name) mention only धौम्यतीर्थयात्रा — *Adhy name* $G_1$ धौम्यतीर्थानुक्रमण — *Adhy no* (figures, words or both) $Dn_1$ 89, $Dn_2$ (wrongly) 99, $Dn_3$ $M_2$ 90, $D_1$ 93, T G $M_1$ 88 — *Śloka no* Dn 18, $D_1$ 16

## 88

**1** [b]) $K_4$ $D_{1-3}$ तीर्था (for पुण्या॰) — $B_3$ om $1^{cd}$ — [d]) = 3 87 $1^d$ $K_3$ $B_{2\,4}$ Dc $D_{4\,6}$ $T_1$ $G_1$ $M_1$ तीर्था॰ (for पुण्या॰) — After 1, B ($B_3$ om line 2) Dc Dn $D_{4\,6}$ ins

465* शृणुष्वावहितो भूत्वा मम मन्त्रयत प्रभो ।
कथाप्रतिग्रहो वीर श्रद्धा जनयते शुभाम् ।
[(L 1) $B_{1\,3\,4}$ Dc राजन् (for भूत्वा) ]

**2** [a]) B Dc $D_{4\,6}$ पुण्यजला; Dn $D_{3\,5}$ महापुण्या; S पुण्यतमा (for वहा) — [b]) $Ś_1$ $K_{1\,2}$ $T_1$ $G_4$ ह्रादिनी $Ś_1$ $K_{1\,2\,4}$ Dn $D_{1-3\,5}$ तीर्थमालिनी, B $D_6$ वप्र , Dc $D_4$ विप्र ; $M_1$ मेघ ; $M_2$ च प्रमाथिनी — [c]) $B_{1-3}$ $D_{4\,6}$ महा पुण्या, $M_1$ वेगवहा (for महावेगा) — [d]) $D_{1\,2\,4\,6}$ तत्र $D_{1\,3}$ $T_1$ $M_2$ भारत (for पाण्डव)

**3** $G_4$ om 3 — [a]) $Ś_1$ $K_4$ Dn $D_{1\,3}$ $M_1$ यत्र (for तत्र) Dn $D_{1\,3\,5}$ पुण्यतर — [b]) Dn $D_{3\,5\,6}$ S (except $M_1$) शुभ (for शिवम्) — [c]) $T_2$ $G_{2\,3}$ $M_2$ सारस्वतीर् — [d]) $K_4$ अवभृतैर्, Dn $D_{3\,5}$ ॰भृथैर्, $M_2$ ॰भृथान्

**4** [a]) $Ś_1$ $K_{1\,2}$ ख्यापयते, $K_3$ तमक्षय, $K_4$ S (except $G_4$ $M_2$) च ख्यायते — [b]) $B_{1-3}$ सरो (for शिरो) $B_3$ Dc $D_{4\,6}$ महत् (for ऽनघ)

**5** [a]) $K_3$ चार्थेषु; B D (except $D_3$) चार्थेसौ ($B_3$ चाप्यर्थे) (for चार्थेयम्) — $D_2$ om $5^b$–$6^a$, $Ś_1$ om $5^{cd}$ — [cd]) M श्लोकश् (for गाथा), and गीयमानो

**6** $D_2$ om $6^a$ (of v l 5) — [b]) $B_2$ Dn $D_{4\,6}$ सेविता (for ये चिता) — [c]) $Ś_1$ $K_{2-4}$ $D_{1-3}$ शत सहस्रदक्षिणा॰; $K_1$ B Dc Dn $D_{4\,6}$ ते तस्य कुरुशार्दूल — [d]) $K_{3\,4}$ $D_{3\,5}$ सहस्र शत॰

**7** [a]) $Dc_2$ $T_2$ $G_{2-4}$ अत्रैव; $D_{1\,2}$ तथै॰ (for तत्रै॰) — [c]) $Ś_1$ $K_{2\,3}$ D (except $D_{3\,4}$) $T_1$ M Cn विंशति, Cnp as in text — [d]) $T_2$ G उदाहरत्

**8** $G_4$ om 8 — [a]) B Dc $D_{4\,6}$ ॰कृत्स (for ॰कृद्यो) — [b]) $Ś_1$ Dn $D_{3\,5}$ यथा (for मया) — [c]) $K_3$ अत्रैव, $D_5$ अत्यर्थम्, $M_1$ अद्यापि (for अत्यन्तम्) $K_3$ $M_2$ चाश्रम , $G_2$ आश्रय — [d]) $Ś_1$ $M_1$ शरकस्; $K_1$ $B_{2\,3}$ $D_{4\,6}$ सरसस्; $K_2$ चरकस्; T G ($G_4$ om ) $M_2$ शकरस् (for सरकस्) $D_{4\,6}$ T G ($G_4$ om ) $M_2$ तत्र (for तस्य) B $D_{4\,6}$ भारत (for विश्रुत ) $K_{3\,4}$ Dc Dn $D_{1-3\,5}$ शरभगस्य वि

**9** [b]) $Ś_1$ K $D_{1\,2}$ तात (for पार्थ) $B_2$ $D_{4\,6}$ $T_2$ $G_3$ सेविता (for पूजि ) — [c]) $K_4$ B Dc $D_3$ वालिखिल्यैर्

वालखिल्यैर्महाराज यत्रेष्टमृषिभिः पुरा ॥ ९
दृषद्वती पुण्यतमा तत्र ख्याता युधिष्ठिर ।
तत्र वैवर्ण्यवर्णौ च सुपुण्यौ मनुजाधिप ॥ १०
वेदज्ञौ वेदविदितौ विद्यावेदविदावुभौ ।
यजन्तौ क्रतुभिर्नित्यं पुण्यैर्भरतसत्तम ॥ ११
समेत्य बहुशो देवाः सेन्द्राः सवरुणाः पुरा ।
विशाखयूपेऽतप्यन्त तस्मात्पुण्यतमः स वै ॥ १२
ऋषिर्महान्महाभागो जमदग्निर्महायशाः ।
पलाशकेषु पुण्येषु रम्येष्वयजताभिभूः ॥ १३
यत्र सर्वाः सरिच्छ्रेष्ठाः साक्षात्तमृषिसत्तमम् ।
स्वं स्वं तोयमुपादाय परिवार्योपतस्थिरे ॥ १४
अपि चात्र महाराज स्वयं विश्वावसुर्जगौ ।
इमं श्लोकं तदा वीर प्रेक्ष्य वीर्यं महात्मनः ॥ १५
यजमानस्य वै देवाञ्जमदग्नेर्महात्मनः ।
आगम्य सरितः सर्वा मधुना समतर्पयन् ॥ १६
गन्धर्वयक्षरक्षोभिरप्सरोभिश्च शोभितम् ।
किरातकिंनरावासं शैलं शिखरिणां वरम् ॥ १७
बिभेद तरसा गङ्गा गङ्गाद्वारे युधिष्ठिर ।
पुण्यं तत्ख्यायते राजन्ब्रह्मर्षिगणसेवितम् ॥ १८
सनत्कुमारः कौरव्य पुण्यं कनखलं तथा ।
पर्वतश्च पुरुर्नाम यत्र जातः पुरूरवाः ॥ १९
भृगुर्यत्र तपस्तेपे महर्षिगणसेवितः ।

---

**10** $^{a}$) Dn D5 6 महापुण्या (for पुण्य°) — $^{b}$) B Dn D1 3–6 यत्र (for तत्र) K3 T G3 4 [आ]ख्याता (for ख्याता) — After $10^{ab}$, B Dc Dn D4 6 M2 (om lines 2–4) ins

466* न्यग्रोधाख्यस्तु पुण्याख्यः पाञ्चाल्यो द्विपदां वर ।
दाल्भ्यघोषश्च दाल्भ्यश्च धरणीस्थो महात्मनः ।
कौन्तेयानन्तयशसः सुव्रतस्यामितौजसः ।
आश्रमः ख्यायते पुण्यस्त्रिषु लोकेषु विश्रुतः ।

[(L 1) B1 3 4 पुण्याक्ष ; Dc Dn2 वै पुण्य , Dn1 n3 पाचाल्य (for पुण्याख्यः) Dc पांचालो, D6 पचाल्यो — (L 2) B1 3 4 दाल्मघोषश्च दाल्मश्च, Dc दाल्व° दाल्वश्च (for the prior half) B1 3 धरण्याख्यो, Dc °णीस्तो (for °णीस्थो) Dc D4 6 °मना (for °त्मन ) ]
— K3 4 om $10^{c}$–$11^{d}$, D1 G4 om $10^{cd}$ — $^{c}$) Ś1 K2 नैव ववर्णवर्णौ च, K1 तेनैव वर्णसुवर्णौ च (hypermetric !), B1 नैतावववर्णौ वर्णौ च, B2–4 Dc Dn D4 6 नैता(Dc नैक°, Dn D4 6 एता)वर्णाव(B3 °वि)वर्णौ च, D2 नारदः पर्वतश्चैव, D5 नैवर्तुवर्णावर्णौ च; D6 तौ चार्कवर्णावर्णौ च — $^{d}$) Dn D2 विश्रुतौ (for सुपुण्यौ)

**11** K3 4 om 11 (cf v.l 10) — $^{a}$) B2 D4 6 वेदज्ञैर्, K1 2 Dn D1–3 5 वेदविद्वांसौ — $^{b}$) Dc °विशारदौ, Dn D1–3 5 वेदविद्या° (by transp ) — $^{c}$) Ś1 K1 2 Dn D1 3 4 ईजाते, B Dc D3 5 6 यजतः (for यजन्तौ) B1–3 D4 6 तत्र; Dn D5 6 मुख्यैः (for नित्य) — $^{d}$) Ś1 K1 2 पुण्ये, D1 3 पुण्यौ (for पुण्यैर्).

**12** $^{a}$) S1 K1 2 सहिता; T1 यहवो (for बहुशो) — $^{b}$) Ś1 K1 2 D2 सर्षिगणाः पुरा, K3 सवरुणायुताः — $^{c}$) Ś1 K1 2 विशाला , Dn2 n3 विश्रामः, D5 विश्राम्य (for विशाख ) — $^{d}$) Dn D5 G1 तेन (for तस्मात्) Ś1 K1 2 सदा, K3 4 Dc D1 3 S स च, Dn D5 6 च स (for स वै)

**13** $^{a}$) Ś1 K1 2 राजन् (for महान्) — $^{b}$) K Dc D1 2 M1 °तपाः (for °यशाः) — $^{cd}$) B2–4 D3 4 6 T2 G2–4 transp पुण्येषु and रम्येषु S1 [अ]यजते; K1 2 चाय° जत्, B Dc Dn D4–6 M2 यजत (B1 3 D4 °त°) (for [अ]यजत) Ś1 K2 3 विभु , K3 4 D5 [अ]भिभु°; B Dc Dn D4–6 M2 प्रभुः, D1 2 [अ]भिभो (for [अ]भिभूः)

**15** $^{a}$) B D4 6 चात्रैव (B4 चाप्यत्र) राजेंद्र (for चात्र महाराज) — $^{c}$) Ś1 K1 2 महावीर; T2 G3 महावीर्य; G2 4 महाराज, M1 महाबाहो, M2 तथा वीर (for तदा वीर) — $^{d}$) S वीक्ष्य (G1 यज्ञ) (for प्रेक्ष्य) Ś1 वीर, Dn (Dn3m as in text) D3 5 दीक्षा, G1 वीक्ष्य (for वीर्यं)

**16** D6 om (hapl ) $16^{ab}$ — $^{a}$) B1–3 Dc D4 वै राजन्, D5 6 T G2–4 M1 वै देवा, M2 देवाना (for वै देवान्) — $^{c}$) Ś1 K1 2 आगता , K3 4 D1 °गत्य (for °गम्य) Ś1 K1 2 विप्रा, K3 विप्र, K4 D (except D4 6) विप्रान् (for सर्वा) — $^{d}$) B Dc D4 6 M [अ]तर्पयन्द्विजान् (for समत°)

**17** $^{b}$) K3 4 B4 Dn D1–3 5 M2 सेवित (for शोभि°)

**18** $^{b}$) Ś1 K1 2 B2–4 D (except Dc) गंगाद्वार

**19** D3 6 om (hapl ) $19^{a}$–$20^{b}$, G4 om $19^{ab}$ — $^{a}$) Ś1 K D1 2 आकुमार स, D5 सुकुमार च (for सनत्कुमारः) Ś1 K1 2 4 Dc कौंतेय; T1 कुरव° — $^{b}$) S (G4 om ) पुण्य कनखलस्तथा — $^{c}$) S1 पुनर्यत्र, K1 2 पुरर्यत्र; Dc1 Dn2 D1 पुनर्नाम — $^{d}$) B Dn2 n3 यातः, G [आ]स्थत (for जात )

**20** D2 6 om $20^{ab}$ (cf v.l 19) — $^{a}$) Ś1 K

स राजन्नाश्रमः ख्यातो भृगुतुङ्गो महागिरिः ॥ २०
यच्च भूतं भविष्यच्च भवच्च पुरुषर्षभ ।
नारायणः प्रभुर्विष्णुः शाश्वतः पुरुषोत्तमः ॥ २१
तस्यातियशसः पुण्यां विशालां बदरीमनु ।
आश्रमः ख्यायते पुण्यस्त्रिषु लोकेषु विश्रुतः ॥ २२
उष्णतोयवहा गङ्गा शीततोयवहापरा ।
सुवर्णसिकता राजन्विशालां बदरीमनु ॥ २३
ऋषयो यत्र देवाश्च महाभागा महौजसः ।
प्राप्य नित्यं नमस्यन्ति देवं नारायणं विभुम् ॥ २४
यत्र नारायणो देवः परमात्मा सनातनः ।
तत्र कृत्स्नं जगत्पार्थ तीर्थान्यायतनानि च ॥ २५
तत्पुण्यं तत्परं ब्रह्म तत्तीर्थं तत्तपोवनम् ।
तत्र देवर्षयः सिद्धाः सर्वे चैव तपोधनाः ॥ २६
आदिदेवो महायोगी यत्रास्ते मधुसूदनः ।
पुण्यानामपि तत्पुण्यं तत्र ते संशयोऽस्तु मा ॥ २७
एतानि राजन्पुण्यानि पृथिव्यां पृथिवीपते ।
कीर्तितानि नरश्रेष्ठ तीर्थान्यायतनानि च ॥ २८
एतानि वसुभिः साध्यैरादित्यैर्मरुदश्विभिः ।
ऋषिभिर्ब्रह्मकल्पैश्च सेवितानि महात्मभिः ॥ २९
चरन्नेतानि कौन्तेय सहितो ब्राह्मणर्षभैः ।
भ्रातृभिश्च महाभागैरुत्कण्ठां विजहिष्यसि ॥ ३०

इति श्रीमहाभारते आरण्यकपर्वणि अष्टाशीतितमोऽध्यायः ॥ ८८ ॥

B Dc D₃ ₄ तत्र (for यत्र) — ᵇ) Ś₁ K₁₋₃ °सवृत , B Dn D₄ ₅ सेविते, Dc °सवृते; G₄ °पूजित° — ᶜ) Dn D₅ राजन्स (by transp ) Ś₁ K₁₋₃ नामत (for आश्रम°) — ᵈ) B Dc D₄ ₆ °तुगे °गिरौ; T₁ G₁ M °सुदो °गिरि°

**21** ᵃ) K₃ B Dn D₁ ₃₋₆ M य स; Dc D₂ T₁ य° स° (for यच्च) K₃ B Dc D₃ ₄ ₆ भविष्य च — ᵇ) K₃ भविष्यत् (for भवच्च) B Dn D₄₋₆ T₁ G₁ M भरत (for पुरुष ) — K₁ om 21ᶜᵈ — ᶜ) B D₄ ₆ विभुर; Dc भृगुर्, T₁ पर (for प्रभुर्) T₂ G₂ ₃ जिष्णु° (for विष्णु°)

**22** K₄ D₈ G₁ om (hapl )22ᶜ–23ᵈ — ᵈ) S (G₁ om ) भारत (for विश्रुत°)

**23** K₄ D₈ G₁ om 23 (cf v.l 22) — ᵃᵇ) D₁ transp उष्ण and शीत T₂ G₂₋₄ M₂ कृष्ण (for उष्ण° ) T₂ (before corr ) G₂ ₄ श्वेत (for शीत ) Ś₁ K₁ ₂ B Dn D₁ ₄ ₆ T₂ G₂ ₃ पुरा, G₄ वरा, M₂ च या (for [अ]परा)

**24** D₃ reads 24–27ᵃᵇ after 3 89 11ᶜ — ᵃ) Ś₁ K₁ ₂ [ऽ]त्र हि (for यत्र) — ᵇ) Ś₁ K₁ ₂ [अ]मितौ° (for महौ ) — ᶜ) G₂ ₄ प्राप्ता (for प्राप्य) D₁ ₂ स च (for नित्य ) B₂ D₄ ₆ नमति स्म, T₁ G₁ नमस्यते, T₂ G₂₋₄ उपासते — ᵈ) B D₄ ₆ M₁ नारायणमज (for देव नारा ) Ś₁ K₁ ₃ ₄ B₁₋₃ Dc Dn D₅ प्रभु, D₁ विभो; T₂ G₃ मुवि (for विभुम्)

**25** ᶜ) B₄ Dn D₁ सर्व (for पार्थ) — 25ᵈ = 28ᵈ

**26** ᵃ) D₃ तीर्थ (for पुण्य) S₁ K B₃ ₄ D परम (D₄ ₆ तत्पुनर्) (for तत्पर) — ᵇ) K₃ तीर्थ च; T₂ G₂₋₄ पवित्र (for तत्तीर्थ ) — After 26ᵃᵇ, B Dc Dn D₄ ₆ ins

467* तत्पर परम देव भूतानामीश्वरेश्वरम् ।
शाश्वत परम चैव धातार परम पदम् ।
य विदित्वा न शोचन्ति विद्वास' शास्त्रदृष्टय' ।

— ᵈ) S₁ K₁ ₂ देव (for चैव)

**27** ᶜ) K₃ M₂ यत् (for तत्) — ᵈ) S₁ K Dn D₁₋₃ ₅ ₆ अत्र (for तत्र) Ś₁ K₁ ₂ मे, B₂ वा (for मा) B मा भूते सशयोत्र वै

**28** ᶜ) Ś₁ K₁ ₂ कुरु° (for नर° ) — K₃ om 28ᵈ–29ᶜ — ᵈ) = 25ᵈ B₁ D₁ ₃ ₄ ₆ पुण्या° (for तीर्था ) Dc सेवितानि महर्षिभि (cf 29ᵈ and v l )

**29** K₃ om 29ᵃᵇᶜ (cf v l 28) — ᶜ) S₁ K₁ ₂ देवताकल्पै° , Dn D₁₋₃ ₅ G₁ M₁ देवकल्पैश्च — ᵈ) K₃ Dc महर्षिभि (for महा° ), cf v l 28

**30** ᵇ) B₁ ₂ ₄ Dc D₄ ₆ सहितै ( Dc₂ सेवितै ) B D₄ ₆ ब्रह्मवादिभि , Dc ब्राह्मणर्षिभि — ᶜ) Ś₁ K₁ ₂ °वेगैर् (for भागैर्) — ᵈ) Ś₁ K₁₋₃ सोत्कठो (for उत्कण्ठा) Ś₁ K Dn D₃ ₅ M विहरिष्यसि ( K₁ ₃ ₄ °सि ); T G विजयिष्यसे (G₂ सि)

Colophon — *Major parvan* Ś₁ K₃ Dn₂ T G₂₋₄ M₁ आरण्य — *Sub parvan* T G₁ ₃ तीर्थयात्रा N (om sub parvan name) mentions only धौम्यतीर्थयात्रा, followed by समाप्ता (B₂ Dn₃ D₄ ₅ om समाप्ता) — *Adhy. name* T₂ G₃ धौम्यतीर्थानुक्रमण; G₂ धौम्यतीर्थकथन

## ८९

वैशंपायन उवाच ।
एवं संभाषमाणे तु धौम्ये कौरवनन्दन ।
लोमशः सुमहातेजा ऋषिस्तत्राजगाम ह ॥ १
तं पाण्डवाग्रजो राजा सगणो ब्राह्मणाश्च ते ।
उदतिष्ठन्महाभागं दिवि शक्रमिवामराः ॥ २
तमभ्यर्च्य यथान्यायं धर्मराजो युधिष्ठिरः ।
पप्रच्छागमने हेतुमटने च प्रयोजनम् ॥ ३
स पृष्टः पाण्डुपुत्रेण प्रीयमाणो महामनाः ।
उवाच श्लक्ष्णया वाचा हर्षयन्निव पाण्डवान् ॥ ४
संचरन्नस्मि कौन्तेय सर्वलोकान्यदृच्छया ।
गतः शक्रस्य सदनं तत्रापश्यं सुरेश्वरम् ॥ ५
तव च भ्रातरं वीरमपश्यं सव्यसाचिनम् ।
शक्रस्यार्धासनगतं तत्र मे विस्मयो महान् ।
आसीत्पुरुषशार्दूल दृष्ट्वा पार्थं तथागतम् ॥ ६
आह मां तत्र देवेशो गच्छ पाण्डुसुतानिति ।
सोऽहमभ्यागतः क्षिप्रं दिदृक्षुस्त्वां सहानुजम् ॥ ७
वचनात्पुरुहूतस्य पार्थस्य च महात्मनः ।
आख्यास्ये ते प्रियं तात महत्पाण्डवनन्दन ॥ ८
भ्रातृभिः सहितो राजन्कृष्णया चैव तच्छृणु ।
यत्त्वयोक्तो महाबाहुरस्त्रार्थं पाण्डवर्षभ ॥ ९
तदस्त्रमाप्तं पार्थेन रुद्रादप्रतिमं महत् ।
यत्तद्ब्रह्मशिरो नाम तपसा रुद्रमागतम् ॥ १०
अमृतादुत्थितं रौद्रं तल्लब्धं सव्यसाचिना ।
तत्समन्त्रं ससंहारं सप्रायश्चित्तमङ्गलम् ॥ ११
वज्रं चान्यानि चास्त्राणि दण्डादीनि युधिष्ठिर ।
यमात्कुबेराद्वरुणादिन्द्राच्च कुरुनन्दन ।
अस्त्राण्यधीतवान्पार्थो दिव्यान्यमितविक्रमः ॥ १२
विश्वावसोश्च तनयाद्गीतं नृत्तं च साम च ।

---

— *Adhy no* (figures, words or both) Dn1 n2 M2 90, Dn3 91, D1 94, T G M1 89 — *Śloka no* Dn1 n2 34, Dn3 35, D1 29

**89**

**1** b) K4 Dc1 D2 6 कौरवनदन, T1 कौरव्यनदन — c) Ś1 Dn T2 G3 4 स, K3 तु (for सु)
**2** b) K4 D1 2 M2 ये (for ते) — D3 om 2c–4b — c) Dn D5 उपातिष्ठन् B1 3 4 D4 6 M2 महाभागा°, B2 T2 G2–4 °राज, Dc D1 T1 °भाग, G1 M1 °स्मान
**3** D3 om 3 (cf v l 2) — a) Ś1 Dn D1 4 सम° (for तम°) — b) Dn D5 6 धर्मपुत्रो — d) T1 गमने (for अटने) M2 महर्षि लोकविश्रुत
**4** D3 om 4ab (cf v.l 2) — b) B2 °मति°, B3 Dc S (except G1 2) °त्मना, D4 6 °मते, D5 °तपा (for °मना)
**5** a) S1 K1 3 इव (for अस्मि) — b) S1 K Dn D1–3 5 T2 G3 सर्वान् (for सर्व-) — c) Ś1 K Dn D2 5 T2 G2–4 भवन (for सदन)
**7** a) Ś1 K Dc D1 2 transp आह and तत्र B2 D4 6 माह (for आह) S1 K B3 Dc D2 देवेंद्रो (for देवेशो) — b) K4 Dc Dn D2 5 प्रति (for इति) — d) K4 D1 महाभुज, Dc सभागत, M2 महाभुज (for सहा°)
**8** c) Ś1 K1 2 राजन्, B4 तावद् (for तात) — d) B4 अह (for महत्) K3 महात कुरुनदन, K4 B1–3 Dc D1 2 4 6 सुमहत्पांडुनदन
**9** a) Dn2 n3 D5 ऋषि° (for भ्रातृ°) — b) T1 G2–4 सह (for चैव) — c) K3 B1 2 D4 6 S (except M2) यस्, B4 तत् (for यत्) Ś1 K1 2 T1 त्वयोक्तः B1 च प्रोक्त (for त्वयोक्तो) S1 K1 2 स्वय भ्रातुर् (for महा°) — d) Ś1 K1 2 Dn D5 भरतर्षभ, B2 पाडवो गत, Dc D1 2 G2 पाडुनदन, T2 G3 4 M1 पाडवर्षभ
**10** a) Ś1 तदस्त्र प्राप्त, K1 2 D1 2 प्राप्त तदस्त्र, T2 G1 2 तदस्त्रमात्त — b) Ś1 K1–3 D (except D3 4 6) विभो (for महत्) — d) Dn D5 6 आगमत् (for आगतम्)
**11** c) Ś1 K1 2 त (for तत्) Cf v l 3 88 24
**12** a) T2 G2 3 शस्त्राणि (for चास्त्राणि) Ś1 K1–3 D1 2 वज्र चास्त्राणि च तथा, B4 Dn D3 वज्रम् (B4 वज्र चा) स्त्राणि चान्यानि — b) S1 K1 2 दडनीतिर्, K3 इद्रादीनि, T1 दडानीति, G2 दव्यादीनि — e) B2 3 Dn1 D1 6 [अ]वाप्त° (for [अ]धीत°) — f) B D4 6 कुरुनदन (for-

वादित्रं च यथान्यायं प्रत्यविन्दद्यथाविधि ॥ १३
एवं कृतास्त्रः कौन्तेयो गान्धर्वं वेदमाप्तवान् ।
सुखं वसति बीभत्सुरनुजस्यानुजस्तव ॥ १४
यदर्थं मां सुरश्रेष्ठ इदं वचनमब्रवीत् ।
तच्च ते कथयिष्यामि युधिष्ठिर निबोध मे ॥ १५
भवान्मनुष्यलोकाय गमिष्यति न संशयः ।
ब्रूयाद्युधिष्ठिरं तत्र वचनान्मे द्विजोत्तम ॥ १६
आगमिष्यति ते भ्राता कृतास्त्रः क्षिप्रमर्जुनः ।
सुरकार्यं महत्कृत्वा यदशक्यं दिवौकसैः ॥ १७
तपसा तु त्वमात्मानं भ्रातृभिः सह योजय ।
तपसो हि परं नास्ति तपसा विन्दते महत् ॥ १८
अहं च कर्णं जानामि यथावद्भरतर्षभ ।
न स पार्थस्य संग्रामे कलामर्हति षोडशीम् ॥ १९
यच्चापि ते भयं तस्मान्मनसिस्थमरिंदम ।
तच्चाप्यपहरिष्यामि सव्यसाचाविहागते ॥ २०
यच्च ते मानसं वीर तीर्थयात्रामिमां प्रति ।
तच्च ते लोमशः सर्वं कथयिष्यत्यसंशयम् ॥ २१
यच्च किंचित्तपोयुक्तं फलं तीर्थेषु भारत ।
महर्षिरेष यद्ब्रूयात्तच्छ्रद्धेयमनन्यथा ॥ २२

इति श्रीमहाभारते आरण्यकपर्वणि एकोननवतितमोऽध्यायः ॥ ८९ ॥

---

[अ]मितविक्रम )

**13** $^{a}$) Dn D5 6 तु (for च) — $^{b}$) T1 G1 गीत ; M3 दिव्य (for गीत) N (except Ś1 K3) नृत्य (for नृत्त) — $^{d}$) Ś1 K1 2 गृह्णाद् (for °विन्दद्)

**14** $^{d}$) G3 [अ]वरस् (for [अ]नुजस्) T1 अनुजस्तव सुव्रत°

**15** $^{a}$) K3 B1–3 Dc D4 6 यच्च (Dc यश्च) मा स (for यदर्थं मा) K3 नर (for सुर°) — $^{c}$) K3 सत्वत, Dc यच्च ते K1 B1 M1 कीर्तयिष्यामि — $^{d}$) T G तत् (for मे)

**16** $^{a}$) Ś1 K1 2 °लोक हि, Dn1 n3 D5 लोकेपि, Dn2 T2 G °लोकेषु (G1 °लोकास्त्व) K4 भगवान्मानुषे लोके (m as in text)

**17** $^{b}$) T2 G2–4 कृतार्थ° (for °स्त्र) — $^{d}$) Ś1 K D2 दिवालयै°, D1 सुरालयै°, B दिवौकसा

**18** $^{a}$) B Dc D4 6 तत् (B4 च), Dn D5 [अ]पि (for तु) T2 G2–4 तसम् (for तु त्वम्) G1 तपसा त्व च तीर्थेन — $^{b}$) Ś1 K D (except D4 6) M1 योजय भ्रातृभि° सह

**19** T1 om 19–20 — After 19$^{ab}$, K1 2 B Dc Dn D4 6 ins

468* सत्यसंध महोत्साह महावीर्य महाबलम् ।
महाहवेष्वप्रतिम महायुद्धविशारदम् ।
महाधनुर्धर वीर महास्त्र वरवर्णिनम् ।
महेश्वरसुतप्रख्यमादित्यतनय प्रभुम् ।
तथा ज्ञानगतिं स्कन्ध सहजोल्बणपौरुषम् ।

[(L 1) B1 3 Dc महात्मान (for महो°) — (L 3) Dc कृतास्त्र (for महास्त्र), and °वर्मिण (for °वर्णिनम्) — (L 5) Dc क्षेन (for स्कन्ध) K1 2 Dn तथार्जुनमतिस्कध (K1 2 °द); Cnp तथा ज्ञान° etc (as above) B1 3 Dc सहसो(Dc जो)ज्वलकुडल, B4 सहस्रनयनोपम (for the posterior half) ]

— $^{c}$) Ś1 K1 3 4 D1 2 च (for स)

**20** T1 om 20 (cf v l 19) — $^{a}$) Ś1 K Dn D1–3 5 कर्णान् (for तस्मान्) — $^{b}$) K3 अनिंदित (for अरिंदम) M1 मनसि स्थितमच्युत — $^{c}$) B D4 6 M2 °ष्येह (for °ष्यामि) — $^{d}$) N G1 साचिनि (for °साचाव्) Ś1 K4 B Dc D2–4 6 [अ]तो गते, K1–3 Dn D1 5 [उ]पागते, T2 G3 [इ]तो गते (for [इ]हागते)

**21** Ś1 K1 2 om 21 — $^{a}$) T2 G2–4 दुःख (for वीर) — $^{c}$) K3 4 B Dc Dn2 D1 3–6 महर्षिर्लोमशस्ते वै (K3 4 D1 3 5 शास्त्रस्ते), Dn1 n3 D2 स महर्षिर्लोमशस्ते

**22** $^{c}$) Ś1 K D (except D3 5 6) G1 4 महार्षिर् (for महर्षिर्) Ś1 K2 Dc Dn2 एव (for एष) B (B4 marg ) Dn3 D4 6 लोमशो ब्रूयात् (for एष यद्ब्रूयात्) B4 वै, G2 4 तद् (for यद्) K3 4 Dc Dn1 n3 D2 3 5 ब्रूयात्वा (Dn1 n3 D3 5 त्ते) (for यद्ब्रूयात्) — $^{d}$) B3 तच्छ्रुत्वेयम्, B4 तज्जज्ञेयम्, T1 तच्छ्रेयोय ; G4 तच्छ्रद्धव्य (for तच्छ्रद्धेयम्) K3 T G न चान्यथा (for अनन्यथा) Dn1 n2 D3 5 न तच्छ्रद्धेयमन्यथा

Colophon om in K3 — *Major parvan* Ś1 K1 2 Dn1 n3 T G2–4 M1 आरण्य — *Sub parvan* D3 T2 G1 3 तीर्थयात्रा K4 B2 4 Dn1 n3 D1 2 5 (all om sub parvan name) mention only लोमशतीर्थयात्रा — *Adhy name* Ś1 K1 2 लोमशवाक्य, B4 इन्द्रवाक्य ; T1 लोमशागमन ; T2 G3 लोमशाभिगमन ; G1 लोमशागमन — *Adhy no* (figures, words or both) Dn1 n3 91,

# ९०

लोमश उवाच ।
धनंजयेन चाप्युक्तं यत्तच्छृणु युधिष्ठिर ।
युधिष्ठिरं भ्रातरं मे योजयेर्धर्म्यया श्रिया ॥ १
त्वं हि धर्मान्परान्वेत्थ तपांसि च तपोधन ।
श्रीमतां चापि जानासि राज्ञां धर्मं सनातनम् ॥ २
स भवान्यत्परं वेद पावनं पुरुषान्प्रति ।
तेन संयोजयेथास्त्वं तीर्थपुण्येन पाण्डवम् ॥ ३
यथा तीर्थानि गच्छेत गाश्च दद्यात्स पार्थिवः ।
तथा सर्वात्मना कार्यमिति मां विजयोऽब्रवीत् ॥ ४
भवता चानुगुप्तोऽसौ चरेत्तीर्थानि सर्वशः ।
रक्षोभ्यो रक्षितव्यश्च दुर्गेषु विषमेषु च ॥ ५
दधीच इव देवेन्द्रं यथा चाप्यङ्गिरा रविम् ।
तथा रक्षस्व कौन्तेयं राक्षसेभ्यो द्विजोत्तम ॥ ६
यातुधाना हि बहवो राक्षसाः पर्वतोपमाः ।
त्वयाभिगुप्तान्कौन्तेयान्नातिवर्तेयुरन्तिकात् ॥ ७
सोऽहमिन्द्रस्य वचनान्नियोगादर्जुनस्य च ।
रक्षमाणो भयेभ्यस्त्वां चरिष्यामि त्वया सह ॥ ८
द्विस्तीर्थानि मया पूर्वं दृष्टानि कुरुनन्दन ।
इदं तृतीयं द्रक्ष्यामि तान्येव भवता सह ॥ ९
इयं राजर्षिभिर्याता पुण्यकृद्भिर्युधिष्ठिर ।
मन्वादिभिर्महाराज तीर्थयात्रा भयापहा ॥ १०
नानृजुर्नाकृतात्मा च नावैद्यो न च पापकृत् ।
स्नाति तीर्थेषु कौरव्य न च वक्रमतिर्नरः ॥ ११
त्वं तु धर्ममतिर्नित्यं धर्मज्ञः सत्यसंगरः ।
विमुक्तः सर्वपापेभ्यो भूय एव भविष्यसि ॥ १२
यथा भगीरथो राजा राजानश्च गयादयः ।

---

Dn3 M2 92, D1 95, T G M1 90 — *Śloka no* Dn 25, D1 23

## 90

1 a) K1 D1 5 [अ]स्मि, K3 [अ]स्ति (for [अ]पि) Ś1 K D1 3 5 [उ]क्त' (for [उ]क्त) — b) Ś1 K1, 2 B3 D1 2 M3 तच्छृणुष्व (for यत्तच्छृणु) T1 M1 नराधिप (for युधि°) D5 फल तीर्थेषु भारत — c) T2 G भ्रातर मेनुजै सार्धं — d) Ś1 K1 3 4 D6 G2 M3 योजयेद् (for °येर्) Ś1 K2 वधया (for धर्म्यया) K1 B3 Dc Dn3 D4 6 T G3 M गिरा, B1 2 4 G1 2 4 धिया (for श्रिया) D1 2 योजयेथास्तपश्रिया

2 a) K1 S (except M1) धर्मं पर B Dc D4 6 वेत्सि (for वेत्थ) — c) T2 G2–4 चाभि, M1 च वि (for चापि) — d) Dn D5 M1 धर्मं राज्ञा (by transp), D3 धर्मं राज्य

3 a) B D (except D1–3) परम (for यत्पर) — b) K3 Dn D3 5 T2 G2–4 पुरुष (for °षान्) — d) K3 4 B D (except D1 3) पाडवान्, M1 पार्थिव

4 a) Ś1 तीर्थेन (for तीर्थानि) — b) T2 G2–4 गत्वा (for गाश्च) — c) T2 G2–4 सर्वं त्वया (for सर्वा°) — d) Ś1 K Dn D1–3 5 अर्जुनो (K3 विजने) (for विजयो)

6 c) K3 4 B Dn D4–6 G1 M कौंतेयान् (for °य) D1 तथा रक्ष्यश्च कौंतेयो

7 a) T1 G3 4 च (for हि) — c) Ś1 [अ]भियुक्त, K3 Dn D3 5 [अ]भिगुप्त; Dc1 हि गुप्तान्, Dc2 गुप्तान्हि (for [अ]भिगुप्तान्) Ś1 K2 Dn D2 3 5 कौंतेय — d) K3 B3 Dn2 T1 M1 नाभिवर्तेयुर्; Dc नाभिवर्धेयुर्, Dn1 n3 D5 न विवर्तेयुर् Ś1 Dn D3 5 अतिक

8 After 8ab, D1 2 ins
469* आगतस्त्वा महाबाहो कुरु पुण्य युधिष्ठिर ।

9 a) Ś1 K2 द्विस्तीर्णानि, K1 द्विवारथा (?), M3 विस्तीर्णानि K1 महाबाहो, K3 (corrupt) मयाबाहो — b) M3 तीर्थानि (for दृष्टानि) — c) Ś1 K1 2 4 D3 इम (for इद) K3 4m यास्यामि, K4 B3 Dc वक्ष्यामि (for द्रक्ष्यामि)

10 d) T G M1 शुभावहा (G4 युधिष्ठिर) (for भया°)

11 a) T2 G2–4 नानृती (for नानृजुर्) M3 नानृतात्मा च — b) K1 तृतीय, B Dn D1 2 4 6 नाविद्यो

12 T1 om (hapl ) 12ab — a) S (T1 om ) °रतिर् (for °मतिर्) — c) B1 2 4 Dn D4 6 M3 सर्वसंगेभ्यो

13 d) T2 G2–4 पार्थिव (for पाण्डव)

यथा ययातिः कौन्तेय तथा त्वमपि पाण्डव ॥ १३

युधिष्ठिर उवाच ।

न हर्षात्संप्रपश्यामि वाक्यस्यास्योत्तरं क्वचित् ।
स्मरेद्धि देवराजो यं किं नामाभ्यधिकं ततः ॥ १४
भवता संगमो यस्य भ्राता यस्य धनंजयः ।
वासवः स्मरते यस्य को नामाभ्यधिकस्ततः ॥ १५
यच्च मां भगवानाह तीर्थानां दर्शनं प्रति ।
धौम्यस्य वचनादेषा बुद्धिः पूर्वं कृतैव मे ॥ १६
तद्यदा मन्यसे ब्रह्मन्गमनं तीर्थदर्शने ।
तदैव गन्तास्मि दृढमेष मे निश्चयः परः ॥ १७

वैशंपायन उवाच ।

गमने कृतबुद्धिं तं पाण्डवं लोमशोऽब्रवीत् ।
लघुर्भव महाराज लघुः स्वैरं गमिष्यसि ॥ १८

युधिष्ठिर उवाच ।

भिक्षाभुजो निवर्तन्तां ब्राह्मणा यतयश्च ये ।
ये चाप्यनुगताः पौरा राजभक्तिपुरस्कृताः ॥ १९
धृतराष्ट्रं महाराजमभिगच्छन्तु चैव ते ।
स दास्यति यथाकालमुचिता यस्य या भृतिः ॥ २०
स चेद्यथोचितां वृत्तिं न दद्यान्मनुजेश्वरः ।
अस्मत्प्रियहितार्थाय पाञ्चाल्यो वः प्रदास्यति ॥ २१

वैशंपायन उवाच ।

ततो भूयिष्ठशः पौरा गुरुभारसमाहिताः ।
विप्राश्च यतयो युक्ता जग्मुर्नागपुरं प्रति ॥ २२
तान्सर्वान्धर्मराजस्य प्रेम्णा राजाम्बिकासुतः ।
प्रतिजग्राह विधिवद्धनैश्च समतर्पयत् ॥ २३
ततः कुन्तीसुतो राजा लघुभिर्ब्राह्मणैः सह ।
लोमशेन च सुप्रीतस्त्रिरात्रं काम्यकेऽवसत् ॥ २४

इति श्रीमहाभारते आरण्यकपर्वणि नवतितमोऽध्याय ॥ ९० ॥

---

**14** $D_5$ om $14^{a}$–$15^{b}$ — $^{b}$) T G मुने (for क्वचित्) — $^{c}$) Ś$_1$ K $D_{1\ 2}$ मा ; $D_5$ $G_4$ $M_1$ यत् (for य) — $^{d}$) B $D_c$ $D_n$ $D_{4\ 6}$ $T_2$ (after corr ) को नामाभ्यधिकस्तत ( = $15^{d}$)

**15** $D_c$ $D_5$ om $15^{ab}$ (for $D_5$ cf v l 14), Ś$_1$ om (hapl ) 15 — $^{b}$) $K_{2\ 3}$ $B_{1\ 4}$ $D_n$ $D_{4-6}$ $T_1$ M चैव (for यस्य) — $^{d}$) $K_{2\ 4}$ $T_1$ $G_{1\ 4}$ $M_2$ किं ($K_2$ $G_1$ $M_2$ को) नामाभ्यधिक तत ( = $14^{d}$)

**16** $^{a}$) $T_2$ $G_{2-4}$ तद्, $G_1$ $M_2$ मा (for मां), — $^{b}$) T $G_{2-4}$ गमन (for दर्शन) — $^{d}$) $D_{1\ 2}$ तथैव (for कृतैव) — After 16 $B_3$ ins 470*

**17** $B_3$ om $17^{a}$–$19^{b}$ — $^{a}$) Ś$_1$ $D_c$ यद्; $K_3$ स (for तद्) Ś$_1$ $T_{1\ 2}$ (before corr ) $G_{1\ 2\ 4}$ यथा (for यदा) T G द्रष्टु ($G_1$ दृष्ट्वा) (for ब्रह्मन्) — $^{cd}$) $T_{1\ 2}$ (before corr ) $G_{2\ 4}$ तथैव (for तदैव) $B_{2-4}$ $D_c$ $D_n$ $D_{4\ 6}$ तीर्थान्येष, $T_2$ $G_{2-4}$ परमेष (for दृढ )

**18** $B_3$ om 18 with the ref (cf v.l 17), $T_2$ $G_{3\ 4}$ om the ref — $^{a}$) B ($B_3$ om ) $D_c$ $D_n$ $D_{4\ 6}$ [illegible] (for त)

**19** $B_3$ om $19^{ab}$ (cf v l 17) — $^{b}$) $K_3$ तापसाश्च ये; $K_4$ ये तपस्विन (for यतयश्च ये) $D_{1\ 2}$ तथा (for च ये) — $K_1$ B $D_c$ $D_n$ $D_{4\ 6}$ ins after $19^{ab}$ ($B_3$, which om $17^{a}$–$19^{b}$, ins after 16)

470* क्षुत्तृष्णाध्वश्रमायासशीतार्तिमसहिष्णव ।
ते सर्वे विनिवर्तन्ता ये च मिष्टभुजो द्विजा ।
पक्वान्नलेह्यपानाना मांसाना च विकल्पका ।
तेऽपि सर्वे निवर्तन्ता ये च सूदानुयायिन ।
मया यथोचिता जीव्यै संविभक्ताश्च वृत्तिभि ।

[(L 2) $D_c$ °वर्तंतु (for °वर्तन्तां) — (L 3) $K_1$ $D_{4\ 6}$ लेह्यमानाना, B पानलेह्याना, $D_c$ °पानभोज्याना $K_1$ विकल्पन, $D_c$ विकत्थना — (L 4) $B_{1\ 3}$ सूदाभिरनुयायिन, $D_c$ सूदाभिरनुजीविन (for the posterior half) — (L 5) $B_3$ $D_c$ सदा (for मया) $B_3$ $D_6$ यथोचितैर् $B_3$ $D_c$ बीजै, $D_6$ द्रव्यै (for जीव्यै ) ]

— $^{c}$) Ś$_1$ $K_{1\ 2}$ $D_{5\ 6}$ [अ]न्ये (for [अ]पि) — $^{d}$) $K_4$ $D_n$ $D_{4\ 6}$ $G_2$ पुरःसरा, $T_1$ $G_{1\ 4}$ ये च भक्तिपुर

**20** $^{b}$) $S_1$ $K_{1\ 2\ 4}$ $D_{1\ 2}$ तेभि (for अभि ) Ś$_1$ $K_{3\ 4}$ चैव ह; $K_{1\ 3}$ $D_{1\ 2}$ चैव हि; B $D_c$ $D_n$ $D_{4\ 6}$ ते च ($D_c$ त्र) वै (for चैव ते) — $^{c}$) $T_1$ $G_1$ ददाति (for दास्यति )

**21** $^{b}$) $M_1$ पृथिवीपतिः (for मनुजे ) — $^{d}$) [illegible] पाचालो

**22** $B_3$ $D_{1\ 2}$ $G_4$ om the ref — $^{b}$) $K_1$ B D (except $D_{1-5\ 6}$) प्रपीडिता, T G गुरौ ($G_4$ °रु) भारे समाहिते ($T_2$ $G_3$ °ता) — $^{c}$) $B_3$ मुनयो (for यतयो) N (except Ś$_1$) $M_1$ मुख्या; $G_4$ विप्रा (for युक्ता)

# ९१

वैशंपायन उवाच ।
ततः प्रयान्तं कौन्तेयं ब्राह्मणा वनवासिनः ।
अभिगम्य तदा राजन्निदं वचनमब्रुवन् ॥ १
राजंस्तीर्थानि गन्तासि पुण्यानि भ्रातृभिः सह ।
देवर्षिणा च सहितो लोमशेन महात्मना ॥ २
अस्मानपि महाराज नेतुमर्हसि पाण्डव ।
अस्माभिर्हि न शक्यानि त्वदृते तानि कौरव ॥ ३
श्वापदैरुपसृष्टानि दुर्गाणि विषमाणि च ।
अगम्यानि नरैरल्पैस्तीर्थानि मनुजेश्वर ॥ ४
भवन्तो भ्रातरः शूरा धनुर्धरवराः सदा ।
भवद्भिः पालिताः शूरैर्गच्छेम वयमप्युत ॥ ५
भवत्प्रसादाद्धि वयं प्राप्नुयाम फलं शुभम् ।
तीर्थानां पृथिवीपाल व्रतानां च विशां पते ॥ ६
तव वीर्यपरित्राताः शुद्धास्तीर्थपरिप्लुताः ।
भवेम धूतपाप्मानस्तीर्थसंदर्शनान्नृप ॥ ७
भवानपि नरेन्द्रस्य कार्तवीर्यस्य भारत ।
अष्टकस्य च राजर्षेर्लोमपादस्य चैव ह ॥ ८
भरतस्य च वीरस्य सार्वभौमस्य पार्थिव ।
ध्रुवं प्राप्स्यसि दुष्प्रापाँल्लोकांस्तीर्थपरिप्लुतः ॥ ९
प्रभासादीनि तीर्थानि महेन्द्रादींश्च पर्वतान् ।
गङ्गाद्याः सरितश्चैव प्लक्षादींश्च वनस्पतीन् ।
त्वया सह महीपाल द्रष्टुमिच्छामहे वयम् ॥ १०
यदि ते ब्राह्मणेष्वस्ति काचित्प्रीतिर्जनाधिप ।
कुरु क्षिप्रं वचोऽस्माकं ततः श्रेयोऽभिपत्स्यसे ॥ ११

---

24 $^{b}$) Ś1 K1 2 भ्रातृभि (for ब्राह्मणै°) B8 ब्रूत° (for सह)

Colophon — *Major parvan* Ś1 K1 2 Dn2 T G2–4 M1 आरण्य — *Sub-parvan* B1 Dn1 D4 6 T G1 3 तीर्थयात्रा K3 4 B2–4 Dc Dn3 D1–3 5 (all om sub-parvan name) mention only लोमशतीर्थयात्रा — *Adhy name* T2 G3 अर्जुनकथन — *Adhy no* (figures, words or both) Dn1 n3 92, Dn3 M2 93, D1 96, T G M1 91 — *Śloka no* Dn 27, D1 24

## 91

1 $^{a}$) K2–4 B1 Dc Dn1 D2 3 5 T1 प्रयात — $^{c}$) K4 Dc T1 महाराज (for तदा राजन्)

2 $^{c}$) B Dn D4 6 ऋषिणा चैव स°

3 $^{b}$) Ś1 D1 2 इच्छसि (for अर्हसि) — $^{c}$) G1 M transp हि and न — Dc om (hapl) 3$^{d}$–4$^{a}$ — $^{d}$) S (except M1) कुरुनदन (for तानि कौरव)

4 Dn3 om 4, Dc om 4$^{a}$ (of v l 3) — $^{a}$) D1 2 T2 G2–4 °जुष्टानि, T1 G1 °सृष्टानि; M2 °विष्टानि — $^{c}$) K3 4 B2 3 4m D1 3 5 अन्यैस (for अल्पैस) — $^{d}$) B3 भरतर्षभ (for मनुजे°)

5 $^{a}$) K4 Dn2 n3 D3 T2 G2 3 भवतो (for °न्तो) G4 भ्रातरो भवत° शूरा — $^{b}$) M2 परा° (for सदा) — $^{d}$) Dn D6 गच्छाम, D3–5 गच्छामो (for गच्छेम)

6 $^{b}$) K4 B1–3 D प्राप्नुयाम° Ś1 K1 2 D3 4 फल सुख, K4 B Dc Dn D1 2 4 6 M2 सुख (B2 M3 शुभ) फल — D2 om 6$^{d}$–7$^{c}$

7 D2 om 7$^{abc}$ (of v l 6) — $^{b}$) D1 शुभ, T1 G1 शुभास (for शुद्धास) — $^{d}$) T2 G2–4 °सस्पर्श° (for °सदर्श°) D1 2 पावन तीर्थदर्शन

8 $^{b}$) Ś1 K B3 D1–3 5 धीमत° (for भारत) — $^{c}$) Ś1 K1 2 4 D1 3 तु (for च) — $^{d}$) B2 D1 2 5 T1 G1 चैव हि; T2 G2–4 चानघ

9 $^{a}$) Dc दिलीपस्य (for च वीरस्य) — $^{b}$) K4 भारत, B4 धीमत°, S (except M2) पाडव (for पार्थिव) — $^{c}$) B1–3 Dc1 Dn1 n3 D3 4 6 T2 G3 M2 प्राप्स्यति, D2 यास्यसि

10 $^{a}$) Dc पुण्यानि (for तीर्थानि) — $^{e}$) M महाराज (for मही°) — After 10, S ins

471* भवद्भि° पालिता° शूरैस्तीर्थान्यायतनानि च ।
[Prior half = 5$^{c}$ ]

11 $^{b}$) T1 प्रीतिरस्ति (for काचित्प्रीतिर्) Ś1 K1 2 B2 Dc D3 5 T G3 नरा° (for जना°) — $^{d}$) T G तत्र, M वच (for तत°)

तीर्थानि हि महाबाहो तपोविघ्नकरैः सदा ।
अनुकीर्णानि रक्षोभिस्तेभ्यो नस्त्रातुमर्हसि ॥ १२
तीर्थान्युक्तानि धौम्येन नारदेन च धीमता ।
यान्युवाच च देवर्षिर्लोमशः सुमहातपाः ॥ १३
विधिवत्तानि सर्वाणि पर्यटस्व नराधिप ।
धूतपाप्मा सहास्माभिर्लोमशेन च पालितः ॥ १४
स तथा पूज्यमानस्तैर्हर्षादश्रुपरिप्लुतः ।
भीमसेनादिभिर्वीरैर्भ्रातृभिः परिवारितः ।
बाढमित्यब्रवीत्सर्वांस्तानृषीन्पाण्डवर्षभः ॥ १५
लोमशं समनुज्ञाप्य धौम्यं चैव पुरोहितम् ।
ततः स पाण्डवश्रेष्ठो भ्रातृभिः सहितो वशी ।
द्रौपद्या चानवद्याङ्ग्या गमनाय मनो दधे ॥ १६
अथ व्यासो महाभागस्तथा नारदपर्वतौ ।
काम्यके पाण्डवं द्रष्टुं समाजग्मुर्मनीषिणः ॥ १७
तेषां युधिष्ठिरो राजा पूजां चक्रे यथाविधि ।
सत्कृतास्ते महाभागा युधिष्ठिरमथाब्रुवन् ॥ १८
युधिष्ठिर यमौ भीम मनसा कुरुतार्जवम् ।
मनसा कृतशौचा वै शुद्धास्तीर्थानि गच्छत ॥ १९
शरीरनियमं ह्याहुर्ब्राह्मणा मानुषं व्रतम् ।
मनोविशुद्धां बुद्धिं च दैवमाहुर्व्रतं द्विजाः ॥ २०
मनो ह्यदुष्टं शूराणां पर्याप्तं वै नराधिप ।
मैत्रीं बुद्धिं समास्थाय शुद्धास्तीर्थानि गच्छत ॥ २१
ते यूयं मानसैः शुद्धाः शरीरनियमव्रतैः ।
दैवं व्रतं समास्थाय यथोक्तं फलमाप्स्यथ ॥ २२
ते तथेति प्रतिज्ञाय कृष्णया सह पाण्डवाः ।
कृतस्वस्त्ययनाः सर्वे मुनिभिर्दिव्यमानुषैः ॥ २३
लोमशस्योपसंगृह्य पादौ द्वैपायनस्य च ।
नारदस्य च राजेन्द्र देवर्षेः पर्वतस्य च ॥ २४
धौम्येन सहिता वीरास्तथान्यैर्वनवासिभिः ।
मार्गशीर्ष्यामतीतायां पुष्येण प्रययुस्ततः ॥ २५

---

**12** $^{a}$) M तु (for हि) — $^{b}$) Ś1 K1 G1 सह (for सदा) — $^{c}$) Ś1 K1 2 अव (for अनु)

**13** $^{a}$) Ś1 K1 2 तानि युक्तानि, K4 तथास्तु°, D1 तथाप्यु°; D3 तथेस्तु (for तीर्थान्यु) — After $13^{ab}$, B3 ins

472* नारदस्य च राजेन्द्र देवर्षेः पर्वतस्य च ।
[Cf $17^{ab}$]

— $^{c}$) K3 यान्युवाचाथ, D1–3 5 यानि वक्ता च T1 यान्यान्युवाच देवर्षिर्

**14** B4 transp $14^{ab}$ and $14^{cd}$ — $^{b}$) Ś1 K D1–3 5 महीपते (for नरा°) — After $14^{ab}$, K1 4 D1–3 ins

473* ऋषिकुल्याश्च कार्त्स्न्येन लोकयस्व युधिष्ठिर ।

— $^{d}$) K2 B D (except D1–3 5) T1 G1 M [अ]भि (for च)

**15** $^{a}$) K3 सदा; B D (except D1–3 5) राजा (for तथा) — D4 om (hapl) $15^{d}$–$16^{a}$ — $^{e}$) Ś1 K1 2 4 D1 2 5 6 भरतर्षभ (D5 6 °भ°) (for पाण्ड°)

**16** D4 om $16^{abc}$ (cf v l 15) — $^{a}$) K3 T G3 4 °प्राप्य (for °ज्ञाप्य)

**17** $^{b}$) B3–4 Dn D4 पर्वतनारदौ (by transp) — $^{c}$) Ś1 K Dc D1–3 5 M1 पाण्डवान् K3 प्रष्टुं; T1 दृष्ट्वा (for द्रष्टुं)

**19** Before 19, B4 Dc Dn D4 6 ins ऋषय ऊचुः — K1 om $19^{ab}$ — $^{b}$) Ś1 सेन सु, K4 D1 5 T1 M1 मन सु, D2 मनस्य, D3 मानस, T2 G2–4 M2 मनस° (for मनसा) — $^{d}$) = $21^{d}$ N M1 यास्यथ (Ś1 Dc2 Dn1 °त), M2 गच्छथ (for गच्छत)

**20** G1 om (hapl) 20–21 — $^{a}$) K1 2 शारीर नियम Ś1 K1 2 B3 Dn प्राहुर्, D5 स्वाहुर् (for ह्याहुर्) — K3 om $20^{b}$–$21^{d}$, and (erroneously) repeats instead 3 90 $9^{d}$–$19^{b}$ — $^{b}$) Ś1 B1 3 4 T2 (after corr) G3 मानस (for मानुष) B3 महत् (for व्रतम्) B3 D4 6 ब्राह्मणानां च साम्प्रतं, D5 °णानां महद्व्रतं — $^{c}$) K (K3 om) B2 D1–3 M2 मनोविशुद्धिं, Dc °शुद्धया, T1 °शुद्ध — $^{d}$) D3 5 बुधा (for द्विजा°)

**21** K3 G1 om 21 (cf v l 20) — $^{a}$) B1 3 4 Dn D4 6 शौचाय (Dn2 °र्थं) (for शूराणां) — Ś1 K1 2 om $21^{cd}$ — $^{d}$) = $19^{d}$ K4 M2 गच्छथ, B Dn D4 6 व्रजथ (B3 यास्यथ) (for गच्छत)

**22** $^{a}$) Ś1 मनस, K1 2 मनुषै, K4 D2 3 M1 मानुषै° (for मानसै°) K3 ये चाप्यनुगताः पौराः

**23** $^{d}$) T2 G2–4 देव (for दिव्य°)

**25** $^{b}$) B Dn D4 6 तथा तैर्

**26** $^{a}$) B3 काञ्चनानि, G1 कार्मुकाणि (for कठि°) — $^{c}$) T2 G2–4 M2 अभेद्य (for °द्ये°) — $^{d}$) Ś1 B4 Dc D3 5

कठिनानि समादाय चीराजिनजटाधराः ।
अभेद्यैः कवचैर्युक्तास्तीर्थान्यन्वचरंस्तदा ॥ २६
इन्द्रसेनादिभिर्भृत्यै रथैः परिचतुर्दशैः ।
महानसव्यापृतैश्च तथान्यैः परिचारकैः ॥ २७
सायुधा बद्धनिस्त्रिंशास्तूणवन्तः समार्गणाः ।
प्राङ्मुखाः प्रययुर्वीराः पाण्डवा जनमेजय ॥ २८

इति श्रीमहाभारते आरण्यकपर्वणि एकनवतितमोऽध्यायः ॥ ९१ ॥

# ९२

युधिष्ठिर उवाच ।
न वै निर्गुणमात्मानं मन्ये देवर्षिसत्तम ।
तथास्मि दुःखसंतप्तो यथा नान्यो महीपतिः ॥ १
परांश्च निर्गुणान्मन्ये न च धर्मरतानपि ।
ते च लोमश लोकेऽस्मिन्नृध्यन्ते केन हेतुना ॥ २
लोमश उवाच ।
नात्र दुःखं त्वया राजन्कार्यं पार्थ कथंचन ।
यदधर्मेण वर्धेरन्नधर्मरुचयो जनाः ॥ ३
वर्धत्यधर्मेण नरस्ततो भद्राणि पश्यति ।
ततः सपत्नाञ्जयति समूलस्तु विनश्यति ॥ ४
मया हि दृष्टा दैतेया दानवाश्च महीपते ।
वर्धमाना ह्यधर्मेण क्षयं चोपगताः पुनः ॥ ५
पुरा देवयुगे चैव दृष्टं सर्वं मया विभो ।
अरोचयन्सुरा धर्मं धर्मं तत्यजिरेऽसुराः ॥ ६
तीर्थानि देवा विविशुर्नाविशन्भारतासुराः ।
तानधर्मकृतो दर्पः पूर्वमेव समाविशत् ॥ ७
दर्पान्मानः समभवन्मानात्क्रोधो व्यजायत ।
क्रोधादह्रीस्ततोऽलज्जा वृत्तं तेषां ततोऽनशत् ॥ ८

---

अनुचरन्; K3 उपच°, T2 G2-4 अभ्यच° Ś1 K1 2 4 Dc तथा, B2 Dn D4 6 तत° (for तदा)

**28** b) T G2 3 तूणावत° T2 G3 समार्गणै°

Colophon — *Major parvan* Ś1 K1 2 Dn2 T G2-4 M1 आरण्य — *Sub parvan* B1-3 Dc1 Dn1 n2 D4 6 T1 तीर्थयात्रा (B2 cont लोमशतीर्थयात्रा), K3 4 B4 Dc2 Dn3 D1-3 5 T2 G1 3 (all om sub parvan name) mention only लोमशतीर्थयात्रा — *Adhy name* T2 G3 पाण्डवप्रस्थान, G1 पाण्डवप्रस्थापन — *Adhy no* (figures, words or both) Dn1 (*sup lin*) n2 93, Dn3 M2 94, D1 97, T G M1 92 — *Śloka no* Dn 29, D1 30

## 92

**2** b) T1 G1 M तानधर्म- (M2 °र्मे), T3 G2-4 सधाधर्म- (for न च धर्म-) Ś1 K3 B2 Dn D2-4 6 -गतान्; K4 परान् (for -रतान्) — d Ś1 K2 तप्यते; K1 स्पृश्य°, K3 नद°; K4 दृश्य°, B1 4 Dc D5 तृप्य, D1 2 वर्ध°, D3 दीप्य°, T1 वुध्य° (for ऋध्यन्ते)

**3** ab) K3 G2 4 transp राजन् and कार्यं Dc कर्तव्यं तत् (for कार्यं पार्थ) K3 4 D1-3 कदा° (for कथ°) — c) Dn D4 6 वर्धेयुर्, T2 G2-4 सिध्येरन् — d) Ś1 K D1-3 5 तेधर्मरु°, B1 अधर्मरतयो, B2 °मतयो Dc D3 5 T2 G3 4 नरा

**4** a) K4 अधर्मेणैव ते तावत्, Dc D3 5 अधर्मेणैधते राजन् — d) S1 K1-3 D5 समूल S1 K D1 2 5 च (for तु) — After 4, S (except M2) ins

474* यत्र धर्मेण वर्धन्ते राजानो राजसत्तम ।
सर्वान्सपत्नान्बाधन्ते राज्य चैषा विवर्धते ।

**6** a) Ś1 K D1 2 M2 चैतत्, G4 सर्वं (for चैव) — b) S1 K B1 3 D1 2 सर्वं दृष्ट (by transp) Dc चैव, G4 चैव (for सर्वं) K4 Dn2 D1 2 प्रभो (for विभो) — c) T2 G3 धर्मान् (for धर्मं) — d) S1 K1 2 अधर्मं भेजिरे; G1 धर्मं त भेजिरे (for धर्मं तत्यजिरे)

**7** Ś1 om (hapl) 7ab — a) D5 देवास्तीर्थानि (by transp) — b) G2 पार्थिवा° (for भारता°) — d) K3 सर्वान् (for पूर्वम्)

**8** K3 om 8 — a) K4 transp मान° and समभवत् — b) B3 [S]स्य जायते, Dn1 n2 G4 [S]भ्यजायत; D3 [S]भ्यजायते, T1 ह्यजायत, T2 G2 3 [S]भिजायते, G1 [S]भ्य-

तानलज्जान्गतह्रीकान्हीनवृत्तान्वृथाव्रतान् ।
क्षमा लक्ष्मीश्च धर्मश्च नचिरात्प्रजहुस्ततः ।
लक्ष्मीस्तु देवानगमदलक्ष्मीरसुरान्नृप ॥ ९

तानलक्ष्मीसमाविष्टान्दर्पोपहतचेतसः ।
दैतेयान्दानवांश्चैव कलिरप्याविशत्ततः ॥ १०

तानलक्ष्मीसमाविष्टान्दानवान्कलिना तथा ।
दर्पाभिभूतान्कौन्तेय क्रियाहीनानचेतसः ॥ ११

मानाभिभूतानचिराद्विनाशः प्रत्यपद्यत ।
निर्यशस्यास्ततो दैत्याः कृत्स्नशो विलयं गताः ॥ १२

देवास्तु सागरांश्चैव सरितश्च सरांसि च ।
अभ्यगच्छन्धर्मशीलाः पुण्यान्यायतनानि च ॥ १३

तपोभिः क्रतुभिर्दानैराशीर्वादैश्च पाण्डव ।
प्रजहुः सर्वपापानि श्रेयश्च प्रतिपेदिरे ॥ १४

एवं हि दानवन्तश्च क्रियावन्तश्च सर्वशः ।
तीर्थान्यगच्छन्विबुधास्तेनापुर्भूतिमुत्तमाम् ॥ १५

तथा त्वमपि राजेन्द्र स्नात्वा तीर्थेषु सानुजः ।
पुनर्वेत्स्यसि तां लक्ष्मीमेष पन्थाः सनातनः ॥ १६

यथैव हि नृगो राजा शिबिरौशीनरो यथा ।
भगीरथो वसुमना गयः पूरुः पुरूरवाः ॥ १७

चरमाणास्तपो नित्यं स्पर्शनादम्भसश्च ते ।
तीर्थाभिगमनात्पूता दर्शनाच्च महात्मनाम् ॥ १८

अलभन्त यशः पुण्यं धनानि च विशां पते ।
तथा त्वमपि राजेन्द्र लब्धासि विपुलां श्रियम् ॥ १९

यथा चेक्ष्वाकुरचरत्सपुत्रजनबान्धवः ।
मुचुकुन्दोऽथ मान्धाता मरुत्तश्च महीपतिः ॥ २०

कीर्तिं पुण्यामविन्दन्त यथा देवास्तपोबलात् ।

---

जायत — $^c$) D$_{1\,2}$ मोहस्, D$_5$ नश्यत्; T$_1$ G$_3$ अश्रीस; G$_1$ अभीस् (for अह्रीस्) Ś$_1$ राज्ञा, K$_{1\,2}$ राजन् (for ऽलज्जा) K$_4$ D$_3$ क्रोधोऽभवात्तथा तेषा — $^d$) Ś$_1$ K (K$_3$ om) लज्जा वृत्त, D$_8$ प्रज्ञा वृत्त, M$_2$ वृत्तमेषा (for वृत्त तेषा)

**9** $^a$) K$_4$ D$_1$ G$_1$ विलज्जान्, T G$_{2-4}$ M$_2$ निर्लज्जान् (for अलज्जान्) K$_4$ Dc D$_3$ नष्टवृत्तान्, B Dn$_1$ n$_3$ अनह्रीकान्; D$_1$ T G$_{2-4}$ गतश्री, M$_2$ हृतश्री (for गतह्री) D$_8$ तान्नष्ट लज्जाविवृत्तान् — $^b$) K$_4$ D$_3$ वृथाचारान्, Dc पापाचारान्, D$_5$ वृथादानान् (for हीनवृत्तान्) Ś$_1$ K$_{1\,2}$ D$_{1\,2}$ वृथा मतीन्, K$_3$ तथामतीन्; B$_2$ गतव्रतान्, G$_1$ तथागतान्, G$_4$ वृथा स्थितान् (for वृथा) — $^c$) K$_{3\,4}$ D$_5$ सम (for क्षमा) D$_3$ सत्य (for लक्ष्मीश्च) K$_{1\,2}$ च दर्पश्च, D$_4$ स्वधर्मश्च — $^e$) K$_{3\,4}$ D$_{1-3\,5}$ च (for तु)

**11** Ś$_1$ K$_{1\,2\,4}$ om (hapl.) 11$^a$ (with 10$^{bcd}$), G$_4$ om 11$^{ab}$ — 11$^a$ = 10$^a$ — $^b$) Ś$_1$ K D$_{3\,5}$ भृश; B Dc Dn D$_{1\,2\,4-6}$ हतान् (B$_2$ सह), T$_1$ तदा (for तथा) — K$_3$ om 11$^{cd}$, Dn$_3$ D$_{3\,5}$ om (hapl) from कौन्तेय (in 11$^c$) up to भूतान् (in 12$^a$)

**12** K$_3$ reads 12$^{ab}$ after 10$^{ab}$ Dn$_3$ D$_{3\,5}$ om मानाभिभूतान् (cf v.l 11) — $^b$) Dn D$_{3\,4\,6}$ S (except M$_2$) सम (for प्रत्य°) — K$_3$ om 12$^{cd}$ — $^c$) Dn$_1$ S निर्यशस्कास् B$_1$ Dn D$_5$ तथा, D$_{4\,6}$ तदा (for ततो) — After 12, S ins

475* अधर्मरुचयो राजन्नलक्ष्म्या समधिष्ठिता ।

**13** $^a$) Dn$_1$ n$_3$ D$_{3\,5\,6}$ M$_2$ देवास्तु (for देवा°) K$_3$ D$_{1\,2}$ च (for तु) T G M$_1$ ततो देवा सागराश्च — $^c$) T$_2$ G$_{2-4}$ पुण्य° (for धर्म°)

**14** $^c$) K$_{3\,4}$ D$_{1\,2}$ M$_2$ प्राजहु S$_1$ K Dc D$_1$ M$_1$ सर्वदुःखानि (K$_3$ दुष्टानि)

**15** $^{ab}$) N M$_2$ आदान° (K$_3$ ते दान) (for हि दान°), and निरादाना° (for क्रियावन्त°) — $^d$) T$_1$ धृतिम्, G$_4$ धर्मम् (for भूतिम्) G$_4$ उत्तमम् (for उत्तमाम्)

**17** $^d$) G$_{3\,4}$ यथा (for गय) Ś$_1$ K$_{1\,2}$ गय पूरूरवा यथा

**18** $^a$) K$_4$ D$_{1-3}$ नित्या°, T G -युक्ता° (for नित्य)

**19** $^a$) T$_2$ G$_{2-4}$ तेलभत (for अलभन्त) — $^d$) Ś$_1$ K$_{1-3}$ B Dn D$_{2\,3\,6}$ लब्ध्वा सु (Ś$_1$ K$_{1\,2}$ च); D$_4$ लब्ध्वाशु, D$_5$ लप्स्यसे (for लब्धासि)

**20** $^a$) K$_4$ B Dc Dn D$_{4\,6}$ अभवत्; D$_5$ -कुरव° (for अचरत्)

**21** $^d$) K$_4$ T G लप्स्यसे; B Dn D$_{3-6}$ M$_2$ वेत्स्यसि (for से)

**22** $^{ab}$) K$_1$ G$_1$ धार्तराष्ट्र° Ś$_1$ K$_{1\,2}$ च (for तु) B Dn D$_{4\,6}$ G$_4$ [अ]धर्मेण (for दर्पेण) D$_{3\,5}$ transp दर्पेण and मोहेन K$_1$ G$_1$ वशीकृत° — $^c$) N नचिराद्धि (B Dc Dn D$_{4\,6}$ °द्धै) विनक्ष्यसि (D$_{3\,5}$ नशिष्यसि)

Colophon — *Major parvan* Ś$_1$ K$_{1\,2}$ Dn$_3$ T G$_{2-4}$

देवर्षयश्च कार्त्स्न्येन तथा त्वमपि वेत्स्यसे ॥ २१
धार्तराष्ट्रास्तु दर्पेण मोहेन च वशीकृताः ।
नचिराद्विनशिष्यन्ति दैत्या इव न संशयः ॥ २२

इति श्रीमहाभारते आरण्यकपर्वणि द्विनवतितमोऽध्यायः ॥ ९२ ॥

## ९३

वैशंपायन उवाच ।
ते तथा सहिता वीरा वसन्तस्तत्र तत्र ह ।
क्रमेण पृथिवीपाल नैमिषारण्यमागताः ॥ १
ततस्तीर्थेषु पुण्येषु गोमत्याः पाण्डवा नृप ।
कृताभिषेकाः प्रददुर्गाश्च वित्तं च भारत ॥ २
तत्र देवान्पितॄन्विप्रांस्तर्पयित्वा पुनः पुनः ।
कन्यातीर्थेऽश्वतीर्थे च गवां तीर्थे च कौरवाः ॥ ३
वालकोट्यां वृषप्रस्थे गिरावुष्य च पाण्डवाः ।
बाहुदायां महीपाल चक्रुः सर्वेऽभिषेचनम् ॥ ४
प्रयागे देवयजने देवानां पृथिवीपते ।
ऊषुराप्लुत्य गात्राणि तपश्चातस्थुरुत्तमम् ॥ ५
गङ्गायमुनयोश्चैव संगमे सत्यसंगराः ।
विपाप्मानो महात्मानो विप्रेभ्यः प्रददुर्वसु ॥ ६
तपस्विजनजुष्टां च ततो वेदीं प्रजापतेः ।
जग्मुः पाण्डुसुता राजन्ब्राह्मणैः सह भारत ॥ ७
तत्र ते न्यवसन्वीरास्तपश्चातस्थुरुत्तमम् ।
संतर्पयन्तः सततं वन्येन हविषा द्विजान् ॥ ८
ततो महीधरं जग्मुर्धर्मज्ञेनाभिसत्कृतम् ।
राजर्षिणा पुण्यकृता गयेनानुपमद्युते ॥ ९
सरो गयशिरो यत्र पुण्या चैव महानदी ।

---

$M_1$ आरण्य — *Sub parvan* $B_{1-3}$ $T_1$ तीर्थयात्रा; $K_{3\ 4}$ $B_4$ D $G_1$ (all om sub parvan name) mention only लोमशतीर्थयात्रा — *Adhy name* $Ś_1$ $K_{1\ 2}$ $B_4$ लोमशवाक्य — *Adhy no* (figures, words or both) $Dn_1$ (*sup lin*) 94, $Dn_3$ $M_2$ 95, $D_1$ 98, T G $M_1$ 93 — *Śloka no* Dn 22

### 93

**1** $^a$) $T_2$ $G_{2-4}$ तदा (for तथा) — $^b$) $B_1$ $T_1$ हि (for ह) — $^c$) $K_{1\ 2}$ $G_{1\ 2}$ °पाला — $^d$) S (except $T_1$ $G_4$) नैमिशा°

**3** $^a$) $D_{3\ 5}$ चैव (for विप्रान्) — $^c$) $B_3$ $D_6$ (with hiatus) °तीर्थे अश्वतीर्थे, $D_2$ °तीर्थे च श्वतीर्थे, $G_1$ °तीर्थे ये च भक्त्या; $G_4$ $M_1$ °तीर्थे च तीर्थे च — $^d$) $D_2$ स्नातास्तीर्थे, $D_5$ महातीर्थे (for गवा तीर्थे) $K_3$ च कौरव, Dn $D_{3\ 5\ 6}$ $M_2$ च भारत $D_1$ स्नाता° सर्वे तु पाण्डवा

**4** $^a$) $Ś_1$ $K_{1-3}$ कालकूट्या, D कालकोट्या, $G_{2\ 4}$ पाल° N $G_{1\ 2}$ $M_3$ विपप्रस्थे ($D_3$ रवि°, $D_5$ विपप्रस्थै°) — $^b$) Dn कौरवा° (for पाण्डवा°) ।

**5** $^a$) K $B_3$ $D_0$ $D_{1\ 2\ 5}$ $T_1$ $G_1$ $M_2$ आप्लाव्य, $T_2$ $G_{2-4}$ चाप्लाव्य (for आप्लुत्य)

**6** $G_1$ om (hapl) $6^c$–$8^b$ — $^a$) T G ($G_1$ om) चापि (for चैव) — $T_1$ om $6^c$–$8^b$

**7** $T_1$ $G_1$ om 7 (cf v l 6) — $^a$) $D_1$ °सजुष्टा°, $D_2$ °सघुष्टा, $M_1$ °सजुष्टा (for °जुष्टा च) $Ś_1$ वा (for च) — $^b$) $K_4$ (m as in text) देशान्, $T_2$ $G_3$ वेदिं (for वेदीं) $Ś_1$ $K_{3\ 4}$ $D_0$ $D_{1-3\ 5}$ विशां पते (for प्रजा°)

**8** $T_1$ $G_1$ om $8^{ab}$ (cf v l 6), $G_4$ om 8 — $^a$) $Ś_1$ K $D_0$ $D_{1\ 2}$ राजन् (for वीरा°) — $^b$) $D_{3\ 5}$ om च

**9** $^b$) $D_{3\ 5}$ [अ]नु, T $G_3$ [अ]पि (for [अ]भि°) B Dn $D_{1\ 2\ 4\ 6}$ -संस्कृत, $D_{3\ 5}$ पालित, $T_2$ G सत्कृता° ($G_1$ -रक्षित) (for -सत्कृतम्) — $^d$) $D_2$ $G_4$ °द्युता (for °द्युते) — After 9, $K_1$ ins 476* (om line 2)

**10** $^a$) B Dn $D_{4\ 6}$ नगो (for सरो) $B_2$ नाम (for यत्र) — $^b$) $Ś_1$ $K_{1\ 2}$ यत्र पुण्या, $B_2$ $D_6$ पुण्या यत्र (for पुण्या चैव) — B D (except $D_{1-3\ 5}$) ins after $10^{ab}$ $K_1$ (om line 2) ins after 9

476* वानीरमालिनी रम्या नदी पुलिनशोभिता ।
दिव्यं पवित्रकूटं च पवित्रधरणीधरम् ।

ऋषिजुष्टं सुपुण्यं तत्तीर्थं ब्रह्मसरोत्तमम् ॥ १०
अगस्त्यो भगवान्यत्र गतो वैवस्वतं प्रति ।
उवास च स्वयं यत्र धर्मो राजन्सनातनः ॥ ११
सर्वासां सरितां चैव समुद्भेदो विशां पते ।
यत्र संनिहितो नित्यं महादेवः पिनाकधृक् ॥ १२
तत्र ते पाण्डवा वीराश्चातुर्मास्यैस्तदेजिरे ।
ऋषियज्ञेन महता यत्राक्षयवटो महान् ॥ १३
ब्राह्मणास्तत्र शतशः समाजग्मुस्तपोधनाः ।
चातुर्मास्येनायजन्त आर्षेण विधिना तदा ॥ १४
तत्र विद्यातपोनित्या ब्राह्मणा वेदपारगाः ।
कथाः प्रचक्रिरे पुण्याः सदसिस्था महात्मनाम् ॥ १५
तत्र विद्याव्रतस्नातः कौमारं व्रतमास्थितः ।
शमठोऽकथयद्राजन्नामूर्तरयसं गयम् ॥ १६
अमूर्तरयसः पुत्रो गयो राजर्षिसत्तमः ।
पुण्यानि यस्य कर्माणि तानि मे शृणु भारत ॥ १७
यस्य यज्ञो बभूवेह बह्वन्नो बहुदक्षिणः ।
यत्रान्नपर्वता राजञ्शतशोऽथ सहस्रशः ॥ १८
घृतकुल्याश्च दध्नश्च नद्यो बहुशतास्तथा ।
व्यञ्जनानां प्रवाहाश्च महार्हाणां सहस्रशः ॥ १९
अहन्यहनि चाप्येतद्याचतां संप्रदीयते ।
अन्यत्तु ब्राह्मणा राजन्भुञ्जतेऽन्नं सुसंस्कृतम् ॥ २०
तत्र वै दक्षिणाकाले ब्रह्मघोषो दिवं गतः ।

---

[(L 2) B1 पवित्र चित्रकूट च (for the prior half) B1 3 Dc पवित्रे धरणीधरे (for the posterior half)]
— $^{a}$) K1 3 स्वर्गपुण्य, B1 Dc Dn3 सुपुण्य च, B3 सुपुण्य तु, G4 सुपूर्णं तद् — $^{d}$) Ś1 K1 ब्रह्मसरो नृप, K3 D1 सरो तुल, K4 सरोमल, D2 सरो अल; D3 5 °सरोभवत्, S पुण्य (M ब्रह्म)सरोतुल (T1 जल)

**11** $^{a}$) S (except M2) यत्र भगवान् (by transp) — $^{c}$) Ś1 K1 3 4 B1 3 4 Dn D4 5 G4 तत्र (for यत्र) — $^{d}$) K4 B D (except D1-3 5) धर्मराज°; T1 राजधर्म°; T2 G2 3 M राजन्धर्म (by transp), G1 राजा धर्म, G4 राजधर्म

**12** $^{a}$) K3 D3 5 यत्र (for चैव) — $^{b}$) T2 G1 3 4 समुद्भेदे D5 [S]पि दृश्यते (for विशां पते) — $^{d}$) Ś1 धृव् (for धृक्)

**13** $^{a}$) S (except M2) राजन् (for वीरा°) — $^{b}$) Ś1 K1 3 तथेजिरे, K3 च भेजिरे (for तदेजिरे) D1 2 3 चातुर्मास्येन ईजिरे — $^{d}$) Ś1 K1 3 G3 तत्र (for यत्र) K B1 3 D1 3 T1 M अक्षय्य°; T2 G2-4 अक्षय्यो (for अक्षय) T2 G2-4 महावट° (for वटो महान्) — After 13, B Dc Dn D4 5 ins

477* अक्षये देवयजने अक्षय यत्र वै फलम् ।
ते तु तत्रोपवासास्तु चक्रुर्निश्चितमानसाः ।

[(L 1) Dc तत्र (for यत्र) — (L 2) Dc नियत° (for निश्चित)]

**14** $^{cd}$) S वर्तमानेषु वै तस्य चातुर्मास्येषु भारत

**15** Ś1 om (hapl) 15 — $^{a}$) D5 यत्र (for तत्र) K1 (corrupt) °वर्णो; K2 B Dn D4 5 °वृद्धा, K3 4 Dc D1-3 5 T1 युक्ता — $^{c}$) K1 3 B Dn D4 6 T G2-4 कथा (for कथाः) K1 पुत्रा°, K3 पुण्य, B Dn D4 5 पुण्याः T2 G2-4 सर्वे (for पुण्याः) — $^{d}$) D3 5 सर्वे एव, M सद स्याम्या (for °सिस्था)

**16** $^{a}$) Ś1 B3 (m as in text) °तप°, K1 3 °उप° (sic) (for °व्रत°) — $^{b}$) Ś1 K1 3 M1 कौमार — B3 om from 16$^{cd}$ up to 3 94 6 — $^{d}$) T G आधूर्तरजस, M आसूर्तरय(M2 °ज)स

**17** B3 om 17 (cf v l 16) Before 17, K3 4 B (B3 om) D G3 M ins शमठ उ (G2 M om उ°) — $^{a}$) S आधू(T2 G3 अधू; G1 नाधू; M आसू)र्तरजस पुत्रो — $^{b}$) S1 K3 D1 G1 °सत्तम — $^{c}$) Dc S (except M2) तस्य (for यस्य) — $^{d}$) D3 5 पाण्डव (for भारत)

**18** B3 om 18 (cf v l 16) — $^{a}$) K3 4 Dc G4 M तस्य (for यस्य) — $^{b}$) T2 G3 4 वसतो D1 T2 G3 4 भूरिदक्षिण — $^{d}$) S (except T1) आसन्दातसह°

**19** B3 T1 (hapl.) om 19 (for B3 cf v.l 16) — $^{c}$) K4 D1 3 प्रकाराश्च, G2 4 प्रवाहश्च — $^{d}$) Ś1 K1 3 च सर्वशः (for सह°)

**20** B3 om 20 (cf v l. 16) — $^{a}$) B (B3 om) Dn D4 5 T2 G3 एव (for एतद्) — $^{b}$) Ś1 K D1 च (for स°) — $^{c}$) Ś1 K1 3 तत्र स्म, K3 तत्र स्म; K4 अन्यत्र, B (B3 om) Dn D4 5 अन्ये च, Dc अन्ये तत्; D1 3 तत्र स्म; D3 5 अन्य तु; G1 अक्षतु (for अन्यत्तु)

**21** B3 om 21 (cf v l 16) — $^{a}$) K1 3 T2 G2 3 तत्रैव (for तत्र वै) — G4 om 21$^{cd}$ — $^{c}$) B3 D (except D1 3) च; T2 G3 स (for स्म) — $^{d}$) K4 D5 ब्रह्मघोषेण

न स्म प्रज्ञायते किंचिद्ब्रह्मशब्देन भारत ॥ २१
पुण्येन चरता राजन्भूर्दिशः खं नभस्तथा ।
आपूर्णमासीच्छब्देन तदप्यासीन्महाद्भुतम् ॥ २२
तत्र स्म गाथा गायन्ति मनुष्या भरतर्षभ ।
अन्नपानैः शुभैस्तृप्ता देशे देशे सुवर्चसः ॥ २३
गयस्य यज्ञे के त्वद्य प्राणिनो भोक्तुमीप्सवः ।
यत्र भोजनशिष्टस्य पर्वताः पञ्चविंशतिः ॥ २४
न स्म पूर्वे जनाश्चक्रुर्न करिष्यन्ति चापरे ।
गयो यदकरोद्यज्ञे राजर्षिरमितद्युतिः ॥ २५
कथं नु देवा हविषा गयेन परितर्पिताः ।
पुनः शक्ष्यन्त्युपादातुमन्यैर्दत्तानि कानिचित् ॥ २६
एवंविधाः सुबहवस्तस्य यज्ञे महात्मनः ।
बभूवुरस्य सरसः समीपे कुरुनन्दन ॥ २७

इति श्रीमहाभारते आरण्यकपर्वणि त्रिनवतितमोऽध्यायः ॥ ९३ ॥

# ९४

वैशंपायन उवाच ।
ततः संप्रस्थितो राजा कौन्तेयो भूरिदक्षिणः ।
अगस्त्याश्रममासाद्य दुर्जयायामुवास ह ॥ १
तत्र वै लोमशं राजा पप्रच्छ वदतां वरः ।

---

**22** B8 om 22 (cf v l 16) — a) Ś1 K1 2 पुण्ये नाचरता, T2 G3 °नोच्चारिता, G2 4 °नोच्चरिता — b) K2 नभस्तदा, K3 दिवस्तथा, D3 5 वियत्तदा; T G2-4 M तथा (T2 G2 3 °दा) नृप — d) K4 D1 2 T G3 M1 अस्यासीन्; D3 5 अस्य च (for अप्यासीन्) Ś1 K1-3 तदासीन्महदद्भुत, G1 तत्तदासीन्महाद्भुत

**23** B8 om 23 (cf v l 16) — a) Ś1 K1 2 तत°, Dn2 G1 यत्र (for तत्र) — b) Ś1 K1 2 गयस्य (for मनुष्या) — c) S (except T2 G3) गुणैस् (for शुभैस्)

**24** B8 om 24 (cf v l 16) — a) K2 B (B8 om) त्वद्य, D3 त्वद्य, D5 त्वत्र; M1 स्वस्य (for त्वद्य) — b) K1 2 Dc इच्छव° (for ईप्सव ) — c) B1 Dn D4-6 तत्र Ś1 K1 2 °शिष्टाश्च, S °शेषस्य

**25** B8 om 25 (cf v l 16) — a) K3 पुरा स्म; B (B8 om ) Dn D4 6 तत्पूर्वे, Dc स्म पृष्ठे (for स्म पूर्वे) T3 G3 4 नरा° (for जना°) — c) S1 K1 2 यथा° (for यद°)

**26** B8 om 26 (cf v l 16) — a) K4 D (except D3 5) तु (for नु) — After 26, N (except D3 5) ins

478* सिकता वा यथा लोक यथा वा दिवि तारका° ।
यथा वा वर्षतो धारा असख्येया° स्म केनचित् ।
तथा गणयितु शक्या गययज्ञे न दक्षिणा° ।

[ (L 1) Ś1 K1 2 च (for the first वा) — (L 2) Ś1 K1 2 वर्षमस्तं (for वा वर्षतो) B4 च काश्चन (for स्म केनचित्) ]

**27** B8 om 27 (cf v l 16) — a) T2 G M2 स्युर (G1 तु; M2 सु-) बहुश° (for सुबहव°) Ś1 K Dc D1-3 6 एव बहुविधा वाच° — b) B (B8 om ) Dn D4 6 T1 G1 यज्ञा (for यज्ञे) Ś1 K B2 Dn D2 4 6 महीपते°; B1 4 Dc D1 3 5 महीपते — c) K3 4 D3 तस्य (for अस्य) G1 गाथाश्च (for सरस )

Colophon om in B8 — *Major parvan* Ś1 K1 2 Dn2 T G2-4 M1 आरण्य — *Sub parvan* B2 Dn1 n2 D4 6 T1 तीर्थयात्रा (B2 cont लोमशतीर्थयात्रा); K3 4 B4 Dc Dn3 D1-3 5 G1 (all om sub parvan name) mention only लोमशतीर्थयात्रा — *Adhy name* K3 गयवृत्तात, Dc2 गययज्ञाख्यान, T2 G3 गययज्ञस्तुति° — *Adhy no* (figures, words or both) Dn1 n2 95, Dn3 M2 96, D1 99, T G M1 94 — *Śloka no* Dn 29

## 94

**2** B8 om 2-6 (cf v l 3 93 16) — a) K3 4 B (B3 om ) Dn D1 3-6 तत्रैव (for तत्र वै) — b) T2 G2-4 द्विपदा, G1 M2 गदता (for वदता) K2 D3 5 वरः K3 M1 °र (for °र )

अगस्त्येनेह वातापिः किमर्थमुपशामितः ॥ २
आसीद्वा किंप्रभावश्च स दैत्यो मानवान्तकः ।
किमर्थं चोद्गतो मन्युरगस्त्यस्य महात्मनः ॥ ३

लोमश उवाच ।

इल्वलो नाम दैतेय आसीत्कौरवनन्दन ।
मणिमत्यां पुरि पुरा वातापिस्तस्य चानुजः ॥ ४
स ब्राह्मणं तपोयुक्तमुवाच दितिनन्दनः ।
पुत्रं मे भगवानेकमिन्द्रतुल्यं प्रयच्छतु ॥ ५
तस्मै स ब्राह्मणो नादात्पुत्रं वासवसंमितम् ।
चुक्रोध सोऽसुरस्तस्य ब्राह्मणस्य ततो भृशम् ॥ ६
समाह्वयति यं वाचा गतं वैवस्वतक्षयम् ।
स पुनर्देहमास्थाय जीवन्स्म प्रतिदृश्यते ॥ ७
ततो वातापिमसुरं छागं कृत्वा सुसंस्कृतम् ।
तं ब्राह्मणं भोजयित्वा पुनरेव समाह्वयत् ॥ ८
तस्य पार्श्वं विनिर्भिद्य ब्राह्मणस्य महासुरः ।
वातापिः प्रहसन्राजन्निश्चक्राम विशां पते ॥ ९
एवं स ब्राह्मणान्राजन्भोजयित्वा पुनः पुनः ।
हिंसयामास दैतेय इल्वलो दुष्टचेतनः ॥ १०
अगस्त्यश्चापि भगवानेतस्मिन्काल एव तु ।
पितॄन्ददर्श गर्ते वै लम्बमानानधोमुखान् ॥ ११
सोऽपृच्छल्लम्बमानांस्तान्भवन्त इह किंपराः ।
संतानहेतोरिति ते तमूचुर्ब्रह्मवादिनः ॥ १२
ते तस्मै कथयामासुर्वयं ते पितरः स्वकाः ।
गर्तमेतमनुप्राप्ता लम्बामः प्रसवार्थिनः ॥ १३

---

**3** $B_8$ om 3 (cf v l 2) — $^c$) $K_4$ $D_{1\ 2}$ T $G_{3\ 4}$ $M_2$ चोद्धतो; $B_{1\ 3}$ Dc $D_{4\ 6}$ चोद्यतो; $B_4$ Dn $D_4$ चोदितो, $G_{1\ 2}$ चोद्यते; $M_1$ चोत्थितो

**5** $B_8$ om 5 (cf v l 2) — $^b$) $Ś_1$ $K_{1\ 2\ 4}$ $D_{1\ 2}$ उक्तवान् (for उवाच) — $K_1$ om $5^{cd}$

**6** $B_8$ om 6 (cf v l 2) — $^a$) $Ś_1$ $K_{2\ 3}$ Dn $D_{4\ 6}$ तस्मिन्स; $M_2$ स तस्मै (by transp) $Ś_1$ K $B_1$ (m as in text) Dc $D_{1-3\ 5}$ नैच्छत् (for नादात्) — $^b$) $Ś_1$ K $B_1$ (m as in text) Dc $D_{1-3}$ पुत्र दातु तथाविध — $^c$) $Ś_1$ $K_{1\ 2}$ दितिजस् (for सोऽसुरस्) T $G_{2-4}$ M तस्मै (for तस्य) $G_1$ चुक्रोध वज्री तस्मै तु — $^d$) $K_4$ S ब्राह्मणाय (for °णस्य) — After 6, $Ś_1$ (om lines 1–2) K ($K_{3-4}$ om lines 1–2) B ($B_{1\ 3}$ om lines 3–4) D (Dc om lines 3–4, $D_{1-3\ 5}$ om lines 1–2) S ($T_1$ $G_{1\ 2\ 4}$ om lines 3–4, $T_2$ reading lines 3–4 in marg) ins

479* तदा प्रभृति राजेन्द्र ब्रह्महासुरसत्तम ।
मन्युमान्भ्रातरं छागं मायावी प्रचकार ह ।
मेषरूपी च वातापिः कामरूपोऽभवत्क्षणात् ।
संस्कृत्य भोजयति तं विप्रान्स स्म जिघांसति ।

[(L 1) $K_1$ B Dc Dn $D_{4\ 6}$ इल्वलो ब्रह्महासुर (for the posterior half) — (L 2) $K_1$ B Dc Dn $D_{4\ 6}$ चकरोत्तत (for प्रचकार ह) — (L 3) $Ś_1$ $K_{1\ 2}$ $D_5$ °रूपश्च (for °रूपी) $B_{2\ 4}$ Dn $D_{4\ 6}$ $T_2$ $G_3$ °रूपी (for °रूपो) — (L 4) $K_3$ भोजयामास; $B_{2\ 4}$ Dn $D_{4\ 6}$ $T_2$ $G_3$ च ($T_2$ $G_3$ स) भोजयति (for भोजयति त) $K_3$ ब्राह्मणान्स जिघांसया; $B_{2\ 4}$ Dn $D_{4\ 6}$ $T_2$ $G_3$ ततो विप्र जिघांसति ]

**7** $^a$) $K_3$ B D (except $D_{3\ 5}$) M स चा° (for समा°) $Ś_1$ K $B_{1\ 3}$ Dc $D_{1\ 3\ 5}$ त (for य) — $^d$) $B_4$ स, Dc Dn1 $D_{1\ 3}$ $G_1$ स, $T_2$ $G_{2-4}$ च (for स्म) $Ś_1$ $K_{1-3}$ $B_{1\ 3\ 4}$ D प्रत्यदृश्यत; $G_1$ परिदृश्यते

**8** $^c$) $D_{1\ 2}$ T G ब्राह्मण भोजयित्वासौ ($D_{1\ 2}$ °त्वा त; $G_1$ °त्वा स) — $^d$) M सोऽसुरः पुनराह्वयत् — After 8, $K_1$ B D (except $D_{2\ 3\ 5}$) S ins

480* तामिल्वलेन महता स्वरेण गिरमीरिताम् ।
श्रुत्वातिमायो बलवान्क्षिप्रं ब्राह्मणकण्टकः ।

[(L 1) $B_{3\ 4}$ Dc [अ]सुरेण (for स्वरेण) $K_1$ B Dc Dn $D_{1\ 4\ 6}$ वाचम् (for गिरम्) ]

**9** $D_3$ om $9^a$–$10^b$ — $^a$) $M_1$ (? gloss) कुक्षिं (for पार्श्वं) $Ś_1$ K $D_{1\ 2\ 5}$ स तस्य पार्श्वं निर्भिद्य — $^d$) $Ś_1$ $K_{1\ 3}$ महामते; $M_1$ महीपते (for विशां पते)

**11** $^b$) $K_{1\ 2}$ $D_5$ एकस्मिन्, $K_3$ स तस्मिन् $Ś_1$ K $D_{1\ 2}$ आगते, $D_5$ आगत (for एव तु) — $11^{cd}$ = (var) 1 41 $3^{cd}$ — $^c$) Dc कौंतेय; $T_2$ G गर्ते तु — $^d$) $K_4$ $B_4$ (m as in text) $D_{1\ 2}$ T $G_{1-3}$ $M_2$ अवाङ्मुखान् (for अधो°)

**12** $^a$) $Ś_1$ K Dc $D_{1-3\ 5}$ $M_1$ लम्बतस्तानपृच्छत्स — $^b$) $T_2$ $G_{2-4}$ भगवतश्च (for भवन्त इह) $K_3$ इति; Dc Dn $D_4$ $G_1$ इव (for इह) $K_3$ के परे; $K_4$ के पराः; $B_3$m कल्पिताः, Dn $D_4$ कपिता; $D_3$ $G_4$ किं पुरा, $D_5$ केचन; $G_1$ किं चरः (for किंपराः) — After $12^{ab}$, S ins

481* किमर्थं चेह लम्बध्वं गर्ते यूयमधोमुखाः ।

— M om $12^{cd}$ — $^d$) $K_2$ B Dn $D_{4-6}$ प्रत्यूचुर् $Ś_1$ $K_{1\ 2}$ ब्रह्मचारिणं, $K_{3\ 4}$ Dc $D_{1-3\ 5}$ $G_4$ ब्रह्मचारिणं

यदि नो जनयेथास्त्वमगस्त्यापत्यमुत्तमम् ।
स्यान्नोऽस्मान्निरयान्मोक्षस्त्वं च पुत्राप्नुया गतिम् ॥ १४
स तानुवाच तेजस्वी सत्यधर्मपरायणः ।
करिष्ये पितरः कामं व्येतु वो मानसो ज्वरः ॥ १५
ततः प्रसवसंतानं चिन्तयन्भगवानृषिः ।
आत्मनः प्रसवस्यार्थे नापश्यत्सदृशीं स्त्रियम् ॥ १६
स तस्य तस्य सत्त्वस्य तत्तदङ्गमनुत्तमम् ।
संभृत्य तत्समैरङ्गैर्निर्ममे स्त्रियमुत्तमाम् ॥ १७
स तां विदर्भराजाय पुत्रकामाय ताम्यते ।
निर्मितामात्मनोऽर्थाय मुनिः प्रादान्महातपाः ॥ १८
सा तत्र जज्ञे सुभगा विद्युत्सौदामिनी यथा ।
विभ्राजमाना वपुषा व्यवर्धत शुभानना ॥ १९
जातमात्रां च तां दृष्ट्वा वैदर्भः पृथिवीपतिः ।
प्रहर्षेण द्विजातिभ्यो न्यवेदयत भारत ॥ २०

अभ्यनन्दन्त तां सर्वे ब्राह्मणा वसुधाधिप ।
लोपामुद्रेति तस्याश्च चक्रिरे नाम ते द्विजाः ॥ २१
ववृधे सा महाराज बिभ्रती रूपमुत्तमम् ।
अप्स्विवोत्पलिनी शीघ्रमग्नेरिव शिखा शुभा ॥ २२
तां यौवनस्थां राजेन्द्र शतं कन्याः स्वलंकृताः ।
दासीशतं च कल्याणीमुपतस्थुर्वशानुगाः ॥ २३
सा स्म दासीशतवृता मध्ये कन्याशतस्य च ।
आस्ते तेजस्विनी कन्या रोहिणीव दिवि प्रभो ॥ २४
यौवनस्थामपि च तां शीलाचारसमन्विताम् ।
न वव्रे पुरुषः कश्चिद्भयात्तस्य महात्मनः ॥ २५
सा तु सत्यवती कन्या रूपेणाप्सरसोऽप्यति ।
तोषयामास पितरं शीलेन स्वजनं तथा ॥ २६
वैदर्भीं तु तथायुक्तां युवतीं प्रेक्ष्य वै पिता ।
मनसा चिन्तयामास कस्मै दद्यां सुतामिति ॥ २७

इति श्रीमहाभारते आरण्यकपर्वणि चतुर्नवतितमोऽध्यायः ॥ ९४ ॥

---

**14** $G_1$ om $14^{c}$–$16^{d}$ — $^{d}$) $T_1$ त्व पुत्र प्राप्नुया गतिं, M लोकाश्चैवाप्नुयामहे

**15** $G_1$ om 15 (cf v l 14) — After 15, $K_3$ ins

482* स चाथ जनयामास भारतापत्यमुत्तमम् ।
लेभिरे पितरश्चास्य लोकान्प्राजन्यथेप्सितान् ।
[Line 1=(var) 495*]

**16** $G_1$ om 16 (cf v l 14) — After 16, $K_3$ (marg *sec m*) ins

483* ऋषिर्हि प्रतपा नाम विधाय वरमुत्तमम् ।

**17** $^{c}$) $K_3$ $D_3$ $T_2$ $G_{2-4}$ सहृत्य, B Dn $D_{4\ 6}$ सगृह्य, Dc तद्गृह्य, $D_5$ $M_2$ सहृत्य, $T_1$ ससृत्य, $M_1$ सस्मृत्य $Ś_1$ $K_{1\ 2\ 4}$ $D_{1\ 2\ 5}$ तन्मयैर् (for तत्समैर्)

**18** $^{a}$) B D (except $D_{1-3\ 5}$) °राजस्य — $^{b}$) $Ś_1$ K $D_{1-3\ 5}$ धीमते, $G_1$ श्रम्य°; M शाम्य° (for ताम्य°) B Dc Dn $D_{4\ 6}$ पुत्रार्थं तप्यतस् (Dc °ते) तप

**19** $^{b}$) =3 50 $12^{d}$ $Ś_1$ $K_2$ $B_1$ $D_6$ सौदामनी — $^{c}$) Cf 1 65 $11^{a}$ — $^{d}$) $K_3$ M वरा° (for शुभा°)

**20** $^{a}$) $S_1$ $K_{1\ 2}$ $D_{1\ 2}$ तु (for च)

**21** $^{a}$) $T_2$ $G_3$ त (for ता) — $^{b}$) $G_1$ पृथिवीपते (for वसु°)

**23** $^{c}$) $T_2$ $G_{2-4}$ ता यौवनगता राजन्, $G_1$ शुभा सा यौवनगता — $^{c}$) B Dn $D_{4-6}$ दास्य° (for दासी) — $D_3$ om from च (in $23^{c}$) up to $24^{d}$ — $^{d}$) $K_3$ $B_3$ $Dn_1$ उपातस्थुर्, $K_3$ M उपतस्थे $K_{3\ 4}$ Dc वश गता°, M वशानुग

**24** $D_3$ om 24 (cf v l 23) — $^{d}$) $B_{1\ 4}$ Dc Dn $D_{4-6}$ $G_4$ दिवि प्रभा, $G_1$ दिवप्रभ

**25** $^{a}$) $Ś_1$ K Dc $D_{1\ 2\ 6}$ शुभा (for च ता) — $^{b}$) M तथा रूप° (for शीलाचार°)

**26** $^{a}$) $T_2$ $G_{3\ 4}$ च (for तु) — $^{b}$) $Ś_1$ [अ]प्सरसामति; $K_3$ $T_1$ [अ]प्यप्सरोपमा, $D_5$ [अ]प्सरसो ह्यति, $T_2$ $G_{2-4}$ [अ]प्सरसोपमा; $G_1$ [अ]तीव सुंदरी $D_3$ रोहिणीव दिवि प्रभो ($=24^{d}$) — $^{d}$) $Ś_1$ $K_{1\ 2}$ प्रति (for तथा)

**27** $^{ab}$) $Ś_1$ K Dc $D_{1-3\ 5}$ ता यौवनवतीं दृष्ट्वा वैदर्भाधिपतिर्नृप — $^{d}$) B Dn $D_{4\ 6}$ $G_1$ इमा सुता ($B_3$m शुभा), $T_2$ $G_{2-4}$ $M_2$ सुतामिमा (for °मिति)

Colophon — *Major parvan* $Ś_1$ $K_{1\ 2}$ $Dn_2$ T $G_{2-4}$ $M_1$ आरण्य — *Sub parvan* Dc $Dn_2$ $T_1$ तीर्थयात्रा; (Dc cont आगस्त्य) Omitting sub parvan name, $K_4$ $B_2$ $D_{1\ 2}$ mention only लोमशतीर्थयात्रा ($K_4$ $B_2$ cont आगस्त्य), $B_{1\ 3\ 4}$ $Dn_1$ $D_{3-6}$ only आगस्त्य (or अगस्त्य), and $Dn_3$ only अगस्त्यतीर्थयात्रा — *Adhy name* $T_2$ $G_1$

# ९५

लोमश उवाच ।
यदा त्वमन्यतागस्त्यो गार्हस्थ्ये तां क्षमामिति ।
तदाभिगम्य प्रोवाच वैदर्भं पृथिवीपतिम् ॥ १
राजन्निवेशे बुद्धिर्मे वर्तते पुत्रकारणात् ।
वरये त्वां महीपाल लोपामुद्रां प्रयच्छ मे ॥ २
एवमुक्तः स मुनिना महीपालो विचेतनः ।
प्रत्याख्यानाय चाशक्तः प्रदातुमपि नैच्छत ॥ ३
ततः स भार्यामभ्येत्य प्रोवाच पृथिवीपतिः ।
महर्षिर्वीर्यवानेष क्रुद्धः शापाग्निना दहेत् ॥ ४
तं तथा दुःखितं दृष्ट्वा सभार्यं पृथिवीपतिम् ।
लोपामुद्राभिगम्येदं काले वचनमब्रवीत् ॥ ५
न मत्कृते महीपाल पीडामभ्येतुमर्हसि ।
प्रयच्छ मामगस्त्याय त्राह्यात्मानं मया पितः ॥ ६
दुहितुर्वचनाद्राजा सोऽगस्त्याय महात्मने ।
लोपामुद्रां ततः प्रादाद्विधिपूर्वं विशां पते ॥ ७
प्राप्य भार्यामगस्त्यस्तु लोपामुद्रामभाषत ।
महार्हाण्युत्सृजैतानि वासांस्याभरणानि च ॥ ८
ततः सा दर्शनीयानि महार्हाणि तनूनि च ।
समुत्ससर्ज रम्भोरूर्वसनान्यायतेक्षणा ॥ ९
ततश्चीराणि जग्राह वल्कलान्यजिनानि च ।
समानव्रतचर्या च बभूवायतलोचना ॥ १०
गङ्गाद्वारमथागम्य भगवानृषिसत्तमः ।
उग्रमातिष्ठत तपः सह पत्न्यानुकूलया ॥ ११
सा प्रीत्या बहुमानाच्च पतिं पर्यचरत्तदा ।
अगस्त्यश्च परां प्रीतिं भार्यायामकरोत्प्रभुः ॥ १२
ततो बहुतिथे काले लोपामुद्रां विशां पते ।
तपसा द्योतितां स्नातां ददर्श भगवानृषिः ॥ १३
स तस्याः परिचारेण शौचेन च दमेन च ।
श्रिया रूपेण च प्रीतो मैथुनायाजुहाव ताम् ॥ १४
ततः सा प्राञ्जलिर्भूत्वा लज्जमानेव भामिनी ।

---

लोपामुद्रोत्पत्ति — *Adhy no* (figures, words or both) Dn$_1$ (*sup lin*) 96, Dn$_2$ M$_2$ 97, D$_4$ 100, T G M$_1$ 95 — *Śloka no* Dn 30, D$_4$ 29

## 95

**1** [b]) B$_{1\ 4}$ M$_2$ क्षमामिव; T G अनिंदिता (for क्षमामिति) Ś$_1$ K$_{2-4}$ Do D$_{1-3\ 5}$ योग्य(K$_4$ ग)रूपामिवात्मन

**2** [a]) Ś$_1$ K$_{1\ 3}$ विवाहे, T$_2$ G निवेश (for निवेशे) — [b]) Ś$_1$ K Dc D$_{1\ 2\ 5}$ M$_1$ [ऽ]पत्य (for पुत्र) — [c]) Ś$_1$ K$_{1\ 2}$ त्वा (for त्वां) T$_2$ G$_{2-4}$ महाभाग; M$_1$ महाराज (for मही°)

**3** [c]) Ś$_1$ K D$_{1-3\ 5}$ तु (for स) K$_{3\ 4}$ D$_{1\ 2}$ ऋषिणा (for मुनिना) — [d]) Ś$_1$ K$_{1\ 2}$ चापि; K$_{3\ 4}$ Do D$_{1\ 2\ 5}$ चापि; B Dn D$_{3\ 4\ 6}$ T$_1$ M चैव (for अपि)

**4** [a]) D$_{1\ 2}$ आहूय (for अभ्येत्य) — [b]) M$_1$ स मही (for पृथिवी)

**6** [a]) S (except M$_1$) मत्कृते न (by transp) — [d]) Ś$_1$ K Dc D$_{1\ 2}$ पाहि, D$_3$ रक्ष (for त्राहि)

**7** [a]) Ś$_1$ K$_{1\ 2}$ M$_2$ राजन् (for राजा) — [d]) M$_1$ प्रीतिपूर्वं T$_2$ G$_{2-4}$ महात्मने (for विशां पते)

**9** K$_1$ om (hapl) $9^a$–$10^b$ — [ab]) S तत सा तानि वासांसि तनूनि च मृदूनि (G$_1$ मृदून्याभरणानि) च — [c]) K$_{2\ 3}$ Dc D$_{2-4}$ M$_1$ रम्भोरू — [d]) S दिव्यान्या(T$_1$ सर्वाण्या)भरणानि च

**10** K$_1$ om $10^{ab}$ (cf v l 9) — [d]) D$_3$ चचार (for बभूव) Ś$_1$ K Dc D$_{1\ 2\ 5}$ [अ]स्य तदा नृप, D$_3$ वशवर्तिनी (for [आ]यतलो°)

**11** [a]) Ś$_1$ K$_{1\ 2}$ अथासाद्य; T$_2$ G$_{1\ 3\ 4}$ उपागम्य

**12** [a]) Dc Dn D$_1$ प्रीता (for प्रीत्या) — [d]) B D$_{3\ 6}$ T$_1$ आचरत्, Dc Dn D$_{4\ 5}$ M$_2$ अचरत्; T$_2$ G$_{2-4}$ M$_1$ अगमत्, G$_1$ अहरत् (for अकरोत्) B$_1$ पुन, D$_2$ तदा (for प्रभु°)

**14** [b]) K$_{1\ 2}$ शमेन (for शौचेन) — [c]) D$_{3\ 5}$ प्रीत्या (for प्रीतो) — [d]) Ś$_1$ K$_{1\ 2}$ B$_{1\ 3\ 4}$ om [आ]

**15** [b]) B (B$_1$ marg) Dc Dn$_{1\ 2}$ D$_{4-6}$ भाविनी — [d]) S भर्तारमिदमब्रवीत्

तदा सप्रणयं वाक्यं भगवन्तमथाब्रवीत् ॥ १५
असंशयं प्रजाहेतोर्भार्यां पतिरविन्दत ।
या तु त्वयि मम प्रीतिस्तामृषे कर्तुमर्हसि ॥ १६
यथा पितुर्गृहे विप्र प्रासादे शयनं मम ।
तथाविधे त्वं शयने मामुपैतुमिहार्हसि ॥ १७
इच्छामि त्वां स्रग्विणं च भूषणैश्च विभूषितम् ।
उपसर्तुं यथाकामं दिव्याभरणभूषिता ॥ १८

अगस्त्य उवाच ।

न वै धनानि विद्यन्ते लोपामुद्रे तथा मम ।
यथाविधानि कल्याणि पितुस्तव सुमध्यमे ॥ १९

लोपामुद्रोवाच ।

ईशोऽसि तपसा सर्वं समाहर्तुमिहेश्वर ।
क्षणेन जीवलोके यद्वसु किंचन विद्यते ॥ २०

अगस्त्य उवाच ।

एवमेतद्यथात्थ त्वं तपोव्ययकरं तु मे ।
यथा तु मे न नश्येत तपस्तन्मां प्रचोदय ॥ २१

लोपामुद्रोवाच ।

अल्पावशिष्टः कालोऽयमृतौ मम तपोधन ।
न चान्यथाहमिच्छामि त्वामुपैतुं कथंचन ॥ २२
न चापि धर्ममिच्छामि विलोप्तुं ते तपोधन ।
एतत्तु मे यथाकामं संपादयितुमर्हसि ॥ २३

अगस्त्य उवाच ।

यद्येष कामः सुभगे तव बुद्ध्या विनिश्चितः ।
हन्त गच्छाम्यहं भद्रे चर काममिह स्थिता ॥ २४

इति श्रीमहाभारते आरण्यकपर्वणि पञ्चनवतितमोऽध्यायः ॥ ९५ ॥

---

**16** B8 om $16^{cd}$ — c) S तथा (for या तु) M1 [अ]पि या (for त्वयि)

**17** T1 om 17-18 — a) K4 B3 Dc D5 T2 G1 3 M2 पितृगृहे (for पितुर्गृहे) — B3 om $17^{c}$–$19^{d}$, G1 om $17^{c}$–$19^{b}$

**18** B3 T1 G1 om 18 (cf v l 17) — a) Ś1 K2 D1 2 M स्वा (for त्वा) — b) K3 4 D1 2 [अ]पि (for वि) — c) K2 उपासितु, K3 उपपन्न, D1 3 5 °मोक्तु (for °सर्तुं) — d) K3 D1-3 G2 4 °भूषित, D6 M1 °भूषिता — After 18, B1 2 4 Dc Dn D4 6 T2 (marg) G3 ins

484* अन्यथा नोपतिष्ठेय चीरकाषायवासिनी ।
नैवापवित्रो विप्रर्षे भूषणोऽय कथचन ।

**19** B3 om 19, G1 om $19^{ab}$ (cf v l. 17) — a) B (B3 om) D (except D1-3 5) ते (for वै)

**20** b) Ś1 ममाहर्तुम्, D3 5 उपा° K1 B Dc Dn D4-6 तपोधन (B3 द्विजोत्तम), K2 महेश्वर, S ममेप्सित — d) B वसु विद्यति (B4 विद्यते वसु) किंचन, D3 वसु विद्येत किंचन

**21** G4 ऋषि° (for अगस्त्य उ°) — a) = 1 143 $16^{a}$ G2 एव (for एतद्) K1 °थैरव, T1 °तत्त्व (for °त्थ त्व) — b) B2 हि तत्, Dn D4 6 तु तत्, D5 मम (for तु मे) — c) T1 G1 2 4 M2 मे न प्रणश्येत्, T2 G3 न प्रणश्येत (for मे न नश्येत) — d) Ś1 मा, B1 मे (for मां) K3 4 D2 प्रणोदय S तपस्तदुपधारय

**22** b) B D (except D1-3 5) ऋतोर् (for ऋतौ) — c) K B2 Dc D1 2 5 S इच्छेय (for इच्छामि)

**23** D4 om (hapl) $23^{ab}$ — b) K1 2 B2 Dn D6 G1 कथचन (for तपो°) — c) N (except D3 5) एव (for एतत्) Ś1 K1 2 4 D1 2 मे त्व, K3 एतद्; D3 5 सर्व (for तु मे) Dn3 यथाकाल, D3 5 °तत्त्व — d) Ś1 K3 4 D1-3 5 सपादयसि तत्कुरु

**24** a) S1 K D1-3 5 तथैष (Ś1 K1 °व) (for यद्येष) — After $24^{a}$, Ś1 K D1 2 3 (om line 2) 5 6 (marg sec m) ins

485* मम धर्मविलोपक ।
कामे कृते चरिष्यामि धर्म दृष्ट यथास्मृति ।
यद्यय चेप्सित काम°

— c) Dn D4 5 G1 हर्तुं (for हन्त) — d) Ś1 K D1-3 धर्मम् (for कामम्)

Colophon — *Major parvan* Ś1 K1 2 Dn3 T G3-4 M1 आरण्य — *Sub parvan* T1 तीर्थयात्रा Omitting sub parvan name, K3 4 B2 D1-3 5 G1 mention only लोमशतीर्थयात्रा (K4 B2 D5 cont आगस्त्य), B1 2 Dc Dn1 n2 D4 6 only आगस्त्य, Dn3 only अगस्त्योपाख्यान — *Adhy name* B4 लोपामुद्रागस्त्यसवाद°, T2 G3 लोपामुद्रावाक्य, G1 लोपामुद्रापरिणय° — *Adhy no* (figures,

## ९६

लोमश उवाच ।

ततो जगाम कौरव्य सोऽगस्त्यो भिक्षितुं वसु ।
श्रुतर्वाणं महीपालं यं वेदाभ्यधिकं नृपैः ॥ १
स विदित्वा तु नृपतिः कुम्भयोनिमुपागमत् ।
विषयान्ते सहामात्यः प्रत्यगृह्णात्सुसत्कृतम् ॥ २
तस्मै चार्घ्यं यथान्यायमानीय पृथिवीपतिः ।
प्राञ्जलिः प्रयतो भूत्वा पप्रच्छागमनेऽर्थिताम् ॥ ३

अगस्त्य उवाच ।

वित्तार्थिनमनुप्राप्तं विद्धि मां पृथिवीपते ।
यथाशक्त्यविहिंसान्यान्संविभागं प्रयच्छ मे ॥ ४

लोमश उवाच ।

तत आयव्ययौ पूर्णौ तस्मै राजा न्यवेदयत् ।
अतो विद्वन्नुपादत्स्व यदत्र वसु मन्यसे ॥ ५
तत आयव्ययौ दृष्ट्वा समौ सममतिर्द्विजः ।
सर्वथा प्राणिनां पीडामुपादानादमन्यत ॥ ६
स श्रुतर्वाणमादाय वध्र्यश्वमगमत्ततः ।
स च तौ विषयस्यान्ते प्रत्यगृह्णाद्यथाविधि ॥ ७
तयोरर्घ्यं च पाद्यं च वध्र्यश्वः प्रत्यवेदयत् ।
अनुज्ञाप्य च पप्रच्छ प्रयोजनमुपक्रमे ॥ ८

अगस्त्य उवाच ।

वित्तकामाविह प्राप्तौ विद्ध्यावां पृथिवीपते ।
यथाशक्त्यविहिंस्यान्यान्संविभागं प्रयच्छ नौ ॥ ९

लोमश उवाच ।

तत आयव्ययौ पूर्णौ ताभ्यां राजा न्यवेदयत् ।

---

words or both ) Dn1 (*sup lin* ) n2 97, Dn3 M2 98, D1 101, T G M1 96 — *Śloka no* Dn1 24, Dn2 D1 25

### 96

**1** $^{a}$) T2 G2–4 तत्रैव (for कौरव्य) — $^{b}$) Ś1 K1 2 धनम् (for वसु) — $^{c}$) D5 राजान श्रुतवर्माण

**2** $^{a}$) Ś1 K1 2 विदित्वा च, B1 त्वाथ, M1 °त्वैव T2 G2–4 स त विदित्वा नृपति — $^{b}$) Ś1 K D0 D1–3 5 यो निमुपस्थित — $^{cd}$) Ś1 K1 2 स च त विषयस्याते पूजयित्वा यथाविधि

**3** Ś1 K1 2 om $3^{ab}$ — $^{a}$) K3 4 तस्मादर्घं (sic), D2 तस्य चार्घ्यं, D5 तस्मा अर्घं — $^{b}$) K3 4 D0 D1–3 5 M2 उपहृत्य (K4 °पात्य; D0 गृह्य; M2 उपानीय) महीपति — $^{c}$) B2 D0 S (except G1) प्रणतो (for °य ) — $^{d}$) Ś1 K D0 D1–3 5 आगमनक्रिया; T2 G2–4 आगमने द्विज — After 3, M2 ins

486* किमर्थमागमो ब्रह्मन्धन्योऽस्म्यागमनेन ते ।

**4** $^{a}$) Ś1 K D0 D1–3 इह (K3 4 अह) (for अनु ) — $4^{cd}$=(var ) $9^{cd}$ — $^{c}$) Ś1 D3 °शक्त्या°; K3 °मद° (for शक्त्य°)

**5** $^{b}$) T2 G2–4 राजा तस्मै (by transp ) — $^{c}$) Ś1 K1 3 B4 D5 T1 ततो (for अतो) T2 G2–4 ततो ज्ञात्वा समादत्स्व — $^{d}$) Ś1 K1 3 4 D1–3 बहु (for वसु) T1 यदन्यत्राधिक वसु, T2 G2–4 यदत्र व्यतिरिच्यते, G1 M यद श्राभ्यधिकं वसु

**6** $^{b}$) S1 तत्तत् (for समौ)

**7** $^{a}$) D5 T2 G3 त (for स) G2 4 श्रुतर्वाणमथादाय — $^{b}$) K1 B1 2 4 D0 Dn D4 6 T2 G3 ब्रह्मश्वम्; T1 G1 M2 वाध्र्यश्वम्; G2 4 वाध्रीयम्

**8** M1 om (hapl ) $8^{c}$–$13^{b}$ — $^{a}$) K3 4 तयोरर्धं; B4 ततस्त्वर्घ्यं, D1 2 ततश्चार्घं; T1 G1 2 4 तत सोर्घ्यं Ś1 K1 4 D1 2 राज्य (for पाद्य) — $^{b}$) MSS ब्रह्मश्व, वाध्र्यश्व, वाध्रीय (as in 7) — G1 om (hapl ) $8^{c}$–$10^{b}$ — *After* 8, G2 4 ins

487* वद काम मुनिश्रेष्ठ धन्योऽस्म्यागमनेन ते ।

**9** G1 M1 om 9 (cf v l 8) — $9^{cd}$=(var ) $4^{cd}$ — $^{c}$) Ś1 K1–3 D3 यथाशक्त्या° — $^{d}$) K3 B2 D3–5 G4 मे (for नौ)

**10** G1 om $10^{ab}$, M1 om 10 (cf v l 8) — $10^{ab}$ =(var ) $5^{ab}$ — $^{b}$) Ś1 K D0 D1 2 M2 राजा ताभ्या (by transp ), D3 5 तयो राजा — $^{cd}$) B1 4 Dn D4 6 T G3 अतो (for ततो) K1 2 तु गृह्णाति, B Dn D4 6 T2 G3 तु (T2 G3 तु) गृहीत; T1 समादाय (for °दत्ता) K1 2 व्यतिरिच्यसे; G1 [अ]भ्यतिरि° Ś1 K3 4 D0 D1–3 5 M2

ततो ज्ञात्वा समादत्तां यदत्र व्यतिरिच्यते ॥ १०
तत आयव्ययौ दृष्ट्वा समौ सममतिर्द्विजः ।
सर्वथा प्राणिनां पीडामुपादानादमन्यत ॥ ११
पौरुकुत्सं ततो जग्मुस्त्रसदस्युं महाधनम् ।
अगस्त्यश्च श्रुतर्वा च वध्र्यश्वश्च महीपतिः ॥ १२
त्रसदस्युश्च तान्सर्वान्प्रत्यगृह्णाद्यथाविधि ।
अभिगम्य महाराज विषयान्ते सवाहनः ॥ १३
अर्चयित्वा यथान्यायमिक्ष्वाकू राजसत्तमः ।
समाश्वस्तांस्ततोऽपृच्छत्प्रयोजनमुपक्रमे ॥ १४

अगस्त्य उवाच ।

वित्तकामानिह प्राप्तान्विद्धि नः पृथिवीपते ।
यथाशक्त्यविहिंस्यान्यान्संविभागं प्रयच्छ नः ॥ १५

लोमश उवाच ।

तत आयव्ययौ पूर्णौ तेषां राजा न्यवेदयत् ।
अतो ज्ञात्वा समादद्ध्वं यदत्र व्यतिरिच्यते ॥ १६
तत आयव्ययौ दृष्ट्वा समौ सममतिर्द्विजः ।
सर्वथा प्राणिनां पीडामुपादानादमन्यत ॥ १७
ततः सर्वे समेत्याथ ते नृपास्तं महामुनिम् ।
इदमूचुर्महाराज समवेक्ष्य परस्परम् ॥ १८
अयं वै दानवो ब्रह्मन्निल्वलो वसुमान्भुवि ।
तमभिक्रम्य सर्वेऽद्य वयं याचामहे वसु ॥ १९
तेषां तदासीद्रुचितमिल्वलस्योपभिक्षणम् ।
ततस्ते सहिता राजन्निल्वलं समुपाद्रवन् ॥ २०

इति श्रीमहाभारते आरण्यकपर्वणि षण्णवतितमोऽध्यायः ॥ ९६ ॥

---

यदत्र व्यतिरिक्तं वै तेन कार्यं प्रवर्त(D$_{5}$ D$_{5}$ °र्त्य)ता K$_{1}$ repeats 10$^{cd}$ with v l as in Ś$_{1}$ above (reading ह्यतिरिक्त)

**11** 11=6 T$_{2}$ G$_{3}$ M$_{1}$ om 11 (for M$_{1}$ cf. v l 8) — $^{b}$) T$_{1}$ G$_{1}$ $_{2}$ $_{4}$ M$_{2}$ तदा (for द्विज°) — $^{d}$) D$_{1}$ $_{2}$ अपश्यताम्, T$_{1}$ M$_{2}$ अमन्यताम्, G$_{2}$ $_{4}$ विचिन्त्य च (for अमन्यत)

**12** M$_{1}$ om 12 (cf v l 8) — $^{a}$) Ś$_{1}$ K$_{1}$ $_{2}$ B$_{1}$ Dc D$_{3}$ पौरकुत्स, K$_{3}$ पौरकुत्स्य, K$_{4}$ पौरुकुर्त्सि, D$_{1}$ पुरुकुत्स, D$_{2}$ पौरुकुत्सु, T$_{1}$ G$_{2}$ M$_{2}$ पौरुकुत्स्य — $^{c}$) Ś$_{1}$ K$_{1}$ $_{2}$ [अ]य (for च) Ś$_{1}$ K$_{1}$ $_{2}$ श्रुतर्वाणो (for °र्वा च) — $^{d}$) MSS ब्रध्नश्व, वाध्र्यश्व, वाध्रीय etc (as in 7, 8) Ś$_{1}$ स (for च)

**13** M$_{1}$ om 13$^{ab}$ (cf v l 8) — $^{a}$) Ś$_{1}$ K B Dn D$_{1}$ $_{4}$ $_{6}$ M$_{2}$ तु, T$_{2}$ G$_{2-4}$ स (for च) B Dn D$_{1}$ $_{4}$ $_{6}$ दृष्ट्वा (for सर्वान्) — $^{b}$) G$_{2}$ $_{4}$ पर्यै° (for प्रत्य°) — $^{d}$) B Dn D$_{4}$ $_{6}$ महामना, T$_{1}$ G$_{1}$ M$_{1}$ स चाहत, T$_{2}$ G$_{2-4}$ स तान्नृप (for सवा°)

**14** $^{b}$) T$_{2}$ G$_{2-4}$ ऐक्ष्वाको (for इक्ष्वाकू) — $^{c}$) B$_{1}$ $_{3}$ $_{4}$ Dc Dn D$_{1}$ $_{4}$ $_{6}$ समस्ताश्च, D$_{5}$ समासीनान्, M$_{1}$ समाश्वस्तौ (for °श्वस्तान्)

**15** 15=(var) 4, 9 — $^{c}$) Ś$_{1}$ K$_{2}$ $_{3}$ D$_{3}$ $_{5}$ यथाशक्त्या°

**16** 16=(var) 10 — All MSS except B$_{4}$ Dn D$_{1}$ G$_{1}$ om the ref D$_{5}$ om 16 — $^{b}$) K$_{3}$ (by transp) राजा तेषा, S तेभ्यो (M$_{1}$ ताभ्या) राजा — B$_{3}$ om 16$^{cd}$ — $^{c}$) N (B$_{3}$ D$_{5}$ om) M$_{2}$ एतज, T$_{2}$ G$_{1}$ $_{3}$ ततो (for अतो) N (B$_{3}$ D$_{5}$ om) M$_{2}$ ह्युपा(M$_{2}$ [अ]भ्युपा)दध्व (K °दस्व, D$_{2}$ °दत्त) (for समादद्ध्व) — $^{d}$) Ś$_{1}$ K Dc D$_{2}$ $_{3}$ यदन्यद् K$_{1}$ $_{2}$ अति°, T$_{1}$ ह्यति° (for व्यति°)

**17** 17=6, 11 — $^{b}$) M$_{1}$ तदा (for द्विज°) T G तस्यापि स मुनिस्तदा (G$_{1}$ स तस्य मुनिसत्तम°) — $^{d}$) M °पश्य° (for °मन्य°)

**18** $^{a}$) B$_{4}$ समेत्याशु, M$_{1}$ समेतास्ते — $^{b}$) Ś$_{1}$ K Dc D$_{1}$ $_{2}$ तपोधन (K$_{4}$ °ना) (for महा°) M$_{1}$ नृपास्ते मुनिसत्तम

**19** $^{a}$) Ś$_{1}$ K$_{2}$ $_{3}$ D$_{1-3}$ $_{5}$ हि (for वै) — $^{b}$) T$_{1}$ धनवान् (for वसुमान्) T$_{2}$ G M$_{1}$ धनवा(G$_{1}$ बलवा, M$_{1}$ वसुमा)निल्वलो भुवि — $^{c}$) Ś$_{1}$ K$_{1-3}$ D$_{5}$ उप°; K$_{4}$ B Dn D$_{6}$ अति°; D$_{3}$ अप° (for अभि°) D$_{1}$ $_{2}$ G$_{2}$ सर्वेद्य (for सर्वेऽद्य) — $^{d}$) Dn$_{1}$ n$_{2}$ चार्था (for याचा)

**20** D$_{5}$ om 20 — Before 20, K$_{4}$ Dn D$_{1}$ S (except T$_{1}$ G$_{3}$) ins लोमश उ° (resp लोमश°), B Dc D$_{4}$ $_{6}$ ins वैश° उ° — $^{a}$) Ś$_{1}$ रुदितम्, K$_{1}$ $_{4}$ B$_{1}$ Dc$_{2}$ Dn D$_{1}$ $_{2}$ S (except M$_{1}$) उचितम् (for रुचितम्) — $^{b}$) Ś$_{1}$ B Dc Dn D$_{4}$ $_{6}$ [ए]व, K$_{1}$ $_{2}$ [उ]त; K$_{3}$ [इ]ति, K$_{4}$ M$_{1}$ [अ]थ; T G$_{2-4}$ च (for [उ]प)

Colophon — *Major parvan* Ś$_{1}$ K$_{2}$ Dn$_{2}$ T G$_{2-4}$ M$_{1}$ आरण्य — *Sub parvan* D$_{3}$ T$_{1}$ तीर्थयात्रा Omitting sub parvan name, K$_{3}$ $_{4}$ B$_{2}$ D$_{1}$ $_{2}$ $_{5}$ mention only लोमशतीर्थयात्रा (K$_{4}$ B$_{2}$ D$_{5}$ cont आगस्त्य); B$_{1}$ $_{3}$ $_{4}$ Dc

९७

लोमश उवाच ।

इल्वलस्तान्विदित्वा तु महर्षिसहितान्नृपान् ।
उपस्थितान्सहामात्यो विषयान्तेऽभ्यपूजयत् ॥ १
तेषां ततोऽसुरश्रेष्ठ आतिथ्यमकरोत्तदा ।
स संस्कृतेन कौरव्य भ्रात्रा वातापिना किल ॥ २
ततो राजर्षयः सर्वे विषण्णा गतचेतसः ।
वातापिं संस्कृतं दृष्ट्वा मेषभूतं महासुरम् ॥ ३
अथाब्रवीदगस्त्यस्तान्राजर्षीन्नृषिसत्तमः ।
विषादो वो न कर्तव्यो अहं भोक्ष्ये महासुरम् ॥ ४
धुर्यासनमथासाद्य निषसाद महामुनिः ।
तं पर्यवेषद्दैत्येन्द्र इल्वलः प्रहसन्निव ॥ ५
अगस्त्य एव कृत्स्नं तु वातापिं बुभुजे ततः ।
भुक्तवत्यसुरोऽऽह्वानमकरोत्तस्य इल्वलः ॥ ६
ततो वायुः प्रादुरभूदगस्त्यस्य महात्मनः ।
इल्वलश्च विषण्णोऽभूद्दृष्ट्वा जीर्णं महासुरम् ॥ ७
प्राञ्जलिश्च सहामात्यैरिदं वचनमब्रवीत् ।
किमर्थमुपयाताः स्थ ब्रूत किं करवाणि वः ॥ ८
प्रत्युवाच ततोऽगस्त्यः प्रहसन्निल्वलं तदा ।

---

Dn D6 G1 only आगस्त्य (or अगस्त्य) — *Adhy no* (figures, words or both) Dn1 98, Dn3 M1 99, D1 102, T G M1 97 — *Śloka no* Dn D1 20

## 97

**1** a) Ś1 K1 2 विदित्वा च, D3 5 त्वाथ, M1 °त्वैव — Ś1 om 1c–2b — c) K4 Dc D1 2 5 उपतस्थे, D2 तस्थौ, G1 आगतास्तान् (for उपस्थितान्) — d) B Dn D4 6 T1 G1 ह्यपूजयत्, Dc [अ]भिपूज

**2** Ś1 om 2ab (cf v l 1) — ab) K1 2 4 B D (except D3 5 6) T2 G3 ins तु between the pādas (to avoid hiatus!) — B3 om (hapl) 2cd — d) B (B3 om) Dn D1 4 6 M2 तदा, T G M1 नृप (for किल)

**4** B3 om 4cd — b) Ś1 K1 2 मुनिसत्तम ; K3 द्विज°, D1 2 नृपसत्तम, D5 राजससदि, G1 राजसत्तम° — c) B1 M1 न भवद्भिर् (M1 by transp भवद्भिर्न) भय कार्यं, T G2–4 मा विषादो नृपा वो हि — d) Ś1 K1–3 B2–4 Dc D1 2 5 त्वह, K4 Dn D4 6 T1 G1 M2 ह्यह, D5 स्वय (for अह) B1 M1 सुरद्विष (for महा°)

**5** B3 om 5ab — a) B1 अतिक्रम्य, M अथाक्रम्य (for अथासाद्य) T G स धुर्यासनमाक्रम्य (G3 °मासाद्य) — b) B2 Dn D4–6 महानृषि° — c) Ś1 सन्न्यवेशद्, K1 2 प्रत्यवेक्ष्य ; B पर्यवेशद्

**6** a) K4 D1 G1 त कृत्स्न, B1 D3 कृत्स्न स, T2 G2 3 तत्कृत्स्न (for कृत्स्न तु) — After 6ab, T2 G2–4 ins

488* बहुधाशापि ते मेऽस्तीत्यवदद्भक्षयन्स्मयन् ।

[ G3 4 मेस्तीति अवदद् (for ते मेऽस्तीत्यवदद्) ] — d) All MSS except T G3 4 चेल्वल° (for इ), to avoid hiatus! — After 6, S ins

489* वातापे प्रतिबुध्यस्व दर्शयन्नलतेजसी ।
तपसा दुर्जयो यावदेष त्वा नातिवर्तते ।
ततस्तस्योदर भेत्तु वातापिर्वेगमाहरत् ।
तमबुध्यत तेजस्वी कुम्भयोनिर्महातपा ।
स वीर्यात्तपसोग्रस्तु ननर्द भगवानृषि ।
एष जीर्णोऽसि वातापे मया लोकस्य शान्तये ।
इत्युक्त्वा स्वकराग्रेण उदर समताडयत् ।
त्रिरेव प्रतिसरब्धस्तेजसा प्रज्वलन्निव ।

**7** a) D5 T2 G3 आसीद् (for अभूद्) — b) B2 4 Dn D4 6 अधस्तस्य (for अगस्त्यस्य) — After 7ab, K1 2 B Dc Dn D1 4 6 ins

490* शब्देन महता तात गर्जन्निव यथा घन ।
वातापे निष्क्रमस्वेति पुन पुनरुवाच ह ।
त प्रहस्याब्रवीद्राजन्नगस्त्यो मुनिसत्तम ।
कुतो निष्क्रमितु शक्तो मया जीर्णस्तु सोऽसुर ।

[ (L 1) B1 2 राजन् (for तात) K1 2 B1 2 महा° (for यथा) — (L 4) B1 Dc2 शक्तिर् (for शक्तो) K1 ततोसुर (for तु सोऽसुर ) ]
— c) B D (except D1–3 5) G4 तु (for च)

**8** a) B1 स प्राञ्जलि (for प्राञ्जलिश्च) B3 स सामात्यैर् ; S सहामात्य — c) Ś1 K2 D1 2 स्म (for स्थ)

**9** ab) B1 S (except M2) तमगस्त्यो (T1 अगस्त्योथ) हसन्वाक्यमिल्वल प्रत्यभाषत (B1 °पद्यत) — c) T G2–4 ईशोस्यसुर T1 G1 2 M2 विद्म G3 M त्वा — d) B1

ईशं ह्यसुर विद्मस्त्वां वयं सर्वे धनेश्वरम् ॥ ९
इमे च नातिधनिनो धनार्थश्च महान्मम ।
यथाशक्त्यविहिंस्यान्यान्संविभागं प्रयच्छ नः ॥ १०
ततोऽभिवाद्य तमृषिमिल्वलो वाक्यमब्रवीत् ।
दित्सितं यदि वेत्सि त्वं ततो दास्यामि ते वसु ॥ ११

अगस्त्य उवाच ।

गवां दश सहस्राणि राज्ञामेकैकशोऽसुर ।
तावदेव सुवर्णस्य दित्सितं ते महासुर ॥ १२
मह्यं ततो वै द्विगुणं रथश्चैव हिरण्मयः ।
मनोजवौ वाजिनौ च दित्सितं ते महासुर ।
जिज्ञास्यतां रथः सद्यो व्यक्तमेष हिरण्मयः ॥ १३

लोमश उवाच ।

जिज्ञास्यमानः स रथः कौन्तेयासीद्धिरण्मयः ।
ततः प्रव्यथितो दैत्यो ददावभ्यधिकं वसु ॥ १४
विवाजश्च सुवाजश्च तस्मिन्युक्तौ रथे हयौ ।
ऊहतुस्तौ वसून्याशु तान्यगस्त्याश्रमं प्रति ।
सर्वान्राज्ञः सहागस्त्यान्निमेषादिव भारत ॥ १५
अगस्त्येनाभ्यनुज्ञाता जग्मू राजर्षयस्तदा ।
कृतवांश्च मुनिः सर्वं लोपामुद्राचिकीर्षितम् ॥ १६

लोपामुद्रोवाच ।

कृतवानसि तत्सर्वं भगवन्मम काङ्क्षितम् ।
उत्पादय सकृन्मह्यमपत्यं वीर्यवत्तरम् ॥ १७

---

M1 धनार्थिन (for धने°)

**10** $^{a}$) B2 Dn D4 6 एते (for इमे) — $10^{cd}$ = 3 96 $15^{cd}$, cf ibid $4^{cd}$, $9^{cd}$ — $^{c}$) Ś1 K2 3 D5 6 यथाशक्त्या°

**11** $^{a}$) K4 D2 3 5 [ऽ]भिमान्य, B1 [ऽ]नुमान्य; D1 [ऽ]भिगम्य, T1 G3 4 M3 [ऽ]वमत्य, G1 [ऽ]पगत्य (for [ऽ]भिवाद्य) — $^{c}$) K3 S (except M1) ईप्सित (for दित्सित) T2 G यदिह ब्रूहि (for यदि वेत्सि त्व) K1 नो वेत्सि; K3 B1 Dc D1 2 T1 M मे वेत्सि, K4 D5 ते वेद्मि (for वेत्सि त्व) Ś1 K2 दित्सा मुने ममावेत्सि — $^{d}$) T1 तत्ते, T2 G तद्धि (for ततो) M दातास्मि (for दास्यामि) T1 [अ]ह (for ते)

**12** $^{a}$) K4 D2 3 S शत- (for दश) — $^{b}$) Ś1 G1 M1 वसु; M2 नृप (for ऽसुर) — $12^{cd}$=$13^{cd}$ — K2 om (hapl) $12^{c}$–$13^{d}$, K3 G1 om (hapl) $12^{cd}$

**13** K2 om $13^{abcd}$ (cf v l 12) — $^{b}$) S (except T1) रथ and °मय D5 चाथ (for चैव) — $13^{cd}$=$12^{cd}$ — Dn1 om (hapl) $13^{cdef}$, B1 D5 om $13^{cd}$ — $^{c}$) S (except G4 M1) महा° (for मनो°) T2 G2 3 द्वौ (for च) — After $13^{cd}$, S ins

491* लोमश ।
इल्वलस्तु मुनिं प्राह सर्वमस्ति यथात्थ माम् ।
रथं तु यमवोचो मा नैनं विद्म हिरण्मयम् ।
अगस्त्य ।
न मे वागनृता काचिदुक्तपूर्वा महासुर ।

[(L 1) T1 G3 4 M3 यदात्थ — After line 1, G2 ins

492* सर्वमेतत्प्रदास्यामि हिरण्यं गाश्च यद्धनम् ।

— (L 2) G1 रथस्तु स इ याचामो (for the prior half) T2 G3 4 नैव (for नैन) G2 असत्य व्याहृत मह्यमथो नैष हिरण्मय ]

— B1 D5 om $13^{ef}$ — $^{e}$) D3 विज्ञास्यता; S विज्ञायता (cf v l 14) S साधु (G4 M2 °धुर्) (for सद्यो) — $^{f}$) B2 3 D (except D2, Dn1 D5 om) व्यक्त (for व्यक्तम्) S एव (M1 अस्ति) (for एष)

**14** K2 B2 Dn D4–6 om $14^{ab}$ (with the ref) S1 K B Dc D1–3 om the ref — $^{a}$) S विज्ञाय° (for जिज्ञास्य°), cf v l 13 — $^{cd}$) B2–4 S स (for प्र)

**15** $^{a}$) B D4 विराज(B1 4 D4 जा)श्च सुराज(B1 4 D4 °जा)श्च, Dc D5 वि(D5 न)वाजाश्च सुवाजाश्च; Dn D1 6 विरावश्च सुरावश्च, D3 विचित्रौ च सुवर्णेन, T1 M विवाजिश्च सुवाजिश्च; T2 G1 3 4 व(G1 वि)वाजी च सुवाजी च; G2 ववाजिश्च सुवाजिश्च — $^{c}$) Ś1 K1 3 4 D3 4 सुबहून्या(K4 D3 4 °ना)शु, K3 चैव तानर्थान्, B Dc Dn3 D1 M2 सवसूना(B1 M2 °न्या)शु, Dn1 n3 D5 6 स वसूनाशु; D2 स बहूनाशु, T1 च वसून्याशु (for तौ वसून्याशु) — $^{d}$) Ś1 K1 2 B3 Dc D1–3 5 6 तान°, B1 2 4 Dn D4 M2 ताव, T1 तदा° (for तान्य°) — $^{e}$) K3 सहामात्यान्, D1 सहागस्त्यो — $^{f}$) Ś1 K Dc D1–3 इति (K4 एव) (for इव) — After 15, T2 G2–4 ins

493* इल्वलस्त्वनुगम्यैनमगस्त्यं हन्तुमैच्छत ।
भस्म चक्रे महातेजा हुंकारेण महासुरम् ।,

while M ins

494* मुनेराश्रममभ्यौ तौ निन्यतुर्वातरंहसौ ।

**17** K1 transp $17^{ab}$ and $17^{cd}$ — $^{cd}$) K2 तत्पादय (for उत्पा°) । D3 [अ]सकृन् (for सकृन्) Ś1 K1 3 °सम;

अगस्त्य उवाच ।
तुष्टोऽहमस्मि कल्याणि तव वृत्तेन शोभने ।
विचारणामपत्ये तु तव वक्ष्यामि तां शृणु ॥ १८
सहस्रं तेऽस्तु पुत्राणां शतं वा दशसंमितम् ।
दश वा शततुल्याः स्युरेको वापि सहस्रवत् ॥ १९
लोपामुद्रोवाच ।
सहस्रसंमितः पुत्र एको मेऽस्तु तपोधन ।
एको हि बहुभिः श्रेयान्विद्वान्साधुरसाधुभिः ॥ २०
लोमश उवाच ।
स तथेति प्रतिज्ञाय तया समभवन्मुनिः ।
समये समशीलिन्या श्रद्धावाञ्श्रद्दधानया ॥ २१
तत आधाय गर्भं तमगमद्वनमेव सः ।
तस्मिन्वनगते गर्भो ववृधे सप्त शारदान् ॥ २२
सप्तमेऽब्दे गते चापि प्राच्यवत्स महाकविः ।
ज्वलन्निव प्रभावेन दृढस्युर्नाम भारत ।
साङ्गोपनिषदान्वेदाञ्जपन्नेव महायशाः ॥ २३
तस्य पुत्रोऽभवदृषेः स तेजस्वी महानृषिः ।
स बाल एव तेजस्वी पितुस्तस्य निवेशने ।
इध्मानां भारमाजह्रे इध्मवाहस्ततोऽभवत् ॥ २४
तथायुक्तं च तं दृष्ट्वा मुमुदे स मुनिस्तदा ।
लेभिरे पितरश्चास्य लोकान्राजन्यथेप्सितान् ॥ २५
अगस्त्यस्याश्रमः ख्यातः सर्वर्तुकुसुमान्वितः ।
प्राह्रादिरेवं वातापिरगस्त्येन विनाशितः ॥ २६
तस्यायमाश्रमो राजन्रमणीयो गुणैर्युतः ।
एषा भागीरथी पुण्या यथेष्टमवगाह्यताम् ॥ २७

इति श्रीमहाभारते आरण्यकपर्वणि सप्तनवतितमोऽध्यायः ॥ ९७ ॥

---

$K_3$ सम° (for °सरम्) $M_1$ तश्चास्सकृन्मच्यपत्य स्वमुत्पादय वीर्यवत्

**18** $^{c}$) $D_{1, 2}$ अपत्येत्र, $D_{3, 5}$ $T_1$ °त्येषु (for °त्ये तु) — $^{d}$) $Ś_1$ K $D_c$ $D_{1-3, 5}$ तव ($K_{1, 2, 4}$ $D_{c2}$ $D_6$ शृणु) वक्ष्यामि यामह ($K_3$ $D_{1-3}$ तत्वत ; $D_5$ यत्वह), S वक्ष्यामि श्रूयता ($T_1$ शृणु तन्; M शृणुता) मम

**19** $^{b}$) S तत्सम तव ($G_1$ सम तप° *sic*) — $^{c}$) $K_{3, 4}$ $D_3$ तु; $D_{1, 2}$ च; $D_6$ ते; $M_1$ वै (for स्युर्) — $^{d}$) $Ś_1$ $K_{1-3}$ वाथ, $D_c$ $D_{1-3, 5}$ $M_1$ वास्तु (for वापि) $Ś_1$ $K_{2, 4}$ $B_1$ $D_{1, 2}$ वान्, $K_1$ $B_{2-4}$ $D_c$ $D_n$ $D_{4, 6}$ जित्; $K_3$ $D_{3, 5}$ °भाक् (for °वत्)

**20** $^{b}$) B D (except $D_{1-3, 5}$) $M_2$ [ऽ]प्यस्तु, $G_2$ वास्तु (for मेऽस्तु) — $^{c}$) K $D_{2, 3}$ $G_3$ $M_1$ [ऽ]पि (for हि)

**21** $K_2$ $B_4$ $D_n$ $D_{4, 6}$ $T_2$ $G_{3, 4}$ $M_2$ om the ref — $^{b}$) $B_3$ S समगमन् — After $21^{ab}$, $Ś_1$ $K_{1, 2}$ ins 495* (with v l)

**23** $^{a}$) $D_{4, 6}$ $T_2$ G वापि (for चापि) — $^{b}$) $Ś_1$ $K_{1, 2}$ प्रादुर्भूत्, $T_2$ $G_3$ प्रज्ञावान् (for प्राच्यवत्स) — $^{c}$) Some MSS प्रभावेण — $^{d}$) T G दृढच्युर् (for °स्युर्) — $^{e}$) $K_4$ $B_3$ $D_3$ निषदो (for °निषदान्) — $^{f}$) $K_{1, 3}$ $B_2$ D (except $D_{1-3, 5}$) जपन्निव B D (except $D_{c2}$ $D_{1, 2}$) $M_1$ महातपा°, T G मना°, $M_2$ °त्मना

**24** $^{a}$) $D_1$ राजन् (for ऋषे) $K_{1, 2}$ ऋषेस्तस्याभवत्पुत्र° (normal rhythm!) — $^{b}$) $B_{1, 2, 4}$ $D_n$ $D_{4, 6}$ महाद्विज $D_1$ तेजस्वी भगवानृषि°

**25** $^{a}$) $B_{1, 2, 4}$ $D_n$ $D_{4, 6}$ T G तु (for च) — B D (except $D_{1-3, 5}$) S ins after $25^{ab}$ $Ś_1$ $K_{1, 2}$, after $21^{ab}$

495* एव स जनयामास भारतापत्यमुत्तमम् ।
[ Cf 482* $Ś_1$ $K_{1, 2}$ स चाथ, $G_1$ $M_2$ एव स (for एव स) ]

**26** $^{a}$) $B_3$ S चाय (for ख्यात°) $B_{1, 2, 4}$ $D_n$ $D_{4, 6}$ तत ऊर्ध्वमय ख्यात° — $^{b}$) $B_{1, 2, 4}$ $D_n$ $D_{4, 6}$ स्वगस्त्यस्याश्रमो भुवि, $B_3$ S अत ऊर्ध्वं विशां पते, $D_c$ तत ऊर्ध्वमय भुवि — After $26^{ab}$, S ins

496* ख्यातो भुवि महाराज तेजसा तस्य धीमत ।

— $^{c}$) $Ś_1$ $K_2$ $T_2$ $G_{1, 3}$ M प्राह्लादि , $K_3$ प्रह्लादि°, $T_1$ $G_2$ प्रह्लादि M चापि (for एव) — After $26^{c}$, S ins

497* मध्यघ्नो दुष्टचेतन° ।
एव विनाशितो राजन्

— $^{d}$) B D (except $D_{1-3, 5}$) [उ]पशामित°, S महात्मना (for विना°)

**27** $^{b}$) $K_4$ $D_{1, 3, 5, 6}$ S (except $M_1$) रमणीय , $B_{2, 4}$ $D_n$ $D_4$ रमणीयै° $K_{1, 2}$ $G_4$ गुणान्वित ; $B_{2, 3}$ $D_{4, 6}$ $T_1$ गुणैर्वृत ; $G_1$ गुणोच्युत° — $^{c}$) $D_c$ गगा (for पुण्या) — $^{d}$) $K_{1, 2}$ रमणीयैर्गुणान्विता ($K_2$ °गुणैर्वृता), B $D_n$ $D_{4, 6}$ देवगाधर्वसेविता — After 27, $K_{1, 2}$ B D (except $D_{1-3, 5}$)

# ९८

युधिष्ठिर उवाच ।
भूय एवाहमिच्छामि महर्षेस्तस्य धीमतः ।
कर्मणां विस्तरं श्रोतुमगस्त्यस्य द्विजोत्तम ॥ १
लोमश उवाच ।
शृणु राजन्कथां दिव्यामद्भुताममानुषीम् ।
अगस्त्यस्य महाराज प्रभावममितात्मनः ॥ २
आसन्कृतयुगे घोरा दानवा युद्धदुर्मदाः ।
कालेया इति विख्याता गणाः परमदारुणाः ॥ ३
ते तु वृत्रं समाश्रित्य नानाप्रहरणोद्यताः ।
समन्तात्पर्यधावन्त महेन्द्रप्रमुखान्सुरान् ॥ ४
ततो वृत्रवधे यत्नमकुर्वंस्त्रिदशाः पुरा ।
पुरंदरं पुरस्कृत्य ब्रह्माणमुपतस्थिरे ॥ ५
कृताञ्जलींस्तु तान्सर्वान्परमेष्ठी उवाच ह ।
विदितं मे सुराः सर्वं यद्वः कार्यं चिकीर्षितम् ॥ ६
तमुपायं प्रवक्ष्यामि यथा वृत्रं वधिष्यथ ।
दधीच इति विख्यातो महानृषिरुदारधीः ॥ ७
तं गत्वा सहिताः सर्वे वरं वै संप्रयाचत ।
स वो दास्यति धर्मात्मा सुप्रीतेनान्तरात्मना ॥ ८
स वाच्यः सहितैः सर्वैर्भवद्भिर्जयकाङ्क्षिभिः ।
स्वान्यस्थीनि प्रयच्छेति त्रैलोक्यस्य हिताय वै ।
स शरीरं समुत्सृज्य स्वान्यस्थीनि प्रदास्यति ॥ ९
तस्यास्थिभिर्महाघोरं वज्रं संभ्रियतां दृढम् ।
महच्छत्रुहणं तीक्ष्णं षडश्रं भीमनिस्वनम् ॥ १०
तेन वज्रेण वै वृत्रं वधिष्यति शतक्रतुः ।
एतद्वः सर्वमाख्यातं तस्माच्छीघ्रं विधीयताम् ॥ ११
एवमुक्तास्ततो देवा अनुज्ञाप्य पितामहम् ।

---

ins a passage given in App I (No 14)

Colophon — *Major parvan* Ś1 K1 2 Dn2 T G2-4 M1 आरण्य — *Sub parvan* B3 T1 G1 तीर्थयात्रा (T1 cont अगस्त्य) Omitting sub parvan name, K1-3 D3 mention only आगस्त्य (or अगस्त्य), K4 B2 Dc Dn D1 2 4-6 लोमशतीर्थयात्रा (K4 Dc D5 cont आगस्त्य) — *Adhy name* S1 K1 2 वातापिवध°, B4 रामोपाख्यान, Dn2 आगस्तिवातापिभक्षण, T G1 3 इध्मवाहोत्पत्ति — *Adhy no* (figures, words or both) Dn1 (*sup lin*) n3 99, Dn3 M2 100, D1 103, T G M1 98 — *Śloka no* Dn1 n3 71, Dn2 33, D1 70

## 98

2 d) B2 Dn D4 6 G4 अमितौजस°; D5 अतिमानुष° (for अमितात्मन )

3 a) Ś1 K D1-3 5 राजन्, Dc तात (for घोरा) — c) S1 K1 2 कालेय इति विख्यातो, B D (except D1-3 5) G4 कालकेया इति ख्याता° — d) Ś1 K1 2 गण° °दारुण°

4 a) D1 2 तत्र (for ते तु) Ś1 K B1 °साद्य (for °श्रित्य)

6 a) K4 D1 2 °लीन्सुरान्, T2 G3 ल्पिटान् (for °लींस्तु तान्) G1 दिव्यान् (for सर्वान्) — b) Dc परमेष्ठिम्, G1 2 M परमेष्ठिर्, G4 प्रजापतिर् (for परमेष्ठी) K D2 3 5 [अ]भ्युवाच, B Dn D4 6 [इ]त्युवाच, T1 जगाद, T2 G3 मुवाच (for उवाच) — c) B1 2 D1 2 3 G2 सर्वे (for सर्वं)

7 ab) Ś1 K1 2 तन्नो° (for तमु°), and येन (for यथा)

8 b) Ś1 K1 2 यूय प्र , K3 च सम°, D1 2 विप्र प्र° (for वै सप्र°) — c) D1 2 वै (for वो)

9 c) S1 K1 2 दधीचास्थीन् (for स्वान्य°) — e) T1 स्वशरीरात्, T2 G1 3 4 M2 शरीरास्स (for स शरीर ) D2 5 G2 M2 परित्यज्य (for समु )

10 b) Ś1 K2 सभ्रियते, K1 B1 2 4 Dn1 n3 D1 4-6 सस्क्रियता, K4 सश्रयता, D3 सपाद्यता — c) Ś1 K1 2 °हन (for °हण) B Dc Dn D4 6 M घोर, D1 2 तीव्र, T G भीम (for तीक्ष्ण) — d) K2 4 D3 5 पडस्र, K3 M2 पढश्रिं, B Dc Dn D4 पडस्त्रि, D1 2 G3 पडस्र, D5 पढस्त्रिं; G1 पडश्रु D1 2 तीव्र (for भीम) Ś1 K1 2 -विक्रम (for -निस्वनम्)

11 K3 om 11 — b) Dc D3 हनि° (for वधि°)

12 c) S1 K Dc D1-3 शतक्रतु (for नारा°)

13 b) K4 D3 5 °वृते, B2 °चित, T2 G M1 °युत (G1

नारायणं पुरस्कृत्य दधीचस्याश्रमं ययुः ॥ १२
सरस्वत्याः परे पारे नानाद्रुमलतावृतम् ।
षट्पदोद्गीतनिनदैर्विघुष्टं सामगैरिव ।
पुंस्कोकिलरवोन्मिश्रं जीवं जीवकनादितम् ॥ १३
महिषैश्च वराहैश्च सृमरैश्चमरैरपि ।
तत्र तत्रानुचरितं शार्दूलभयवर्जितैः ॥ १४
करेणुभिर्वारणैश्च प्रभिन्नकरटामुखैः ।
सरोवगाढैः क्रीडद्भिः समन्तादनुनादितम् ॥ १५
सिंहव्याघ्रैर्महानादान्नदद्भिरनुनादितम् ।
अपरैश्चापि संलीनैर्गुहाकन्दरवासिभिः ॥ १६
तेषु तेष्ववकाशेषु शोभितं सुमनोरमम् ।
त्रिविष्टपसमप्रख्यं दधीचाश्रममागमन् ॥ १७
तत्रापश्यन्दधीचं ते दिवाकरसमद्युतिम् ।
जाज्वल्यमानं वपुषा यथा लक्ष्म्या पितामहम् ॥ १८
तस्य पादौ सुरा राजन्नभिवाद्य प्रणम्य च ।
अयाचन्त वरं सर्वे यथोक्तं परमेष्ठिना ॥ १९

ततो दधीचः परमप्रतीतः
सुरोत्तमांस्तानिदमभ्युवाच ।
करोमि यद्वो हितमद्य देवाः
स्वं चापि देहं त्वहमुत्सृजामि ॥ २०
स एवमुक्त्वा द्विपदां वरिष्ठः
प्राणान्वशी स्वान्सहसोत्ससर्ज ।
ततः सुरास्ते जगृहुः परासो-
रस्थीनि तस्याथ यथोपदेशम् ॥ २१
प्रहृष्टरूपाश्च जयाय देवा-
स्त्वष्टारमागम्य तमर्थमूचुः ।
त्वष्टा तु तेषां वचनं निशम्य
प्रहृष्टरूपः प्रयतः प्रयत्नात् ॥ २२
चकार वज्रं भृशमुग्ररूपं
कृत्वा च शक्रं स उवाच हृष्टः ।
अनेन वज्रप्रवरेण देव
भस्मीकुरुष्वाद्य सुरारिमुग्रम् ॥ २३

---

युते) (for वृतम्) — G4 om $13^{c}$–$17^{b}$ — $^{c}$) M °निनद — $^{d}$) T G (G4 om) M2 स (for वि) M सारसैरपि (for सामगै) — $^{f}$) Ś1 K1 2 D3 5 जीव (for जीव)

**14** G4 om 14 (cf v l 13) — $^{b}$) D5 शूकरैश्च, T2 G2 3 भ्रमरैश्च, G1 कोकिलैर् (for सृमरैश्च) Ś1 K3 चामरैर्, G1 भ्रमरैर् (for चमरैर्) M2 सृमरैश्च सशबरै° — $^{c}$) Ś1 K D2 5 चरितै° — $^{d}$) S (except M1, G4 om) मृगेंद्र°

**16** T1 G1 4 om 16 (for G4 cf v l 13), K2 B1 3 D1 2 G3 om $16^{ab}$ Dc1 D4 transp 15 and 16, T2 G3 transp $16^{ab}$ and $16^{cd}$ — $^{a}$) Dn1 n2 D4 6 सिंहैर् (for सिंह) T2 G3 व्याघ्र- (for °व्याघ्रैर्) K1 D3 °नादैर्; D5 M1 नाद; T2 G3 नागैर् (for °नादान्) — $^{b}$) T2 G3 महद्भिर् (for नदद्भिर्) — $^{c}$) Ś1 चमरै; K1 2 D5 चामरै°; Dc पामरै (for अपरै) Ś1 K1 2 चानु° (for चापि) — $^{d}$) K4 B D (except D3 5) शायिभि (Dc2 गामिभि)

**17** G4 om $17^{ab}$ (cf v l 13) — $^{b}$) Ś1 K2 3 नादित K4 D3 5 T2 G (G4 om) M सुमनोहर — $^{c}$) B1 3 त्रिपिष्टप, T2 G सद प्रख्य — $^{d}$) S (except M1) आगता° (for आगमन्)

**18** $^{d}$) S साक्षात् (for लक्ष्म्या)

**20** $^{c}$) T2 G2 3 तद्वो (for यद्वो) — $^{d}$) K4 B2 4 Dn D1 4 6 स्वयम्, B3 इह (for त्वहम्)

**21** $^{b}$) K4 D1 2 स्वयमु° (for सहसो) — $^{cd}$) Ś1 K Dc D1–3 5 सुरास्ततोऽस्थीनि गतायुषस्ते यथोपजोषं जगृहुः स्म तस्य

**23** $^{b}$) Ś1 K Dc D2 3 5 °वीर्यं (for °रूप) — $^{b}$) Ś1 K2 अब्रवीत्प्रहृष्ट° (metrically bad!), T2 G2–4 समुवाच हृष्ट° — $^{c}$) Ś1 K1–3 D1 2 शस्त्र° (for वज्र°) K शक्र, D3 5 वीर (for देव)

**24** G4 om $24^{ab}$ — $^{a}$) D1 2 सुख स्व, D5 सुखी स्व (for सुख वै) K3 त (for वै) — $^{b}$) Ś1 K1 2 वरिष्ठ; K4 Dc Dn2 D1 2 5 S (except G1, G4 om) दिविस्थ° — Ś1 om $24^{cd}$ — $^{c}$) K4 B1 2 4 Dn D1 3 4 6 सु (for स) B D (except D1–3 5) सद् (for तु) — $^{d}$) K3 [ऽ]भिगृ, B Dc Dn ह्यगृ°; D5 [ऽ]न्वगृ; T2 G2–4 स्वगृ° (for ऽभ्यगृ°) G1 प्रहृष्टरूप° प्रथितो ह्यगृह्णात्

Colophon — *Major parvan* Ś1 K1 2 Dn3 T G2–4 M1 आरण्य — *Sub parvan* T1 तीर्थयात्रा Omitting sub parvan name, K1 3 4 Dc Dn3 D1 3 mention only

ततो हतारिः सगणः सुखं वै
प्रशाधि कृत्स्नं त्रिदिवं दिविष्ठः ।
त्वष्ट्रा तथोक्तः स पुरंदरस्तु
वज्रं प्रहृष्टः प्रयतोऽभ्यगृह्णात् ॥ २४

इति श्रीमहाभारते आरण्यकपर्वणि अष्टनवतितमोऽध्यायः ॥ ९८ ॥

# ९९

लोमश उवाच ।
ततः स वज्री बलिभिर्दैवतैरभिरक्षितः ।
आससाद ततो वृत्रं स्थितमावृत्य रोदसी ॥ १
कालकेयैर्महाकायैः समन्तादभिरक्षितम् ।
समुद्यतप्रहरणैः सश‍ृङ्गैरिव पर्वतैः ॥ २
ततो युद्धं समभवद्देवानां सह दानवैः ।
मुहूर्तं भरतश्रेष्ठ लोकत्रासकरं महत् ॥ ३
उद्यतप्रतिपिष्टानां खड्गानां वीरबाहुभिः ।
आसीत्सुतुमुलः शब्दः शरीरेष्वभिपात्यताम् ॥ ४
शिरोभिः प्रपतद्भिश्च अन्तरिक्षान्महीतलम् ।
तालैरिव महीपाल वृन्ताद्भ्रष्टैरदृश्यत ॥ ५
ते हेमकवचा भूत्वा कालेयाः परिघायुधाः ।
त्रिदशानभ्यवर्तन्त दावदग्धा इवाद्रयः ॥ ६
तेषां वेगवतां वेगं सहितानां प्रधावताम् ।
न शेकुस्त्रिदशाः सोढुं ते भग्नाः प्राद्रवन्भयात् ॥ ७
तान्दृष्ट्वा द्रवतो भीतान्सहस्राक्षः पुरंदरः ।
वृत्रे विवर्धमाने च कश्मलं महदाविशत् ॥ ८
तं शक्रं कश्मलाविष्टं दृष्ट्वा विष्णुः सनातनः ।
स्वतेजो व्यदधाच्छक्रे बलमस्य विवर्धयन् ॥ ९
विष्णुनाप्यायितं शक्रं दृष्ट्वा देवगणास्ततः ।
स्वं स्वं तेजः समादध्युस्तथा ब्रह्मर्षयोऽमलाः ॥ १०
स समाप्यायितः शक्रो विष्णुना दैवतैः सह ।

लोमशतीर्थयात्रा ($K_{3-4}$ Dc $D_3$ cont आगस्त्य), likewise $B_3$ $D_{2-5}$ only आगस्त्य — *Adhy name* $K_1$ वृत्रवध°, $B_4$ वृत्रवधोपाख्यान, $T_2$ $G_3$ दधीचाख्यान, $G_1$ वज्रोत्पत्तिकथनं — *Adhy no* (figures, words or both) $Dn_1$ 100, $Dn_2$ $n_3$ $M_2$ 101, $D_1$ 104, T G $M_1$ 99 — *Śloka no* $Dn_1$ $n_3$ $D_1$ 25

## 99

1 $^{a}$) $G_{2-4}$ तु (for स) Ś1 K $G_1$ M सवज्रो (for स वज्री) B $D_{5-6}$ $G_2$ $M_2$ बलभिद् (for बलिभिर्) — $^{b}$) Some MSS देवतैर् $Dn_2$ $D_3$ परि- (for अभि-) $D_{1-2}$ देवै° समभिरक्षित° — $^{c}$) Ś1 $K_{1-2}$ Dc तदा (for ततो)
3 $^{b}$) $B_1$ अपि दानवै , $B_{2-4}$ Dn $D_{1-2-4-5}$ M दानवै° सह (by transp )
4 $^{a}$) $T_1$ $M_2$ °सृष्टाना, $T_2$ $G_{2-4}$ °विद्धाना — $^{c}$) $T_2$ $G_{2-3}$ तु (for सु-) — $^{d}$) $K_4$ $T_2$ (after corr ) $G_3$ °पातित°, $T_2$ (before corr ) $G_{2-4}$ °पातिना
5 $^{ab}$) N (except $K_{3-4}$) M ins अपि between the pādas (to avoid hiatus!) $B_3$ °तले (for °तलम्) — $^{c}$) B Dn $D_{4-6}$ महाराज (for मही°)
6 $^{a}$) Ś1 $K_{1-2}$ °वर्तेरन्, $D_5$ °वर्षंत, T G °धावत — $^{d}$) Ś1 K $B_2$ Dc $D_{3-5}$ इव द्रुमा° (for इवाद्रय°)
7 $^{b}$) $K_1$ महता च, $K_3$ सहता च, B D (except $D_{1-3}$) साभिमान (for सहि°) — $^{c}$) $S_1$ $D_1$ $T_1$ $G_4$ सहिता°, $K_{1-2}$ सहता° (for त्रिदशा°)
8 $^{a}$) $B_1$ [ऽ]पि, $Dc_2$ [ऽ]ति, M [ऽ]भि (for वि-) Ś1 K $D_{3-5}$ तु, $D_{1-2}$ [ऽ]पि (for च) — After 8, B D (except $D_{1-3-5}$) ins

498* कालेयभयसंत्रस्तो देवः साक्षात्पुरंदरः ।
जगाम शरणं शीघ्रं तं तु नारायणं प्रभुम् ।

9 $^{a}$) B Dn $D_{2-4-6}$ व्यदधत् — $^{d}$) Ś1 $K_{1-2}$ $D_3$ व्यवर्धयत् ($K_1$ °न्), $D_5$ [अ]भिवर्धयन्
10 $^{ab}$) Ś1 $K_2$ धिष्ठित, $K_1$ दिष्टित, B D (except $D_{1-3-5}$) गोपित (for [आ]प्यायित) S transp शक्र and दृष्ट्वा Ś1 K Dn $D_{1-2}$ $G_1$ तदा, Dc तथा (for तत°) — $^{c}$) Ś1 $K_{1-2}$ $B_{1-2-4}$ D (except $D_{1-3-5}$) सर्व (for स्व स्व) Ś1 $K_{1-2}$ $T_2$ $G_{1-3}$ समादद्युस, $K_{3-4}$ $Dc_1$ $D_1$ M सम($K_4$ °मा)दधुस,

ऋषिभिश्च महाभागैर्बलवान्समपद्यत ॥ ११

ज्ञात्वा बलस्थं त्रिदशाधिपं तु
　नना‍द वृत्रो महतो निनादान् ।
तस्य प्रणादेन धरा दिशश्च
　खं द्यौर्नगाश्चापि चचाल सर्वम् ॥ १२

ततो महेन्द्रः परमाभितप्तः
　श्रुत्वा रवं घोररूपं महान्तम् ।
भये निमग्नस्त्वरितं मुमोच
　वज्रं महत्तस्य वधाय राजन् ॥ १३

स शक्रवज्राभिहतः पपात
　महासुरः काञ्चनमाल्यधारी ।
यथा महाञ्शैलवरः पुरस्ता-
　त्स मन्दरो विष्णुकरात्प्रमुक्तः ॥ १४

तस्मिन्हते दैत्यवरे भयार्तः
　शक्रः प्रदुद्राव सरः प्रवेष्टुम् ।
वज्रं न मेने स्वकरात्प्रमुक्तं
　वृत्रं हतं चापि भयान्न मेने ॥ १५

सर्वे च देवा मुदिताः प्रहृष्टा
　महर्षयश्चेन्द्रमभिष्टुवन्तः ।
सर्वांश्च दैत्यांस्त्वरिताः समेत्य
　जघ्नुः सुरा वृत्रवधाभितप्तान् ॥ १६

ते वध्यमानास्त्रिदशैस्तदानीं
　समुद्रमेवाविविशुर्भयार्ताः ।
प्रविश्य चैवोदधिमप्रमेयं
　झषाकुलं रत्नसमाकुलं च ॥ १७

तदा स्म मन्त्रं सहिताः प्रचक्रु-
　स्त्रैलोक्यनाशार्थमभिस्मयन्तः ।
तत्र स्म केचिन्मतिनिश्चयज्ञा-
　स्तांस्तानुपायाननुवर्णयन्ति ॥ १८

तेषां तु तत्र क्रमकालयोगा-
　द्घोरा मतिश्चिन्तयतां बभूव ।
ये सन्ति विद्यातपसोपपन्ना-
　स्तेषां विनाशः प्रथमं तु कार्यः ॥ १९

लोका हि सर्वे तपसा ध्रियन्ते

---

B$_3$ स्वमादाय

**12** $^{a}$) Ś$_1$ K D$_{1-3}$ $_5$ त (for तु) — $^{b}$) M विविधान् (for महतो)　Ś$_1$ K$_1$ $_2$ [ऽ]थ (for नि) — $^{d}$) K$_3$ $_4$ [अ]भि (for [अ]पि)

**13** $^{b}$) Ś$_1$ K$_1$ $_3$ $_4$ D$_3$ घोरमुग्र, B$_2$ शब्दः D$_5$ °तर (for °रूप)　S (except M$_1$) घोरमुदग्रकल्प (for घोररूप महा)　Dc$_2$ श्रुत्वा च वाचमथ घोररूप — $^{c}$) Ś$_1$ K$_1$ $_2$ योद्धु (for भये)　Ś$_1$ B$_{3-4}$ D (except D$_2$ $_5$) त्वरितो (for त)

**14** $^{b}$) T$_2$ G$_3$ °माल (for °माल्य) — $^{c}$) N महा (for महान्) — $^{d}$) N (except K$_1$ $_2$ $_4$) वि (for प्र)

**15** $^{c}$) Ś$_1$ K Dn D$_1$ $_3$ च, B D$_4$ $_6$ स; Dc स्म; D$_3$ $_5$ तु (for न)　K$_1$ $_2$ शक्रस्य (for मेने स्व)　Ś$_1$ च; K$_3$ $_4$ D$_{1-3}$ $_5$ T$_1$ स, B Dc Dn D$_4$ $_6$ न (for स्व)　K$_1$ $_2$ B$_{2-4}$ Dn D$_{1-3}$ $_5$ $_6$ वि (for प्र) — $^{d}$) B Dc Dn D$_4$ $_6$ M$_1$ transp हत and भयात्　Ś$_1$ K D$_{1-3}$ $_5$ वृत्रं भयाच्चैव हतम (K$_4$ D$_{1-3}$ $_5$ हत स्व)पश्यत; M$_2$ वृत्रं भयाच्च निहतं न मेने

**16** $^{a}$) Ś$_1$ K$_1$ $_2$ सहिता° (for मुदि) — $^{b}$) D$_2$ T$_1$ G$_1$ $_2$ $_4$ अथ (for अभि) — After 16$^{ab}$, Ś$_1$ K$_1$ $_2$ read 18$^{cd}$, while S ins

499* वृत्रं हतं ददृशुः पृथिव्यां
　　वज्राहतं शैलमिवावकीर्णम् ।

— $^{c}$) Ś$_1$ K D$_2$ $_3$ M शेषान् (for सर्वान्)　T$_2$ G$_{1-3}$ M$_1$ तु (for च)

**17** $^{a}$) B D (except D$_{1-3}$) तैस् (B$_1$ $_3$ ते) त्रास्य° (for ते वध्य°)　B Dn D$_{4-6}$ समेतै° (for तदानीं) — $^{d}$) K$_2$ B D (except D$_2$ $_3$) G$_4$ नक्र°, K$_4$ वृत्र° (for रत्न°)

**18** $^{b}$) T$_1$ प्रयाता°, T$_2$ G °प्रयतात् (G$_1$ °प्रयुक्ता°), M$_1$ प्रवृत्ता°, M$_2$ प्रयता° (for °स्मयन्त) — Ś$_1$ K$_1$ $_2$ read 18$^{cd}$ after 16$^{ab}$ — $^{c}$) Ś$_1$ K$_1$ $_2$ तत° (for तत्र) — $^{d}$) Ś$_1$ K$_2$ नृप, K$_1$ $_3$ $_4$ B D (except D$_3$) उप, T$_1$ अभि (for अनु)　Ś$_1$ K B$_1$ D$_1$ $_3$ -वर्णयत (for वर्णयन्ति)

**19** D$_2$ om (hapl) 19$^{abc}$ — $^{a}$) Ś$_1$ K$_{1-3}$ D$_3$ $_5$ क्षय- (for क्रम)　K$_3$ S (except T$_1$ G$_1$) -योगकालाद् (for -काल‍योगाद्)

**20** T$_2$ G$_{2-4}$ read 20$^{ab}$ after 20$^{ef}$ — $^{b}$) B$_2$ $_3$ चरध्व; D$_3$ यत° (for त्वर°) — $^{c}$) K$_2$ B Dn D$_4$ $_6$ च; T$_1$ तु (for हि) — $^{f}$) A few MSS प्रणष्टेषु, and प्रणष्ट

तस्मात्त्वरध्वं तपसः क्षयाय ।
ये सन्ति केचिद्धि वसुंधरायां
तपस्विनो धर्मविदश्च तज्ज्ञाः ।
तेषां वधः क्रियतां क्षिप्रमेव
तेषु प्रनष्टेषु जगत्प्रनष्टम् ॥ २०
एवं हि सर्वे गतबुद्धिभावा
जगद्विनाशे परमप्रहृष्टाः ।
दुर्गं समाश्रित्य महोर्मिमन्तं
रत्नाकरं वरुणस्यालयं स्म ॥ २१

इति श्रीमहाभारते आरण्यकपर्वणि नवनवतितमोऽध्यायः ॥ ९९ ॥

## १००

लोमश उवाच ।
समुद्रं ते समाश्रित्य वारुणं निधिमम्भसाम् ।
कालेयाः संप्रवर्तन्त त्रैलोक्यस्य विनाशने ॥ १
ते रात्रौ समभिक्रुद्धा भक्षयन्ति सदा मुनीन् ।
आश्रमेषु च ये सन्ति पुण्येष्वायतनेषु च ॥ २
वसिष्ठस्याश्रमे विप्रा भक्षितास्तैर्दुरात्मभिः ।
अशीतिशतमष्टौ च नव चान्ये तपस्विनः ॥ ३
च्यवनस्याश्रमं गत्वा पुण्यं द्विजनिषेवितम् ।
फलमूलाशनानां हि मुनीनां भक्षितं शतम् ॥ ४
एवं रात्रौ स्म कुर्वन्ति विविशुश्चार्णवं दिवा ।
भरद्वाजाश्रमे चैव नियता ब्रह्मचारिणः ।
वाय्वाहाराम्बुभक्षाश्च विंशतिः संनिपातिताः ॥ ५
एवं क्रमेण सर्वांस्तानाश्रमान्दानवास्तदा ।
निशायां परिधावन्ति मत्ता भुजबलाश्रयात् ।
कालोपसृष्टाः कालेया घ्नन्तो द्विजगणान्बहून् ॥ ६
न चैनानन्वबुध्यन्त मनुजा मनुजोत्तम ।

Dc D2 S (except M1) हि (for the second म)
**21** $^{a}$) Ś1 K1 दैत्या (for सर्वे) — $^{b}$) D3 परम (for परम-) — $^{d}$) S1 K1 2 4 °लय च, Dc °लयस्य (for °लय स्म)
Colophon — *Major parvan* Ś1 K1 2 Dn2 D3 6 T G2–4 M1 आरण्य — *Sub-parvan* T1 तीर्थयात्रा, followed by अगस्त्यचरित Omitting sub-parvan name K3 4 Dn2 D3 mention only लोमशतीर्थयात्रा, followed by आगस्त्य, B Dc Dn1 D4–6 only आगस्त्य (*or* अगस्त्य), D1 2 only लोमशतीर्थयात्रा — *Adhy name* Ś1 G1 वृत्रवध — *Adhy no* (figures, words or both) Dn2 ns M2 102, D1 105, T G M1 100 — *Śloka no* Dn 23, D1 21

## 100

**1** $^{a}$) K3 समुद्रात्°, T G द्रात, M2 °द्राते Ś1 K (except K3) Dc D1–3 G4 °साद्य (for °श्रित्य) — $^{b}$) Ś1 K1 2 4 B1 2 Dn1 n2 D3 G1 वरुण, D5 वरुणि K3 B Dn1 ns D6 G4 निधिमभस T2 G3 वरुणालयमभसा — $^{c}$) Ś1 K1 2 Dc समवर्तत, K3 4 D1–3 5 समपद्यत; D4 6 T G1–3 सप्रवर्तंते M सप्रावर्तत कालेया°
**2** $^{a}$) B3 समतिक्रुद्धा, T G2 3 सहिता क्रुद्धा — $^{b}$) K1 2 महामुनीन्, T2 G2–4 सदा ऋषीन्
**3** $^{c}$) Ś1 K1 4 अशीतिं, K2 B D (except D2) अशीति° — $^{d}$) M नियता ब्रह्मचारिण° (= 5$^{d}$)
**4** $^{a}$) Dn आश्रमे (for आश्रम) !
**5** $^{a}$) Ś1 K2 प्रवर्तते, K1 प्रवर्तंतौ, Dc2 विकुर्वंति, T2 G2–4 प्रकुर्वंति (for स्म कु°) — After 5$^{ab}$, S ins
500* कालेयास्ते दुरात्मानो भक्षयन्तस्तपोधनान् ।
— $^{c}$) Ś1 Dn2 D4 भार (for भर°) — $^{f}$) Ś1 सर्वदेवता°, K1 सति देवता ; K3 4 Dc Dn2 D3 स निपूदिता°, B स (B1 तु)निसूदि°, D1 2 विनिपूदि°, G1 मनिवेशि°, G4 सुनि-पाति°
**6** D3 om (hapl ) 6$^{c}$–7$^{b}$ — $^{c}$) Ś1 K D1 2 पर्यधावन; B4 Dn D4 6 परिवाधते — $^{d}$) S समुद्राद्युपल्याश्रयात् (T1 श्रया°) — B3 om 6$^{e}$–8$^{c}$ — $^{f}$) Ś1 K D1 2 मुनि° (for द्विज°)

एवं प्रवृत्तान्दैत्यांस्तांस्तापसेषु तपस्विषु ॥ ७
प्रभाते समदृश्यन्त नियताहारकर्शिताः ।
महीतलस्था मुनयः शरीरैर्गतजीवितैः ॥ ८
क्षीणमांसैर्विरुधिरैर्विमज्जान्त्रैर्विसंधिभिः ।
आकीर्णैराचिता भूमिः शङ्खानामिव राशिभिः ॥ ९
कलशैर्विप्रविद्धैश्च स्रुवैर्भग्नैस्तथैव च ।
विकीर्णैरग्निहोत्रैश्च भूर्बभूव समावृता ॥ १०
निःस्वाध्यायवषट्कारं नष्टयज्ञोत्सवक्रियम् ।
जगदासीन्निरुत्साहं कालेयभयपीडितम् ॥ ११
एवं प्रक्षीयमाणाश्च मानवा मनुजेश्वर ।
आत्मत्राणपरा भीताः प्राद्रवन्त दिशो भयात् ॥ १२
केचिद्गुहाः प्रविविशुर्निर्झरांश्चापरे श्रिताः ।
अपरे मरणोद्विग्ना भयात्प्राणान्समुत्सृजन् ॥ १३
केचिदत्र महेष्वासाः शूराः परमदर्पिताः ।
मार्गमाणाः परं यत्नं दानवानां प्रचक्रिरे ॥ १४
न चैतानधिजग्मुस्ते समुद्रं समुपाश्रितान् ।
श्रमं जग्मुश्च परममाजग्मुः क्षयमेव च ॥ १५
जगत्युपशमं याते नष्टयज्ञोत्सवक्रिये ।
आजग्मुः परमामार्तिं त्रिदशा मनुजेश्वर ॥ १६
समेत्य समहेन्द्राश्च भयान्मन्त्रं प्रचक्रिरे ।
नारायणं पुरस्कृत्य वैकुण्ठमपराजितम् ॥ १७
ततो देवाः समेतास्ते तदोचुर्मधुसूदनम् ।

---

**7** D8 om 7ab, B2 om 7 (cf v l 6) — a) K3 4 B1 3 Dc D1 2 6 T1 चैतान्, T2 G2–4 वै तान् (for चैनान्) B2 अनु-, Dc M2 अव, G1 एव (for अन्व-) — b) Ś1 K Dc D1 2 5 मनुजाधिप (for °जोत्तम) — c) D5 S प्रवृत्ता° (for प्रवृत्तान्) D8 तास्तत्र, D6 ते तत्र, T G ते दैत्या°, M1 दैत्यास्ते, M2 दैतेया° (for दैत्यास्तान्) — d) Ś1 K1 आश्रमेषु (for तापसेषु) — After 7, S (except G1) ins

501* क्षयाय जगत क्रूरा° पर्यटन्ति स्म मेदिनीम् ।

**8** B2 om 8a (cf v l 6) — b) B1 3 D5 6 S नियमाहार Ś1 K1–3 °कर्षिता

**9** a) Ś1 K1 2 क्षीणवासैर्, G1 क्षतमासैर् (for क्षीणमासैर्) — b) K1 2 निर्मज्ज तैर्; K3 निर्मज्जाता; Dc विकपाटैर्, D1 3 विसृष्टांत्रैर्, T1 मज्जामात्रैर्, G2 निर्मज्जात्रि — c) Ś1 K2 4 D3 विकीर्णैर्; K1 विकर्णैर्, D1 2 आकीर्णा Ś1 K1 2 4 B2–4 Dc Dn D5–8 आवभौ; K3 B1 आवृता; D1 2 चास्थिभिर्, G1 रुचिरा (for आचिता) — d) K3 T2 G2–4 राजिभि° (for राशि )

**10** a) B1 चापविद्धैश्च; D6 विप्रभग्नैश्च — b) B1 च भारत (for तथैव च) — c) Ś1 K D1–3 5 विशीर्णैर्; B2 आकीर्णैर् — d) T G2–4 बभूव च (for भूर्बभूव) Ś1 K4 D3 5 समाकुला K1 2 बभूव वसुधावृता

**12** a) B4 Dn D6 स (for प्र-) Ś1 K D3 5 स्म, D1 2 M तु (for च) — d) Ś1 K3 D2 3 6 T1 G1 M प्र(D2 3 प्रा)द्रवति Ś1 K1–3 D1 5 T2 G2–4 दिशो दश

**13** a) Ś1 K1 गृहान्, B1 Dc2 T2 G2 3 M2 गुहा (for गुहा) — b) Ś1 K4 B Dc Dn D1 2 4 6 चापरे तथा, K1–3 D3 5 च तथापरे (for चापरे श्रिता) — c) Ś1 K1–3 च भयोद्विग्ना; M तद्भयादेव — d) Ś1 K1 2 4 D3 5 अवासृजन्, K3 T2 G2–4 समत्य° (for समुत्सृ°) M सहसासून्समत्यजन्

**14** a) Ś1 K Dc D1 2 M तत्र (for अत्र) — b) B Dn D4 6 परमहर्षिता — The portion of the text from परमदर्पिता° up to 3 104 18c is lost in G1 on a missing fol

**15** D1 om (hapl ) 15a–17b G1 missing (cf v l 14) — a) Ś1 K1–3 Dc1 D5 M चैनान् (for चैतान्) Ś1 K1–3 अनुजग्मुस्ते, T G2–4 M1 अभिजग्मु(M1 °ग्मु)स्ते — b) K2 समुपास्रतान्, D3 5 °पस्थितान् — c) Ś1 K1 2 जग्मुश्च S (except M2, G1 missing) श्रम च परम जग्मु° — d) K1 2 आजग्मु°, K4 सजग्मु , D1 न जग्मु (for आजग्मु°) D1 ते (for च)

**16** D2 om 16 (cf v l 15) G1 missing (cf v l 14) — b) Ś1 K1 2 °सज्ञो° (for °यज्ञो ) — c) K1 2 ते (for आ ) — d) S (G1 missing) मनुजाधिप (T1 °जा इव)

**17** D2 om 17ab (cf v l 15) G1 missing (cf v l 14) — a) Ś1 K D1 5 तु (for च) — After 17ab, B D (except D1–3 5) ins

502* शरण्य शरण देव नारायणमज विभुम् ।

— c) B D (except D1–3 5) तेभिगम्य (B1 Dc °त्वा) (for नारा ) K4 B Dn D1 2 4 6 नमस्कृत्य (for पुर°)

**18** G1 missing (cf v l 14) — a) B Dn D4 6 G2 समस्ता (for समेता ) — b) Ś1 K D2 3 5 G2 तमूचुर्, B1 तुष्टुवुर्; B3 Dc तत्रोचुर् — c) Ś1 K Dc D1–3 5 गोप्ता; B2–4 Dn D4 6 कर्ता (Dn2 भर्ता) (for पाता) B1 त्वं न कर्ता च स्रष्टा च — d) B Dn D4 6 M हर्ता (for

त्वं नः स्रष्टा च पाता च भर्ता च जगतः प्रभो ।
त्वया सृष्टमिदं सर्वं यच्चेङ्गं यच्च नेङ्गति ॥ १८
त्वया भूमिः पुरा नष्टा समुद्रात्पुष्करेक्षण ।
वाराहं रूपमास्थाय जगदर्थे समुद्धृता ॥ १९
आदिदैत्यो महावीर्यो हिरण्यकशिपुस्त्वया ।
नारसिंहं वपुः कृत्वा सूदितः पुरुषोत्तम ॥ २०
अवध्यः सर्वभूतानां बलिश्चापि महासुरः ।
वामनं वपुराश्रित्य त्रैलोक्याद्भ्रंशितस्त्वया ॥ २१
असुरश्च महेष्वासो जम्भ इत्यभिविश्रुतः ।
यज्ञक्षोभकरः क्रूरस्त्वयैव विनिपातितः ॥ २२
एवमादीनि कर्माणि येषां संख्या न विद्यते ।
अस्माकं भयभीतानां त्वं गतिर्मधुसूदन ॥ २३
तस्मात्त्वां देव देवेश लोकार्थं ज्ञापयामहे ।
रक्ष लोकांश्च देवांश्च शक्रं च महतो भयात् ॥ २४

इति श्रीमहाभारते आरण्यकपर्वणि शततमोऽध्यायः ॥ १०० ॥

## १०१

देवा ऊचुः ।
इतः प्रदानाद्वर्तन्ते प्रजाः सर्वाश्चतुर्विधाः ।
ता भाविता भावयन्ति हव्यकव्यैर्दिवौकसः ॥ १
लोका ह्येवं वर्तयन्ति अन्योन्यं समुपाश्रिताः ।

---

भर्ता) — $^{e}$) Ś1 K Dc D1 3 जगत (for इद) B Dn D3 4 6 विश्व; Dc D1 3 कृत्स्न (for सर्व) — $^{f}$) Dn3 G3 नेंगते, D1 3 T1 नेंगित, G4 नेगत (for °ति) K1 यच्चेंगे भ्यस्त्र नेंगते, M स्थावर जगम च यत् — After 18, S (G1 missing) ins

503* त्वय्येव पुण्डरीकाक्ष पुनस्तत्प्रविलीयते ।

**19** G1 missing (cf v l 14) — $^{a}$) D1 3 5 M3 सृष्टा (for नष्टा) — $^{b}$) Ś1 D1 3 समुद्रा°, T1 °द्र, G2 °द्रे (for °द्रात्) — D3 om 19$^{cd}$ and *repeats* 18$^{ef}$ in its place — $^{c}$) Ś1 वराह- (for वाराह) B Dn D4-6 T1 M वपुर् (for रूपम्) B Dn D4-6 M आश्रित्य (for आस्थाय)

**20** G1 missing (cf v l 14) — $^{b}$) B3 Dn D4 6 T2 G2-4 पुरा (for त्वया) — $^{c}$) D1 3 T1 G2 M1 नारसिंह-

**21** G1 missing (cf v l 14) B3 om 21–23 — $^{b}$) Ś1 K1 नाम, D6 चैव (for चापि) — $^{c}$) K4 D2 वपुरास्थाय, T2 G2-4 रूपमास्थाय

**22** B3 G4 om 22 (for B3 cf v l 21) G1 missing (cf v l 14) T1 om 22$^{cd}$ — $^{c}$) B1 जगत्- (for यज्ञ-) B1 क्रुद्धस, Dc D2 5 T2 G2 3 M शूरस (for क्रूरस)

**24** G1 missing (cf v l 14) G4 om 24$^{ab}$ — $^{a}$) Ś1 D1 3 त्व, K2 4 त्वा (for त्वां) Ś1 अपि, T1 M एव (for देव) — $^{c}$) B3 Dc D2 3 transp लोकाश्च and देवाश्च — After 24, T2 G2-4 M1 ins

504* शरणागतसत्राणे त्वमेकोऽसि दृढव्रत ।

[G2 M1 धृत° (for दृढ°)]

Colophon om in D1 3 G1 missing — *Major parvan* Ś1 K1 2 Dn2 T G2-4 M1 आरण्य — *Sub-parvan* Dc तीर्थयात्रा, followed by आगस्त्य Omitting sub parvan name, K2 B2 3 Dn2 n3 D4 5 mention only आगस्त्य, K3 4 D3 only लोमशतीर्थयात्रा, followed by आगस्त्य, T1 only अगस्त्यचरित — *Adhy name* B4 Dc वृत्रवधोपाख्यान — *Adhy no* (figures, words or both) Dn2 n3 M3 103, T G2-4 M1 101 — *Śloka no* Dn 26

## 101

☞ This adhy is missing in G1 (cf v l 3 100 14) The MS is mostly ignored here

**1** $^{a}$) S1 K1-3 B1 3 4 Dn D1 4-6 T2 G2 3 तव, K4 Dc D2 3 भवत् (for इत°) N (for B2 see below) T2 G2-4 प्रसादाद् (for प्रदानाद्) K2 4 B3 D (except D3 5) G2 वर्धते (for वर्तन्ते) B2 त्वत्प्रसादात्प्रवर्तते

**2** $^{a}$) K3 Dc प्रवर्तते; B Dn D1 4 6 विवर्धते, D5 वर्धयति (for वर्तयन्ति) — $^{b}$) To avoid the hiatus, S1 K1 2 तेन्योन्य, K4 B D (except D5) M1 ह्यन्योन्य (for अ ) — $^{c}$) K3 B1 3 त्वत्प्रभावान् — $^{d}$) =(var ) 5$^{d}$ B2 त्वया वै (for त्वयैव)

त्वत्प्रसादान्निरुद्विग्नास्त्वयैव परिरक्षिताः ॥ २
इदं च समनुप्राप्तं लोकानां भयमुत्तमम् ।
न च जानीम केनेमे रात्रौ वध्यन्ति ब्राह्मणाः ॥ ३
क्षीणेषु च ब्राह्मणेषु पृथिवी क्षयमेष्यति ।
ततः पृथिव्यां क्षीणायां त्रिदिवं क्षयमेष्यति ॥ ४
त्वत्प्रसादान्महाबाहो लोकाः सर्वे जगत्पते ।
विनाशं नाधिगच्छेयुस्त्वया वै परिरक्षिताः ॥ ५
विष्णुरुवाच ।
विदितं मे सुराः सर्वं प्रजानां क्षयकारणम् ।
भवतां चापि वक्ष्यामि शृणुध्वं विगतज्वराः ॥ ६
कालेय इति विख्यातो गणः परमदारुणः ।
तैश्च वृत्रं समाश्रित्य जगत्सर्वं प्रबाधितम् ॥ ७
ते वृत्रं निहतं दृष्ट्वा सहस्राक्षेण धीमता ।
जीवितं परिरक्षन्तः प्रविष्टा वरुणालयम् ॥ ८
ते प्रविश्योदधिं घोरं नक्रग्राहसमाकुलम् ।
उत्सादनार्थं लोकानां रात्रौ घ्नन्ति मुनीनिह ॥ ९
न तु शक्याः क्षयं नेतुं समुद्राश्रयगा हि ते ।
समुद्रस्य क्षये बुद्धिर्भवद्भिः संप्रधार्यताम् ।
अगस्त्येन विना को हि शक्तोऽन्योऽर्णवशोषणे ॥ १०
एतच्छ्रुत्वा वचो देवा विष्णुना समुदाहृतम् ।
परमेष्ठिनमाज्ञाप्य अगस्त्यस्याश्रमं ययुः ॥ ११
तत्रापश्यन्महात्मानं वारुणिं दीप्ततेजसम् ।
उपास्यमानमृषिभिर्देवैरिव पितामहम् ॥ १२
तेऽभिगम्य महात्मानं मैत्रावरुणिमच्युतम् ।

---

**3** D₂ om (hapl) 3–5 — ᵇ) M इत्युत (for उत्तमम्) — ᶜ) Ś1 K1 2 न हि जानति; K3 4 Dc D1 3 5 जानीमो न च, B4 कालका नाम (for न च जानीम) Ś1 K3 4 D3 5 M केनैते, K1 विध्यते; K3 वध्यते, B4 केपि[?पी]मे, D1 केनैव; T G2 3 केनेति (for केनेमे) Dn2 न च जानीमहे केन — ᵈ) S (G1 missing) वै द्विजा (for ब्राह्मणा॰) S1 K B1m Dc D1 3 5 वध्यते (K1 केनैते; K2 केनैव) ब्राह्मणा निशि

**4** D2 om 4 (cf v.l 3) — ᵃ) Ś1 K Dc transp क्षीणे and ब्राह्म॰ T2 G2–4 हि (for च) — S1 K2 om (hapl) 4ᶜᵈ

**5** D2 om 5 (cf v l 3) — ᵃ) G2 4 नाति, M1 नाभि, M2 नैव (for नाधि-) — ᵈ) =(var) 2ᵈ Dc T G2 3 स्वयैव (for त्वया वै)

**6** D3 कृष्ण उ, T2 G (G1 missing) श्रीभगवान् (for विष्णुरु) — ᵇ) S (G1 missing) पृथिवी (for प्रजाना)

**7** ᵃᵇ) K1 2 D1 2 T G2 3 M कालेया D1 2 S (except M2, G1 missing) विख्याता, गणा, and दारुणा — ᵈ) K2 B2 3 D (except D2 3 5) प्रमाथित (for प्रबा)

**9** ᵇ) K B1 D1–3 5 S (G1 missing) नाना (for नक्र) — ᶜ) Ś1 K1–3 D1 लोकस्य (for लोकाना) — ᵈ) Dn D4 6 ऋषीन् (for मुनीन्) Ś1 K1 2 अथ (for इह)

**10** ᵃ) B1 S (except M1, G1 missing) हि (for तु) — ᵇ) Ś1 K1 2 समुद्रक्षयगा, S (G1 missing) द्राश्रयिणो K4 समुद्राश्रयमाश्रिता, D3 (marg *sec m*) समुद्रस्य क्षय विना, D5 समुद्रक्षयगामिन॰ — D5 reads 10ᶜᵈ after 505* — ᵈ) S1 K Dc D1–3 5 सन्निधीयता (for संप्रधा॰) — S om 10ᵉᶠ — After 10, N (except Ś1 K1 2) ins

505* अन्यथा हि न शक्यास्ते विना सागरशोषणम् ।

**11** ᵃ) B2 3 ततो, B4 Dn D4 6 G4 तदा (for वचो) — After 11ᵃᵇ, S (G1 missing) ins

506* विष्णुमेव पुरस्कृत्य ब्रह्माण समुपस्थिता ।
ते तस्मै प्रणता भूत्वा तमेवार्थं न्यवेदयन् ।
सर्वलोकविनाशार्थं कालेया॰ कृतनिश्चया ।
तेषा तद्वचन श्रुत्वा पद्मयोनि सनातन ।
उवाच परमप्रीतस्त्रिदशानर्थवद्वच । [5]
विदित मे सुरा सर्वं दानवाना विचेष्टितम् ।
मनुष्यादेश्च निधन कालेयै कालचोदितै ।
क्षयस्तेषामनुप्राप्त कालेनोपहताश्च ये ।
उपाय सप्रवक्ष्यामि समुद्रस्य विशोषणे ।
अगस्त्य इति विख्यातो वारुणि सुसमाहित । [10]
तमुपागम्य सहिता इममर्थं प्रयाचत ।
स हि शक्तो महातेजा क्षणात्पातु महोदधिम् ।
समुद्रे च क्षय नीते कालेयास्त्रिहनिष्यथ ।
एव श्रुत्वा वचो देवा ब्रह्मण परमेष्ठिन ।

[(L 2) G2 4 ततस्ते, M ते नीचै (for ते तस्मै) — (L 7) M1 मनुष्याणा च (for ष्यादेश्च) — (L 9) M1 [अ]पि (for वि) — (L 12) M1 ॰भाग (for तेजा)]

— ᶜᵈ) B1 आश्रित्य, D1 2 अनुज्ञाप्य (for आज्ञाप्य) Ś1 K D5 परमेष्ठ्यभ्यनुज्ञाता (for ॰) S (G1 missing) समनुज्ञाप्य ब्रह्माण वारुणिं समुपस्थिता॰

**13** K4 om 13 13ᵇ=(var) 3 103 3ᵇ — ᵈ)

आश्रमस्थं तपोराशिं कर्मभिः स्वैरभिष्टुवन् ॥ १३
देवा ऊचुः ।
नहुषेणाभितप्तानां त्वं लोकानां गतिः पुरा ।
भ्रंशितश्च सुरैश्वर्याल्लोकार्थं लोककण्टकः ॥ १४
क्रोधात्प्रवृद्धः सहसा भास्करस्य नगोत्तमः ।
वचस्तवानतिक्रामन्विन्ध्यः शैलो न वर्धते ॥ १५
तमसा चावृते लोके मृत्युनाभ्यर्दिताः प्रजाः ।
त्वामेव नाथमासाद्य निर्वृतिं परमां गताः ॥ १६
अस्माकं भयभीतानां नित्यशो भगवान्गतिः ।
ततस्त्वार्ताः प्रयाचामस्त्वां वरं वरदो ह्यसि ॥ १७

इति श्रीमहाभारते आरण्यकपर्वणि एकाधिकशततमोऽध्यायः ॥ १०१ ॥

# १०२

युधिष्ठिर उवाच ।
किमर्थं सहसा विन्ध्यः प्रवृद्धः क्रोधमूर्छितः ।
एतदिच्छाम्यहं श्रोतुं विस्तरेण महामुने ॥ १
लोमश उवाच ।
अद्रिराजं महाशैलं मेरुं कनकपर्वतम् ।
उदयास्तमये भानुः प्रदक्षिणमवर्तत ॥ २
तं तु दृष्ट्वा तथा विन्ध्यः शैलः सूर्यमथाब्रवीत् ।
यथा हि मेरुर्भवता नित्यशः परिगम्यते ।
प्रदक्षिणं च क्रियते मामेवं कुरु भास्कर ॥ ३
एवमुक्तस्ततः सूर्यः शैलेन्द्रं प्रत्यभाषत ।
नाहमात्मेच्छया शैल करोम्येनं प्रदक्षिणम् ।
एष मार्गः प्रदिष्टो मे येनेदं निर्मितं जगत् ॥ ४

---

K3 B4 Dc D1 2 अभिष्टुत, B1 D3 5 अधिष्ठित, S (G1 missing) स्तु तुष्टुवु° (for अभिष्टुवन्)

**14** $^{a}$) B3 4 Dn1 n3 G4 नाहुषेण — $^{b}$) Ś1 K1–3 त्व देवाना; K4 D3 5 देवाना त्व (for त्व लोकाना) — $^{d}$) K2 लोकार्थे, K3 B2 4 Dn D4 6 स्वर्लोकात् (for लोकार्थं)

**15** $^{a}$) K1 3 4 D2 सुमहान्, T1 G4 तरण, G2 सरण, M तरसा (for सहसा) — $^{b}$) T G2 3 नभोगत°, G4 नभोत्तम (for नगो°) — $^{c}$) B1 °क्रम्य (for °क्रामन्)

**16** $^{a}$) Ś1 दर्पिते, K1 सवृते, D2 चार्दिते, D5 च वृते, M1 ह्यावृते T2 G2–4 °सा चावृतो लोको — $^{b}$) T1 M1 ह्य° (for °भ्य°)

**17** $^{b}$) Ś1 K1 2 ऋषि (for गति°) — $^{c}$) B4 Dc प्रयाचाम — $^{d}$) B D (except D2 3 5) वर त्वा (by transp), T1 वरद, T2 G2–4 त्वा वय, M2 त्वा पर M °दोत्तम (for °दो ह्यसि)

Colophon G1 missing — *Major parvan* Ś1 K1 2 Dn3 T G2–4 M1 आरण्य — *Sub parvan* B4 तीर्थयात्रा, followed by आगस्त्य K D1 (om sub parvan name) mention only लोमशतीर्थ(K2 om तीर्थ)यात्रा (followed by आगस्त्य in K3 4), B1–3 Dc Dn D4–6, likewise, only आगस्त्य — *Adhy name* Ś1 K1 2 कालेयवध°, T1 अगस्त्यचरित — *Adhy no* (figures, words or both) Dn1 T G (G1 missing) M1 102, Dn3 n3 M2 104, D1 106 — *Śloka no* Dn 18, D1 43

## 102

☞ This adhy is missing in G1 (cf v l 3 100 14) The MS is mostly ignored here

**1** $1^{cd}$ = (var) 3 104 $4^{ab}$ — $^{c}$) T2 G2 3 इच्छामहे (for °म्यहं) — $^{d}$) M °मते (for °मुने)

**2** $^{a}$) T2 (before corr) G2 4 °सार (for °राज) T2 G2–4 °राज (for °शैल) — $^{b}$) Ś1 K2 एक; K1 अर्थ (for मेरु) — $^{c}$) N (except Ś1 K1 D2) °स्तमने

**3** $^{a}$) Dc तत्र, M2 अथ (for त तु) D2 T1 transp तु and दृष्ट्वा K3 4 B Dc T1 तदा (for तथा) — $^{c}$) K1 2 transp हि and मेरुः Ś1 यथा मेरुर्भगवता — $^{e}$) N प्रदक्षिणश्च

**4** $^{c}$) K1 2 4 B Dn2 n3 D1–3 5 T1 शैल; Dc शैल (for शैल) — $^{f}$) B Dn D4 6 T1 M2 येर् (for येन)

**5** $^{a}$) K4 क्रुद्ध° (for क्रोधात्) — $^{b}$) D2 M2 स महा

एवमुक्तस्ततः क्रोधात्प्रवृद्धः सहसाचलः ।
सूर्याचन्द्रमसोर्मार्गं रोद्धुमिच्छन्परंतप ॥ ५
ततो देवाः सहिताः सर्व एव
सेन्द्राः समागम्य महाद्रिराजम् ।
निवारयामासुरुपायतस्तं
न च स्म तेषां वचनं चकार ॥ ६
अथाभिजग्मुर्मुनिमाश्रमस्थं
तपस्विनं धर्मभृतां वरिष्ठम् ।
अगस्त्यमत्यद्भुतवीर्यदीप्तं
तं चार्थमूचुः सहिताः सुरास्ते ॥ ७
देवा ऊचुः ।
सूर्याचन्द्रमसोर्मार्गं नक्षत्राणां गतिं तथा ।
शैलराजो वृणोत्येष विन्ध्यः क्रोधवशानुगः ॥ ८
तं निवारयितुं शक्तो नान्यः कश्चिद्द्विजोत्तम ।
ऋते त्वां हि महाभाग तस्मादेनं निवारय ॥ ९
लोमश उवाच ।
तच्छ्रुत्वा वचनं विप्रः सुराणां शैलमभ्यगात् ।
सोऽभिगम्याब्रवीद्विन्ध्यं सदारः समुपस्थितः ॥ १०
मार्गमिच्छाम्यहं दत्तं भवता पर्वतोत्तम ।
दक्षिणामभिगन्तास्मि दिशं कार्येण केनचित् ॥ ११
यावदागमनं मह्यं तावत्त्वं प्रतिपालय ।
निवृत्ते मयि शैलेन्द्र ततो वर्धस्व कामतः ॥ १२
एवं स समयं कृत्वा विन्ध्येनामित्रकर्शन ।
अद्यापि दक्षिणादेशाद्वारुणिर्न निवर्तते ॥ १३
एतत्ते सर्वमाख्यातं यथा विन्ध्यो न वर्धते ।
अगस्त्यस्य प्रभावेन यन्मां त्वं परिपृच्छसि ॥ १४
कालेयास्तु यथा राजन्सुरैः सर्वैर्निषूदिताः ।
अगस्त्याद्वरमासाद्य तन्मे निगदतः शृणु ॥ १५
त्रिदशानां वचः श्रुत्वा मैत्रावरुणिरब्रवीत् ।
किमर्थमभियाताः स्थ वरं मत्तः किमिच्छथ ।
एवमुक्तास्ततस्तेन देवास्तं मुनिमब्रुवन् ॥ १६
एवं त्वयेच्छाम कृतं महर्षे
महार्णवं पीयमानं महात्मन् ।
ततो वधिष्याम सहानुबन्धा-

---

चल°, $D_3$ $M_1$ स महाबल — $^{c}$) = 8$^{a}$  $K_{1, 4}$ $M_1$ सूर्ये° (for सूर्या° ) — $^{d}$) T $G_{2-4}$ $M_1$ मैच्छत् (for °मिच्छन्)

**6** $^{b}$) B D (except $D_{1-3, 5}$) विन्ध्य ($B_1$ तदा) (for सेन्द्राः)  $K_3$ $B_2$ समागत्य  $K_4$ $B_1$ $D_{1-3}$ तम् (for महा°) — $^{c}$) $Ś_1$ $K_1$ स्म (for त) — $^{d}$) $D_{1, 2}$ T $G_{2-4}$ [ए]व, M [अ]पि (for स्म)

**7** $^{c}$) $K_{1, 4}$ $Dc_2$ $D_{1-3, 5}$ दीप्तवीर्यं, B $Dc_1$ Dn $D_{4, 6}$ M वीर्यवत (for °वीर्यदीप्त) — $^{d}$) $S_1$ $K_{1, 2}$ च; $K_{3, 4}$ $D_{3, 5}$ $T_1$ $M_3$ त (for से)

**9** $^{c}$) S ($G_1$ missing) त्वद्(T₁ मृ)ते हि (for ऋते त्वां हि) — $^{d}$) $T_1$ $G_{3, 4}$ एत (for एन)

**10** $^{a}$) Dc देव (for विप्र) — $^{b}$) Dc अभ्ययात् — $^{d}$) $B_{2, 4}$ Dc Dn $D_{4, 6}$ $G_4$ स्थित (for स्थितः)

**11** $^{a}$) $Ś_1$ $K_{1, 2}$ दातु, $B_1$ यातु (for दत्त) — $^{c}$) $Ś_1$ $K_{1, 2}$ गच्छामि (for गन्तास्मि)

**13** $^{a}$) Dc ते, $D_{3, 5}$ तु (for स) — $^{b}$) $Ś_1$ K $D_{1-3, 5}$ [अ]रिविरेण ह ($Ś_1$ $K_{1, 2}$ हि), B [अ]मित्रकर्षेण ($B_{2, 4}$ °ण°)

**14** $^{c}$) Some MSS प्रभावेण — $^{d}$) $Ś_1$ $K_1$ $M_2$ मा (for मां)

**15** $^{b}$) $M_1$ यथा (for सुरै°)  $D_6$ $M_3$ सर्वैः; $M_1$ देवैर् (for सर्वैर्)  $Ś_1$ $K_1$ $B_{1-3}$ निसूदिता; $T_1$ निवेदिता; M निपातिता — $^{c}$) $S_1$ $K_1$ T $G_{3, 4}$ अगस्त्यद्वारमा, $G_2$ M अगस्त्य द्वारमा

**16** $^{b}$) $Ś_1$ $K_{1, 2}$ तथेति मुनिरब्रवीत् (=18$^{b}$) — Before 16$^{cd}$, Dc ins अगस्त्य उ — $B_3$ om (hapl) 16$^{c}$–18$^{b}$ — $^{c}$) $S_1$ K Dc $D_{1-3}$ उप° (for अभि°)  $Ś_1$ $D_3$ स्म (for स्थ) — $^{d}$) D (except $D_{2, 3, 5}$) कम् (for किम्) — After 16$^{cd}$, Dc reads 18$^{cd}$, *repeating* it in its proper place — $^{e}$) $Ś_1$ K $Dc_2$ $D_{1-3, 6}$ तदा (for ततस्) Dn तेथ, $D_4$ ते त (for तेन) — $^{f}$) $Dn_1$ $n_3$ $D_{4, 6}$ देवता (for देवास्त) — After 16, S ins

507* सर्वे प्राञ्जलयो भूत्वा पुरंदरपुरोगमा ।

**17** $B_3$ om 17 (cf v l 16), $K_3$ om 17$^{ab}$ — $^{a}$) Dc $D_3$ $M_1$ एक, $M_2$ एत (for एव)  $D_{3, 5}$ वय (for कृत) $B_{2, 4}$ Dn $D_{4, 6}$ हि कार्यं (for महर्षे) — $^{b}$) $Ś_1$ $K_{1, 2}$ महात (for महात्मन्) — $^{d}$) $T_2$ $G_{2-4}$ $M_2$ कालोपसृष्टान्;

न्कालेयसंज्ञान्सुरविद्विषस्तान् ॥ १७
त्रिदशानां वचः श्रुत्वा तथेति मुनिरब्रवीत् ।
करिष्ये भवतां कामं लोकानां च महत्सुखम् ॥ १८
एवमुक्त्वा ततोऽगच्छत्समुद्रं सरितां पतिम् ।
ऋषिभिश्च तपःसिद्धैः सार्धं देवैश्च सुव्रतः ॥ १९
मनुष्योरगगन्धर्वयक्षकिंपुरुषास्तथा ।
अनुजग्मुर्महात्मानं द्रष्टुकामास्तदद्भुतम् ॥ २०
ततोऽभ्यगच्छन्सहिताः समुद्रं भीमनिस्वनम् ।
नृत्यन्तमिव चोर्मीभिर्वल्गन्तमिव वायुना ॥ २१
हसन्तमिव फेनौघैः स्खलन्तं कन्दरेषु च ।
नानाग्राहसमाकीर्णं नानाद्विजगणायुतम् ॥ २२
अगस्त्यसहिता देवाः सगन्धर्वमहोरगाः ।
ऋषयश्च महाभागाः समासेदुर्महोदधिम् ॥ २३

इति श्रीमहाभारते आरण्यकपर्वणि द्व्यधिकशततमोऽध्यायः ॥ १०२ ॥

## १०३

लोमश उवाच ।
समुद्रं स समासाद्य वारुणिर्भगवानृषिः ।
उवाच सहितान्देवानृषींश्चैव समागतान् ॥ १
एष लोकहितार्थं वै पिबामि वरुणालयम् ।
भवद्भिर्यदनुष्ठेयं तच्छीघ्रं संविधीयताम् ॥ २
एतावदुक्त्वा वचनं मैत्रावरुणिरच्युतः ।
समुद्रमपिबत्क्रुद्धः सर्वलोकस्य पश्यतः ॥ ३
पीयमानं समुद्रं तु दृष्ट्वा देवाः सवासवाः ।
विस्मयं परमं जग्मुः स्तुतिभिश्चाप्यपूजयन् ॥ ४
त्वं नस्त्राता विधाता च लोकानां लोकभावनः ।
त्वत्प्रसादात्समुच्छेदं न गच्छेत्सामरं जगत् ॥ ५
संपूज्यमानस्त्रिदशैर्महात्मा

T1 कालेयसृष्टान्, M1 कालेन सृष्टान् (for कालेयसंज्ञान्) K3 सुरविद्विषास्त्वान्, K4 असुरद्विषा गणान्, D1 2 सुरविद्विषाणान्, D5 °विद्विषो गणान्, T1 असुरद्विषस्तान्, M3 सुरविद्विषाश्च

**19** c) Ś1 K Dc D1-3 5 तप सिद्धैश्च मुनिभि° — d) K3 4 B1 3 4 Dn D2 4-6 सुव्रत, T2 G3 M1 सुव्रतै, G2 सवृत°, G4 सवृत

**22** D5 om 22 (with 21cd) — b) K4 D1 3 कंदरै रिव (for °रेषु च) T2 G3 (after corr) [अ]पि, G2 3 (before corr) 4 M1 [इ]व (for च) T1 कदरेषु च नादित — G4 om 22cd — d) K3 B3 Dn D1 4 6 °गणान्वित, B2 °निषेवित, D5 °गणैर्युत

Colophon G1 missing — *Major parvan* Ś1 K1 2 T G2-4 M1 आरण्य — *Sub parvan* Dc1 तीर्थयात्रा, preceded by आगस्त्य K1 B Dn D3-6 (all om sub-parvan name) mention only आगस्त्य; K3 4 D1, likewise, only लोमशतीर्थयात्रा (followed by आगस्त्य in K3 4), and Dc2 only अगस्त्यतीर्थयात्रा — *Adhy no* (figures, words or both) Dn2 n3 M2 105, D1 107, T G (G1 missing) M1 103 — *Śloka no* Dn D1 25

**103**

☞ This adhy is missing in G1 (cf v l 3 100 14) The MS is mostly ignored here

**1** a) B2 D1 3 5 6 S (G1 missing) स समुद्र (by transp) — b) Ś1 K1 2 मुनि (for ऋषि°) — c) K4 सर्वान् (for देवान्) — d) K4 देवर्षीश्च, T G2 3 ऋषींश्चापि

**2** a) Dn D6 T1 G3 अहं (for एष) T2 G2-4 हिता° र्थाय — c) Ś1 K2 भगवान्, K1 3 4 D1-3 5 भवता (for भवद्भिः)

**4** a) S1 B Dn3 D4 6 T2 G3 M1 त (for तु) — b) B Dn D4 6 T1 M सेंद्रा° (for देवा°) B1 तथा सुरा°, Dn D4 6 T1 M सदा मरा°, T2 G2-4 सहामरा° (for सवा°) — d) Ś1 K4 D1 T G3 [अ]भ्यपू°, K2 [अ]पि पू° (for [अ]प्यपू°)

**5** a) Dc देवता त्व (for त्वं नस्त्राता) — b) K3 3 B Dn1 D3 5 6 T2 G2-4 M1 °भावन, T1 °पावन

गन्धर्वतूर्येषु नदत्सु सर्वशः ।
दिव्यैश्च पुष्पैरवकीर्यमाणो
महार्णवं निःसलिलं चकार ॥ ६
दृष्ट्वा कृतं निःसलिलं महार्णवं
सुराः समस्ताः परमप्रहृष्टाः ।
प्रगृह्य दिव्यानि वरायुधानि
तान्दानवाञ्जघ्नुरदीनसत्त्वाः ॥ ७
ते वध्यमानास्त्रिदशैर्महात्मभि-
र्महाबलैर्वेगिभिरुन्नदद्भिः ।
न सेहिरे वेगवतां महात्मनां
वेगं तदा धारयितुं दिवौकसाम् ॥ ८
ते वध्यमानास्त्रिदशैर्दानवा भीमनिस्वनाः ।
चक्रुः सुतुमुलं युद्धं मुहूर्तमिव भारत ॥ ९
ते पूर्वं तपसा दग्धा मुनिभिर्भावितात्मभिः ।
यतमानाः परं शक्त्या त्रिदशैर्विनिषूदिताः ॥ १०
ते हेमनिष्काभरणाः कुण्डलाङ्गदधारिणः ।
निहत्य बह्वशोभन्त पुष्पिता इव किंशुकाः ॥ ११
हतशेषास्ततः केचित्कालेया मनुजोत्तम ।
विदार्य वसुधां देवीं पातालतलमाश्रिताः ॥ १२
निहतान्दानवान्दृष्ट्वा त्रिदशा मुनिपुंगवम् ।
तुष्टुवुर्विविधैर्वाक्यैरिदं चैवाब्रुवन्वचः ॥ १३
त्वत्प्रसादान्महाभाग लोकैः प्राप्तं महत्सुखम् ।
त्वत्तेजसा च निहताः कालेयाः क्रूरविक्रमाः ॥ १४
पूरयस्व महाबाहो समुद्रं लोकभावन ।
यत्त्वया सलिलं पीतं तदस्मिन्पुनरुत्सृज ॥ १५
एवमुक्तः प्रत्युवाच भगवान्मुनिपुंगवः ।
जीर्णं तद्धि मया तोयमुपायोऽन्यः प्रचिन्त्यताम् ।
पूरणार्थं समुद्रस्य भवद्भिर्यत्नमास्थितैः ॥ १६
एतच्छ्रुत्वा तु वचनं महर्षेर्भावितात्मनः ।
विस्मिताश्च विषण्णाश्च बभूवुः सहिताः सुराः ॥ १७
परस्परमनुज्ञाप्य प्रणम्य मुनिपुंगवम् ।
प्रजाः सर्वा महाराज विप्रजग्मुर्यथागतम् ॥ १८
त्रिदशा विष्णुना सार्धमुपजग्मुः पितामहम् ।
पूरणार्थं समुद्रस्य मन्त्रयित्वा पुनः पुनः ।
ऊचुः प्राञ्जलयः सर्वे सागरस्याभिपूरणम् ॥ १९

इति श्रीमहाभारते आरण्यकपर्वणि त्र्यधिकशततमोऽध्यायः ॥ १०३ ॥

---

**6** $^{a}$) $K_{2.4}$ B Dn $D_{1.4-8}$ $G_4$ $M_1$ स (for स-)  $T_2$ $G_{2-4}$ महात्मभि॰ (for महात्मा) — $^{b}$) $Ś_1$ $K_{1.2}$ मृदङ्ग (for गन्धर्व॰)  $Ś_1$ K Dc $D_{1-3.5}$ चैव (for सर्वश) — $^{c}$) $Ś_1$ $K_{1.2}$ अनु॰ (for अव॰)

**7** $^{a}$) $B_4$ S ($G_1$ missing) समुद्र (for महार्णव) — $^{c}$) $Ś_1$ $K_2$ चापानि, $B_1$ सर्वाणि (for दिव्यानि)

**8** $^{b}$) $Ś_1$ $K_{1-3}$ $B_2$ $D_{2.3.5}$ S ($G_1$ missing) बला (for ॰बलैर्)  $K_{3.4}$ $B_{2.3}$ $T_2$ $G_{2-4}$ M वेगिसैर्, $D_2$ वेगत (for वेगिभिर्)  $K_1$ उच्चमद्भि॰; $B_3$ उल्लसद्भि॰, $D_3$ तैर्नदद्भि॰

**9** $^{b}$) Some MSS ॰निःस्वना॰ — $^{c}$) Some MSS सुतुमल

**10** $D_5$ om 10 — $^{d}$) $Ś_1$ $K_{1.2}$ B M सूदिता॰, $K_3$ ॰पातिता॰

**12** $^{a}$) $Ś_1$ K $B_1$ $D_{1-3.5}$ ॰शिष्टास् (for शेषास्) — $^{d}$) Dn $D_{1.4.6}$ आस्थिता॰ (for आश्रिता॰)

**13** $^{d}$) Dn $D_{4.6}$ इदं वचनमब्रुवन्

**14** $^{a}$) $K_{1.4}$ B Dc Dn $D_{1.4.6}$ महाबाहो; $D_8$ $T_1$ M मुनिश्रेष्ठ (for महाभाग) — $^{c}$) T $G_{2-4}$ वि (for च) — $^{d}$) $Ś_1$ कर्मण (*sup lin* ॰विक्रमा as in text)

**15** $D_5$ om 15 — $^{a}$) $Ś_1$ $K_{1.2.4}$ विप्र, $K_3$ ॰भाग॰, $D_{1-3}$ $G_3$ $M_1$ ॰भाग (for ॰बाहो) — $^{b}$) $Ś_1$ $K_{1.2}$ लोक भावन, $D_8$ T $G_{2-4}$ पावन

**16** $^{b}$) $T_2$ $G_{2-4}$ ॰सत्तम (for ॰पुंगव) — After $16^{ab}$, S (except $G_4$, $G_1$ missing) ins

508* तांस्तथा सहितान्देवानगस्त्यः सपुरंदरान् ।
[$T_2$ $G_3$ तान्हि, $M_1$ तदा (for तथा)]

**19** $Ś_1$ om $19^{ab}$ — $^{b}$) $B_{2.4}$ उपाजग्मु — $^{d}$) $Ś_1$ K $D_{1-3}$ मन्त्रयत  $K_3$ $D_{1.2}$ परस्पर (for पुनः पुनः)  $B_2$m भवद्भिर्यत्नमास्थितै (=$16^{f}$) — After $19^{cd}$, S ($G_1$ missing) ins

509* ते धातारमुपागम्य त्रिदशाः सह विष्णुना ।

— $^{e}$) B प्रोचुः (for ऊचुः) — $^{f}$) $K_4$ $D_5$ [अ]पि (for [अ]भि-) $K_2$ $B_1$ Dc $Dn_2$ -पूरणे (for -पूरणम्) — $T_1$ om from $19^{f}$ up to 3 104 $1^{c}$

# १०४

लोमश उवाच ।
तानुवाच समेतांस्तु ब्रह्मा लोकपितामहः ।
गच्छध्वं विबुधाः सर्वे यथाकामं यथेप्सितम् ॥ १
महता कालयोगेन प्रकृतिं यास्यतेऽर्णवः ।
ज्ञातीन्वै कारणं कृत्वा महाराज्ञो भगीरथात् ॥ २
युधिष्ठिर उवाच ।
कथं वै ज्ञातयो ब्रह्मन्कारणं चात्र किं मुने ।
कथं समुद्रः पूर्णश्च भगीरथपरिश्रमात् ॥ ३
एतदिच्छाम्यहं श्रोतुं विस्तरेण तपोधन ।
कथ्यमानं त्वया विप्र राज्ञां चरितमुत्तमम् ॥ ४

वैशंपायन उवाच ।
एवमुक्तस्तु विप्रेन्द्रो धर्मराज्ञा महात्मना ।
कथयामास माहात्म्यं सगरस्य महात्मनः ॥ ५
लोमश उवाच ।
इक्ष्वाकूणां कुले जातः सगरो नाम पार्थिवः ।
रूपसत्त्वबलोपेतः स चापुत्रः प्रतापवान् ॥ ६
स हैहयान्समुत्साद्य तालजङ्घांश्च भारत ।
वशे च कृत्वा राज्ञोऽन्यान्स्वराज्यमन्वशासत ॥ ७
तस्य भार्ये त्वभवतां रूपयौवनदर्पिते ।
वैदर्भी भरतश्रेष्ठ शैब्या च भरतर्षभ ॥ ८

---

Colophon om in $B_4$ $D_{5}$ $_6$ $T_1$ $G_1$ missing — *Major parvan* Ś1 K1 2 Dn3 T2 G2–4 M1 आरण्य — *Sub parvan* K D1 (om sub parvan name) mention only लोमशतीर्थयात्रा (followed by आगस्त्य in K3 4), B2 3 Dc Dn D4 6, likewise, only आगस्त्य — *Adhy name* Ś1 K1 मन्त्र°, Dc कालेयवध° — *Adhy no* (figures, words or both) Dn1 T2 G (G1 missing) M1 104, Dn2 n3 M3 106, D1 108 — *Śloka no* Dn D1 20

## 104

☞ G1 missing up to 18ᶜ of this adhy (cf v l 3 100 14) The MS is mostly ignored up to the end of the lacuna

**1** T1 om 1ᵃᵇᶜ (of v l 3 103 19) — After 1ᵃᵇ, T2 G3 5 M ins

510* निर्ह्रादिन्या गिरा राजन्देवानाश्वासयस्तदा ।

**2** ᶜ) Ś1 D3 तु, Dn3 D2 5 T2 G2–4 च (for वै) — ᵈ) K4 °राजाद्, B3 T2 G3 °राजो, G2 °भोगो, G4 °भागो (for °राज्ञो) B3 T G2–4 M1 भगीरथ° — After 2, Dc2 Dn3 ins

511* आनयिष्यद्यदा गङ्गा तदा पूर्णो भविष्यति ।

— K1 B Dc Dn D4 6 ins after 2 (Dc2 Dn3, after 511*)

512* पितामहवचः श्रुत्वा सर्वे विबुधसत्तमाः ।
कालयोगं प्रतीक्षन्तो जग्मुश्चापि यथागतम् ।

After the above, B4 ins colophon (omitted at the end of adhy 103) On the other hand, S (G1 missing) ins after 2

513* पूरयिष्यति तोयौघैः समुद्रं निधिमम्भसाम् ।
[G3 M3 स मुनिर् (for समुद्रं)]

**3** ᵇ) K4 D2 3 चाभवन् (for चात्र किं) Ś1 K1 2 D5 M3 वै (for किं) — ᶜ) Ś1 K Dc D3 तु (for च) — ᵈ) B Dc Dn D4 6 °प्रतिश्रयात्, D5 T2 G3 °परिश्रयात्, T1 °परिश्रमै

**5** G4 om 5 — ᵃ) T2 G2 3 राजेंद्र (for विप्रेन्द्रो) — ᵇ) T G2 3 M धर्मराजेन धीमता — K3 om (hapl) 5ᶜᵈ

**6** ᵃ) D1 5 4 °गुणोपेत°

**7** ᵃ) K3 हैहयान्स (by transp) Ś1 K1 S (G1 missing) हेहयान् Ś1 समुद्राद्यान्, K3 समुत्साद्यान् (for समुत्साद्य) — ᵇ) Ś1 मलकाश्चैव, K1 ससका चैव, K3 सलका चैव (for ताल°) — ᶜ) K3 4 Dc D1–3 M (by transp) कृत्वा च; B1 कृत्वा तु; T2 G2–4 कृत्वा स B Dn D4 6 राजन्यान् (for राज्ञोऽन्यान्) — ᵈ) Ś1 K1 3 स (for स्व) S1 K2 4 D1–3 5 चान्वशा(Ś1 °गा)त्तत°; K1 नाम शाश्वत; K3 Dc चान्वशासत; B1 3 अनुशासत, S (G1 missing) अनुशिष्टवान् (for अन्वशासत)

**8** ᵃ) Ś1 K1 2 उ(Ś1 ह्य)मे राजन्, K4 Dc D1 2 ह्यभवता, D5 तु भवता — ᵈ) Ś1 K3 पाडुनदन, K1 [अ]प्सरसोपमा; K3 [अ]प्सरसा समे, K4 D3 [अ]प्सरसोपमे, D5 [अ]प्सरसा समे; M कुरुनदन (for भरत°)

**9** ᵇ) B Dn D4 6 तप्यसे, Dc1 तेपे च, Dc2 प्रतेपे (for

स पुत्रकामो नृपतिस्तताप सुमहत्तपः ।
पत्नीभ्यां सह राजेन्द्र कैलासं गिरिमाश्रितः ॥ ९
स तप्यमानः सुमहत्तपो योगसमन्वितः ।
आससाद महात्मानं त्र्यक्षं त्रिपुरमर्दनम् ॥ १०
शंकरं भवमीशानं शूलपाणिं पिनाकिनम् ।
त्र्यम्बकं शिवमुग्रेशं बहुरूपमुमापतिम् ॥ ११
स तं दृष्ट्वैव वरदं पत्नीभ्यां सहितो नृपः ।
प्रणिपत्य महाबाहुः पुत्रार्थं समयाचत ॥ १२
तं प्रीतिमान्हरः प्राह सभार्यं नृपसत्तमम् ।
यस्मिन्वृतो मुहूर्तेऽहं त्वयेह नृपते वरम् ॥ १३
षष्टिः पुत्रसहस्राणि शूराः समरदर्पिताः ।
एकस्यां संभविष्यन्ति पत्न्यां तव नरोत्तम ॥ १४
ते चैव सर्वे सहिताः क्षयं यास्यन्ति पार्थिव ।
एको वंशधरः शूर एकस्या संभविष्यति ।
एवमुक्त्वा तु तं रुद्रस्तत्रैवान्तरधीयत ॥ १५
स चापि सगरो राजा जगाम स्वं निवेशनम् ।
पत्नीभ्यां सहितस्तात सोऽतिहृष्टमनास्तदा ॥ १६
तस्याथ मनुजश्रेष्ठ ते भार्ये कमलेक्षणे ।
वैदर्भी चैव शैब्या च गर्भिण्यौ संबभूवतुः ॥ १७
ततः कालेन वैदर्भी गर्भालावुं व्यजायत ।
शैब्या च सुषुवे पुत्रं कुमारं देवरूपिणम् ॥ १८
तदालावुं समुत्स्रष्टुं मनश्चक्रे स पार्थिवः ।
अथान्तरिक्षाच्छुश्राव वाचं गम्भीरनिस्वनाम् ॥ १९
राजन्मा साहसं कार्षीः पुत्रान्न त्यक्तुमर्हसि ।
अलावुमध्यान्निष्कृष्य बीजं यत्नेन गोप्यताम् ॥ २०
सोपस्वेदेषु पात्रेषु घृतपूर्णेषु भागशः ।

---

तताप ) B Dn₁ n₃ D₆ स्म, Do₂ च (for सु) — d) Ś₁ K₁ B₁ ₃ M₁ कैलास ; K₂ कैलाश , K₃ ₄ Do₂ D₂ ₃ कैलाश

**10** T₁ om 10c–12b — d) M शर्वं (for त्र्यक्षं) Ś₁ K Dc D₁ ₂ त्रिपुरघातिन, M₁ त्रिभुवनेश्वर, M₃ त्रिपुर घातक

**11** T₁ om 11 (cf v l 10), B₂ om 11ab — a) D₃ ₅ शर्वम् (for भवम्) — b) B₁ Dn D₄ ₆ पिनाकिं शूलपाणिन — c) M उग्रेषु (for उग्रेशं) T₂ G₂–₄ त्रियबकं शिव श्रेष्ठ — After 11, K B₁ Dc D₁–₃ ₅ ins

514* लोकधातारमजरममरेशं पुरातनम् ।
दिग्वाससं वृषरथमचिन्त्याद्भुतयोगिनम् ।

**13** a) Dc भव (for हर) — c) Ś₁ K₁ ₂ अस्मिन् (for य ) — d) T₁ G₂ ₄ M₁ [प]व (for [इ]ह) K₁ ₂ वर (for वरम्)

**14** a) Ś₁ K D₁–₃ ₅ पुत्रा षष्टिसह — b) K₁ B D (except D₁–₃) परम (for समर ) — c) K₂ ₄ D₁ ₂ एकस्या (for स्यां) Ś₁ K₁ ₃ ₄ Dc D₁ ₂ ते (for स) — d) K₃ ₄ D₁ ₄ पत्न्या (for त्न्यां) Ś₁ K B Dc Dn D₃–₆ नरवरोत्तम; D₁ ₂ नृपवरात्मज, T₁ ते च नरोत्तम (for तव नरो )

**15** a) T G₂–₄ तथैव; M से चापि (for ते चैव) Ś₁ K₂ प्रागेव हि (for चैव सर्वे) K₃ Dc D₁–₃ ₅ S (G₁ missing) सहिता सर्वे (by transp ) — c) T₂ G₂–₄ M₁ वशाकर — d) Ś₁ K₁ ₄ G₂ एकस्या (for स्या) — e) Ś₁ K₁–₃ ततो (for तु त)

**16** c) Dn D₁ ₂ तत्र (for तात) — d) Ś₁ K₁ ₂ नाति ; K₃ सप्र , M₁ सोपि (for सोऽति) — After 16, S (G₁ missing) ins

515* कालं शंभुवरप्राप्तं प्रतीक्षन्सगरोऽनयत् ।
[M °प्राप्ते (for °प्राप्तं) ]

**17** a) Ś₁ तस्यार्ये, B Dn D₄ ₆ तस्य ते, T G₂–₄ तस्येमे D₃ T₁ M₃ भरतश्रेष्ठ — B₁ transp 17b and 17d — b) Ś₁ K₁ ₂ ₄ Dc D₁ ₂ द्वे (for ते) B Dn D₄ ₆ T G₂–₄ भार्ये कमललोचने

**18** a) T₂ G₂ ₃ काले तु (for कालेन) — b) K₁–₃ गर्भालाबु, K₄ D₁ ₂ M₁ लाबु; T₂ G₂–₄ गर्भतुंब Ś₁ K₂ ₃ Dc असूयत, K₄ D₁ ₂ व्यसूयत — G₁ resumes from 18d

**19** a) K₃ तमलाबु, K₄ तदलाबु; D₁ ₂ अलाबु तत्, T G₂–₄ ततस्तुंबं (cf v l 18) — b) T₁ M [ऽ]थ (for स) — c) Ś₁ K Dc D₁–₃ ₅ ततो (for अथ) T₂ G₂–₄ [अ]न्त रिक्षे (for °क्षात्) — d) Some MSS °नि स्वना

**20** c) K₁ Dn₂ निष्क्राम्य, K₄ D₅ M₃ निष्क्रम्य; G₂ निष्कृत्य — d) T G धार्य (for गोप्य)

**21** a) Ś₁ K Dc D₁–₃ ₅ भाण्डेषु (for पात्रे) — c) D₁ ₂ T₁ तत्र (for तत ) — d) K₁ ₂ भागश , K₄ Dn D₁ ₃–₆ T₁ भारत (for पार्थिव)

**22** a) D₃ T₂ G निर्दिष्टः; T₁ दृष्ट तत्, M दिष्ट तत् (for दिष्ट ते) — b) B₁ ₃ ₄ जना (for नरा ) — d) Ś₁ K₁ ₄

ततः पुत्रसहस्राणि षष्टिं प्राप्स्यसि पार्थिव ॥ २१
महादेवेन दिष्टं ते पुत्रजन्म नराधिप ।
अनेन क्रमयोगेन मा ते बुद्धिरतोऽन्यथा ॥ २२

इति श्रीमहाभारते आरण्यकपर्वणि चतुरधिकशततमोऽध्यायः ॥ १०४ ॥

# १०५

लोमश उवाच ।
एतच्छ्रुत्वान्तरिक्षाच्च स राजा राजसत्तम ।
यथोक्तं तच्चकाराथ श्रद्दधद्भरतर्षभ ॥ १
षष्टिः पुत्रसहस्राणि तस्याप्रतिमतेजसः ।
रुद्रप्रसादाद्राजर्षेः समजायन्त पार्थिव ॥ २
ते घोराः क्रूरकर्माण आकाशपरिसर्पिणः ।
बहुत्वाच्चावजानन्तः सर्वाँल्लोकान्सहामरान् ॥ ३
त्रिदशांश्चाप्यबाधन्त तथा गन्धर्वराक्षसान् ।
सर्वाणि चैव भूतानि शूराः समरशालिनः ॥ ४
वध्यमानास्ततो लोकाः सागरैर्मन्दबुद्धिभिः ।
ब्रह्माणं शरणं जग्मुः सहिताः सर्वदैवतैः ॥ ५
तानुवाच महाभागः सर्वलोकपितामहः ।
गच्छध्वं त्रिदशाः सर्वे लोकैः सार्धं यथागतम् ॥ ६
नातिदीर्घेण कालेन सागराणां क्षयो महान् ।
भविष्यति महाघोरः स्वकृतैः कर्मभिः सुराः ॥ ७
एवमुक्तास्ततो देवा लोकाश्च मनुजेश्वर ।

---

D3 भूद् (for ते) D8 5 मा ते भूद्बुद्धिरन्यथा

Colophon om in D5 — *Major parvan* Ś1 K1 2 Dn2 D6 T2 G2-4 M1 आरण्य — *Sub parvan* B4 Dc तीर्थयात्रा, followed by आगस्त्य K1 3 4 D1 3 (om sub parvan name) mention only लोमशतीर्थयात्रा (followed by आगस्त्य in K4), B1-3 Dn D4 6, likewise, only आगस्त्य — *Adhy name* K3 सगरोपाख्यान — *Adhy no* (figures, words or both) Dn S 105 (Dn2 n3 M2 107), D1 109 — *Śloka no* Dn D1 23

## 105

**1** a) B2-4 अतरीक्षात् G1 3 वै, M स (for च) — b) M राजा वै (for स राजा) B1 4 Dc Dn1 n3 D8 T2 G1 3 °सत्तम (for °सत्तम) Ś1 K1 2 राजा राजन्यसत्तम — d) Ś1 K1 2 D1 3 5 श्रद्धावान् (for श्रद्दधद्) — After 1, K1 2 B (B3 om lines 2–4) D (except D1-3 5) G3 M3 ins

516* एकैकशस्तत कृत्वा बीज बीज नराधिप ।
घृतपूर्णेषु कुम्भेषु तान्भागान्विदधे तत ।
धात्रीश्चैकैकशः प्रादात्पुत्ररक्षणतत्पर ।
तत कालेन महता समुत्तस्थुर्महाबला ।

[(L 1) K1 जीव जीव, B1 Dc बीज (B1 °ज) पूर्णे (for बीज बीज) B1 3 4 Dc °धिप (for °धिप) — (L 2) B1 4 कुडेषु (for कुम्भेषु) B1 Dc गर्भान् (for भागान्) Dc निदधे (for विदधे) B3 Dc पुन (for तत) — (L 4) K1 कालेन महता षष्टि (for the prior half)]

**2** B3 om $2^a$–$3^b$ — $2^a$=3 104 $14^a$ — d) T G सगरस्य महात्मन

**3** B3 om $3^{ab}$ (of v l 2) — b) D1 2 आकाशे; D4 आकाश — d) B3 सहेश्वरान्; T G2-4 सुरासुरान्, G1 चराच°; M3 सहासु° (for सहाम°)

**4** a) Ś1 K B1 2 Dc D1-3 5 T1 [अ]भ्य(B1 3 D1 [अ]प्य)धावत (for [अ]प्यबा°) — c) Dc तथा सर्वाणि भूतानि

**5** a) Dc T1 G1 M3 तदा; T2 G2-4 तथा (for ततो) — d) Ś1 K1 2 T1 सर्वदेवता, D6 T2 G देवतै°, M3 °वेदितै°

**6** a) K3 Dc D6 T2 G3 महाभाग; B3 ततो ब्रह्मा — $6^b$=1 6 $5^b$, 204 $24^b$ — K3 om (hapl) $6^{bc}$ — d) Ś1 K1 2 °क्रम (for गतम्)

**7** After 7, M3 ins

517* कपिल ते समासाद्य विनशिष्यन्त्यसंशयम् ।

**8** a) K4 च ते, B2 4 D (except D1 2 5) तु ते; G1 तदा (for ततो) — b) B1 3 G1 M मनुजोत्तम; T1 °जाधिप — d) G4 M प्रति° (for पितृ°)

पितामहमनुज्ञाप्य विप्रजग्मुर्यथागतम् ॥ ८
ततः काले बहुतिथे व्यतीते भरतर्षभ ।
दीक्षितः सगरो राजा हयमेधेन वीर्यवान् ।
तस्याश्वो व्यचरद्भूमिं पुत्रैः सुपरिरक्षितः ॥ ९
समुद्रं स समासाद्य निस्तोयं भीमदर्शनम् ।
रक्ष्यमाणः प्रयत्नेन तत्रैवान्तरधीयत ॥ १०
ततस्ते सागरास्तात हृतं मत्वा हयोत्तमम् ।
आगम्य पितुराचख्युरदृश्यं तुरगं हृतम् ।
तेनोक्ता दिक्षु सर्वासु सर्वे मार्गत वाजिनम् ॥ ११
ततस्ते पितुराज्ञाय दिक्षु सर्वासु तं हयम् ।
अमार्गन्त महाराज सर्वं च पृथिवीतलम् ॥ १२
ततस्ते सागराः सर्वे समुपेत्य परस्परम् ।
नाध्यगच्छन्त तुरगमश्वहर्तारमेव च ॥ १३
आगम्य पितरं चोचुस्ततः प्राञ्जलयोऽग्रतः ।
ससमुद्रवनद्वीपा सनदीनदकन्दरा ।
सपर्वतवनोद्देशा निखिलेन मही नृप ॥ १४
अस्माभिर्विचिता राजञ्शासनात्तव पार्थिव ।
न चाश्वमधिगच्छामो नाश्वहर्तारमेव च ॥ १५
श्रुत्वा तु वचनं तेषां स राजा क्रोधमूर्छितः ।
उवाच वचनं सर्वांस्तदा दैववशान्नृप ॥ १६
अनागमाय गच्छध्वं भूयो मार्गत वाजिनम् ।
यज्ञियं तं विना ह्यश्वं नागन्तव्यं हि पुत्रकाः ॥ १७
प्रतिगृह्य तु संदेशं ततस्ते सगरात्मजाः ।
भूय एव महीं कृत्स्नां विचेतुमुपचक्रमुः ॥ १८
अथापश्यन्त ते वीराः पृथिवीमवदारिताम् ।
समासाद्य बिलं तच्च खनन्तः सगरात्मजाः ।

---

**9** a) K1 महतिमिर् (for बहु°) T G1 2 4 ततो बहुतिथे काले — c) K1 व्यचरन्, K4 विचरन्, G3 [ऽ]प्यचरद् (for व्यचरद्) Ś1 K1 Dc भूमौ (for भूमिं) — f) K3 च, K4 B Dc Dn D4 6 स; D5 तु; G2 M2 तै° (for सु°) — After 9, S ins

518* सर्वैरेव महोत्साहै स्वच्छन्दप्रचरो नृप ।
[T1 महामार्गे (for महो°) G1 °प्रचरान्, M1 प्रसरो (for प्रचरो)]

**10** c) B1 Dc D5 S स समुद्र (by transp) D1 2 च (for स)

**11** a) T G3 तत्र (for तात) — b) K1 4 Dc S (except G2 M2) ज्ञात्वा; D1 2 दृष्ट्वा (for मत्वा) — c) Dc D3 G1 आगत्य (for आगम्य), cf v l 14 K1 Dc2 D3 आचख्युर् (for °क्युर्) — f) Ś1 K D1-6 भूयो, T G पुत्रा (for सर्वे) — After 11, B1 ins a variant of 17cd (v l नागतव्यमृते हय for the posterior half), while S ins

519* ससमुद्रवनद्वीपा विचिन्वन्तो वसुधराम् ।

**12** a) D5 तत पित्राज्ञया सर्वे — c) Ś1 K D1-3 5 मृगयन्तो (for अमार्गन्त) D3 5 महीपाल; G2 हय राजन् (for महा) — d) Ś1 K D3 5 सचेव°; Dc सर्वं हि; D1 2 चेरुश्च (for सर्वं च)

**13** d) Ś1 K D1 2 अभि (for अश्व) B2 4 Dc वा (for च); cf v.l 15

**14** T1 om (hapl) 14-15 — a) Dc G1 आगत्य (for आगम्य), cf v l 11 Ś1 K1 2 पितर प्रोचु°, K3 पितुरुद्विग्ना — After 14ab, S (T1 om) ins

520* स्थित्वा सर्वे महीपाला सागरा सहितास्तदा ।
— f) Ś1 K D1-3 5 नि(D5 ह्य)खिलेय (for °लेन)

**15** T1 om 15 (cf v l 14) — a) Ś1 K1 2 (? gloss) मार्गिता (for विचिता), cf 18d — D2 reads 15b-16b after 17a — c) Dc अव°, T2 G2-4 अभि° (for अधि°) — d) B1 2 4 Dc वा (for च), cf v l 13

**16** For D2, cf v l 15 — a) K1 2 B1 D3 तेपा वचन (by transp) — c) Ś1 K D1-3 5 तनयान्, G1 सहितान् (for वचन)

**17** After 17a, D2 reads 15b-16b — c) K3 [अ]प्यश्व, K4 [अ]श्व मे; T2 G3 4 चाश्व (for ह्यश्व)

**18** b) B Dn D3 4 6 T2 G3 पितु° (for तत°) — K3 T2 G3 om (hapl) 18c-19d — c) K (K3 om) Dc D1-3 5 G2 M1 सर्वां (for कृत्स्नां)

**19** K3 T2 G3 om 19abcd (cf v l 18) — a) G2 M2 पश्यस्ततो (for °पश्यन्त ते) — After 19ab, T1 G1 2 4 M ins

521* समुद्रे पृथिवीपाल पदमार्गं च वाजिन ।
— c) D1 2 G2 4 तत्र (for तच्च) — d) B D (except D1-3 5) G2 M1 [अ]प्यखनन्; T1 खनश्च (for खनन्त°) — e) Ś1 K1 2 अकुशै; K3 चातुशै°; K4 हसुकै°; B2 हेसुकै°; B4 हिसुकै°, Dc D4 6 हेपुकै°; D3 हसुलै°; D5 सुमुखै°; S मुसलै° (for हेपुकै°) D1 कुद्दालकैसुकैश्चैव; D2 सकुद्दादिस-

कुद्दालैर्हृषुकैश्चैव समुद्रमखनंस्तदा ॥ १९
स खन्यमानः सहितैः सागरैर्वरुणालयः ।
अगच्छत्परमामार्ति दार्यमाणः समन्ततः ॥ २०
असुरोरगरक्षांसि सत्त्वानि विविधानि च ।
आर्तनादमकुर्वन्त वध्यमानानि सागरैः ॥ २१
छिन्नशीर्षा विदेहाश्च भिन्नजान्वस्थिमस्तकाः ।
प्राणिनः समदृश्यन्त शतशोऽथ सहस्रशः ॥ २२
एवं हि खनतां तेषां समुद्रं मकरालयम् ।
व्यतीतः सुमहान्कालो न चाश्वः समदृश्यत ॥ २३
ततः पूर्वोत्तरे देशे समुद्रस्य महीपते ।
विदार्य पातालमथ संक्रुद्धाः सगरात्मजाः ।
अपश्यन्त हयं तत्र विचरन्तं महीतले ॥ २४
कपिलं च महात्मानं तेजोराशिमनुत्तमम् ।
तपसा दीप्यमानं तं ज्वालाभिरिव पावकम् ॥ २५

इति श्रीमहाभारते आरण्यकपर्वणि पञ्चाधिकशततमोऽध्यायः ॥ १०५ ॥

# १०६

लोमश उवाच ।
ते तं दृष्ट्वा हयं राजन्संप्रहृष्टतनूरुहाः ।
अनादृत्य महात्मानं कपिलं कालचोदिताः ।
संक्रुद्धाः समधावन्त अश्वग्रहणकाङ्क्षिणः ॥ १
ततः क्रुद्धो महाराज कपिलो मुनिसत्तमः ।
वासुदेवेति यं प्राहुः कपिलं मुनिसत्तमम् ॥ २
स चक्षुर्विवृतं कृत्वा तेजस्तेषु समुत्सृजन् ।
ददाह सुमहातेजा मन्दबुद्धीन्स सागरान् ॥ ३

---

कैश्चैव — f) B D (except D1–3 5) G2 M यत्नमास्थिता (for अखनस्तदा) T2 G1 3 4 तत (for तदा)

**20** B4 om 20 — d) B (B4 om) Dc Dn1 n3 D8 दीर्यमाण

**22** b) Ś1 K1 2 सभिन्नकुक्षिसधय, K3 भिन्नयत्रास्थिस धय, K4 °जान्वस्थिसधय, B Dc Dn D4–6 °स्वगस्थिसधय° (B1 °जत्वस्थिसचया°), D8 °जात्वस्थिसधय°, G1 °जात्वस्थि मज्जता°

**23** a) T2 G3 चि, G2 M1 तु, M2 नि (for हि) — b) K3 B D (except D2 5) वरुणा° (for मकरा°)

**24** b) Ś1 K D3 दिशा (for मही°) — After 24ab, M2 ins

522* विदार्यमाणा पृथिवीं सागरैर्बलदर्पितै ।

— c) Ś1 K1 2 4 °मथ, D1 3 5 °तल, T G2 3 M1 °मथो (for °मथ) M2 ते प्रविष्टास्तु पाताल — T1 om 24c–25d — f) Ś1 K2 4 D1–3 5 M1 महीपते, Dc महीतल; M2 दिशा पते (for महीतले)

**25** T1 om 25 (cf v l 24) — c) Ś1 K2 B D (except D1–3) तेजसा (for तपसा) B2 4 Dn D4 5 M2 तु (for त) — d) T2 G ज्वलतम् (for ज्वालाभिर्) — S (T1 om) ins after 25 (G2 M2, after 25ab)

523* दृष्ट्वा हि हृषिता सर्वे बभूवु सागरास्तदा ।

Colophon om in B Dc Dn D3–6 — *Major parvan* Ś1 K1 2 T2 G2–4 M1 आरण्य — *Sub parvan* D2 तीर्थयात्रा K3 4 D1 (om sub parvan name) mention only लोमशतीर्थयात्रा (followed by आगस्त्य in K3 4) — *Adhy no* (figures, words or both) D1 110, S 106 (M2 108)

## 106

**1** a) Ś1 K1 2 Dc त (for ते) Ś1 K1 2 T2 G1 3 4 M1 तु, Dc ते (for त) Dc महात्मान, D1 2 महाराज (for हय राजन्) — d) D1 3 5 कालनोदिता — e) B Dn D4 6 सम° (for सम°) — f) To avoid hiatus, Ś1 K1 2 4 श्वश्व°, D3 5 तेश्व°; S (except M1) वाजि°

**2** a) T2 G M °भाग (G1 तेजा°) (for °राज) — b) S1 K1 2 D3 5 देवसत्तम, S (except G1) राजसत्तम D1 2 कपिलाख्यो महामुनि° — d) D5 देव° (for मुनि) B Dn D3 4 6 T1 G1 4 M पुगव (Dn1 °वा°) (for सत्तमम्)

**3** a) N G1 M2 विकृत (for विवृत) — b) Ś1 K1 T1 °सृजत् (for °सृजन्) — c) K3 स; G4 M1 च (for सु°) D1 2 °महस्तेजो (for महातेजा) — d) D1 2 नृपात्मजान्, Dc समागतान् (for स सागरान्) — After 3, S (except

तान्दृष्ट्वा भस्मसाद्भूतान्नारदः सुमहातपाः ।
सगरान्तिकमागच्छत्तच्च तस्मै न्यवेदयत् ॥ ४
स तच्छ्रुत्वा वचो घोरं राजा मुनिमुखोद्गतम् ।
मुहूर्तं विमना भूत्वा स्थाणोर्वाक्यमचिन्तयत् ।
आत्मानमात्मनाश्वास्य हयमेवान्वचिन्तयत् ॥ ५
अंशुमन्तं समाहूय असमञ्जःसुतं तदा ।
पौत्रं भरतशार्दूल इदं वचनमब्रवीत् ॥ ६
षष्टिस्तानि सहस्राणि पुत्राणाममितौजसाम् ।
कापिलं तेज आसाद्य मत्कृते निधनं गताः ॥ ७
तव चापि पिता तात परित्यक्तो मयानघ ।
धर्मं संरक्षमाणेन पौराणां हितमिच्छता ॥ ८

युधिष्ठिर उवाच ।

किमर्थं राजशार्दूलः सगरः पुत्रमात्मजम् ।
त्यक्तवान्दुस्त्यजं वीरं तन्मे ब्रूहि तपोधन ॥ ९

लोमश उवाच ।

असमञ्जा इति ख्यातः सगरस्य सुतो ह्यभूत् ।
यं शैब्या जनयामास पौराणां स हि दारकान् ।
खुरेषु क्रोशतो गृह्य नद्यां चिक्षेप दुर्बलान् ॥ १०
ततः पौराः समाजग्मुर्भयशोकपरिप्लुताः ।
सगरं चाभ्ययाचन्त सर्वे प्राञ्जलयः स्थिताः ॥ ११
त्वं नस्त्राता महाराज परचक्रादिभिर्भयैः ।
असमञ्जोभयाद्घोरात्ततो नस्त्रातुमर्हसि ॥ १२
पौराणां वचनं श्रुत्वा घोरं नृपतिसत्तमः ।
मुहूर्तं विमना भूत्वा सचिवानिदमब्रवीत् ॥ १३
असमञ्जाः पुराद्द्य सुतो मे विप्रवास्यताम् ।
यदि वो मत्प्रियं कार्यमेतच्छीघ्रं विधीयताम् ॥ १४

---

$M_2$) ins

524* षष्टिं सहस्राणि तदा युगपन्मुनिसत्तम ।

**4** $K_1$ om (hapl) $4^{b}$–$5^{c}$ — $^{c}$) $D_1$ $T_1$ आगम्य, $D_2$ आगत्य; $D_3$ आसाद्य (for आगच्छत्) — $^{d}$) Ś$_1$ $K_2$ तत स्तस्मै, $M_2$ तस्मै सर्वं (for तच्च तस्मै)

**5** $K_1$ om $5^{abc}$ (cf v.l 4), $D_5$ om (hapl) $5^{abcd}$ — $^{b}$) Ś$_1$ $K_{3,4}$ $D_8$ °द्भव (for द्गतम्) — After $5^{cd}$, S (except $G_1$) ins

525* स पुत्रनिधनोत्थेन दुःखेन समभिप्लुतः ।

— Ś$_1$ $B_4$ Dn $D_{4,6}$ $G_1$ om (? hapl) $5^{ef}$ — $^{e}$) $K_1$ $B_{2,3}$ Dc $T_2$ $G_3$ $M_2$ आत्मनात्मानम् (by transp), $B_1$ आत्मैवात्मानम् — $^{f}$) $K_{1-3}$ $D_{1,2,5}$ हयमेध व्यचिंतयत् ($K_{1,2}$ विचिंतयन्)

**6** $^{b}$) Ś$_1$ $K_{1,2}$ त्वसमज°सुत, $K_4$ $D_{3,5}$ सोसमज°, Dc समजस सुत, S असमजसुत

**7** $^{a}$) $K_4$ $D_3$ $T_2$ $G_{3,4}$ षष्टिस्तात, $D_{1,2}$ मम षष्टि (for षष्टिस्तानि) — $^{b}$) S$_1$ K $D_{3,5}$ $M_1$ मे महौ (for अमितौ)

**8** $^{a}$) $D_3$ तत्र, T $G_{1,3}$ $M_2$ वत्स, $G_{2,4}$ तावत् (for तात) — $^{b}$) $D_{1,2}$ पुरा (for [अ]नघ) — $^{c}$) A few MSS सरक्ष्य

**9** $^{a}$) $G_2$ $M_1$ ऋषिशार्दूल (for राजशार्दूल) — $^{b}$) Ś$_1$ K Dc पुत्र सगर (by transp) $G_1$ आत्मन°, $M_1$ औरस, $M_2$ आत्मज (for आत्मजम्)

**10** $^{a}$) S$_1$ $K_{1-3}$ S असमज — $^{b}$) Ś$_1$ K $B_3$ Dc $D_{1,2}$ $M_1$ [अ]भवत्, $T_2$ $G_{2-4}$ स्वभूत् (for ह्यभूत्) — $^{d}$) $D_{1-3,5}$ $T_1$ हि स (by transp) $T_2$ $G_3$ $M_2$ स पौराणां सु($M_2$ हि)-दारकान् — After $10^{cd}$, S ins

526* क्रीडतः सहसासाद्य तत्र तत्र महीपते ।
[ $T_2$ $G_3$ $M_1$ [अ]भ्येत्य (for [आ]साद्य) ]

— $^{e}$) Ś$_1$ $K_2$ $D_{1,3}$ पुरेषु, $K_3$ B Dn $D_{4,6}$ $M_1$ गले, $K_4$ गते; Dc गले वि°, $D_5$ पुरा वि°, T G चूडासु, $M_2$ कुलेषु (for खुरे°) $D_{1,2}$ बालकान्, S क्रीडतो (for क्रोशतो) — $^{f}$) Ś$_1$ $K_2$ $D_{3,5}$ $T_2$ $G_{2-4}$ दुर्मति (for दुर्बलान्) $M_1$ तत्र तत्र महीपते (cf 526*)

**11** $^{c}$) S$_1$ K ते (for च) $D_{3,5}$ $G_{1,2}$ $M_1$ [अ]पि (for [अ]भि) $D_1$ -[अ]भाषत; T $G_3$ -[अ]धावत (for -[अ]याचन्त) — $^{d}$) $T_2$ $G_{2-4}$ तदा (for स्थिता)

**12** Before 12, $B_4$ $M_1$ ins पौरा° ($B_4$ cont ऊचु) — $^{b}$) K $D_{1,2}$ दितो, $D_{3,5}$ °दिकाद् (for दिभिर्) S$_1$ K $B_{2,3}$ Dn $D_{1-3,5}$ भयात् (for भयै) — $^{c}$) $K_3$ S असमजभया — $^{d}$) Ś$_1$ K $M_1$ तस्मान्, $D_{1,2}$ राजन्, $D_3$ अस्मान्, $D_5$ कस्मान् (for ततो) $T_2$ $G_{3,4}$ [ऽ]स्मान् (for नस्)

**14** Before 14, $B_4$ $M_1$ ins सगर ($B_4$ cont उवाच) — $^{a}$) Ś$_1$ $K_{1-3}$ $D_{3,4}$ S असमज Ś$_1$ K $D_{3,5}$ [अ]द्य नगरात्, $G_2$ M कुमारोद्य (for पुरा°) — $^{b}$) Ś$_1$ K Dc $D_{3,5}$ पुत्रो मे, $G_2$ M नगराद् (for सुतो मे) $T_2$ $G_{3,4}$ स (for वि) — $^{c}$) S (except $G_2$ $M_1$) चेन् (for वो) $D_{1,2,5}$ मे प्रिय — $^{d}$) Ś$_1$ $K_2$ शीघ्रमेतद् (by transp)

**15** $^{a}$) S$_1$ K एवमुक्ते — $^{d}$) $D_{1,2}$ राज्ञा राज्ञो भयात्तदा;

एवमुक्ता नरेन्द्रेण सचिवास्ते नराधिप ।
यथोक्तं त्वरिताश्चक्रुर्यथाज्ञापितवान्नृपः ॥ १५
एतत्ते सर्वमाख्यातं यथा पुत्रो महात्मना ।
पौराणां हितकामेन सगरेण विवासितः ॥ १६
अंशुमांस्तु महेष्वासो यदुक्तः सगरेण ह ।
तत्ते सर्वं प्रवक्ष्यामि कीर्त्यमानं निबोध मे ॥ १७

सगर उवाच ।

पितुश्च तेऽहं त्यागेन पुत्राणां निधनेन च ।
अलाभेन तथाश्वस्य परितप्यामि पुत्रक ॥ १८
तस्माद्दुःखाभिसंतप्तं यज्ञविघ्नाच्च मोहितम् ।
हयस्यानयनात्पौत्र नरकान्मां समुद्धर ॥ १९

लोमश उवाच ।

अंशुमानेवमुक्तस्तु सगरेण महात्मना ।
जगाम दुःखात्तं देशं यत्र वै दारिता मही ॥ २०
स तु तेनैव मार्गेण समुद्रं प्रविवेश ह ।
अपश्यच्च महात्मानं कपिलं तुरगं च तम् ॥ २१
स दृष्ट्वा तेजसो राशिं पुराणमृषिसत्तमम् ।
प्रणम्य शिरसा भूमौ कार्यमस्मै न्यवेदयत् ॥ २२
ततः प्रीतो महातेजाः कपिलोंऽशुमतोऽभवत् ।
उवाच चैनं धर्मात्मा वरदोऽस्मीति भारत ॥ २३
स वव्रे तुरगं तत्र प्रथमं यज्ञकारणात् ।
द्वितीयमुदकं वव्रे पितॄणां पावनेप्सया ॥ २४
तमुवाच महातेजाः कपिलो मुनिपुंगवः ।
ददानि तव भद्रं ते यद्यत्प्रार्थयसेऽनघ ॥ २५
त्वयि क्षमा च धर्मश्च सत्यं चापि प्रतिष्ठितम् ।
त्वया कृतार्थः सगरः पुत्रवांश्च त्वया पिता ॥ २६
तव चैव प्रभावेन स्वर्गं यास्यन्ति सागराः ।
पौत्रश्च ते त्रिपथगां त्रिदिवादानयिष्यति ।
पावनार्थं सागराणां तोषयित्वा महेश्वरम् ॥ २७
हयं नयस्व भद्रं ते यज्ञियं नरपुंगव ।
यज्ञः समाप्यतां तात सगरस्य महात्मनः ॥ २८
अंशुमानेवमुक्तस्तु कपिलेन महात्मना ।
आजगाम हयं गृह्य यज्ञवाटं महात्मनः ॥ २९
सोऽभिवाद्य ततः पादौ सगरस्य महात्मनः ।

---

T2 G2-4 यथाज्ञा कृतवान्नृप

**16** c) Ś1 K प्रियकामेण (K3 कामार्थं), M विप्रिये तिष्ठन् (for हित°)

**17** b) K3 B2 Dn D4 6 हि, D1 2 च (for ह)

**18** a) T2 (before corr) G2 4 देश (for तेऽह) D1 2 M1 त्यागात्तव पितुश्चापि — b) M1 शोषणा (for पुत्रा°) — c) M1 सुतानामश्वनाशाच्च — d) G2 M2 पौत्रक (for पु°) M1 मनो मे तात मोहित

**19** G1 om 19-20 — c) G4 अश्वस्य (for हयस्य) T G3 4 [आ]गमनात् (for [आ]नयनात्) Ś1 K1 2 4 D1-3 5 T1 G2 पुत्र (for पौत्र) — After 19, Ś1 K1 2 ins an addl colophon

मूर्ध्नि तेनाप्युपाघ्रातस्तस्मै सर्वं न्यवेदयत् ॥ ३०
यथा दृष्टं श्रुतं चापि सागराणां क्षयं तथा ।
तं चास्मै हयमाचष्ट यज्ञवाटमुपागतम् ॥ ३१
तच्छ्रुत्वा सगरो राजा पुत्रजं दुःखमत्यजत् ।
अंशुमन्तं च संपूज्य समापयत तं क्रतुम् ॥ ३२
समाप्तयज्ञः सगरो देवैः सर्वैः सभाजितः ।
पुत्रत्वे कल्पयामास समुद्रं वरुणालयम् ॥ ३३
प्रशास्य सुचिरं कालं राज्यं राजीवलोचनः ।
पौत्रे भारं समावेश्य जगाम त्रिदिवं तदा ॥ ३४
अंशुमानपि धर्मात्मा महीं सागरमेखलाम् ।
प्रशशास महाराज यथैवास्य पितामहः ॥ ३५
तस्य पुत्रः समभवद्दिलीपो नाम धर्मवित् ।
तस्मै राज्यं समाधाय अंशुमानपि संस्थितः ॥ ३६
दिलीपस्तु ततः श्रुत्वा पितॄणां निधनं महत् ।
पर्यतप्यत दुःखेन तेषां गतिमचिन्तयत् ॥ ३७
गङ्गावतरणे यत्नं सुमहच्चाकरोन्नृपः ।
न चावतारयामास चेष्टमानो यथाबलम् ॥ ३८
तस्य पुत्रः समभवच्छ्रीमान्धर्मपरायणः ।
भगीरथ इति ख्यातः सत्यवागनसूयकः ॥ ३९
अभिषिच्य तु तं राज्ये दिलीपो वनमाश्रितः ।
तपःसिद्धिसमायोगात्स राजा भरतर्षभ ।
वनाज्जगाम त्रिदिवं कालयोगेन भारत ॥ ४०

इति श्रीमहाभारते आरण्यकपर्वणि षडधिकशततमोऽध्यायः ॥ १०६ ॥

## १०७

लोमश उवाच ।
स तु राजा महेष्वासश्चक्रवर्ती महारथः ।
बभूव सर्वलोकस्य मनोनयननन्दनः ॥ १
स शुश्राव महाबाहुः कपिलेन महात्मना ।

---

S$_1$ K D$_8$ सर्वं तस्मै (by transp )

**31** $^a$) K$_{3\ 4}$ B$_1$ D$_c$ D$_{1-3}$ वापि (for चापि) — $^b$) Ś$_1$ K$_{1\ 2}$ B$_1$ T$_1$ G$_1$ M$_2$ तदा (for तथा) — $^d$) K$_4$ उपस्थित, G$_1$ महात्मन॰ (for उपागतम्)

**34** $^c$) D$_{1\ 2}$ G$_2$ M$_1$ राज्य (for भार) — $^d$) Ś$_1$ K$_2$ तत , S नृप॰ (for तदा)

**35** $^c$) Ś$_1$ K$_1$ ॰राज्य; D$_{1\ 2}$ G$_1$ तेजा , T$_1$ राजो (for राज)

**36** $^b$) Ś$_1$ K$_{2-4}$ भारत, D$_5$ वीर्यवान्; G$_1$ धार्मिक॰ (for धर्म॰ ) — G$_1$ om 36$^c$–38$^d$ — $^c$) D$_{1-3}$ T G$_{2\ 3}$ M तस्मिन् (for तस्मै) Ś$_1$ K$_{1\ 2}$ समादाय; T$_2$ G$_{3\ 4}$ वेश्य — $^d$) To avoid hiatus Ś$_1$ K$_{1\ 2\ 4}$ त्वंशु॰, D$_5$ ह्यंशु (for अंशु ) Ś$_1$ K$_{1-3}$ D$_{8\ 5}$ प्रस्थितो वन (K$_2$ ॰भवत्, D$_5$ दिव) (for अपि संस्थित )

**37** G$_1$ om 37 (cf v l 36) — $^b$) Ś$_1$ K$_2$ नृप (for महत्) — $^d$) S (G$_1$ om ) गतिं तेषां विचिंतयन्

**38** G$_1$ om 38 (cf v l 36) — $^b$) S (G$_1$ om ) महांत (for सुमहच्च) — $^c$) D$_{1\ 2}$ गंगावतरणे सक्तः — $^d$) Ś$_1$ K$_{1\ 2}$ चेष्टयानो — After 38, D$_{1\ 2}$ ins

528* स राजर्षिर्दिलीपस्तु युयुजे कालधर्मणा ।

**40** G$_1$ om 40$^{ab}$ (with 39$^{cd}$) — $^a$) S$_1$ K$_{1\ 2}$ D$_c$ G$_2$ च (for तु) D$_{1\ 2}$ अभ्यषिंचत तं राज्ये — $^b$) B$_{1\ 3}$ D$_{1-3\ 5}$ आस्थित (for आश्रित ) — After 40$^{ab}$, S (except G$_1$) ins

529* भगीरथं महात्मानं सत्यधर्मपरायणम् ।

— G$_4$ om 40$^{cd}$ — $^d$) T G$_{1-3}$ M$_1$ वसुधाधिप (T$_1$ G$_{1\ 2}$ ॰प॰) (for भरत॰ )

Colophon — *Major parvan* S$_1$ K$_{1\ 2}$ Dn$_2$ T$_2$ G$_{2-4}$ M$_1$ आरण्य — *Sub parvan* D$_2$ तीर्थयात्रा K$_{3\ 4}$ D$_{1\ 3}$ (om sub parvan name) mention only लोमशतीर्थयात्रा (followed by आगस्त्य in K$_4$ D$_3$), B$_{2\ 3}$ D$_c$ Dn$_1$ n$_3$ D$_{4-6}$, likewise, only आगस्त्य — *Adhy name* Ś$_1$ गंगावतार , K$_{1\ 2}$ गंगावतरण, K$_3$ सगरोपाख्यान , B$_4$ भगीरथाभिषेकः — *Adhy no* (figures, words or both) Dn$_1$ 106 (as in text), Dn$_2$ n$_3$ 108, D$_1$ 111, S 107 (M$_2$ 109) — *Śloka no* Dn$_1$ n$_3$ 70, Dn$_2$ 71, D$_1$ 44

एवमुक्ता नरेन्द्रेण सचिवास्ते नराधिप ।
यथोक्तं त्वरिताश्चक्रुर्यथाज्ञापितवान्नृपः ॥ १५
एतत्ते सर्वमाख्यातं यथा पुत्रो महात्मना ।
पौराणां हितकामेन सगरेण विवासितः ॥ १६
अंशुमांस्तु महेष्वासो यदुक्तः सगरेण ह ।
तत्ते सर्वं प्रवक्ष्यामि कीर्त्यमानं निबोध मे ॥ १७

सगर उवाच ।

पितुश्च तेऽहं त्यागेन पुत्राणां निधनेन च ।
अलाभेन तथाश्वस्य परितप्यामि पुत्रक ॥ १८
तस्माद्दुःखाभिसंतप्तं यज्ञविघ्नाच्च मोहितम् ।
हयस्यानयनात्पौत्र नरकान्मां समुद्धर ॥ १९

लोमश उवाच ।

अंशुमानेवमुक्तस्तु सगरेण महात्मना ।
जगाम दुःखात्तं देशं यत्र वै दारिता मही ॥ २०
स तु तेनैव मार्गेण समुद्रं प्रविवेश ह ।
अपश्यच्च महात्मानं कपिलं तुरगं च तम् ॥ २१
स दृष्ट्वा तेजसो राशिं पुराणमृषिसत्तमम् ।
प्रणम्य शिरसा भूमौ कार्यमस्मै न्यवेदयत् ॥ २२
ततः प्रीतो महातेजाः कपिलोऽंशुमतोऽभवत् ।
उवाच चैनं धर्मात्मा वरदोऽस्मीति भारत ॥ २३
स वव्रे तुरगं तत्र प्रथमं यज्ञकारणात् ।
द्वितीयमुदकं वव्रे पितॄणां पावनेप्सया ॥ २४
तमुवाच महातेजाः कपिलो मुनिपुंगवः ।
ददानि तव भद्रं ते यद्यत्प्रार्थयसेऽनघ ॥ २५
त्वयि क्षमा च धर्मश्च सत्यं चापि प्रतिष्ठितम् ।
त्वया कृतार्थः सगरः पुत्रवांश्च त्वया पिता ॥ २६
तव चैव प्रभावेन स्वर्गं यास्यन्ति सागराः ।
पौत्रश्च ते त्रिपथगां त्रिदिवादानयिष्यति ।
पावनार्थं सागराणां तोषयित्वा महेश्वरम् ॥ २७
हयं नयस्व भद्रं ते यज्ञियं नरपुंगव ।
यज्ञः समाप्यतां तात सगरस्य महात्मनः ॥ २८
अंशुमानेवमुक्तस्तु कपिलेन महात्मना ।
आजगाम हयं गृह्य यज्ञवाटं महात्मनः ॥ २९
सोऽभिवाद्य ततः पादौ सगरस्य महात्मनः ।

---

$T_2$ $G_{2-4}$ यथाज्ञा कृतवान्नृप

**16** $^c$) Ś$_1$ K प्रियकामेण ($K_3$ कामार्थं), M विप्रिये तिष्ठन् (for हित°)

**17** $^b$) $K_3$ $B_2$ Dn $D_{4,6}$ हि, $D_{1,2}$ च (for ह)

**18** $^a$) $T_2$ (before corr) $G_{2,4}$ देश- (for तेऽह) $D_{1,2}$ $M_1$ त्यागात्तव पितुश्चापि — $^b$) $M_1$ शेषाणा (for पुत्रा°) — $^c$) $M_1$ सुतानामश्वनाशाच्च — $^d$) $G_2$ $M_2$ पौत्रक (for पु°) $M_1$ मनो मे तात मोहित

**19** $G_1$ om 19–20 — $^a$) $G_4$ अश्वस्य (for हयस्य) T $G_{3,4}$ [आ]गमनात् (for [आ]नयनात्) Ś$_1$ $K_{1,2,4}$ $D_{1-3,5}$ $T_1$ $G_2$ पुत्र (for पौत्र) — After 19, Ś$_1$ $K_{1,2}$ ins an addl colophon

**22** $^d$) Ś$_1$ $K_{1,3,4}$ Dc $D_3$ तस्मै (for अस्मै)

**23** $^a$) B Dn $D_{3,4,6}$ राज (for °तेजा) — $M_1$ om (hapl) $23^b$–$25^a$

**24** $M_1$ om 24 (cf v l 23) — $^a$) $K_{3,4}$ $D_{5,6}$ त तु (for तत्र) — $^c$) B Dn $D_{4,6}$ वरक, $D_{1,2}$ च वर (for उदक) — $^d$) $K_4$ B Dc Dn $D_{4,6}$ $T_1$ $G_4$ पावनेच्छया, $D_{1,2}$ °नाय वै

**25** $M_1$ om $25^a$ (cf v l 23) — $^c$) $K_{2,4}$ $Dn_1$ $Dn_2$ $D_{1-3,5}$ $T_2$ $G_{3,4}$ ददामि Ś$_1$ $K_{1,2}$ Dc $D_{1-3,6}$ तुभ्य (for तव) — $^d$) $D_1$ यच्च, T $G_{2-4}$ यत्त्व (for यद्यत्)

**26** Dc om $26^c$–$28^b$ — $^d$) Ś$_1$ K $D_3$ कृतस्त्वया; $B_2$ तथा पिता; $D_6$ त्वया कृत (for त्वया पिता)

**27** Dc om 27 (cf v l 26) — $^a$) Ś$_1$ $K_{1,2}$ $D_{1,4,5}$ प्रभावेण, $D_3$ $G_1$ प्रसादेन — After $27^{ab}$, S ins

527* शलभत्व गता एते मम क्रोधहुताशने ।
[$G_2$ कृता ये ते, $M_1$ गता ये ते, $M_2$ अवापुस्ते]

— $^e$) $K_{3,4}$ $M_2$ प्लावनार्थं, $B_1$ प्लव° (for पाव°)

**28** Dc om $28^{ab}$ (cf v.l 26) — $^b$) $K_3$ T $G_{1,2,4}$ याज्ञिय; $G_3$ M याज्ञीय — $G_4$ om $28^{cd}$ — $^c$) $D_{1,2}$ चास्य; T G ($G_4$ om) तस्य, $M_1$ तत्र (for तात)

**29** Dc om (hapl) 29, $D_6$ om (? hapl) $29^{cd}$ — $^d$) $K_3$ सुसत्वर, $K_4$ महामना, $D_{1,2}$ पितुस्तदा, M महायशा (for महात्मन)

**30** $^a$) $B_2$ $D_2$ पितु° (for तत) — $^b$) Ś$_1$ K Dc $D_{3,5}$ — $^c$) Ś$_1$ $G_{2,4}$ M महीपते (Ś$_1$ $K_{1-3}$ °ते) (for महा°) — $^d$) $K_{1,2}$ $M_1$ [अ]भि (for [अ]पि) $K_{3-4}$ $D_1$ [उ]पाध्याय —

मूर्ध्नि तेनाप्युपाघ्रातस्तस्मै सर्वं न्यवेदयत् ॥ ३०
यथा दृष्टं श्रुतं चापि सागराणां क्षयं तथा ।
तं चास्मै हयमाचष्ट यज्ञवाटमुपागतम् ॥ ३१
तच्छ्रुत्वा सगरो राजा पुत्रजं दुःखमत्यजत् ।
अंशुमन्तं च संपूज्य समापयत तं क्रतुम् ॥ ३२
समाप्तयज्ञः सगरो देवैः सर्वैः सभाजितः ।
पुत्रत्वे कल्पयामास समुद्रं वरुणालयम् ॥ ३३
प्रशास्य सुचिरं कालं राज्यं राजीवलोचनः ।
पौत्रे भारं समावेश्य जगाम त्रिदिवं तदा ॥ ३४
अंशुमानपि धर्मात्मा महीं सागरमेखलाम् ।
प्रशशास महाराज यथैवास्य पितामहः ॥ ३५
तस्य पुत्रः समभवद्दिलीपो नाम धर्मवित् ।
तस्मै राज्यं समाधाय अंशुमानपि संस्थितः ॥ ३६
दिलीपस्तु ततः श्रुत्वा पितॄणां निधनं महत् ।
पर्यतप्यत दुःखेन तेषां गतिमचिन्तयत् ॥ ३७
गङ्गावतरणे यत्नं सुमहच्चाकरोन्नृपः ।
न चावतारयामास चेष्टमानो यथाबलम् ॥ ३८
तस्य पुत्रः समभवच्छ्रीमान्धर्मपरायणः ।
भगीरथ इति ख्यातः सत्यवागनसूयकः ॥ ३९
अभिषिच्य तु तं राज्ये दिलीपो वनमाश्रितः ।
तपःसिद्धिसमायोगात्स राजा भरतर्षभ ।
वनाज्जगाम त्रिदिवं कालयोगेन भारत ॥ ४०

इति श्रीमहाभारते आरण्यकपर्वणि षडधिकशततमोऽध्यायः ॥ १०६ ॥

## १०७

लोमश उवाच ।
स तु राजा महेष्वासश्चक्रवर्ती महारथः ।
बभूव सर्वलोकस्य मनोनयननन्दनः ॥ १
स शुश्राव महाबाहुः कपिलेन महात्मना ।

---

Ś1 K D3 सर्वं तस्मै (by transp)

**31** a) K3 4 B1 D6 D1–3 वापि (for चापि) — b) Ś1 K1 2 B1 T1 G1 M3 तदा (for तथा) — d) K4 उपस्थित; G1 महात्मन (for उपागतम्)

**34** c) D1 2 G2 M1 राज्य (for भार) — d) Ś1 K2 तत, S नृप (for तदा)

**35** c) Ś1 K1 राज्य, D1 2 G1 तेजा; T1 °राजो (for राज)

**36** b) Ś1 K2–4 भारत, D5 वीर्यवान्, G1 धार्मिकः (for धर्म°) — G1 om 36c–38d — c) D1–3 T G2 3 M तस्मिन् (for तस्मै) Ś1 K1 2 समादाय, T2 G3 4 वेश्य — d) To avoid hiatus, S1 K1 2 4 त्वंशु, D5 ह्यंशु (for अंशु) Ś1 K1–3 D3 5 प्रस्थितो वन (K2 -भवत्, D5 दिव) (for अपि संस्थित)

**37** G1 om 37 (cf v l 36) — b) S1 K2 नृप (for महत्) — d) B (G1 om) गतिं तेषां विचिंतयन्

**38** G1 om 38 (cf v l 36) — b) S (G1 om) महात (for सुमहच्च) — c) D1 2 गंगावतरणे सक्तः — d) Ś1 K1 2 चेष्टयानो — After 38, D1 2 ins

528* स राजर्षिर्दिलीपस्तु युयुजे कालधर्मणा ।

**40** G1 om 40ab (with 39cd) — a) Ś1 K1 2 D6 G2 च (for तु) D1 2 अभ्यर्षिचत तं राज्ये — b) B1 3 D1–3 5 आस्थित (for आश्रित) — After 40ab, S (except G1) ins

529* भगीरथं महात्मानं सत्यधर्मपरायणम् ।

— G4 om 40cd — d) T G1–3 M1 वसुधाधिप (T1 G1 2 प) (for भरत)

Colophon — *Major parvan* Ś1 K1 2 Dn2 T2 G2–4 M1 आरण्य — *Sub parvan* D2 तीर्थयात्रा K3 4 D1 3 (om sub parvan name) mention only लोमशतीर्थयात्रा (followed by आगस्त्य in K4 D3), B2 3 D6 Dn1 n2 D4–6, likewise, only आगस्त्य — *Adhy name* Ś1 गंगावतार, K1 2 गंगावतरण, K3 सगरोपाख्यान; B4 भगीरथाभिषेक — *Adhy no* (figures, words or both) Dn1 106 (as in text), Dn2 n3 108, D1 111, S 107 (M2 109) — *Śloka no* Dn1 n2 70, Dn3 71, D1 44

पितॄणां निधनं घोरमप्राप्तिं त्रिदिवस्य च ॥ २
स राज्यं सचिवे न्यस्य हृदयेन विदूयता ।
जगाम हिमवत्पार्श्वं तपस्तप्तुं नरेश्वरः ॥ ३
आरिराधयिषुर्गङ्गां तपसा दग्धकिल्बिषः ।
सोऽपश्यत नरश्रेष्ठ हिमवन्तं नगोत्तमम् ॥ ४
शृङ्गैर्बहुविधाकारैर्धातुमद्भिरलंकृतम् ।
पवनालम्बिभिर्मेघैः परिष्वक्तं समन्ततः ॥ ५
नदीकुञ्जनितम्बैश्च सोदकैरुपशोभितम् ।
गुहाकन्दरसंलीनैः सिंहव्याघ्रैर्निषेवितम् ॥ ६
शकुनैश्च विचित्राङ्गैः कूजद्भिर्विविधा गिरः ।
भृङ्गराजैस्तथा हंसैर्दात्यूहैर्जलकुक्कुटैः ॥ ७
मयूरैः शतपत्रैश्च कोकिलैर्जीवजीवकैः ।
चकोरैरसितापाङ्गैस्तथा पुत्रप्रियैरपि ॥ ८
जलस्थानेषु रम्येषु पद्मिनीभिश्च संकुलम् ।
सारसानां च मधुरैर्व्याहृतैः समलंकृतम् ॥ ९
किंनरैरप्सरोभिश्च निषेवितशिलातलम् ।
दिशागजविषाणाग्रैः समन्ताद्धृष्टपादपम् ॥ १०
विद्याधरानुचरितं नानारत्नसमाकुलम् ।
विषोल्बणैर्भुजंगैश्च दीप्तजिह्वैर्निषेवितम् ॥ ११
क्वचित्कनकसंकाशं क्वचिद्रजतसंनिभम् ।
क्वचिदञ्जनपुञ्जाभं हिमवन्तमुपागमत् ॥ १२
स तु तत्र नरश्रेष्ठस्तपो घोरं समाश्रितः ।
फलमूलाम्बुभक्षोऽभूत्सहस्रं परिवत्सरान् ॥ १३
संवत्सरसहस्रे तु गते दिव्ये महानदी ।

## 107

**1** $^{a}$) B1 महाभागश्च (for महे°) — $^{b}$) Ś1 K Dc D3 5 भगीरथ, S महायशा° (for °रथ) — K4 om $1^{d}$–$3^{a}$ — $^{d}$) S1 K (K4 om) D1 2 °हृदय° (for °नयन°)

**3** K4 om $3^{a}$ (cf v l 1) — $^{b}$) = 1 53 $6^{b}$ T1 G1 विदीर्यता, T2 G3 4 विदार्यता (for विदू) — $^{d}$) K1 4 B4 Dn D1 4 6 नरेश्वर

**4** $^{c}$) K3 D3 °श्रेष्ठो (for °श्रेष्ठ) D1 2 सोथापश्यन्नरेंद्रस्तु, T1 G1 सोपश्यन्नरतश्रेष्ठ — $^{d}$) S1 K1 2 Dc D3 5 नगेश्वर, K3 महागिरिं, K4 नरेश्वर, M1 नरेश्वर (for नगो°)

**5** G4 om 5–10 — $^{b}$) Ś1 K2 °बद्धैर्, K1 °बलैर्, K3 4 M1 °नद्धैर् (for °मद्भिर्) — Ś1 K1 2 read $5^{cd}$–$6^{ab}$ after $7^{ab}$ — $^{d}$) S1 K प्रनृत्यत, B Dc Dn D4–6 G1 परिषिक्त, D3 स नृत्यत (for परि°)

**6** G4 om 6 (cf v l 5) For Ś1 K1 2 cf v l 5 — $^{b}$) B1 2 4 Dn1 n2 D4 6 प्रासादैर्, Dc सोदरैर् (for सोदकैर्) — $^{c}$) K3 Dn D4 6 °सलीन- — $^{d}$) Ś1 K2 3 B3 4 Dn D1 2 4–6 G1 सिंहव्याघ्र, B2 Dc सिंहैर्व्याघ्रैर्

**7** G4 om 7 (cf v l 5) — After $7^{ab}$, Ś1 K1 2 read $5^{cd}$–$6^{ab}$ D3 transp $7^{cd}$ and $8^{ab}$ — $^{c}$) Ś1 K1 2 गगावेगैस् (for भृङ्गराजैस्) D1 2 गजैर् (for तथा) Ś1 चप-, K1 2 चच; K3 चापैर्, D1 2 M2 मत्तैर्, D5 चाडम, T G (G4 om) राजन्, M1 भासैर् (for हसैर्) — $^{d}$) Ś1 K Dc दात्यूह-, T1 G1 2 M2 नत्यूहैर्

**8** G4 om 8 (cf v l 5) D3 transp $7^{cd}$ and $8^{ab}$ — $^{b}$) B D (except D1–3 5) जीवजीवककोकिलै°, T1 कोकिलैश्च निषेवित, G1 कोकिलैश्च सुकूजितै

**9** G4 om 9 (cf v l 5) — $^{b}$) Ś1 K1 2 °हस- (for °भिश्च) — T1 om (hapl) $9^{c}$–$11^{b}$ — $^{d}$) D1 2 आरावै (for व्याहृतै) Ś1 K1–3 D5 मुनि(K3 D5 च वि)नादित (for समल°)

**10** G4 T1 om 10 (cf v l 5, 9), Ś1 om (? hapl) $10^{c}$–$11^{b}$ — $^{c}$) K1 आशागज, K2 आशागण, K3 B Dn D4 6 दिग्वारण, K4 दिशोगज, Dc D1 2 5 दिशागज, D3 दिग्गजाना, T2 (after corr) G3 दिक्कुजर (T2 before corr दिग्गजेन), G1 2 M1 दिग्गजेंद्र (for दिशागज in M1 only) Cf Jacobi, *Das Rāmāyana*, p 6 f — Cf also 1 60 $64^{c}$ — $^{d}$) G2 M2 घृष्ट° (for घृष्ट°)

**11** S1 T1 om $11^{ab}$ (cf v l 9, 10) — $^{b}$) D3 M1 °द्रुम, D5 °सत्व (for °रत्न-) K Dc समाचित, D5 समाश्रित, M1 -लताकुल (for समा°) — G4 om $11^{c}$–$12^{d}$ — $^{c}$) K2 B D (except D1–3) विषोल्वण T G2 3 M2 भुजगैंद्रै

**13** $^{a}$) Dc नृप° (for नर°) — $^{b}$) B3 Dc D1 2 G1 M2 समास्थित, D3 उपास्थित° Ś1 K2–4 D5 तपोयोगसमन्वित — $^{c}$) B D (except D1–3 5) °समक्ष (for °भक्षो ऽभूत्) — $^{d}$) Dn1 n2 D3 T2 G2–4 M2 सहस्र

**14** $^{b}$) S1 K D3 तत्र, D1 2 T2 (before corr) G1 2 दिव्या (for दिव्ये)

**15** $^{b}$) K2 3 T G किंचिद्, D3 किं स्विद् (for किं च) — $^{c}$) S1 K B2 3 Dc D1–3 5 S (except M1) ददामि

दर्शयामास तं गङ्गा तदा मूर्तिमती स्वयम् ॥ १४

गङ्गोवाच ।

किमिच्छसि महाराज मत्तः किं च ददानि ते ।
तद्ब्रवीहि नरश्रेष्ठ करिष्यामि वचस्तव ॥ १५

लोमश उवाच ।

एवमुक्तः प्रत्युवाच राजा हैमवतीं तदा ।
पितामहा मे वरदे कपिलेन महानदि ।
अन्वेषमाणास्तुरगं नीता वैवस्वतक्षयम् ॥ १६
षष्टिस्तानि सहस्राणि सागराणां महात्मनाम् ।
कापिलं तेज आसाद्य क्षणेन निधनं गताः ॥ १७
तेषामेवं विनष्टानां स्वर्गे वासो न विद्यते ।
यावत्तानि शरीराणि त्वं जलैर्नाभिषिञ्चसि ॥ १८
स्वर्गं नय महाभागे मत्पितॄन्सगरात्मजान् ।
तेषामर्थेऽभियाचामि त्वामहं वै महानदि ॥ १९
एतच्छ्रुत्वा वचो राज्ञो गङ्गा लोकनमस्कृता ।
भगीरथमिदं वाक्यं सुप्रीता समभाषत ॥ २०
करिष्यामि महाराज वचस्ते नात्र संशयः ।
वेगं तु मम दुर्धार्यं पतन्त्या गगनाच्च्युतम् ॥ २१
न शक्तस्त्रिषु लोकेषु कश्चिद्धारयितुं नृप ।
अन्यत्र विबुधश्रेष्ठान्नीलकण्ठान्महेश्वरात् ॥ २२
तं तोषय महाबाहो तपसा वरदं हरम् ।
स तु मां प्रच्युतां देवः शिरसा धारयिष्यति ।
करिष्यति च ते कामं पितॄणां हितकाम्यया ॥ २३
एतच्छ्रुत्वा वचो राजन्महाराजो भगीरथः ।

---

K1 2 D5 यद्ब्रवीषि, K4 तद्ब्रूहि वा, D1 2 तद्वै ब्रूहि (for तद्ब्रवीहि) Dc मुनि (for नर°) G2 तद्ब्रूहि नृपतिश्रेष्ठ

**16** All MSS om the ref ! — b) Dc तथा, S (except M1) नदीं (for तदा) — After 16ab, S (except G4) ins

530* तदा भगीरथो राजन्प्रणिपत्य कृताञ्जलि ।

[G1 तथा, M1 नदीं (for तदा) G2 राजा (for राजन्) ] — d) K1 D1 2 T1 G1 M1 °त्मना (for °नदि); cf v l 17

**17** b) Ś1 K1-3 °नदि (for त्मनाम्); cf v l 16 — c) K2 B D (except D2 5) T1 G1 M1 कपिल (for का°) B1 3 4 D (except D1 2 5) T1 G1 M1 तेवम् (for तेज)

**18** a) Ś1 K1 2 गर्व (for एव) — b) B1 D3 T1 2 (before corr) G1 2 M स्वर्गवासो — c) D1-3 सहस्राणि (for शरी ) — d) D1 2 S जलैस्त्व (by transp ) D3 S (except M1) नाभिवर्षसि (D3 से) — After 18, S1 K D5 ins

531* तावत्स्वर्गे न वत्स्यति मम पूर्वपितामहा ।;

while B Dc Dn D3 4 6 ins

532* तावत्तेषां गतिर्नास्ति सागराणां महानदि ।

**19** c) K4 B Dn D4-6 अर्थेन याचामि, D1 अर्थे याच यामि, D3 अर्थेभियाचेह, T G3 अर्थे हि याचामि — d) D1 2 स्वर्गवाहिनि, D3 शिरसा नदि (for वै महा°)

**20** Before 20, all MSS except T1 G1 4 ins लोमश उ — c) Ś1 K1 2 वचो राजन्, K3 महाराज (for वचो राज्ञो) — d) K3 4 प्रीता सा; Dc प्रीतात्मा; D2 प्रतीता (for सुप्रीता) G2 प्रत्य (for सम ) Ś1 साधुत्व सा त्वभापत, K1 प्रीता त सा त्वभा°, K2 प्रीता त्व साधु भा , D3 प्रीता सम्यगभा°, D5 सा प्रीत्या तमभा , M1 प्रीता समनुभाषत

**21** K3 reads 21cd-22ab after 25ab — c) D1 2 त (for तु) S1 K1 2 दुष्पार, K3 दुर्वार, D1 2 दु:साह, D3 दुर्वीज, G4 निर्धार्य K4 D5 दुर्धरो मम वेगस्तु, Dc मम वेग तु दुर्वार्य — d) S1 K1 2 पतत, K4 °सीं (for °न्त्या) K1 भुवि, K4 M2 च्युता, B Dc D5 द्रुत, Dn D1 4 6 भुव; D2 5 (sup lin ) नृप, D3 च्युत°

**22** For K3 cf v l 21 — ab) K4 क्षमस (for शक्तस) K3 न तु मा शक्यते कश्चिच्च्युता धारयितु बलात्

**23** c) B Dn D4 6 T2 G3 स करिष्यति (for करिष्यति च) D5 हि (for च) D1 2 साम्र, T2 G3 4 कर्म (for काम) — After 23, S ins

533* तपसाराधित शंभुर्भगवाँल्लोकभावन ।

**24** a) B Dn D4 6 ततो राजन्; S (except G2 M1) महाराज (for वचो राजन्) — b) Dc °भागो (for °राजो) G1 भगीरथनृपस्तदा — c) Some MSS कैलाश

**25** a) N (except K1) तपस (for ततस) N तीम (for तेन) Ś1 K1 2 4 समासाद्य, K3 B Dn D3-6 उपागम्य; Dc उपाव्रज्य (for समा°) — After 25ab, K3 reads 21cd-22ab, while S ins

534* गङ्गावतरण राजन्नयाचत महीपति ।

— d) Dn D1-4 6 M1 धारणे (for ण) K3 B1 Dc D1 2 G4 नृप (for नृप) — e) Ś1 K1 स्वर्गावास; B Dc Dn D3-6 G4 स्वर्गे वास — f) Ś1 K1 2 4 D5 नरसत्तम, K3

कैलासं पर्वतं गत्वा तोषयामास शंकरम् ॥ २४
ततस्तेन समागम्य कालयोगेन केनचित् ।
अगृह्णाच्च वरं तस्माद्गङ्गाया धारणं नृप ।
स्वर्गवासं समुद्दिश्य पितृणां स नरोत्तमः ॥ २५

इति श्रीमहाभारते आरण्यकपर्वणि सप्ताधिकशततमोऽध्यायः ॥ १०७ ॥

## १०८

लोमश उवाच ।
भगीरथवचः श्रुत्वा प्रियार्थं च दिवौकसाम् ।
एवमस्त्विति राजानं भगवान्प्रत्यभाषत ॥ १
धारयिष्ये महाबाहो गगनात्प्रच्युतां शिवाम् ।
दिव्यां देवनदीं पुण्यां त्वत्कृते नृपसत्तम ॥ २
एवमुक्त्वा महाबाहो हिमवन्तमुपागमत् ।
संवृतः पार्षदैर्घोरैर्नानाप्रहरणोद्यतैः ॥ ३
ततः स्थित्वा नरश्रेष्ठं भगीरथमुवाच ह ।
प्रयाचस्व महाबाहो शैलराजसुतां नदीम् ।
पतमानां सरिच्छ्रेष्ठां धारयिष्ये त्रिविष्टपात् ॥ ४
एतच्छ्रुत्वा वचो राजा शर्वेण समुदाहृतम् ।
प्रयतः प्रणतो भूत्वा गङ्गां समनुचिन्तयत् ॥ ५
ततः पुण्यजला रम्या राज्ञा समनुचिन्तिता ।
ईशानं च स्थितं दृष्ट्वा गगनात्सहसा च्युता ॥ ६
तां प्रच्युतां ततो दृष्ट्वा देवाः सार्धं महर्षिभिः ।
गन्धर्वोरगरक्षांसि समाजग्मुर्दिदृक्षया ॥ ७
ततः पपात गगनाद्गङ्गा हिमवतः सुता ।
समुद्भ्रान्तमहावर्ता मीनग्राहसमाकुला ॥ ८
तां दधार हरो राजन्गङ्गां गगनमेखलाम् ।
ललाटदेशे पतितां मालां मुक्तामयीमिव ॥ ९

---

तव [read नर?]सत्तम॰, D2 4 6 स नरोत्तम

Colophon om in D3 5 — *Major parvan* Ś1 K1 2 Dn2 T1 G2–4 M1 आरण्य, D6 वन (!) — *Sub-parvan* B4 M1 तीर्थयात्रा, followed by आगस्त्य K3 4 Dc D1 2 (om sub parvan name) mention only लोमशतीर्थयात्रा (followed by आगस्त्य in K4 Dc), B1–3 Dn D6, like wise, only आगस्त्य — *Adhy name* Ś1 K1 2 गङ्गावतार॰, K3 सगरोपाख्यान ; T2 G2 3 भगीरथवरलाभ — *Adhy no* (figures, words or both) Dn1 107 (as in text), Dn2 n3 109, D1 112, S 108 (M2 110) — *Śloka no* Dn D1 27

### 108

**2** a) D3 6 T2 G3 4 ॰भाग (for ॰बाहो), cf v l 13 — M2 om (hapl) 2b–4c — b) T2 G3 शुभा (for शिवाम्)

**3** M2 om 3 (cf v l 2) — c) K1 स वृत॰, G1 सर्वत॰ (for संवृत ) Ś1 K2 पर्वतैर्, K1 (orig ) परम ; K1 (*sup lin* ) D2 पर्षतैर् (for पार्षदैर्) K4 B3 3 Dc Dn D1 3–6 M1 वृत पा(Dn3 D3 4 M1 प)रिषदैर्घोरै

**4** M2 om 4abc (cf v l 2) — a) B Dc Dn D3–6 G3 4 M1 तत्र (for ततः) K4 T2 G3 श्रुत्वा (for स्थित्वा) Ś1 K1 2 4 B2 नरश्रेष्ठ, T2 G2 3 नृपश्रेष्ठ — After 4cd, S ins

535* पितॄणा पावनार्थं ते तामहं मनुजाधिप ।

— f) B Dc1 D4 त्रिपिष्टपात्

**5** a) T1 G1 M2 ततो (for वचो) — b) D1 2 शक्रेण उदीरित (with hiatus!) — d) K1 3 4 तामन्व ; D5 तावद॰, S (except M1) हि सम॰ (for समनु॰); but cf 6b

**7** a) B2 M2 प्रच्युता ता (by transp ) B1 3 4 Dn D1–4 6 अथो, B2 S (except M1) तथा (for ततो) — b) Ś1 K Dc S (except T1 G1) देवै (for देवा॰) B3 Dn1 सर्वे, D1 2 सह (for सार्धं) Ś1 K1 2 4 Dc G1 महर्षय॰; T2 G2–4 M प्रजापति (for महर्षिभि ) — c) B Dn D1 2 4 6 T2 G3 4 ॰यक्षाश्च, D3 G2 M1 ॰यक्षैश्च (for ॰रक्षांसि) — d) D3 सजग्मुश्च, G2 M समागच्छन् B D (except D5) T1 G1 4 दिदृक्षव

**8** c) Ś1 Dn2 समुद्धूत॰, K1 2 Dc2 D1 2 ॰द्भूत ; K3 4 Dn1 n3 D5 ॰द्धत॰, B द्रुत॰, Dc1 D3 4 6 G4 ॰द्धूत॰

**9** a) Ś1 K1 2 महा (for हरो) — d) Ś1 K2 पुण्य

सा बभूव विसर्पन्ती त्रिधा राजन्समुद्रगा ।
फेनपुञ्जाकुलजला हंसानामिव पङ्क्तयः ॥ १०
क्वचिदाभोगकुटिला प्रस्खलन्ती क्वचित्क्वचित् ।
स्वफेनपटसंवीता मत्तेव प्रमदाव्रजत् ।
क्वचित्सा तोयनिनदैर्नदन्ती नादमुत्तमम् ॥ ११
एवं प्रकारान्सुबहून्कुर्वन्ती गगनाच्च्युता ।
पृथिवीतलमासाद्य भगीरथमथाब्रवीत् ॥ १२
दर्शयस्व महाराज मार्गं केन व्रजाम्यहम् ।
त्वदर्थमवतीर्णास्मि पृथिवीं पृथिवीपते ॥ १३
एतच्छ्रुत्वा वचो राजा प्रातिष्ठत भगीरथः ।
यत्र तानि शरीराणि सागराणां महात्मनाम् ।
पावनार्थं नरश्रेष्ठ पुण्येन सलिलेन ह ॥ १४
गङ्गाया धारणं कृत्वा हरो लोकनमस्कृतः ।
कैलासं पर्वतश्रेष्ठं जगाम त्रिदशैः सह ॥ १५
समुद्रं च समासाद्य गङ्गया सहितो नृपः ।
पूरयामास वेगेन समुद्रं वरुणालयम् ॥ १६
दुहितृत्वे च नृपतिर्गङ्गां समनुकल्पयत् ।
पितॄणां चोदकं तत्र ददौ पूर्णमनोरथः ॥ १७
एतत्ते सर्वमाख्यातं गङ्गा त्रिपथगा यथा ।
पूरणार्थं समुद्रस्य पृथिवीमवतारिता ॥ १८
समुद्रश्च यथा पीतः कारणार्थे महात्मना ।
वातापिश्च यथा नीतः क्षयं स ब्रह्महा प्रभो ।
अगस्त्येन महाराज यन्मां त्वं परिपृच्छसि ॥ १९

इति श्रीमहाभारते आरण्यकपर्वणि अष्टाधिकशततमोऽध्यायः ॥ १०८ ॥

---

(for मुक्ता )

**10** a) B1 [अ]व (for वि ) D3 G2 M1 बभौ सा विप्र सर्पंती — b) G2 तथा, M1 तत्र (for त्रिधा) — G4 om 10cd, D4 om 10d–11a — d) T G1–3 पक्तिभि (for पङ्क्तय )

**11** D4 om 11abcde — b) Ś1 K1 2 4 T1 [ह्]व च (for the first क्वचित्) — c) K3 D1 2 सु; B Dc Dn D6 सा (for स्व ) — e) T1 वा, G4 स , M स्व (for सा) Ś1 K2 D3 क्वचित्तथा प्रयातेन, K1 त्तथा प्रपातेषु, K3 4 °त्तथा प्रपातेन, D1 2 त्त्स(D2 त्सा)तोयनिनदा, D5 °त्तथा प्रयातेषु — f) D4 हसती (for नदन्ती) — After 11, S (except G1) ins

536* क्वचिदाकाशमावर्तैः सक्षिपन्तीव सर्वशः ।
[T1 आवर्त्ते, T2 (after corr ) G3 आवृत्य (for आवर्तैः ) ]

**12** b) Ś1 K2 4 B Dn D1–5 G4 M कुर्वंती D1 2 6 गगनच्युता — d) S (except M1) उवाच ह (for अथा )

**13** c) S1 K1 2 बाहो; K3 4 Dc D3 5 T2 G3 M1 °भाग (for °राज)

**14** a) Ś1 K1–3 M1 राजन् (for राजा) — After 14cd, M ins

537* प्रापयामास धर्मज्ञ पितृदेवान्तिक नदीम् ।
[M2 प्लाव (for प्राप°), and देहा° (for देवा°) ]

— e) K2–4 B D (except D1 2) M1 प्लाव (for पाव°) — f) S1 K2–4 Dc वै; K1 Dn D4–6 G1 च; M1 स (for ह)

**16** a) Ś1 K1 2 स (for च) B Dn D4 6 समासाद्य समुद्र च — d) K3 4 D5 सागर (for समुद्र) — After 16, D1 2 ins

538* जह्नुना च धृता मुक्ता जाह्नवी तेन सस्मृता ।

**17** a) K4 B1 3 Dn2 त्वेन (for त्वे च) — b) S1 K1 2 समव°, K3 च सम°, K4 D5 स सम°; D1 2 ता सम , D3 समुप°, M1 हि सम° (for समनु°)

**18** d) K4 Dc D3 पृथिव्याम् — After 18, S ins

539* कालेयाश्च यथा राजंस्त्रिदशैर्विनिपातिता ।
[T2 G2–4 महाराज (for यथा राजन्) ]

**19** b) Ś1 K D3 5 कालेयार्थे (D5 °र्थं), B Dc Dn D4 6 कारणार्थं, D1 2 देवार्थं वै (for कारणार्थे) — c) Ś1 K1–3 वातापी च — d) K3 राजन्महा (for स ब्रह्महा) Ś1 K Dc D3 5 [अ]सुर , T1 तथा, G1 विभो (for प्रभो)

Colophon — *Major parvan* S1 K1 2 Dn2 T G2–4 M1 आरण्य — *Sub parvan* Dc M1 तीर्थयात्रा, followed by आगस्त्य K3 4 D1 3 5 (all om sub parvan name) mention only लोमशतीर्थयात्रा (followed by आगस्त्य in K3 4 D3 5), B Dn D2 4 6, likewise, only आगस्त्य K3 4 B1 3 4 Dc Dn D2–5 M1 cont समाप्त — *Adhy name* Ś1 K2 गंगावतार ; K1 D1 2 T2 G3 गंगावतरण, K3 सगरचरित्र — *Adhy no* (figures, words or both) Dn1 108 (as in text), Dn2 n3 110, D1 113, S 109 (M2 111) — *Śloka no* Dn 21

कैलासं पर्वतं गत्वा तोषयामास शंकरम् ॥ २४
ततस्तेन समागम्य कालयोगेन केनचित् ।
अगृह्णाच्च वरं तस्माद्गङ्गाया धारणं नृप ।
स्वर्गवासं समुद्दिश्य पितॄणां स नरोत्तमः ॥ २५

इति श्रीमहाभारते आरण्यकपर्वणि सप्ताधिकशततमोऽध्यायः ॥ १०७ ॥

# १०८

लोमश उवाच ।
भगीरथवचः श्रुत्वा प्रियार्थं च दिवौकसाम् ।
एवमस्त्विति राजानं भगवान्प्रत्यभाषत ॥ १
धारयिष्ये महाबाहो गगनात्प्रच्युतां शिवाम् ।
दिव्यां देवनदीं पुण्यां त्वत्कृते नृपसत्तम ॥ २
एवमुक्त्वा महाबाहो हिमवन्तमुपागमत् ।
संवृतः पार्षदैर्घोरैर्नानाप्रहरणोद्यतैः ॥ ३
ततः स्थित्वा नरश्रेष्ठं भगीरथमुवाच ह ।
प्रयाचस्व महाबाहो शैलराजसुतां नदीम् ।
पतमानां सरिच्छ्रेष्ठां धारयिष्ये त्रिविष्टपात् ॥ ४
एतच्छ्रुत्वा वचो राजा शर्वेण समुदाहृतम् ।
प्रयतः प्रणतो भूत्वा गङ्गां समनुचिन्तयत् ॥ ५
ततः पुण्यजला रम्या राज्ञा समनुचिन्तिता ।
ईशानं च स्थितं दृष्ट्वा गगनात्सहसा च्युता ॥ ६
तां प्रच्युतां ततो दृष्ट्वा देवाः सार्धं महर्षिभिः ।
गन्धर्वोरगरक्षांसि समाजग्मुर्दिदृक्षया ॥ ७
ततः पपात गगनाद्गङ्गा हिमवतः सुता ।
समुद्भ्रान्तमहावर्ता मीनग्राहसमाकुला ॥ ८
तां दधार हरो राजन्गङ्गां गगनमेखलाम् ।
ललाटदेशे पतितां मालां मुक्तामयीमिव ॥ ९

---

सत्तम [read नर ?]सत्तम॰, $D_{3.4.6}$ स नरोत्तम

Colophon om in $D_5$ — *Major parvan* $Ś_1 K_{1.2}$ $Dn_2 T_1 G_{2-4} M_1$ आरण्य; $D_6$ वन (!) — *Sub parvan* $B_4 M_1$ तीर्थयात्रा, followed by आगस्त्य $K_{3.4}$ Dc $D_{1.2}$ (om sub parvan name) mention only लोमशतीर्थयात्रा (followed by आगस्त्य in $K_4$ Dc), $B_{1-3}$ Dn $D_6$, likewise, only आगस्त्य — *Adhy name* $Ś_1 K_{1.2}$ गङ्गावतार॰, $K_3$ सगरोपाख्यान, $T_2 G_{2.3}$ भगीरथवरलाभ — *Adhy no* (figures, words or both) $Dn_1$ 107 (as in text), $Dn_2$ ns 109, $D_1$ 112, S 108 ($M_2$ 110) — *Śloka no* Dn $D_1$ 27

## 108

2 [a]) $D_{3.6} T_2 G_{3.4}$ ॰भाग (for ॰बाहो); cf v l 13 — $M_2$ om (hapl) $2^b$–$4^c$ — [b]) $T_2 G_3$ शुभां (for शिवाम्)

3 $M_2$ om 3 (cf v l 2) — [c]) $K_1$ स वृत॰, $G_1$ सर्वत॰ (for संवृत॰) $Ś_1 K_3$ पर्वतैर्, $K_1$ (orig) परम, $K_1$ (sup lin) $D_2$ पर्पतैर् (for पार्षदैर्) $K_4 B_{2.3}$ Dc Dn $D_{1.3-6} M_1$ वृत पा($Dn_2 D_{3.4} M_1$ प)रिषदैर्घोरै

4 $M_2$ om $4^{abc}$ (cf v l 2) — [a]) B Dc Dn $D_{3-5}$ $G_{3.4} M_1$ तत्र (for ततः) $K_4 T_2 G_3$ श्रुत्वा (for स्थित्वा) $Ś_1 K_{1.2.4} B_2$ नरश्रेष्ठ; $T_2 G_{2.3}$ नृपश्रेष्ठ — After $4^{cd}$, S ins

535* पितॄणां पावनार्थं ते तामहं मनुजाधिप ।

— [f]) B $Dc_1 D_4$ त्रिपिष्टपाद्

5 [a]) $T_1 G_1 M_2$ ततो (for वचो) — [b]) $D_{1.2}$ शंकरेण उदीरित (with hiatus!) — [d]) $K_{1.3.4}$ तामन्व॰; $D_5$ तावद॰, S (except $M_1$) हि सम॰ (for समनु), but cf $6^b$

7 [a]) $B_3 M_2$ प्रच्युता ता (by transp) $B_{1.3.4}$ Dn $D_{1-4.6}$ अथो, $B_2$ S (except $M_1$) तथा (for ततो) — [b]) $Ś_1$ K Dc S (except $T_1 G_1$) देवै (for देवा॰) $B_3 Dn_2$ सर्वे, $D_{1.2}$ सह (for सार्धं) $Ś_1 K_{1.2.4}$ Dc $G_1$ महर्षय॰, $T_2 G_{2-4}$ M प्रजापति॰ (for महर्षिभि॰) — [c]) B Dn $D_{1.2.4.6} T_2 G_{3.4}$ ॰यक्षाश्च, $D_3 G_2 M_1$ ॰यक्षैश्च (for ॰रक्षांसि) — [d]) $D_5$ सजग्मुश्च; $G_2$ M समागच्छन् B D (except $D_5$) $T_1 G_{1.4}$ दिदृक्षव॰

8 [c]) $Ś_1 Dn_2$ समुद्भूत॰, $K_{1.2} Dc_2 D_{1.2}$ ॰द्भूत॰; $K_{3.4}$ $Dn_1$ ns $D_6$ ॰द्धत॰, B द्धत्त॰, $Dc_1 D_{3.4.6} G_4$ ॰द्भुत॰

9 [a]) $Ś_1 K_{1.2}$ महा (for हरो) — [d]) $Ś_1 K_3$ पुण्य

सा बभूव विसर्पन्ती त्रिधा राजन्समुद्रगा ।
फेनपुञ्जाकुलजला हंसानामिव पङ्क्तयः ॥ १०
क्वचिदाभोगकुटिला प्रस्खलन्ती क्वचित्क्वचित् ।
स्वफेनपटसंवीता मत्तेव प्रमदाव्रजत् ।
क्वचित्सा तोयनिनदैर्नदन्ती नादमुत्तमम् ॥ ११
एवं प्रकारान्सुबहून्कुर्वन्ती गगनाच्च्युता ।
पृथिवीतलमासाद्य भगीरथमथाब्रवीत् ॥ १२
दर्शयस्व महाराज मार्गं केन व्रजाम्यहम् ।
त्वदर्थमवतीर्णास्मि पृथिवीं पृथिवीपते ॥ १३
एतच्छ्रुत्वा वचो राजा प्रातिष्ठत भगीरथः ।
यत्र तानि शरीराणि सागराणां महात्मनाम् ।
पावनार्थं नरश्रेष्ठ पुण्येन सलिलेन ह ॥ १४
गङ्गाया धारणं कृत्वा हरो लोकनमस्कृतः ।
कैलासं पर्वतश्रेष्ठं जगाम त्रिदशैः सह ॥ १५
समुद्रं च समासाद्य गङ्गया सहितो नृपः ।
पूरयामास वेगेन समुद्रं वरुणालयम् ॥ १६
दुहितृत्वे च नृपतिर्गङ्गां समनुकल्पयत् ।
पितॄणां चोदकं तत्र ददौ पूर्णमनोरथः ॥ १७
एतत्ते सर्वमाख्यातं गङ्गा त्रिपथगा यथा ।
पूरणार्थं समुद्रस्य पृथिवीमवतारिता ॥ १८
समुद्रश्च यथा पीतः कारणार्थे महात्मना ।
वातापिश्च यथा नीतः क्षयं स ब्रह्महा प्रभो ।
अगस्त्येन महाराज यन्मां त्वं परिपृच्छसि ॥ १९

इति श्रीमहाभारते आरण्यकपर्वणि अष्टाधिकशततमोऽध्यायः ॥ १०८ ॥

# १०९

वैशंपायन उवाच।
ततः प्रयातः कौन्तेयः क्रमेण भरतर्षभ।
नन्दामपरनन्दां च नद्यौ पापभयापहे ॥ १
स पर्वतं समासाद्य हेमकूटमनामयम्।
अचिन्त्यानद्भुतान्भावान्ददर्श सुबहून्नृपः ॥ २
वाचो यत्राभवन्मेघा उपलाश्च सहस्रशः।
नाशक्नुवंस्तमारोढुं विषण्णमनसो जनाः ॥ ३
वायुर्नित्यं ववौ यत्र नित्यं देवश्च वर्षति।
सायं प्रातश्च भगवान्दृश्यते हव्यवाहनः ॥ ४
एवं बहुविधान्भावानद्भुतान्वीक्ष्य पाण्डवः।
लोमशं पुनरेव स पर्यपृच्छत्तदद्भुतम् ॥ ५

लोमश उवाच।
यथाश्रुतमिदं पूर्वमस्माभिररिकर्शन।
तदेकाग्रमना राजन्निबोध गदतो मम ॥ ६
अस्मिन्नृषभकूटेऽभूदृषभो नाम तापसः।
अनेकशतवर्षायुस्तपस्वी कोपनो भृशम् ॥ ७
स वै संभाष्यमाणोऽन्यैः कोपाद्गिरिमुवाच ह।
य इह व्याहरेत्कश्चिदुपलानुत्सृजेस्तदा ॥ ८
वातं चाहूय मा शब्दमित्युवाच स तापसः।
व्याहरंश्चैव पुरुषो मेघेन विनिवार्यते ॥ ९
एवमेतानि कर्माणि राजंस्तेन महर्षिणा।
कृतानि कानिचित्कोपात्प्रतिषिद्धानि कानिचित् ॥ १०

## 109

1 [a]) D1 2 प्रति (for तत°) S1 K1 3 D1 2 5 प्रयाता कौंतेया° — [c]) Ś1 K2 अमर°, K1 असुर°, K4 T1 G2 4 परम°, D1 2 चापर° (for अपर°)
2 [a]) Dn D4 6 पर्वत स (by transp), D1 2 ते पर्वत, G1 देवकूट Ś1 K D3 ततो गिरिवरे पुण्ये — [b]) T2 G3 4 महागिरिं (for अनामयम्) Ś1 K D3 हेमकूटे विशा पते — [d]) K4 D1 2 T1 नृप, D3 5 अपि (for नृप°)
3 [a]) K3 बहुवाता°, K4 B1 4 D3 G1 M2 Cnp वाचा यत्रा°, B2 3 Dc G2 वाता यत्रा°, Dn D4 6 वातावद्धा°, D1 2 सदा चैवा°, T1 वाचाला चा°, T2 (after corr) G3 वातबद्धा° (for वाचो यत्रा°) — [c]) Ś1 K1 3 4 Dc D1-3 5 M2 समा° (for तमा°) — [d]) T2 G2 3 [S]भवन् (for जना°)
4 [a]) K B Dc Dn D3-6 M तत्र (for यत्र) D1 2 ववौ च प्रबलो वायु — After 4[ab], B D (except D1-3 5) ins
540* स्वाध्यायघोषश्च तथा श्रूयते न च दृश्यते।
— After 4, B D (except D1-3 5) ins
541* मक्षिकाश्चादशस्तत्र तपस प्रतिघातिका।
निर्वेदो जायते तत्र गृहाणि स्मरते जन°।
5 [b]) K Dc Dn1 n3 D3 5 प्रेक्ष्य (for वीक्ष्य) Dn2 अद्भुतानुपलक्ष्य स°, D1 2 दृष्ट्वा तत्राथ भारत — [c]) K3 G2 पुनरेव स, K4 D3 5 परिपप्रच्छ, B Dc Dn D1 2 4 6 पुनरेवाथ, T2 G3 4 °वास्य — [d]) B2 युधिष्ठिर (for तद°) K4 D3 5 स चापीदमुवाच ह — After 5, S (except M1) ins
542* युधिष्ठिर°।
यदेतद्भगवञ्चित्र पर्वतेऽस्मिन्महौजसि।
एतन्मे सर्वमाचक्ष्व विस्तरेण महाद्युते।
6 [b]) Ś1 K1-3 B D1 अरिकर्षण, T2 G2-4 भरतर्षभ — [d]) G1 2 4 M2 वदतो (for ग°)
7 [a]) K1 4 T2 G2-4 वृषभ°, T1 पर्वत° (for ऋषभ°) B2 4 S तु (M1 वै) (for ऽभूद्) — [b]) S1 K2 T2 G1 3 4 वृषभो (for ऋषभो) Ś1 राक्षस (for तापस)
8 [a]) Ś1 K1-3 D3 5 च (for वै) K4 वै (for ऽन्यै) — [c]) Ś1 K1 4 यदीह, K3 यदिच्छाद् (for य इह) D1 2 यदि व्याहरते कश्चित् — [d]) Ś1 M2 उत्पलान् (for उपलान्) Ś1 K4 Dc D3 G1 M उत्सृजेत् (for °जेस्) B Dn D4 6 G4 M2 तथा (for तदा) K3 उपलास्त्व समुत्सृज, D1 2 उपलैरभिहन्यते; T1 G2 उपलानुत्सृजेत वा
9 [a]) S1 K1 वाच (for वात) S (except T2 G3) शब्द (for शब्दम्) — [c]) K1 व्याहरेत्, K3 विहरन् K3 4 B Dc Dn D3-6 G2 M चेह, D1 एव, D2 एप (for चैव) Ś1 K1 2 तपसो, D5 पुरुष (for पुरुषो) — [d]) D1 2 परि (for विनि°) K3 मेघैरिह निवा°, B Dn D4 6 S (except M1) मेघशब्देन वा°, D5 मेघो ह्यपि निवा°
10 [a]) Dc एवमादीनि — [b]) S1 K Dc महात्मना (for महर्षिणा) — [c]) B Dn D3-5 T2 G3 क्रोधात् (for कोपात्)

नन्दामभिगतान्देवान्पुरा राजन्निति श्रुतिः ।
अन्वपद्यन्त सहसा पुरुषा देवदर्शिनः ॥ ११
ते दर्शनमनिच्छन्तो देवाः शक्रपुरोगमाः ।
दुर्गं चक्रुरिमं देशं गिरिप्रत्यूहरूपकम् ॥ १२
तदा प्रभृति कौन्तेय नरा गिरिमिमं सदा ।
नाशक्नुवन्नभिद्रष्टुं कुत एवाधिरोहितुम् ॥ १३
नातप्ततपसा शक्यो द्रष्टुमेष महागिरिः ।
आरोढुं वापि कौन्तेय तस्मान्नियतवाग्भव ॥ १४
इह देवाः सदा सर्वे यज्ञानाजह्रुरुत्तमान् ।
तेषामेतानि लिङ्गानि दृश्यन्तेऽद्यापि भारत ॥ १५
कुशाकारेव दूर्वेयं संस्तीर्णेव च भूरियम् ।
यूपप्रकारा बहवो वृक्षाश्चेमे विशां पते ॥ १६
देवाश्च ऋषयश्चैव वसन्त्यद्यापि भारत ।
तेषां सायं तथा प्रातर्दृश्यते हव्यवाहनः ॥ १७
इहाप्लुतानां कौन्तेय सद्यः पाप्मा विहन्यते ।
कुरुश्रेष्ठाभिषेकं वै तस्मात्कुरु सहानुजः ॥ १८
ततो नन्दाप्लुताङ्गस्त्वं कौशिकीमभियास्यसि ।
विश्वामित्रेण यत्रोग्रं तपस्तप्तमनुत्तमम् ॥ १९

वैशंपायन उवाच ।

ततस्तत्र समाप्लुत्य गात्राणि सगणो नृपः ।
जगाम कौशिकीं पुण्यां रम्यां शिवजलां नदीम् ॥ २०

इति श्रीमहाभारते आरण्यकपर्वणि नवाधिकशततमोऽध्यायः ॥ १०९ ॥

---

11 $^{a}$) Ś1 K Dc D1–3 5 चाभि , B Dn D4 6 त्वभि (for अभि॰) B D (except D3 5) T1 गता देवा (for ॰गतान्देवान्) — $^{b}$) Ś1 K इहाश्रमे, D1–3 5 इति श्रुत (for इति श्रुति )

12 $^{a}$) D1 2 M1 तद् (for ते) B Dn D4 6 T2 G1 M2 त्वनिच्छंतो (for अनि॰) Ś1 K1 2 4 D3 5 ते त्वदर्शन-मिच्छन्तो , K3 ते [ऽ]दर्शनमभिप्राप्ता॰, T2 G2–4 तेनादर्शनमि — $^{b}$) Ś1 K Dc D3 इन्द्र॰ (for शक्र॰) — $^{d}$) Ś1 K1 2 B4 D (except D3 5 6) G1 गिरिं (for गिरि॰)

13 $^{a}$) Ś1 K3 Dc D3 5 तत॰ (for तदा) — K4 D3 om (hapl ) 13$^{b}$–14$^{c}$ — $^{c}$) Ś1 K (K4 om ) Dc D5 न शक्नुवति (for नाशक्नुवन्) Dc D2 अति , T1 G1 M2 अपि (for अभि ) — $^{d}$) B1–3 T2 G3 अभि॰ (for अधि॰)

14 K4 D3 om 14$^{abc}$ (cf v l 13) — $^{b}$) D1 2 गिरिरेषोभिवीक्षितु

15 $^{a}$) Ś1 K1 2 सगन्धर्वा, K4 B Dn D4–6 तदा सर्वे; T G1 3 4 तथा सर्वे, M2 तथा चमे (for सदा सर्वे) — $^{c}$) Ś1 K1 2 एषाम् (for तेषाम्) — $^{d}$) Ś1 K Dc D3 5 M1 भरतर्षभ (for ऽद्यापि भारत)

16 $^{a}$) T G M1 कुशाकारेण (G1 आकाशरेणु) T1 दुर्गोय, T2 (before corr ) G M दुर्गेयं (for दूर्वेयं) — $^{b}$) D5 सस्तीर्णा चापि, T2 G3 4 स्वास्तीर्णेव च S मेदिनी (for भूरियम्) — $^{c}$) D1 2 यूपाकाराश्च व॰

17 $^{a}$) T1 G1 M चापि (for the first च) I — $^{c}$) Ś1 K1 2 एव (for तेषा) D1 2 तेषा चैव प्रभावेण

18 $^{b}$) Ś1 K1 2 मन॰ (for सद्य ) T2 G पाप (for पाप्मा) Ś1 नि॰, B D (except D3) [अ]भि , T1 [अ]प , M2 च (for वि ) T2 (before corr ) ॰धीयते (for हन्यते) — $^{c}$) K3 G3 M1 स्व (for वै) — $^{d}$) G2 M1 अस्मिन् (for तस्मात्)

19 $^{a}$) T1 2 (before corr ) G4 ॰प्लुतो गत्वा (for ॰प्लुता ङ्गस्त्व) — $^{b}$) Ś1 K1 2 उपयास्यसि, K3, 4 T2 G2–4 अनुया॰, D2 पुनरेष्यसि (for अभिया॰) — $^{d}$) S (except M1) महात्मना (for अनुत्तमम्)

20 K3 4 B D (except D1–3 5) om the ref — $^{a}$) Ś1 K D1–3 समाप्लाव्य, D5 समाप्याथ, T1 G1 स गात्राणि (for प्लुत्य) — $^{b}$) T1 G1 सम्यगाप्लुत्य भूपति — $^{d}$) B Dn D1 2 4–6 M1 शीत (for शिव॰) B Dn D4 6 शुभा (for नदीम्)

Colophon om in Dn D3 4 6 — *Major parvan* Ś1 K1 T2 G2–4 आरण्य — *Sub parvan* B1 4 Dc G1 M1 तीर्थयात्रा K3 4 B2 D1 2 5 (all om sub parvan name) mention only लोमशतीर्थयात्रा — *Adhy name* K3 ऋषभोपाख्यान; T2 G3 हेमकूटदर्शन — *Adhy no* (figures, words or both) D1 114 (in words) and 113 (in figures), S 110 (M2 112) — *Śloka no* D1 20

# ११०

लोमश उवाच ।
एषा देवनदी पुण्या कौशिकी भरतर्षभ ।
विश्वामित्राश्रमो रम्यो एष चात्र प्रकाशते ॥ १
आश्रमश्चैव पुण्याख्यः काश्यपस्य महात्मनः ।
ऋश्यशृङ्गः सुतो यस्य तपस्वी संयतेन्द्रियः ॥ २
तपसो यः प्रभावेन वर्षयामास वासवम् ।
अनावृष्ट्यां भयाद्यस्य ववर्ष बलवृत्रहा ॥ ३
मृग्यां जातः स तेजस्वी काश्यपस्य सुतः प्रभुः ।
विषये लोमपादस्य यश्चकाराद्भुतं महत् ॥ ४
निवर्तितेषु सस्येषु यस्मै शान्तां ददौ नृपः ।
लोमपादो दुहितरं सावित्रीं सविता यथा ॥ ५
युधिष्ठिर उवाच ।
ऋश्यशृङ्गः कथं मृग्यामुत्पन्नः काश्यपात्मजः ।
विरुद्धे योनिसंसर्गे कथं च तपसा युतः ॥ ६
किमर्थं च भयाच्छक्रस्तस्य बालस्य धीमतः ।
अनावृष्ट्यां प्रवृत्तायां ववर्ष बलवृत्रहा ॥ ७
कथंरूपा च शान्ताभूद्राजपुत्री यतव्रता ।
लोभयामास या चेतो मृगभूतस्य तस्य वै ॥ ८
लोमपादश्च राजर्षिर्यदाश्रूयत धार्मिकः ।
कथं वै विषये तस्य नावर्षत्पाकशासनः ॥ ९
एतन्मे भगवन्सर्वं विस्तरेण यथातथम् ।
वक्तुमर्हसि शुश्रूषोर्ऋश्यशृङ्गस्य चेष्टितम् ॥ १०
लोमश उवाच ।
विभाण्डकस्य ब्रह्मर्षेस्तपसा भावितात्मनः ।

---

## 110

**2** $^{a}$) D3 T2 G3 [ए]ष, D5 [अ]त्र (for [ए]व) — $^{c}$) S1 ऋषि°, K1 2 4 B Dc Dn2 D1–3 5 6 Cnp ऋष्य° (K4 रुष्य°), K3 D4 ऋष° (for ऋश्य°) ❀ Cn ऋश्येति तालव्यादि । मूर्धन्यादिपाठः प्रामादिकः । ❀

**3** $^{a}$) K3 तपसोप्य, B1 4 Dc °सोस्य (for °सो य) S1 K1 2 D1 प्रभावेण, Dc °वस्य — $^{b}$) T2 G3 हर्षं° (for वर्षं°) — $3^{cd}$=(var) $7^{cd}$ — $^{c}$) T2 G3 4 यत्र (for यस्य) — $^{d}$) Dc2 M1 वल° (for बल°)

**4** $^{b}$) D1 2 मुनेर्नृप, G2 महात्मन (for सुत प्रभुः) — $^{c}$) Here and below, T G (as usual) रोम° (for लोम°), the variant is mostly ignored in the sequel

**5** $^{a}$) K3 B Dc D3 4 6 प्रव°, Dn2 n3 G4 निर्व° (for निव°) — $^{b}$) B2 सुता नृप, D3 सुता ददौ (for ददौ नृपः) K3 D2 प्रभुः (for नृपः) — $^{c}$) S1 K1 2 °पाद (for °पादो)

☞ For higher criticism of the Rsyaśrnga episode, cf Lüders, "Die Sage von Rsyaśrnga," *Nachrichten von der königl Gesellschaft der Wissenschaften zu Göttingen*, Phil-hist Kl, 1897, Heft 1, pp 87–135, 1901, Heft 1, pp 28–56

**6** K2 reads (irrelevantly) 6–10 before 1 — $^{a}$) S1 ऋषि°, K1 3 4 B Dc Dn2 n3 D1–4 6 ऋष्य° (K4 रुष्य°), K2 Dn1 D5 ऋष्य श्टग — $^{c}$) K3 4 D3 G1 3 4 विरुद्ध- T2 G3 °ससर्गात्, G2 4 °ससर्गे — $^{d}$) D5 कथ स भगवान्प्रभुः

**7** $^{ab}$) K1 2 M1 transp शक्रः and तस्य G2 यस्य (for तस्य) — $7^{cd}$=(var) $3^{cd}$

**8** K4 om (hapl) $8^{a}$–$9^{b}$, G4 om 8–9 — $^{a}$) Ś1 K1 2 कथ च रूपा (K1 °प) (for कथरूपा च) Dn D3 4 6 सा शाता, M2 शाता च (for शान्ताभूद्) — $^{b}$) D1 2 यश स्विनी, T2 G2 3 पतिव्रता (for यत°) — $^{d}$) Ś1 K1 2 मृग रूपस्य, T G1 3 मृगीभूतस्य D2 वै द्विज, T2 G3 वै तदा (for तस्य वै)

**9** K4 om $9^{ab}$, G4 om 9 (cf v l 8) — $^{b}$) S (except G1, G4 om) यथा° (for यदा°) B4 Dc पार्थिव (for धार्मिक) S1 K (K4 om) श्रूयते धार्मिको यदा — $^{c}$) Ś1 K D1 3 न (for वै) Ś1 K वृष्टवान् (for विषये) — $^{d}$) S1 K विषये, D1 3 प्रावर्षत् (for नावर्षत्)

**10** $^{c}$) K3 विप्रर्षे, K4 शुश्रूषे, D1 2 [अ]शेषेण (for शुश्रूषोर्) — $^{d}$) N ऋष्य (K2 ऋषि-) (for ऋश्य) S1 K1 2 शृगन्यवस्थित (K1 °ति), D1 2 -शृगविचेष्टित (for -शृङ्गस्य चे°)

**11** $^{a}$) S1 (corrupt) विभन्नादस्य, T1 G2 4 M विभड कस्य K4 B1 राजर्ष, B2 Dn D3 विप्रर्षेस, D1 2 राजेंद्र — $^{b}$) K1 2 विभवाद्; D1 2 महर्षेर् (for तपसा)

अमोघवीर्यस्य सतः प्रजापतिसमद्युतेः ॥ ११
शृणु पुत्रो यथा जात ऋश्यशृङ्गः प्रतापवान् ।
महाह्रदे महातेजा बालः स्थविरसंमतः ॥ १२
महाह्रदं समासाद्य काश्यपस्तपसि स्थितः ।
दीर्घकालं परिश्रान्त ऋषिर्देवर्षिसंमतः ॥ १३
तस्य रेतः प्रचस्कन्द दृष्ट्वाप्सरसमुर्वशीम् ।
अप्सूपस्पृशतो राजन्मृगी तच्चापिबत्तदा ॥ १४
सह तोयेन तृषिता सा गर्भिण्यभवन्नृप ।
अमोघत्वाद्विधेश्चैव भावित्वाद्दैवनिर्मितात् ॥ १५
तस्यां मृग्यां समभवत्तस्य पुत्रो महानृषिः ।
ऋश्यशृङ्गस्तपोनित्यो वन एव व्यवर्धत ॥ १६
तस्यर्श्यशृङ्गं शिरसि राजन्नासीन्महात्मनः ।
तेनर्श्यशृङ्ग इत्येवं तदा स प्रथितोऽभवत् ॥ १७
न तेन दृष्टपूर्वोऽन्यः पितुरन्यत्र मानुषः ।
तस्मात्तस्य मनो नित्यं ब्रह्मचर्येऽभवन्नृप ॥ १८
एतस्मिन्नेव काले तु सखा दशरथस्य वै ।
लोमपाद इति ख्यातो अङ्गानामीश्वरोऽभवत् ॥ १९
तेन कामः कृतो मिथ्या ब्राह्मणेभ्य इति श्रुतिः ।
स ब्राह्मणैः परित्यक्तस्तदा वै जगतीपतिः ॥ २०
पुरोहितापचाराच्च तस्य राज्ञो यदृच्छया ।

---

**12** $^{a}$) D1 2 जज्ञे (for जात) — $^{b}$) N ऋष्य (K2 ऋषि°) (for ऋश्य°) — $^{c}$) Ś1 महापुत्रो, K1 ह्रदा; K3 ब्रह्मपुत्रो; K3 महाम्रहे (sup lin °ह्र), K4 बलो, B1 3 Dc महार्हे स, B3 Dn D4–6 G1 °हंस, T1 व्रतो (for ह्रदे), cf 13$^{a}$

**13** $^{b}$) D3 5 तप आस्थित॰ (for तपसि स्थित॰) — $^{c}$) Ś1 K1 4 D3 T2 G3 4 M2 काल (for कालं) — $^{d}$) To avoid hiatus, Ś1 K D3 5 मुनिर् (for ऋषिर्) K3 4 B3 समित, D3 5 T2 G2–4 M2 सत्तम॰ Dc Dn B3 D4 6 ऋषि॰ स (Dc Dn2 by transp स ऋषिर्) देवसमित, G1 स ऋषिर्देवसत्तम

**15** $^{a}$) Ś1 K1 2 सा हि (for सह) — $^{b}$) S1 K1 2 ह्यतर्वस्त्यभवत्, B Dc Dn D4 6 गर्भिणी चा (B1 4 Dc2 सा) भवत् (for सा गर्भिण्यभवत्) S1 K1–3 B3 4 Dc Dn D3–6 तस॰, K4 B1 2 D1 G1 तदा (for नृप) — After 15$^{ab}$, K1 2 B Dc Dn D3 (marg sec m) 4 6 T2 (sec m) G3 ins

543* सा पुरोक्ता भगवता ब्रह्मणा लोककर्तृणा ।
देवकन्या मृगी भूत्वा मुनिं सूय विमोक्ष्यसे ।

[Occurs (with v l) in a Padmapurāna MS (Beng Rec), *vide* Lüders, *op cit*, pp 99 ff]

— $^{c}$) Ś1 K2 ऋषेश्चैव, K1 4 च बीजस्य, K3 च जीवस्य; D1 2 च वसृधे, D3 5 हि वीर्यस्य (for विधेश्चैव) — $^{d}$) Ś1 K2 D4 भवित्वा; K1 भवित्वाद् K1 4 B D3 S (except G1 M2) देव K3 °निर्मित; K3 B1 4 निर्मित°, B2 निर्मिता

**16** $^{b}$) D1 2 तस्य चैव ऋषे सुत — $^{c}$) Ś1 K1 2 4 B D (except Dn1 n3) ऋष्य°; K2 ऋषि (for ऋश्य) Ś1 K3 D3 5 इति ख्यातो, K1 2 4 D1 2 T1 ततो नित्य (T1 त्यो) (for तपो) — $^{d}$) Dc बाल (for वन) K3 चैव, D1 2 तस्मिन् (for एव) B1 3 [अ]भ्यवर्धत, B2 4 Dc Dn D4 6 [अ]भ्यवर्तत, T1 विवर्धत (for व्य) Ś1 स तदा पाण्डवर्षभ ।

**17** Ś1 om 17$^{a}$–18$^{b}$ — $^{a}$) K1 2 T1 G1 तस्य शृङ्ग (T1 G1 ग) स शिरसि, K3 B D तस्यर्षे (D3 °र्षि) शृङ्ग (B1 शृङ्ग तु) शिरसि, T2 G2–4 तस्य शृङ्ग शिरसि वै — $^{c}$) K B1 2 4 D (except Dn1 n3) तेनर्ष्य, T1 स ऋश्य° K3 D6 T2 G M इत्युक्त॰, K4 D3 T1 इत्येव, D1 2 इत्येतत् (for इत्येवं) — $^{d}$) K4 नाम्ना (for तदा) K3 D6 S (except T1) स तदा (K3 भवत्) पाण्डवर्षभ, B2 तदाभूत्प्र थितो हि स, D1 2 नाम्ना चक्रे पिता तत॰

**18** Ś1 om 18$^{ab}$ (cf v l 17) — $^{b}$) K D3 5 M1 विना पित्रा तु (for पितुरन्यत्र) T2 G3 4 मानव॰ (for मानुष) — $^{d}$) D1 2 व्यवस्थित, T1 G1 व्यवर्धत (for [ऽ]भवन्नृप)

**19** $^{b}$) Ś1 K1–3 D1–3 5 स राजा राजसत्तम — $^{d}$) To avoid hiatus, S1 K D1–3 5 6 स्व (K3 च) गानाम्, B Dn1 S ह्यगानाम् (for अङ्गानाम्) — After 19, T1 ins

544* प्रेमोषितापचारेण तस्य राज्ञो युधिष्ठिर ।
[Cf 3 110 21$^{ab}$]

**20** $^{a}$) N G1 कामात्, M2 कामा (for काम) N (except Ś1 K1) T2 G3 कृत, T1 G1 2 M2 कृता (for कृतो) — $^{b}$) D3 ब्राह्मणेषु (for °भ्य) K2 श्रुत (for श्रुति) B Dc Dn D4 6 ब्राह्मणस्येति न श्रुति॰ (B2 4 Dc °त) — After 20$^{ab}$, S ins

545* दैवोपहतसत्त्वेन धर्मज्ञेनापि भारत ।

— $^{d}$) Dc1 om 20$^{d}$ Dc2 T1 तथा; Dn ततो (for तदा) B1 3 4 Dn D4 वै जगत पति, S भरतसत्तम

**21** S1 om (hapl) 21–22 — $^{a}$) K3 S °चारेण

न ववर्ष सहस्राक्षस्ततोऽपीड्यन्त वै प्रजाः ॥ २१
स ब्राह्मणान्पर्यपृच्छत्तपोयुक्तान्मनीषिणः ।
प्रवर्षणे सुरेन्द्रस्य समर्थान्पृथिवीपतिः ॥ २२
कथं प्रवर्षेत्पर्जन्य उपायः परिदृश्यताम् ।
तमूचुश्चोदितास्तेन स्वमतानि मनीषिणः ॥ २३
तत्र त्वेको मुनिवरस्तं राजानमुवाच ह ।
कुपितास्तव राजेन्द्र ब्राह्मणा निष्कृतिं चर ॥ २४
ऋश्यशृङ्गं मुनिसुतमानयस्व च पार्थिव ।
वानेयमनभिज्ञं च नारीणामार्जवे रतम् ॥ २५
स चेदवतरेद्राजन्विषयं ते महातपाः ।
सद्यः प्रवर्षेत्पर्जन्य इति मे नात्र संशयः ॥ २६

एतच्छ्रुत्वा वचो राजन्कृत्वा निष्कृतिमात्मनः ।
स गत्वा पुनरागच्छत्प्रसन्नेषु द्विजातिषु ।
राजानमागतं दृष्ट्वा प्रतिसंजगृहुः प्रजाः ॥ २७
ततोऽङ्गपतिराहूय सचिवान्मन्त्रकोविदान् ।
ऋश्यशृङ्गागमे यत्नमकरोन्मन्त्रनिश्चये ॥ २८
सोऽध्यगच्छदुपायं तु तैरमात्यैः सहाच्युतः ।
शास्त्रज्ञैरलमर्थज्ञैर्नीत्यां च परिनिष्ठितैः ॥ २९
तत आनाययामास वारमुख्या महीपतिः ।
वेश्याः सर्वत्र निष्णातास्ता उवाच स पार्थिवः ॥ ३०
ऋश्यशृङ्गमृषेः पुत्रमानयध्वमुपायतः ।
लोभयित्वाभिविश्वास्य विषयं मम शोभनाः ॥ ३१

---

(for °चाराच) — b) T2 G2 3 राष्ट्रे (for राज्ञो) G1 (*sup lin*) युधिष्ठिर (for यद्द°)

**22** Ś1 om 22 (cf v l 21), G1 om 22-23 — a) D1 नृपोपृ° (for पर्यपृ°) — G4 om 22cd — d) K1 2 T1 G2 समर्थं ; T3m °र्थं (for °र्थान्) B D (except D1-3 5) °पते (for °पतिः)

**23** G1 om 23 (cf v l 22) — a) K3 वर्षेत, D1 2 वर्षेत्तु, T2 G (G1 om) हि वर्षेत् (for प्रवर्षेत्) — b) K3 Dc D2 °चिन्त्य°, T1 G2 °मृश्य°, T3 G3 M1 °मृग्य°, M2 °गम्य° (for °दृश्य°) — c) K4 G4 त ऊचुश्च, Dc1 नोचुस्त (for तमूचुश्च) Ś1 K1 2 तत्र, K4 त च, B4 Dn D4-6 ते तु, Dc1 राजन् (for तेन) — d) K3 प्रसन्नाश्च, B4 स्वमतेन, Dc1 ब्राह्मणास्ते, D1 2 ब्राह्मणाश्च (for स्वम )

**24** ab) D1 2 एकस्तत्राब्रवीद्वाक्य राजान मुनिपुगव — d) D1 2 °णा समितिंजय

**25** a) N ऋष्य° (K1 2 ऋषि°) Ś1 K1-3 B2 D3 T1 G2 M2 °वरम् (for °सुतम्) — b) T1 G1 आह्वयस्व (for आन°) D1 2 [इ]ह (for च) — c) K1 वानीय°, K4 मानेय°, D1 2 वार्ताया°, T2 G2-4 ऐणेय° (for वानेय°) Ś1 K2 वरणीयमभिज्ञ च

**26** a) D1 2 स च वै यत्र भवति — b) Dc2 D1 2 विषयाते (for विषय ते) — d) K3 नास्त्यत्र, T2 G M मे नास्ति (M2 नास्ति न) (for मे नात्र) D2 निश्चित मन° (for नात्र मशय°)

**27** a) T2 G3 ज्ञात्वा (for श्रुत्वा) T G1 2 4 M वन (for वचो) K1 4 Dc D1-3 T2 G3 4 M राजा (for राजन्) K3 G2 तच्छ्रुत्वा च वचो (G2 वचन) राजा — b) K4 D3 चक्रे, S गत्वा (T1 G1 राजा) (for कृत्वा) — c) S कृत्वा (for गत्वा) D1 2 आगम्य; M1 आयात° (for आगच्छत्) — e) B Dc Dn D4 6 G1 श्रुत्वा, D1 2 मत्वा, T G2-4 M2 ज्ञात्वा (for दृष्ट्वा) — f) B Dc Dn D4 6 G1 °जहृषु° (for °जगृहु°) Ś1 K D3 5 त प्रजा (K3 by transp प्रजास्त, D5 ते पूजा) जगृहुस्तदा; D1 2 प्रजा° सर्वा° प्रजहर्षिरे (hypermetric !) — After 27, S ins

546* स च ता प्रतिजग्राह पितेव हितकृत्सदा ।

**28** a) D1 2 मन्त्रिणश्च समाहूय — b) D1 2 सचिन्त्य (for सचिवान्) B1 D1 2 T2 G2 3 (T2 G3 both before corr ) M2 मन्त्रकोविद° — c) N (except Dn1 n3) ऋष्य° Ś1 K1 2 ऋष्यशृग समागम्य — d) T1 G2 मन्त्रनिश्चय° (G3 °य), T2 G3 4 मन्त्रिणश्च ये Ś1 K1 2 चक्रतुर् (K1 चक्रुस्तन्) मन्त्रनिश्चय

**29** K1 2 om 29 — a) Ś1 K4 G3 M1 सोम्य° (for सोऽध्य°) K4 Dc2 D3 उपायान् B1-3 त, Dc2 तु (for तु) — b) K4 B1-3 T1 G4 M1 सहाच्युत (M1 त); D3 नृपोत्तम — T2 G3 4 om 29cd — c) K3 विमलप्रज्ञैर्, T1 G2 M2 सचिवैर्नित्य, G1 सकलैर्नित्य (for अलमर्थज्ञैर्) — d) T1 हिते च, G2 मन्त्रज्ञै° (for नीत्या च)

**30** a) D5 तत्र (for तत) K3 Dn D5 चानाय° B1 3 4 आज्ञाप° (for आनाय°) M आनया(M2 आनायया)मास पुरुषै° — c) K3 D1 2 विख्यातास्, D5 निपुणास् (for निष्णातास्)

**31** a) N ऋष्य° (K2 ऋषि°; K4 रुष्य°) (for ऋश्य°) — c) K1 2 Dc G1 2 [अ]ति-, K3 D1-3 च, T1 तु, T2 G3 4 [अ]पि (for [अ]भि-) Ś1 K1 2 Dc विश्वास्य; S

ता राजभयभीताश्च शापभीताश्च योषितः ।
अशक्यमूचुस्तत्कार्यं विवर्णा गतचेतसः ॥ ३२
तत्र त्वेका जरद्योषा राजानमिदमब्रवीत् ।
प्रयतिष्ये महाराज तमानेतुं तपोधनम् ॥ ३३
अभिप्रेतांस्तु मे कामान्समनुज्ञातुमर्हसि ।
ततः शक्ष्ये लोभयितुमृश्यशृङ्गमृषेः सुतम् ॥ ३४
तस्याः सर्वमभिप्रायमन्वजानात्स पार्थिवः ।
धनं च प्रददौ भूरि रत्नानि विविधानि च ॥ ३५
ततो रूपेण संपन्ना वयसा च महीपते ।
स्त्रिय आदाय काश्चित्सा जगाम वनमञ्जसा ॥ ३६

इति श्रीमहाभारते आरण्यकपर्वणि दशाधिकशततमोऽध्यायः ॥ ११० ॥

# १११

लोमश उवाच ।
सा तु नाव्याश्रमं चक्रे राजकार्यार्थसिद्धये ।
संदेशाच्चैव नृपतेः स्वबुद्ध्या चैव भारत ॥ १
नानापुष्पफलैर्वृक्षैः कृत्रिमैरुपशोभितम् ।
नानागुल्मलतोपेतैः स्वादुकामफलप्रदैः ॥ २
अतीव रमणीयं तदतीव च मनोहरम् ।
चक्रे नाव्याश्रमं रम्यमद्भुतोपमदर्शनम् ॥ ३
ततो निबध्य तां नावमदूरे काश्यपाश्रमात् ।
चारयामास पुरुषैर्विहारं तस्य वै मुनेः ॥ ४
ततो दुहितरं वेश्या समाधायेतिकृत्यताम् ।

---

°विश्वस्त (for विश्वास्य) — After 31, Ś$_1$ $K_{1, 2}$ $D_{3, 5}$ ins
547* नियोजयामास च तास्तस्य बालस्य लोभने ।

**32** $D_5$ om 32$^{c}$–33$^{b}$ — $^{c}$) Ś$_1$ $K_2$ तत्काल, $D_{1, 2}$ तत्काले (for तत्कार्यं) — $^{d}$) $K_3$ S विषण्णा (for विवर्णा) Ś$_1$ $K_{1, 2}$ विच्चरतमचेतस, $D_{1, 2}$ विषण्णवदनाश्चिष

**33** $D_5$ om 33$^{ab}$ (cf v l 32) — $^{a}$) $K_3$ काचिद् (for त्वेका) $K_3$ नवीयोषा; $D_1$ वरारोहा, $D_8$ जराविष्टा (for जरद्योषा) — $^{d}$) $K_3$ $B_4$ आनेतु त (by transp) $B_2$ मुने॰ सुत (for तपो॰)

**34** $^{b}$) B Dn $D_{2, 4, 6}$ $T_1$ $G_1$ $M_2$ स्वमनु (for समनु) — $^{c}$) $K_1$ शिक्ष्ये, $K_2$ शक्ये, $K_3$ $D_{1, 6}$ शक्याम, $K_4$ शिष्ये; B शक्यामि, Dc शक्ष्यसि, Dn $D_4$ शक्ष्यामि, $D_2$ शिष्यम्, $D_5$ शक्यो (for शक्ष्ये) B D (except $D_{3, 5}$) [आ]न॰ (for लोभ) — $^{d}$) N (except $B_{1, 2}$ $Dn_1$) ऋष्य (K$_1$ ऋषि॰) $K_3$ तपोधन; Dc मुने॰ सुत (for ऋषे॰ सुतम्)

**35** $^{a}$) B D (except $D_{1-3, 5}$) प्रेतम् (for ॰प्रायम्) $K_4$ तस्या सर्वानुपायार्थान्, $T_2$ $G_{3, 4}$ स तस्याः समभिप्रायम् ($G_4$ प्रेतम्) — $^{b}$) Ś$_1$ $D_5$ अनु॰, $M_1$ अभि॰ (for अन्व॰) $K_4$ अभिप्रेत्य महीपति

**36** $^{b}$) Ś$_1$ $K_{1, 3, 4}$ $D_5$ विशां पते (for मही॰)

Colophon — *Major parvan* Ś$_1$ $K_{1, 2}$ $Dn_2$ T $G_{2-4}$ $M_1$ आरण्य — *Sub parvan* $M_1$ तीर्थयात्रा, followed by ऋश्यशृङ्गोपाख्यान $K_1$ $B_{1, 3, 4}$ Dc Dn $D_{2-6}$ $T_2$ $G_3$ (all om sub parvan name) mention only ऋष्य($T_2$ $G_3$ ॰श्य)शृङ्गोपाख्यान; $K_{3, 4}$ $B_2$ $D_1$, likewise, only लोमशतीर्थयात्रा, followed by ऋष्यशृङ्गोपाख्यान — *Adhy name* $T_2$ $G_3$ योषित्प्रेरण — *Adhy no* (figures, words or both) $Dn_2$ $n_2$ S 111 ($M_2$ 113), $D_1$ 115 — *Śloka no* Dn 58, $D_1$ 37

## 111

**2** $G_4$ om 2$^{a}$–3$^{b}$ — $^{b}$) $K_3$ नृप शोभित, $B_2$ Dn $D_{4, 6}$ $M_2$ उपशोभितै॰

**3** $G_4$ om 3$^{ab}$ (cf v l 2) — $^{a}$) Ś$_1$ $K_{1, 4}$ $B_{1, 4}$ M तम् (for तद्) — $^{b}$) $K_{3, 4}$ सु (for च) $D_{1, 2}$ $G_2$ M ॰रम (for ॰हरम्)

**4** $^{a}$) $D_{1, 2}$ निबध्याथ ततो माया — $^{b}$) $D_{1, 2}$ सादूरे, $D_5$ ब्य॰ (for अ) Ś$_1$ $K_2$ काश्यपाश्रम, $K_4$ काश्यपाश्रमात्

**5** $D_5$ om 5$^{ab}$ — $^{a}$) N (except $K_3$ $Dn_3$ $D_3$, $D_5$ om) $G_1$ $M_1$ वेश्या — $^{b}$) Ś$_1$ साध, $K_{2, 4}$ ॰श्वास्य; $K_3$ ॰दश्य, $D_{1, 2}$ दिश्य; $D_3$ ॰शास्य; M ॰ध्याप्य (for धाय) B D (except $D_{1-3}$, $D_5$ om) ॰कार्यता (for कृत्यताम्) $G_1$ (corrupt) समधाये निकृत्यता — $^{c}$) $T_1$ $G_1$ M [आ]श्रम; $T_2$ $G_{2-4}$ [आ]त्मज (for [अ]न्तर)

दृष्ट्वान्तरं काश्यपस्य प्राहिणोद्बुद्धिसंमताम् ॥ ५
सा तत्र गत्वा कुशला तपोनित्यस्य संनिधौ ।
आश्रमं तं समासाद्य ददर्श तमृषेः सुतम् ॥ ६
वेश्योवाच ।
कच्चिन्मुने कुशलं तापसानां
कच्चिच्च वो मूलफलं प्रभूतम् ।
कच्चिद्भवान्रमते चाश्रमेऽस्मिं-
स्त्वां वै द्रष्टुं सांप्रतमागतोऽस्मि ॥ ७
कच्चित्तपो वर्धते तापसानां
पिता च ते कच्चिदहीनतेजाः ।
कच्चित्त्वया प्रीयते चैव विप्र
कच्चित्स्वाध्यायः क्रियते ऋश्यशृङ्ग ॥ ८
ऋश्यशृङ्ग उवाच ।
ऋद्धो भवाञ्ज्योतिरिव प्रकाशते
मन्ये चाहं त्वामभिवादनीयम् ।
पाद्यं वै ते संप्रदास्यामि कामा-
द्यथाधर्मं फलमूलानि चैव ॥ ९
कौश्यां बृस्यामास्स्व यथोपजोषं
कृष्णाजिनेनावृतायां सुखायाम् ।
क्व चाश्रमस्तव किं नाम चेदं
व्रतं ब्रह्मंश्चरसि हि देववत्त्वम् ॥ १०
वेश्योवाच ।
ममाश्रमः काश्यपपुत्र रम्य-
स्त्रियोजनं शैलमिमं परेण ।
तत्र स्वधर्मोऽनभिवादनं नो
न चोदकं पाद्यमुपस्पृशामः ॥ ११
ऋश्यशृङ्ग उवाच ।
फलानि पक्वानि ददानि तेऽहं
भल्लातकान्यामलकानि चैव ।
परूषकानीङ्गुदधन्वनानि

---

6 $^{a}$) D1 2 पद्भिरेव ततो गत्वा — $^{b}$) S1 K D3 G1 तपोयुक्तस्य D1 2 ऋष्यशृङ्गमुवाच सा, D5 पुरुषान्प्रददर्श ह — $^{cd}$) S1 K1 2 च, K3 तत् (for त) K1 2 °गम्य (for °साद्य) T2 G2–4 ददृशे (for ददर्श) D1 2 रहोपगम्य चकिता काश्यपस्य महात्मन॰

7 Cf Jātaka (ed Fausböll), vol 5, No 526, Gāthā 18 — $^{a}$) D5 वनेषु (for मुने) — $^{b}$) D1 2 साधो; D5 वने (for च वो) D1 2 फलमूल (for मूलफल) B Dc T G पिता च ते कच्चिदहीनतेजा॰ (=8$^{b}$) — $^{c}$) D1 2 स्वे (for ऽस्मिन्) — $^{d}$) S1 K1 3 D3 M च (for वै) Ś1 K1 2 B1 3 T2 G3 4 M1 आगतास्मि K4 त्वा साप्रत द्रष्टुमुपागतास्मि

8 $^{b}$) B1 2 4 Dc कच्चिच्च मूल च फल प्रभू(Dc° सू)त, B3 T2 G कच्चिच्च वो मूलफल प्रभूत (G1 प्रसूत, G2 समृद्ध) (cf 7$^{b}$), D1 2 पिता च ते कुशली विप्रमुख्य॰ — $^{c}$) S1 K D1 2 चापि (for चैव) — $^{d}$) N ऋष्य° (K1 ऋषि°, B Dc Dn D4 6 to avoid hiatus चर्ष्य°; D3 5 वै यथावत्), T1 G1 4 M (to avoid hiatus) चर्श्य° (for ऋश्य°)

9 $^{a}$) K1 2 B Dc Dn D4–6 ऋद्धया, K3 T1 वृद्धो, T2 G शुद्धो (for ऋद्धो) — $^{b}$) K4 वन्येनाह त्वमभिवा° — $^{c}$) S1 K D1–3 5 6 च ते, S ते वै (for वै ते) — $^{d}$) K3 यथोचित, G1 यथा च मे (for °धर्मं) K3 Dc D1 3 T G3 4 M मूलफलानि, G1 स्वात्कुशलानि (for फल°)

10 $^{a}$) Ś1 ब्रस्याम्; K3 B Dc D1–6 बृष्याम्, K4 Dn बृश्याम् (for बृस्याम्) — $^{b}$) K3 4 D3 5 शुभाया; T2 G3 3 सुखाय (for सुखायाम्) — $^{d}$) K3 Dc Dn3 T1 om हि T2 G3 ह, G2 [ह्रि]ह (for हि) G1 वने वद त्व (for हि देववत्त्वम्) D3 °कल्प॰ (for °वत्त्वम्)

11 Cf Jātaka (ed Fausböll), vol. 5, No 526, Gāthā 19$^{cd}$ — $^{b}$) D1 2 न दूरतो दृश्यते योजनानि — $^{c}$) S1 K D1–3 ह्यभि°, B Dn नाभि° (for ऽनभि°) D5 ह्यभिवादयतो (for ऽनभिवादन नो) Ś1 K1 2 च, B Dc Dn D4 6 G1 मे, D1 2 ते (for नो) — $^{d}$) Ś1 K3 4 D1–3 अपि स्पृशाम॰, B2–4 Dn D4 6 उपस्पृशामि; D5 अभिस्पृशाम॰ — After 11, K1 2 B Dc Dn D5(marg sec m) 4 6 ins

548* भवता नाभिवाद्योऽहमभिवाद्यो भवान्मया ।
व्रतमेतादृश ब्रह्मन्परिष्वज्यो भवान्मया ।

[Occurs (with v l) in a Padmapurāṇa MS (Beng Rec), *vide* Lüders, *op cit*, pp 99 ff ]

12 $^{a}$) K3 4 B Dn3 D1–3 5 ददामि — $^{c}$) Ś1 सरूप, K2 मरूप°, B Dc Dn D4 6 करूप°, D1 मरूड°, S (except M1) विल्वानि चैव (for परूषकानि) — $^{d}$) Ś1 K1–3 प्रियालाना, B1 2 4 Dc Dn1 n3 D3 4 5 पिप्पलाना, B1m 3

प्रियालानां कामकारं कुरुष्व ॥ १२

लोमश उवाच ।

सा तानि सर्वाणि विसर्जयित्वा
भक्षान्महार्हान्प्रददौ ततोऽस्मै ।
तान्यृश्यशृङ्गस्य महारसानि
भृशं सुरूपाणि रुचिं ददुर्हि ॥ १३
ददौ च माल्यानि सुगन्धवन्ति
चित्राणि वासांसि च भानुमन्ति ।
पानानि चाग्र्याणि ततो मुमोद
चिक्रीड चैव प्रजहास चैव ॥ १४
सा कन्दुकेनारमतास्य मूले
विभज्यमाना फलिता लतेव ।
गात्रैश्च गात्राणि निषेवमाणा
समाश्लिषच्चासकृदृश्यशृङ्गम् ॥ १५
सर्जानशोकांस्तिलकांश्च वृक्षा-
न्प्रपुष्पितानवनाम्यावभज्य ।
विलज्जमानेव मदाभिभूता
प्रलोभयामास सुतं महर्षेः ॥ १६
अथर्श्यशृङ्गं विकृतं समीक्ष्य
पुनः पुनः पीड्य च कायमस्य ।
अवेक्षमाणा शनकैर्जगाम
कृत्वाग्निहोत्रस्य तदापदेशम् ॥ १७
तस्या गतायां मदनेन मत्तो
विचेतनश्चाभवदृश्यशृङ्गः ।
तामेव भावेन गतेन शून्यो
विनिःश्वसन्नार्तरूपो बभूव ॥ १८
ततो मुहूर्ताद्धरिपिङ्गलाक्षः
प्रवेष्टितो रोमभिरा नखाग्रात् ।
स्वाध्यायवान्वृत्तसमाधियुक्तो
विभाण्डकः काश्यपः प्रादुरासीत् ॥ १९

---

D5 T1 प्रियालकाना (D5 कान्) T2 G2-4 काक्षित वै (for कामकार) For 12[d], Dn2 D1 2 read प्रियालतिंदूकमधूनि यानि, and cont

549* गृहाण कामाद्धि ममोपकारा
त्कुरुष्व काम यदभीप्सित मे ।

**13** [a]) Ś1 K1 2 विसृज्य वेश्या; K3 4 D2 5 विसृज्य वे(K3 वै)श्या, B3 Dn D4 6 विवर्जयित्वा, D1 2 विहाय राजन् (for विसर्ज ) — [b]) K1 B2 3 Dn D4, 6 भक्ष्याण्य नर्हाणि ददौ (B3 णि प्रददौ) (for भक्षान्महार्हान्प्रददौ) K3 B1 D3 2 T2 G3 4 च तस्मै; B2-4 Dc Dn D4 6 ततोस्य (Dc2 तु तस्य), G1 नृपोस्मै (for ततोऽस्मै) — [c]) Ś1 ताम्, D3 तान् (for तानि) N (except B3 Dc2 Dn1 n2) ऋष्य°, T G M2 श्टगाय (G1 श्टगक्ष) — [d]) Dc स्व°, T2 G3 स (for सु ) D3 रुचिप्रदानि, S (except M1) च मोदकानि (for रुचिं ददुर्हि)

**14** K1 om 14[b] — [c]) Ś1 K1 पापानि; K3 याना ; B D (except D1-3 5) G1 पेया (for पाना°) Ś1 K1 2 ददौ बहूनि, D5 ततो मुमोह, T1 G1 तदा मुमोद — [d]) Ś1 K1 मुमोद (for चिक्रीड) Ś1 K1 2 D3 5 चापि, K3 सापि; K4 चापि; D1 2 चैव (for the first चैव)

**15** [a]) D1 2 [आ]रमती सलील (for [अ]रमतास्य मूले) Ś1 K1 2 सा (K1 स ) कामुक भारत चास्य मूले — [b]) Ś1 K B2 D3 5 °लव (K3 लव्य ), B1 4 °लज्ज°, D1 2 M1 नम्य°, G2 नद्य° (for °भज्य°) — [c]) T2 G2-4 निषेव्य°; a few MSS °माना — [d]) N (except B3) ऋष्य°

**16** [a]) T2 G3 4 स्तबका (for तिलका°) — [b]) Ś1 K D3 5 प्रोत्फुल्लितान्, B Dc Dn D4 6 T G3 सुपुष्पितान् Ś1 K1 2 S (except G1 M2) अवनम्या°, D1 2 चैव विना मयाना (for अवनाम्यावभज्य) — [c]) D1 2 रहोगता सा मदा (sic)

**17** [a]) Ś1 K1 2 D1 अथार्ष्यं , K3 Dc Dn2 n3 D2-4 अथर्ष्य° D5 निरीक्ष्य (for समी ) — Ś1 K2 om from पीड्य (in 17[b]) up to विचेतन (in 18[b]) — After 17[a], K1 reads 18[bcd] — [b]) K (K2 om ) D3 गात्रम् (for कायम्) — [c]) K3 D3 T1 M अवेक्ष (as in text), T2 G3 अन्वेष°, G4 अन्वेक्ष , the rest अवेक्ष्य°

**18** K1 reads 18[bcd] after 17[a] Ś1 K2 om up to विचेतन (of v l 17) — [b]) Ś1 K Dc Dn1 n2 D1-6 ऋष्यश्टग — [c]) K3 4 D2 3 5 गत स ; T2 G2-4 गतोथ (for गतेन) Ś1 K2 Dn D1 4 6 T2 G शून्ये

**19** [b]) Ś1 K1 2 4 D1-3 लोमभिर् (for रोमभिर्) Ś1 K2 D2 आनखादि, K3 आजटाभि , K4 Dc आनखाग्र; D1 2 आनखात — [d]) S विभदक

**20** [b]) Ś1 K1 2 एका (for एक) Ś1 K D3 5 °बुद्धि

सोऽपश्यदासीनमुपेत्य पुत्रं
ध्यायन्तमेकं विपरीतचित्तम् ।
विनिःश्वसन्तं मुहुरूर्ध्वदृष्टिं
विभाण्डकः पुत्रमुवाच दीनम् ॥ २०
न कल्प्यन्ते समिधः किं नु तात
कच्चिद्धुतं चाग्निहोत्रं त्वयाद्य ।
सुनिर्णिक्तं स्रुक्स्रुवं होमधेनुः
कच्चित्सवत्सा च कृता त्वयाद्य ॥ २१
न वै यथापूर्वमिवासि पुत्र
चिन्तापरश्चासि विचेतनश्च ।
दीनोऽतिमात्रं त्वमिहाद्य किं नु
पृच्छामि त्वां क इहाद्यागतोऽभूत् ॥ २२

इति श्रीमहाभारते आरण्यकपर्वणि एकादशाधिकशततमोऽध्यायः ॥ १११ ॥

# ११२

ऋश्यशृङ्ग उवाच ।
इहागतो जटिलो ब्रह्मचारी
न वै ह्रस्वो नातिदीर्घो मनस्वी ।
सुवर्णवर्णः कमलायताक्षः
सुतः सुराणामिव शोभमानः ॥ १
समृद्धरूपः सवितेव दीप्तः
सुशुक्लकृष्णाक्षतरश्चकोरैः
नीलाः प्रसन्नाश्च जटाः सुगन्धा
हिरण्यरज्जुग्रथिताः सुदीर्घाः ॥ २
आधाररूपा पुनरस्य कण्ठे

---

(for °चित्तम्) — d) S (except $G_4$) विभडक° M तमु वाचाथ (for पुत्रमुवाच)

**21** a) $B_1$ विद्यते, $T_2$ $G_{2-4}$ कल्पिता (for कल्प्यन्ते) — b) $T_2$ $G_{2-4}$ ना° (for चा°) — c) B स्रुकस्रुव — d) $Ś_1$ सवत्मिा (foı सवत्सा) $Ś_1$ $K_2$ $B_3$ Dn $D_{1\ 2\ 4\ 6}$ [अ]द्य, $K_1$ [अ]थ, $D_5$ न (for च) $Ś_1$ $B_2$ Dn $D_{2-4\ 6}$ च (for [अ]द्य)

**22** a) $Ś_1$ इहास्य (sic), $K_{1\ 2}$ इहाद्य, Dc एवासि, $D_{1\ 2}$ इवाद्य (for इवासि) — b) $Ś_1$ T $G_{3\ 4}$ $M_1$ [अ]पि (for [अ]सि) — c) $Ś_1$ K $D_{1\ 2\ 3}$ (before corr) $_5$ $M_1$ [ऽ]निमित्त ($K_1$ °द्यमात्र) (for ऽतिमात्र) $K_2$ त्वमहादि (sic), $D_{1\ 2}$ $T_1$ $G_1$ M किमिहाद्य, $T_2$ $G_{2-4}$ किमिवाद्य N $G_1$ किं तु ($D_1$ कच्चित्), T $G_{3-4}$ खिन्न°, $M_1$ पुत्र (for किं नु, as in $M_2$ only!) — d) $Ś_1$ $K_1$ M त्वा (for त्वां) $G_1$ $M_2$ किम् (for क) $D_{1\ 2}$ $T_2$ $G_{2-4}$ $M_1$ [अ]भि-, $D_3$ [अ]पि (for [अ]द्य)

Colophon — *Major parvan* $S_1$ $K_{1\ 2}$ $Dn_2$ $T_2$ $G_{2-4}$ $M_1$ आरण्य — *Sub parvan* $M_1$ तीर्थयात्रा, followed by ऋश्यशृङ्गोपाख्यान $K_4$ $D_1$ (om sub parvan name) mention only लोमशतीर्थयात्रा, followed by ऋष्यशृङ्गोपाख्यान, B Dc Dn $D_{3-6}$, likewise, only ऋष्यशृङ्गोपाख्यान — *Adlıy name* $B_4$ विभाण्डकप्रश्न° — *Adlıy no* (figures, words oı both) $K_1$ 16 (=116), $Dn_1$ 110, $Dn_2$ $n_3$ S 112 ($M_2$ 114), $D_1$ 116. — *Śloka no* Dn 23, $D_1$ 28

## 112

**1** Cf Jātaka (ed Fausboll), vol. 5, No 526, Gāthā 28 — b) $D_{1\ 2}$ न चाति, $M_1$ नाति (for न वै) — c) $Ś_1$ $K_{1\ 2}$ °यतेक्षण° (for °यताक्ष) — d) $K_4$ सुरासुराणाम्, Dn $D_{4\ 6}$ $G_4$ स्वत सुराणाम् $G_1$ लोभ° (for शोभ°)

**2** a) $K_4$ समिद्धरूप° — b) $D_1$ स (for सु) $K_{3\ 4}$ (marg *sec m*) °क्षिसरश्च, $K_4$ (orig) °क्षिधरश्च, $D_2$ क्षरतश्च, $M_1$ °क्षिकृतश्च (for °क्षतरश्च) $K_{3\ 4}$ (marg *sec m* as in text) $D_5$ च गौर°, $D_1$ च गात्रै, $M_2$ चकोरात् (for चकोरैः) $K_1$ $B_1$ Dc सुशुक्लकृष्णाक्षिरती($K_1$ °ते)व गौर°, $K_5$ °कृष्णाक्षतलश्चकोरात्, $B_{2-4}$ Dn $D_{3\ 4\ 6}$ सुश्लक्ष्ण($B_3$ °क्ष्ण)कृष्णाक्षिरतीव ($D_3$ °तरश्च, *sup lin* °रतीव) गौर° ($B_4$ दीप्त); $T_1$ $G_1$ सुश्लक्ष्णकृष्णाक्ष($G_1$ °क्षि)तरश्चकोरात्, $T_2$ $G_{2-4}$ सुश्लक्ष्णवाकृष्णतार($G_4$ °तरा)श्चकोरात् ($T_2$ [after corr] $G_3$ °श्च गौर°), text exactly as in $Ś_1$ only! — c) $Ś_1$ K $D_{3\ 5}$ transp प्रसन्ना° and सुगन्धा°

विभ्राजते विद्युदिवान्तरिक्षे ।
द्वौ चास्य पिण्डावधरेण कण्ठ-
मजातरोमौ सुमनोहरौ च ॥ ३
विलग्नमध्यश्च स नाभिदेशे
कटिश्च तस्यातिकृतप्रमाणा ।
तथास्य चीरान्तरिता प्रभाति
हिरण्मयी मेखला मे यथेयम् ॥ ४
अन्यच्च तस्याद्भुतदर्शनीयं
विकूजितं पादयोः संप्रभाति ।
पाण्योश्च तद्वत्स्वनवन्निबद्धौ
कलापकावक्षमाला यथेयम् ॥ ५
विचेष्टमानस्य च तस्य तानि
कूजन्ति हंसा सरसीव मत्ताः ।
चीराणि तस्याद्भुतदर्शनानि
नेमानि तद्वन्मम रूपवन्ति ॥ ६
वक्त्रं च तस्याद्भुतदर्शनीयं
प्रव्याहृतं ह्लादयतीव चेतः ।
पुंस्कोकिलस्येव च तस्य वाणी
तां शृण्वतो मे व्यथितोऽन्तरात्मा ॥ ७
यथा वनं माधवमासि मध्ये
समीरितं श्वसनेनाभिवाति ।
तथा स वात्युत्तमपुण्यगन्धी
निषेव्यमाणः पवनेन तात ॥ ८
सुसंयताश्चापि जटा विभक्ता

---

**3** Cf Jātaka (ed Fausböll), vol 5, No 526, Gathā 29 — $D_{1\ 2}$ read 3 after 5 — $^{a}$) Ś$_1$ $K_{1\ 2}$ $B_1$m $_2$m आश्चर्यरूपा (Ś$_1$ रूप ), $K_{3\ 4}$ (marg *sec m* ) $D_{1-3}$ $T_2$ G आधाराभूता ($G_{1\ 2\ 4}$ त॰), $B_2$ अवाल॰ (m आधार ), $T_1$ आधाररूप ; $M_1$ आधाररूप $K_4$ आश्चर्यभूतान्प रिक्षुप्य कठे; $D_5$ आश्चर्यरूपाणि विक्षुप्य कठे — $^{b}$) $B_{2\ 3}$ अतरीक्षे — $^{c}$) $T_2$ $G_{2-4}$ [अ]थ वृत्त($G_2$ रक्त)रूपौ (for [अ]धरेण कण्ठम्) $K_{2\ 3}$ B Dc Dn $D_{4-6}$ कठात्; $D_3$ कक्षात्, $M_2$ कर्णे (for कण्ठम्) — $^{d}$) $S_1$ क्षोम, K $D_{1-3\ 5}$ $G_1$ $M_1$ ॰लोमौ; $G_4$ रूपौ (for रोमौ) Ś$_1$ ॰हर (for हरौ) S मे (for च)

**4** $^{b}$) $S_1$ कश्चित्, $K_{1\ 2}$ कश्चित्; S (except $T_1$) कटी (for कटिश्) $D_3$ तु (for च) Ś$_1$ $K_{1\ 2}$ कस्य (for तस्य) $K_3$ [अ]विकृति॰; $D_3$[अ]तिशय (for [अ]तिकृत) Ś$_1$ $K_{1\ 2}$ प्रणाम (for प्रमाणा) — $^{c}$) B Dn $D_{4\ 6}$ $G_1$ $M_1$ चीरा तरत , $T_2$ $G_{3\ 4}$ $M_2$ ॰तरता $K_{1\ 3\ 4}$ $D_{1-3}$ वि (for प्र ) — After 4, $D_{1\ 2}$ ins

550* अन्यच्च तस्याद्भुतदर्शनीया
विभाति माला कनकप्रभासा ।
कण्ठे स्थिता वक्षसि घूर्णमाना
यथाक्षमाला भवता निबद्धा ।

**5** Ś$_1$ $K_{1\ 2}$ om 5 — $^{b}$) $K_{3\ 4}$ $B_4$ (*sup lin* as in text) Dc $D_3$ $T_{1\ 2}$ (before corr ) $G_{3\ 4}$ $M_2$ विकुञ्चित (for विकूजित) $K_{3\ 4}$ $D_{1-3\ 5}$ सवि (for सप्र ) — $^{c}$) $B_1$ पाणौ च; $D_1$ पाण्यौ च (for पाण्यो ) $K_{3\ 4}$ $M_1$ तद्व द्वभतुर; $D_1$ तौ सस्वनतुर्, $D_3$ तद्वद्विभ्रमन् (sic), $T_1$ तस्याश्च तनू, $G_{1\ 2\ 4}$ तद्वच्च तनू, $M_2$ तद्वद्वहुस (for तद्वत्स्वनवन्) — After 5, $D_{1\ 2}$ read 3

**6** $^{a}$) $D_{1\ 2}$ तस्य तात, M (by transp ) तानि तस्य — $^{b}$) $S_1$ $K_{1\ 2}$ transp हसा and मत्ता $D_5$ शरदीव (for सरसीव) — $^{c}$) $D_{1\ 2}$ ॰द्भुतरूपवति — $^{d}$) Ś$_1$ $K_{1\ 2}$ तत्तस्सम (for तद्वन्मम)

**7** Cf Jātaka (ed Fausboll), vol 5, No 526, Gāthā 30 — $^{a}$) $D_{1\ 2}$ वक्त्रं हि चन्द्रप्रतिम च तस्य — $^{b}$) Ś$_1$ $K_2$ प्रह्लादयत्, $K_4$ प्रत्याहृत; $T_1$ $G_1$ $M_2$ सव्याहृत, $T_2$ $G_{3\ 4}$ सव्या॰, $G_2$ सुव्या॰ $D_5$ चित्त (for चेत॰) — $^{d}$) $K_3$ reads $8^{d}$ before $7^{d}$ $K_1$ $T_1$ व्यथते॰, $K_4$ [ऽ]व्यथता (for व्यथितो॰) $K_3$ शृण्व ततो मे व्यथितातरात्मा

**8** Cf Jātaka (ed Fausböll), vol 5, No 526, Gāthā 36 — $^{a}$) $B_{1\ 3}$ Dc $D_5$ $T_{1\ 2}$ (before corr ) $G_{2-4}$ M माधवमासमध्ये , $D_{1\ 2}$ माधवे चैव मासि — $^{b}$) $D_{4\ 6}$ समीरिते Ś$_1$ [आ]वि ; $K_{1\ 2}$ $D_{3\ 4\ 6}$ [ए]व, $K_{3\ 4}$ [अ]ति ; $B_{1\ 3}$ Dc $D_5$ $G_2$ [अ]व॰; $B_{2\ 4}$ Dn $D_{1\ 2}$ [इ]व (for [अ]भि ) All MSS except $K_4$ $G_4$ $M_1$ ॰भाति (for वाति) Cf. Lüders, *op cit* , 1897, p 123 — $^{c}$) B Dn $D_{3-6}$ S (except $M_1$) भाति, Dc ताम् (for वाति) $D_1$ तथा च साप्युत्तम $K_3$ गधवति (for पुण्यगन्धी) — $^{d}$) $K_3$ reads $8^{d}$ before $7^{d}$ Some N MSS मान (for माण॰) Ś$_1$ $K_1$ पुनरेव (for पवनेन) $K_3$ निष्पिप्यमाणस्य वनेन तात

**9** $^{a}$) $K_2$ Dc असयताश्, $B_2$ सुसवृताश् $D_{1\ 2}$ $M_1$ चास्य (for चापि) — $D_5$ om from जटा up to वृत्तम् (in $10^{a}$) $K_4$ विमुक्ता, Dn $D_{4\ 6}$ ॰षक्ता (for भक्ता)

द्वैधीकृता भान्ति समा ललाटे ।
कर्णौ च चित्रैरिव चक्रवालैः
समावृतौ तस्य सुरूपवद्भिः ॥ ९
तथा फलं वृत्तमथो विचित्रं
समाहनत्पाणिना दक्षिणेन ।
तद्भूमिमासाद्य पुनः पुनश्च
समुत्पतत्यद्भुतरूपमुच्चैः ॥ १०
तच्चापि हत्वा परिवर्ततेऽसौ
वातेरितो वृक्ष इवावघूर्णः ।
तं प्रेक्ष्य मे पुत्रमिवामराणां
प्रीतिः परा तात रतिश्च जाता ॥ ११
स मे समाश्लिष्य पुनः शरीरं
जटासु गृह्याभ्यवनाम्य वक्त्रम् ।
वक्त्रेण वक्त्रं प्रणिधाय शब्दं
चकार तन्मेऽजनयत्प्रहर्षम् ॥ १२
न चापि पाद्यं बहु मन्यतेऽसौ
फलानि चेमानि मयाहृतानि ।
एवंव्रतोऽस्मीति च मामवोच-
त्फलानि चान्यानि नवान्यदान्मे ॥ १३
मयोपयुक्तानि फलानि तानि
नेमानि तुल्यानि रसेन तेषाम् ।
न चापि तेषां त्वगियं यथैषां
साराणि नैषामिव सन्ति तेषाम् ॥ १४
तोयानि चैवातिरसानि मह्यं
प्रादात्स वै पातुमुदाररूपः ।
पीत्वैव यान्यभ्यधिकः प्रहर्षो
ममाभवद्भूश्चलितेव चासीत् ॥ १५
इमानि चित्राणि च गन्धवन्ति
माल्यानि तस्योद्ग्रथितानि पट्टैः ।
यानि प्रकीर्येह गतः स्वमेव
स आश्रमं तपसा द्योतमानः ॥ १६
गतेन तेनास्मि कृतो विचेता

---

— $^{b}$) Ś$_1$ द्विधी°, K$_1$ $_2$ G$_1$ $_2$ द्विधा° (for द्वैधी°) K$_3$ B Dc Dn D$_4$ $_6$ नाति, D$_1$ $_2$ साति- (for भान्ति) S ललाटदेशे (for समा ललाटे) — $^{c}$) K$_4$ B$_1$ $_4$ D$_1$ $_2$ S (*except* T$_1$ G$_1$) वि-, D$_3$ तु (for च) S (except M$_1$) वर- (for इव) K$_1$ $_3$ B Dc Dn D$_3$ $_4$ $_6$ T$_2$ G$_{1-3}$ M$_1$ चक्रवाकै, D$_1$ $_2$ वक्रचक्रै° (for चक्रवालै°)

**10** Cf Jātaka (ed Fausboll), vol 5, No 526, Gāthā 37 — D$_5$ *om* up to वृत्तम् (of v l 9), Ś$_1$ K$_1$ $_2$ om 10 — $^{b}$) K$_4$ B Dn D$_{4-6}$ °हरत्, D$_1$ $_2$ T$_1$ G$_1$ °हत, T$_2$ G$_{2-4}$ °हृत (for °हनत्) — K$_4$ repeats 10 (reading °वद्भि° [of 9$^{d}$] for °मुच्चै first time)

**11** $^{a}$) K$_1$ $_2$ D$_3$ G$_4$ तथापि, B$_{1-3}$ Dn D$_4$ $_6$ तच्चाभि, D$_1$ $_2$ तथा हि, D$_5$ तच्चाव- (for तच्चापि) Ś$_1$ K$_1$ $_2$ $_4$ D$_3$ हित्वा, G$_1$ गत्वा (for हत्वा) Ś$_1$ K$_1$ $_2$ D$_5$ स, K$_4$ D$_{1-3}$ स॰ (for ऽसौ) — $^{b}$) D$_5$ हरिद्वन (for वातेरितो) Ś$_1$ K प्रघूर्णन्, B D G$_1$ $_4$ [अ]वघूर्णन् (D$_5$ घूर्णयन्), T$_2$ G$_3$ [अ]वपूर्ण॰, G$_2$ [अ]वघुर्णित (for [अ]वघूर्ण) — $^{c}$) Ś$_1$ K D$_1$ $_3$ $_5$ सप्रेक्ष्य त (Ś$_1$ ते), B Dc Dn D$_4$ $_6$ त प्रेक्षत (for त प्रेक्ष्य मे) — $^{d}$) Ś$_1$ K$_2$ पुरा, T$_2$ G$_3$ $_4$ तदा (for परा) D$_1$ $_2$ पुनश्च (for रति°) Ś$_1$ K$_{1-3}$ D$_3$ मेभूत् (for च जाता) — After 11, K$_4$ reads 16–17

**12** $^{b}$) Ś$_1$ K$_1$ $_2$ गृह्णाति (for गृह्याभि) Ś$_1$ T G$_{2-4}$ M °नम्य (for °नाम्य) G$_1$ जटासु नम्याभ्यवरुह्य वक्त्रं — $^{c}$) D$_1$ T$_1$ G$_1$ M वक्त्रे च (*for* वक्त्रेण) — $^{d}$) T$_2$ G$_{2-4}$ च (for प्र)

**13** $^{a}$) T$_1$ परिगृह्यते (for बहु मन्यते) Ś$_1$ K D$_3$ $_5$ स (for ऽसौ) — $^{b}$) K$_4$ D$_5$ समा (for मया°) — $^{d}$) K$_2$ $_3$ B Dn D$_4$ $_6$ समाददन्मे; Dc स चाददन्मे, D$_1$ $_2$ च मे प्रयच्छत्, D$_3$ विधान्यदान्मे, D$_5$ नवाददान्मे (for नवान्यदान्मे) Ś$_1$ अदन् (for अदान्)

**14** $^{a}$) Ś$_1$ K$_3$ D$_{1-3}$ $_5$ G$_2$ M$_2$ °भुक्तानि (for °युक्तानि) B$_{2-4}$ Dc Dn D$_4$ $_6$ G$_1$ $_2$ यानि, D$_1$ $_2$ तात (for तानि) — $^{b}$) K$_3$ D$_{1-3}$ $_5$ फलानि (for रसेन) — After 14, K$_1$ ins 551*

**15** $^{c}$) S (except T$_1$ G$_1$) तानि (for यानि) D$_1$ $_2$ T G$_3$ $_4$ [अ]भ्यधिक (*for* °क॰)

**16** For sequence of K$_4$ cf v l 11 — $^{b}$) D$_1$ T G ग्रथितानि (for [उ]द्ग्रथि°) D$_1$ $_2$ चाद्य मे (for पट्टै°) — $^{c}$) T$_2$ (before corr) G$_1$ $_2$ $_4$ [ए]व (for [इ]ह) Ś$_1$ K D$_3$ तपस्वी, D$_1$ $_2$ तरस्वी (for स्वमेव) — $^{d}$) Ś$_1$ K D$_{1-3}$ स्वम्; T$_1$ तम् (for स)

**17** For sequence of K$_4$ cf v l 11 — $^{b}$) K$_3$ B

गात्रं च मे संपरितप्यतीव ।
इच्छामि तस्यान्तिकमाशु गन्तुं
तं चेह नित्यं परिवर्तमानम् ॥ १७

गच्छामि तस्यान्तिकमेव तात
का नाम सा व्रतचर्या च तस्य ।
इच्छाम्यहं चरितुं तेन सार्धं
यथा तपः स चरत्युग्रकर्मा ॥ १८

इति श्रीमहाभारते आरण्यकपर्वणि द्वादशाधिकशततमोऽध्यायः ॥ ११२ ॥

# ११३

विभाण्डक उवाच ।
रक्षांसि चैतानि चरन्ति पुत्र
रूपेण तेनाद्भुतदर्शनेन ।
अतुल्यरूपाण्यतिघोरवन्ति
विघ्नं सदा तपसश्चिन्तयन्ति ॥ १

सुरूपरूपाणि च तानि तात
प्रलोभयन्ते विविधैरुपायैः ।
सुखाच्च लोकाच्च निपातयन्ति
तान्युग्रकर्माणि मुनीन्वनेषु ॥ २

न तानि सेवेत मुनिर्यतात्मा
सतां लोकान्प्रार्थयानः कथंचित् ।
कृत्वा विघ्नं तापसानां रमन्ते

---

Dc Dn D4-6 °दह्यतीव ; G2 तप्यते च, M2 तप्यमेव (for तप्यतीव) — c) G1 [आ]श्रमम् (for [अ]न्तिकम्) M1 एव (for आशु) — d) Ś1 K2 M1 त चेह, K1 4 ते चेह ; K3 तथैव, G1 त नेह ; G2 त चैव (for त चेह)

**18** a) T1 M गच्छाव (for गच्छामि) Ś1 K D2 5 इच्छामि विज्ञातुमह हि (K1 2 च) तात — b) Ś1 K2 3 D6 सा स्याद् (for सा) K4 Dn D4 6 ब्रह्म° (for व्रत°) Ś1 K1 2 4 D1-3 5 हि (for च) — d) Ś1 K1 D1 5 स (for स) B2 4 Dn D4 6 आर्यधर्मा ; T1 G2 M उग्रधर्मा ; T2 G3 उग्रधर्मं, G1 इत्युग्रधर्मा ; G4 आर्यधर्म° (for उग्रकर्मा) — K2 B2 4 Dn D3 (marg sec m) 4 6 ins after 18 K1, after 14

551* चर्तुं तथेच्छा हृदये ममास्ति
दुनोति चित्त यदि त न पश्ये ।

Colophon G4 partly broken — *Major parvan* Ś1 K1 2 Dn2 T2 G2-4 M1 आरण्य — *Sub parvan* B4 M1 तीर्थयात्रा, followed by ऋष्य(M1 °श्य)शृंगोपाख्यान K1 4 B1-3 Dc Dn D2-6 (all om sub parvan name) mention only ऋष्यशृंगोपाख्यान, K2 D1, likewise, only लोमशतीर्थयात्रा, followed by ऋष्यशृंगोपाख्यान (D1 *vice versa*) — *Adhy no* (figures, words or both) K1 17 (=117) Dn2 n3 S (G4 broken) 113 (M2 115), D1 117 — *Śloka no* Dn 19, D1 21

## 113

**1** For stanzas 1-4, cf Jātaka (ed Fausböll), vol 5, No 526, Gāthā 56 — b) B4 °द्भुतदर्शनानि — c) K3 अघोररूपाणि, K4 B3 4 Dc Dn D4-6 T2 G1 3 M2 अतुल्यवीर्याणि ; D1 2 तुल्यप्रचाराणि (for अतुल्यरूपाणि) B Dc अतिरूप°, Dn D4 6 अभिरूप (for अतिघोर) — d) T2 (before corr) तात ; G4 तथा (for सदा)

**2** Cf v.l 1 — a) Ś1 T2 G3 4 स्वरूप° (for सुरूप°) D1 2 हि तानि, T2 G2-4 कृतानि, G1 M2 तु तात, M1 च तात (for च तानि) D3 तानि नो, S कृत्वा (G1 भूत्वा) (for तात) — b) Ś1 K1 2 तैर्लोभयित्वा ; K3 ते लोभ्य चैतान् ; K4 Dc D3 तैर्लोभ्यमानान् (Dc °माना), D5 विलोभयित्वा, S प्रलोभ्य (T M1 विलोभ्य ; G1 विमोह्य) भूयो (for प्रलोभयन्ते) D1 2 तैर्लोभ्यमानोतिविधेयरूप (D2 °पी) — T1 om 2d-3d — d) B3 D (except D1-3 5) S (except M1, T1 om) रूपाणि (for कर्माणि) D1 2 वने चरति (for मुनीन्वनेषु)

**3** Cf v l 1 — T1 om 3 (of v l 2) — b) Ś1 K D3 5 T2 G3 कदा° (for कथ ) — d) K1, 2 4 B1 G1 तपसा, K3 D5 ता(D5 त)पसा ; B2-4 Dn D3 4 6 तापस°

पापाचारास्तपसस्तान्यपाप ॥ ३
असज्जनेनाचरितानि पुत्र
पापान्यपेयानि मधूनि तानि ।
माल्यानि चैतानि न वै मुनीनां
स्मृतानि चित्रोज्ज्वलगन्धवन्ति ॥ ४

लोमश उवाच ।

रक्षांसि तानीति निवार्य पुत्रं
विभाण्डकस्तां मृगयांबभूव ।
नासादयामास यदा त्र्यहेण
तदा स पर्याववृतेऽऽश्रमाय ॥ ५
यदा पुनः काश्यपो वै जगाम
फलान्याहर्तुं विधिना श्रामणेन ।
तदा पुनर्लोभयितुं जगाम
सा वेशयोषा मुनिमृश्यशृङ्गम् ॥ ६
दृष्ट्वैव तामृश्यशृङ्गः प्रहृष्टः
संभ्रान्तरूपोऽभ्यपतत्तदानीम् ।
प्रोवाच चैनां भवतोऽऽश्रमाय
गच्छाव यावन्न पिता ममैति ॥ ७
ततो राजन्काश्यपस्यैकपुत्रं
प्रवेश्य योगेन विमुच्य नावम् ।
प्रलोभयन्त्यो विविधैरुपायै-
राजग्मुरङ्गाधिपतेः समीपम् ॥ ८
संस्थाप्य तामाश्रमदर्शने तु
संतारितां नावमतीव शुभ्राम् ।
तीरादुपादाय तथैव चक्रे
राजाश्रमं नाम वनं विचित्रम् ॥ ९
अन्तःपुरे तं तु निवेश्य राजा
विभाण्डकस्यात्मजमेकपुत्रम् ।
ददर्श देवं सहसा प्रवृष्ट-
मापूर्यमाणं च जगज्जलेन ॥ १०

---

(for तपस°) K3 चाप्यपाप, B1 Dc तानपास्य (Dc °स्येत्), B2 3 Dn D3 4 6 तान्न पश्येत्, B4 तान्न पास्ये, D5 तापयति, T2 G2 3 पातयति, G1 4 प्रापयति (for तान्यपाप) D1 2 M पापाचाराण्यतपस्कान्यपाप (D1 2 °पापे)

4 Cf v l 1 — a) S1 K1–3 °जनैराचरि°, D1 2 °जनेनावग° (for °जनेनाचरि°) — b) K1 3 B1–3 Dc Dn2 D5 G2 M पानानि (for पापानि) B2 तत्र, D5 G1 तात, T1 पुत्र (for तानि) — d) Dc पूतानि, T1 ऋ , T2 G3 म्र° (T2 वृ° also), G1 भृ°, G2 षृ° (for स्मृ°) S1 K2 3 D1–3. 5 तान्युत्तमगध°, K1 4 चित्रोत्तमगध°

5 B1 D (except D1–3 5) S om the ref — b) S (except G4) विभडक° K3 T G2 3 त (for ता) — c) K1 तदा, Dn3 सदा, D1 यथा (for यदा)

6 b) K3 4 Dc D1–3 5 विविधानि (for विधिना) K1 B Dn D4 6 [अ]श्रावणेन, K2 श्रम°, Dc D1–3 5 G2 4 [आ]श्रमाच्च (D1–3 °मात्त, D5 °मेभ्य, G2 4 °मेसौ), T1 श्रमकेन, T2 G3 ममेति, G1 काननानि, M1 श्रमेण, M2 चा श्रमेण (for श्राम°) — d) Ś1 K2 T2 G3 सा वेश्ययोषा, K1 सा वेष्य°, K4 G1 सा वेश्या योषिन्, D1 विवेश योषा, D6 सा वैश्मयोषा, T1 G3 4 M सा वेशयोषिन् D1 2 ऋषिम् (for मुनिम्) N ऋष्य° (for ऋश्य°)

7 a) N ऋष्य° (for ऋश्य°) — b) G2 4 स भ्रात° (for सम्भ्रान्त°) K2 Dc D1 न्यपतत्, B2 G4 [S]भ्यगमत्, D5 [S]भ्यवदत्, T1 G2 अभवत्; M2 [S]भ्यभवत् (for Sभ्य पतत्) — c) B1 3 चैन (for चैना) Ś1 K1 2 B1 D2. 5 T1 G1 3 4 M2 भवदाश्रमाय; K4 Dn3 °त° श्रमाय — d) D5 [अ]भ्युपैति, D6 समेति (for ममैति)

8 Before 8, S (except T1 G4) ins लोमश° — a) D1 2 [आ]त्मज त, T1 G1 [आ]शु पुत्र; M1 [ए]व पुत्र (for [ए]कपुत्र) — b) Ś1 K1 प्रालोभ्य, K3 प्रलोभ, K5 पुण्यप्र-, K4 पुण्येन, K4m D3 5 प्रलोभ्य (for प्रवेश्य) S (except M2) वेगेन (for यो ) S1 K1 2 विमुच्य मान, K4 D1 2 विमु(D1 °मो)च्यमान — Ś1 om 8cd — c) K1 2 B D G1 M2 °मोद° (for °लोभ°)

9 a) T G2–4 M1 दर्शनाय, M2 °दर्शनेषु (for °दर्शने तु) — b) B1 4 Dc इहाति-, Dn D4–6 अथाति- (for अतीव) — c) K1 Dn3 D1 G1 नीराद् (for तीराद्) — d) K4 B2–4 Dn D4–6 नाम्ना° (for राजा°)

10 a) Dc तत्र, D1 2 तात, D4 ते तु (for तं तु) — After 10a, T1 reads 12a (with v l ) for the first time, *repeating* it in its proper place — b) S विभडक D1 2 यज्ञरूप (for एकपुत्रम्) — c) B1 ववर्ष (for ददर्श) B1 देव , D1 चैव, D2 चैन, S (except M2) मेघं (for देवं) K2 B1 Dc D1 T1 G2 4 प्रहृष्टम्, B2 4 Dn3 D5 M2 प्रवि°

सहानुजः पार्थिवपुत्रपौत्रः ।
समुद्रगां पुण्यतमां प्रशस्तां
जगाम पारिक्षित पाण्डुपुत्रः ॥ २
तत्रापि चाप्लुत्य महानुभावः
संतर्पयामास पितॄन्सुरांश्च ।
द्विजातिमुख्येषु धनं विसृज्य
गोदावरीं सागरगामगच्छत् ॥ ३
ततो विपाप्मा द्रविडेषु राज-
न्समुद्रमासाद्य च लोकपुण्यम् ।
अगस्त्यतीर्थं च पवित्रपुण्यं
नारीतीर्थान्यथ वीरो ददर्श ॥ ४
तत्रार्जुनस्याग्र्यधनुर्धरस्य
निशम्य तत्कर्म परैरसह्यम् ।
संपूज्यमानः परमर्षिसंघैः
परां मुदं पाण्डुसुतः स लेभे ॥ ५
स तेषु तीर्थेष्वभिषिक्तगात्रः
कृष्णासहायः सहितोऽनुजैश्च ।
संपूजयन्विक्रममर्जुनस्य
रेमे महीपालपतिः पृथिव्याम् ॥ ६
ततः सहस्राणि गवां प्रदाय
तीर्थेषु तेष्वम्बुधरोत्तमस्य ।
हृष्टः सह भ्रातृभिरर्जुनस्य
संकीर्तयामास गवां प्रदानम् ॥ ७
स तानि तीर्थानि च सागरस्य
पुण्यानि चान्यानि बहूनि राजन् ।
क्रमेण गच्छन्परिपूर्णकामः
शूर्पारकं पुण्यतमं ददर्श ॥ ८
तत्रोदधेः कंचिदतीत्य देशं
ख्यातं पृथिव्यां वनमाससाद ।
तप्तं सुरैर्यत्र तपः पुरस्ता-
दिष्टं तथा पुण्यतमैर्नरेन्द्रैः ॥ ९
स तत्र तामग्र्यधनुर्धरस्य

पारीक्षित $K_4$ पुत्रपौत्र (for पाण्डु°)

**3** $^{a}$) $Ś_1$ $K_{1\ 2}$ °भावान् (for °भाव°) — $^{b}$) $K_3$ $T_1$ $G_2$ $M_2$ सुरान्पितॄंश्च (by transp), $B_2$ पितॄंश्च देवान्

**4** $^{a}$) $Ś_1$ $K_3$ $T_1$ $G_2$ $M_1$ द्रमिडेषु, $K_1$ विडमेषु, $G_{1\ 4}$ $M_3$ द्रमिळेषु $K_3$ Dc T $G_3$ M राजा (for राजन्) $D_2$ ततो वितीर्थानि ददर्श पच — $D_3$ om $4^{bcd}$ — $^{c}$) $K_{3\ 4}$ $D_1$ परम पवित्र, B Dc Dn $D_{4\ 6}$ च महापवित्र, $D_5$ च अतीव पुण्य, $M_1$ च जगाम पुण्य (for च पवित्र°) — $^{d}$) $T_2$ $G_{3\ 4}$ अन्यानि (for नारी) $K_3$ अथ वाप्यभ्यपश्यत्, $D_5$ अथ समेत्य पश्यन्; $T_1$ $G_1$ अथ चैवाभ्यगच्छत्, $T_2$ $G_{2-4}$ अथ सोभ्यगच्छत्, M अत्र ($M_2$ तत्र) चैवाभ्यगच्छत् (for अथ वीरो ददर्श) $D_1$ नाराचतीर्थानि ददर्श पच

**5** $^{a}$) $S_1$ ततो, $D_5$ तथा, T $G_{1\ 3\ 4}$ तेषु, $M_1$ तस्य (for तत्र) $Ś_1$ $K_{1\ 3\ 4}$m $Dc_2$ $Dn_2$ $D_{1\ 5}$ $G_1$ अग्र, $T_2$ $G_{2-4}$ अथ (for अग्र्य-) — $^{b}$) $K_{3\ 4}$ निशाम्य $S_1$ K B Dc Dn $D_{4-6}$ $T_2$ $G_3$ नरैर् ($K_1$ करैर्) (for परैर्) B Dn $D_{4\ 6}$ अशक्य (for असह्यम्) — $^{c}$) $Ś_1$ $K_{1\ 2}$ $D_5$ सपूजयामास महर्षिसघान् — $^{d}$) $K_3$ तनु सदा (sic), $K_4$ M तत्र तदा (for पाण्डुसुत) $B_3$ च, $M_2$ [उ]प (for स) $S_1$ $K_{1\ 2}$ $D_5$ अन्वागतश्चापि महर्षिसघै°, $D_{1\ 2}$ मुद परा तत्र स चैव लेभे

**6** $K_3$ om (hapl) $6^{d}$–$8^{a}$ — $^{d}$) B Dn $D_{1\ 2\ 4-6}$ $M_1$ पृथिव्या° (for °व्याम्)

**7** $K_3$ om 7 (cf v l 6) — $^{a}$) $T_1$ $G_1$ द्विजातिमुख्येषु महीपति° स (= [var] $3^{c}$) — $^{b}$) $Ś_1$ $K_3$ °त्तरस्य (for °त्तमस्य) — After 7, M ins

581* ततस्तु कावेरिमनन्ततोया
दिव्याश्रमैर्नित्यमुपात्ततोयाम् ।
सहानुज° सम्प्रविगाह्य पुण्या
ननन्द नष्टक्लमशोकपाप° ।

**8** $K_3$ om $8^{a}$ (cf v l 6) — $^{b}$) $D_5$ धन्यानि (for चा) $K_1$ निषेव्य (for बहूनि) Dc $D_{1\ 2}$ राजा, $T_1$ $G_1$ गच्छन् (for राजन्) $K_3$ बहूनि चान्यानि निषेव्य राजन् — $^{c}$) $K_4$ $T_1$ $G_1$ राजन् (for गच्छन्) — $^{d}$) S (except $G_{1\ 2}$) शूर्पाक($T_1$ का)र (for °रक)

**9** $^{a}$) $B_2$ ततोदधि, Dc ततोदधे° $K_{1\ 2}$ $B_1$ $D_1$ $T_1$ $G_2$ $M_1$ किं° (for क°) — $^{c}$) $T_2$ (before corr) $G_4$ तव° (for तप्त) $K_{1\ 2}$ transp सुरै and तप° Dn $D_{5\ 6}$ अत्र (for यत्र) — $^{d}$) $K_1$ °तम, B Dn $D_{4-6}$ °परैर् (for °तमैर्)

**10** $^{a}$) Cf $5^{a}$ $K_{1\ 2\ 4}$ $D_5$ सामग्र्यतपोधनस्य — $^{b}$)

वेदीं ददर्शायतपीनबाहुः ।
ऋचीकपुत्रस्य तपस्विसंघैः
समावृतां पुण्यकृदर्चनीयाम् ॥ १०
ततो वसूनां वसुधाधिपः स
मरुद्गणानां च तथाश्विनोश्च ।
वैवस्वतादित्यधनेश्वराणा-
मिन्द्रस्य विष्णोः सवितुर्विभोश्च ॥ ११
भगस्य चन्द्रस्य दिवाकरस्य
पतेरपां साध्यगणस्य चैव ।
धातुः पितॄणां च तथा महात्मा
रुद्रस्य राजन्सगणस्य चैव ॥ १२
सरस्वत्याः सिद्धगणस्य चैव
पूष्णश्च ये चाप्यमरास्तथान्ये ।
पुण्यानि चाप्यायतनानि तेषां
ददर्श राजा सुमनोहराणि ॥ १३
तेषूपवासान्विविधानुपोष्य
दत्त्वा च रत्नानि महाधनानि ।
तीर्थेषु सर्वेषु परिप्लुताङ्गः
पुनः स शूर्पारकमाजगाम ॥ १४
स तेन तीर्थेन तु सागरस्य
पुनः प्रयातः सह सोदरीयैः ।
द्विजैः पृथिव्यां प्रथितं महद्भि-
स्तीर्थं प्रभासं समुपाजगाम ॥ १५
तत्राभिषिक्तः पृथुलोहिताक्षः
सहानुजैर्देवगणान्पितॄंश्च ।
संतर्पयामास तथैव कृष्णा
ते चापि विप्राः सह लोमशेन ॥ १६
स द्वादशाहं जलवायुभक्षः
कुर्वन्क्षपाहःसु तदाभिषेकम् ।
समन्ततोऽग्नीनुपदीपयित्वा
तेपे तपो धर्मभृतां वरिष्ठः ॥ १७
तमुग्रमास्थाय तपश्चरन्तं
शुश्राव रामश्च जनार्दनश्च ।
तौ सर्ववृष्णिप्रवरौ ससैन्यौ
युधिष्ठिरं जग्मतुराजमीढम् ॥ १८
ते वृष्णयः पाण्डुसुतान्समीक्ष्य
भूमौ शयानान्मलदिग्धगात्रान् ।
अनर्हतीं द्रौपदीं चापि दृष्ट्वा

---

$K_4$ $D_5$ बाहुरम्या (for पीनबाहु) — $^{c}$) $K_3$ $B_2$ S आर्चीक (for ऋचीक) — $^{d}$) $K_1$ $_4$ चिता; $K_3$ °श्रिता (for वृता)

**12** $G_4$ om $12^{ab}$ — $^{a}$) $K_3$ B Dc Dn $D_4$ $_6$ भव° (for भग) — $^{b}$) $K_4$ पत्युस्त्वपा (for पतेरपा) — $^{c}$) $T_2$ G पार्थ (for धातु°) — $^{d}$) $Ś_1$ K चापि (for चैव) $D_1$ $_2$ सगणाधिपस्य (for सगणस्य चैव)

**13** $G_4$ om $13^{ab}$ — $^{b}$) $B_4$ Dn पुण्याश्च, Dc पूज्या (for पूष्ण) $G_1$ [अ]परास् (for [अ]मरास्) — $^{c}$) $Ś_1$ K $D_1$ $_3$ $_5$ तीर्था (for चाप्या)

**14** $^{b}$) $D_1$ $_2$ दानानि (for रत्नानि) $K_4$ S महानुभाव, B Dc Dn $D_4$ $_6$ महाति राजा; $D_1$ $_2$ तथा द्विजेभ्य (for महा°) — $^{c}$) $Ś_1$ $K_{1-3}$ $D_1$ $_2$ $_5$ पुण्ये, $K_4$ M रम्ये (for सर्वे) — $^{d}$) $Ś_1$ $K_1$ $_2$ $G_1$ च (for स) $K_{2-4}$ Dc $D_1$ $_4$ $_5$ सूर्पारकम्, S (except $G_2$) शूर्पाकरम् $T_2$ $G_1$ $_3$ आससाद (for आज)

**15** $^{a}$) K S (except $G_4$ $M_2$) तीरेण (for तीर्थेन) $T_2$ $G_{2-4}$ च (for तु) — $G_4$ om $15^{cd}$ — $^{c}$) S ($G_4$ om) कथित (for प्र) $T_2$ $G_3$ श्रुचभ्दिस् (for महभ्दिस्) — $D_5$ resumes! — $^{d}$) $K_4$ $D_{1-3}$ च ततो ज° (for समुपाज°)

**16** $D_5$ (om hapl) $16^{b}$–$17^{a}$ — $^{b}$) $B_2$ ऋषींश्च (for पितॄ) — $^{d}$) $G_1$ तैश्चापि (for ते चापि)

**17** $D_5$ om $17^{a}$ (cf v l 16) — $^{b}$) $Ś_1$ $K_2$ सदाह्सु, $K_3$ $D_1$ $G_4$ क्षपाह स, T $G_2$ $_3$ क्षपाह स (for क्षपाह्सु) $D_6$ $T_2$ $G_{2-4}$ तथा, $T_1$ M ततो (for तदा°) — $^{c}$) $Ś_1$ दस, $K_1$ $_2$ °जीव (for दीप)

**18** $^{a}$) S स(M त)मागत तत्र (for तमुग्र) $Ś_1$ $K_2$ $_3$ $D_3$ $_5$ तपो वसत (for तप) $D_1$ $_2$ तमुग्ररूपे तपसि प्रपन्न — $^{c}$) $D_1$ $_2$ वृष्णिलोक; $T_2$ $G_3$ $_4$ वृष्णिवीर (for सर्ववृष्णि) $D_1$ $_2$ प्रवीरौ (for ससैन्यौ)

**19** $^{a}$) $S_1$ $K_2$ सुतीक्ष्णान्, $K_4$ निरीक्ष्य (for समीक्ष्य) — $^{b}$) $Ś_1$ K Dc $D_3$ $_5$ °पकदिग्धान् (for दिग्धगात्रान्) — $^{c}$) $T_2$ $G_3$ $_4$ सुदुःखिता (for अनर्हतीं) — $^{d}$) $G_1$ $_4$

सुदुःखिताश्चक्रुशुरार्तनादम् ॥ १९
ततः स रामं च जनार्दनं च
कार्ष्णिं च साम्बं च शिनेश्च पौत्रम् ।
अन्यांश्च वृष्णीनुपगम्य पूजां
चक्रे यथाधर्ममदीनसत्त्वः ॥ २०
ते चापि सर्वान्प्रतिपूज्य पार्था-
स्तैः सत्कृताः पाण्डुसुतैस्तथैव ।
युधिष्ठिरं संपरिवार्य राज-
न्नुपाविशन्देवगणा यथेन्द्रम् ॥ २१
तेषां स सर्वं चरितं परेषां
वने च वासं परमप्रतीतः ।
अस्त्रार्थमिन्द्रस्य गतं च पार्थं
कृष्णे शशंसामरराजपुत्रम् ॥ २२
श्रुत्वा तु ते तस्य वचः प्रतीता-
स्तांश्चापि दृष्ट्वा सुकृशानतीव ।
नेत्रोद्भवं संमुमुचुर्दशार्हा
दुःखार्तिजं वारि महानुभावाः ॥ २३

इति श्रीमहाभारते आरण्यकपर्वणि अष्टादशाधिकशततमोऽध्यायः ॥ ११८ ॥

## ११९

जनमेजय उवाच ।
प्रभासतीर्थं संप्राप्य वृष्णयः पाण्डवास्तथा ।
किमकुर्वन्कथाश्चैषां कास्तत्रासंस्तपोधन ॥ १
ते हि सर्वे महात्मानः सर्वशास्त्रविशारदाः ।

---

सुदु खितान् K3 M चक्रुरतीव नादान् (M2 °नाद) (for सुक्रु° etc ) B1 D3 5 T2 G2-4 आर्तनादान्, Dc T1 G1 °नादा (for °नादम्)

**20** a) M2 राजा ह (for तत स) — b) D1 2 वृष्णींश्च (for कार्ष्णिं च) K4 D6 शाब च, D1 2 सर्वांश्च (for साम्ब च) K1 2 T2 G3 पुत्र (for पौत्रम्) — c) Ś1 K B4 D1-3 5 राजा (for पूजा) — d) Ś1 अधीन°, Dn2 n3 D6 G4 अहीन° (for अदीन°) D1 2 चक्रे यथासविद धर्मसूनु

**21** a) Dc D1 3 सर्वे (for सर्वान्) D1 सर्वास (for पार्थान्) Ś1 K D5 तैश्चापि सर्वै प्रतिपूजि(K1 °पादि)तश्च (K3 4 °त स°) — b) Ś1 K D3 5 ते, Dc सु (for तै ) Ś1 K1 2 D1 T1 G1 3 4 M1 °सुतास् (for °सुतैस्)

**22** a) S1 K D3 5 M तु, Dc Dn2 D2 च (for स) — c) G1 M इन्द्र च (for इन्द्रस्य) — d) T2 G3 4 कृष्ण° (for कृष्णे) B Dc Dn D4 6 निवेशन हृष्टमना शशास

**23** a) S1 K1 2 4 D1-3 5 च (for तु) Ś1 K2 पुन° (for वच ) — b) T2 G2-4 सुकृतीन्, G1 [अ]तिकृशान् (for सुकृ°) — c) Ś1 °द्भवाश्रु, K2 °द्भवासु (for °द्भव स-) B Dn D4 6 G3 महार्हा (for दशार्हा) — d) D1 2 सर्वे तदा (for दु°खा°) S1 K D1-3 5 दु°खकरा (K3 D2 °कर, D1 °सर) रिपूणा (for वारि महा°)

Colophon — *Major parvan* Ś1 K1 2 Dn2 T G2-4 M1 आरण्य — *Sub parvan* B1 3 4 Dc Dn D4 6 तीर्थयात्रा K4 B2 D1 2 (all om sub parvan name) mention only लोमशतीर्थयात्रा — *Adhy name* Ś1 K1 2 वृष्णिसमागम, K3 वृष्ण्यागमन, B4 कृष्णागमन, D3 5 वृष्णिपाडवयो (D5 °डव) समागम, M2 वासुदेवदर्शन — *Adhy no* (figures, words or both) Dn1 117, Dn2 118 (as in text), Dn3 S 119 (M2 121), D1 123 — *Śloka no* Dn D1 23

## 119

**1** a) Ś1 K1 2 B2 Dn D1 2 4 6 आसाद्य (for सप्राप्य), cf v l 3 — b) Dn D4 6 पाडवा वृष्णयस् (by transp ) Ś1 K1 2 T1 तदा (for तथा) — c) K3 D5 चैव, D1-3 T2 (before corr ) G4 तेषा (for चैषा) — d) S1 K1 2 के, G1 ते (for कास्) Dn2 D4 6 तथा (for तत्र) S1 K1 2 °वने (for °धन)

**2** a) Dc [ऽ]पि, T2 G2-4 च (for हि) — b) T2 G3 4 सर्वे शस्त्र° (for सर्वशास्त्र°)

**3** a) B2 D1-3 T2 G3 4 आसाद्य (for सप्राप्य) cf

वृष्णयः पाण्डवाश्चैव सुहृदश्च परस्परम् ॥ २
वैशंपायन उवाच ।
प्रभासतीर्थं संप्राप्य पुण्यं तीर्थं महोदधेः ।
वृष्णयः पाण्डवान्वीरान्परिवार्योपतस्थिरे ॥ ३
ततो गोक्षीरकुन्देन्दुमृणालरजतप्रभः ।
वनमाली हली रामो बभाषे पुष्करेक्षणम् ॥ ४
न कृष्ण धर्मश्चरितो भवाय
जन्तोरधर्मश्च पराभवाय ।
युधिष्ठिरो यत्र जटी महात्मा
वनाश्रयः क्लिश्यति चीरवासाः ॥ ५
दुर्योधनश्चापि महीं प्रशास्ति
न चास्य भूमिर्विवरं ददाति ।
धर्मादधर्मश्चरितो गरीया-
नितीव मन्येत नरोऽल्पबुद्धिः ॥ ६
दुर्योधने चापि विवर्धमाने
युधिष्ठिरे चासुख आत्तराज्ये ।
किं न्वद्य कर्तव्यमिति प्रजाभिः
शङ्का मिथः संजनिता नराणाम् ॥ ७
अयं हि धर्मप्रभवो नरेन्द्रो
धर्मे रतः सत्यधृतिः प्रदाता ।
चलेद्धि राज्याच्च सुखाच्च पार्थो
धर्मादपेतश्च कथं विवर्धेत् ॥ ८
कथं नु भीष्मश्च कृपश्च विप्रो
द्रोणश्च राजा च कुलस्य वृद्धः ।
प्रव्राज्य पार्थान्सुखमाप्नुवन्ति
धिक्पापबुद्धीन्भरतप्रधानान् ॥ ९
किं नाम वक्ष्यत्यवनिप्रधानः
पितॄन्समागम्य परत्र पापः ।
पुत्रेषु सम्यक्चरितं मयेति
पुत्रानपापानवरोप्य राज्यात् ॥ १०
नासौ धिया संप्रतिपश्यति स्म
किं नाम कृत्वाहमचक्षुरेवम् ।
जातः पृथिव्यामिति पार्थिवेषु
प्रव्राज्य कौन्तेयमथापि राज्यात् ॥ ११

---

v l 1) Dc प्रभास ते समासाद्य — b) K1 D3 पुण्य तीरे, K3 पुण्ये तीरे, K4 पुण्यतीरे, B1 3 Dc S पुण्यतीर्थे, D1 पुण्य तीर्थे, D2 पुण्ये तीर्थे, D5 पुण्य तीर — c) N (except K1 B1 Dc2 D1) वीरा (for वीरान्)

6 c) Dn2 n3 G1 वरीयान् (for गरी ) — d) K1 2 M [ए]व (for [इ]व) D1 2 धर्मं च विद्मामि महानुभाव

7 Ś1 damaged — a) K B3 Dc D2 5 धन वीक्ष्य, D1 2 धन चापि (for °धने चापि) The same MSS मान (for माने) — b) K B3 Dc D1-3 5 युधिष्ठिर K B Dc Dn D3-6 चा(B1 वा)सुखम् K B3 Dc D5 आत्तराज्य, D3 असरोष्ण, D5 आसवस, T1 आत्तसारे, T2 G2 4 आर्त(T2 र्ति)राज्ये D1 2 वा वनवासक्लिष्ट (for चासुख आत्त ) — After 7ab, T1 G1 ins

582* हृतस्वराज्यायतनार्थभार्ये
दुर्योधनेनाल्पधिया च पार्थे ।

— c) K1 4 B Dc D1 2 T1 G1 किं स्वद्य, K2 3 Dn D4-6 G2 किं स्वत्र, T2 G3 4 किंचिन्न, M2 किं न्वत्र D3 वर्तव्यम्, T1 कर्वाहम्, G4 वक्तव्यम् (for कर्तव्यम्) K1 3 4 Dc D1 2 6 S (except G1) इह, D3 ऊचु (for इति) — d) D1 2 सशकता (for शङ्का मिथ )

8 a) B Dc Dn D4 M2 म (for हि) — b) K3 वृत ; K4 D1-3 स्थित, B1 3 4 Dc Dn D4-6 धृत, T2 G3 रति G1 धृति (for रत ) Ś1 K2 4 B1 D1-3 5 महात्मा (for प्रदाता) — c) Ś1 K1 3 B3 D1-3 चलेच्च, K4 D5 M त (for द्धि) Dc राज्यार्थसुखाच्च T G चलेत राज्यादिति सशयो मे — d) Ś1 K D1-3 5 6 अपेत K4 B2 Dn D4 T2 G3 तु (for च) S1 K D1-3 5 6 नु कुर्यात् (for विवर्धेत्) T2 G3 4 धर्मादधर्मश्चरितो गरीयान् (= 6c)

9 a) S1 K1 2 Dc G1 च, Dn1 n3 D3 तु (for नु) — b) K3 कुलस्य वृद्धा॰, K4 कुलप्रवृद्ध॰, D5 कुले च वृद्धा

10 c) T1 G1 सत्य (for सम्यक्) S1 K1 2 [ए]व (for [इ]ति) — d) B Dn D4 व्यप (for अव ) Ś1 K1 2 राज्यम् (for राज्यात्)

11 K4 om (hapl ) 11 — a) B2 पश्यते, G1 पृच्छति (for पश्यति) — c) Ś1 K (K4 om ) D3 5 6 इह, D1 2 G2 M1 अपि (for इति) — d) B1 4 इत॰; B2 3 Dc Dn D4 इति (for अथ) Ś1 K (K4 om ) D1-3 5 6 [अ]धि ; B1 4 Dc स्व , B2 3 Dn D4 स्म (for

नूनं समृद्धान्पितृलोकभूमौ
चामीकराभान्क्षितिजान्प्रफुल्लान् ।
विचित्रवीर्यस्य सुतः सपुत्रः
कृत्वा नृशंसं बत पश्यति स्म ॥ १२
व्यूढोत्तरांसान्पृथुलोहिताक्षा-
न्नेमान्स्म पृच्छन्स शृणोति नूनम् ।
प्रस्थापयद्यत्स वनं ह्यशङ्को
युधिष्ठिरं सानुजमात्तशस्त्रम् ॥ १३
योऽयं परेषां पृतनां समृद्धां
निरायुधो दीर्घभुजो निहन्यात् ।
श्रुत्वैव शब्दं हि वृकोदरस्य
मुञ्चन्ति सैन्यानि शकृत्समूत्रम् ॥ १४
स क्षुत्पिपासाध्वकृशस्तरस्वी
समेत्य नानायुधबाणपाणिः ।
वने स्मरन्वासमिमं सुघोरं
शेषं न कुर्यादिति निश्चितं मे ॥ १५
न ह्यस्य वीर्येण बलेन कश्चि-
त्समः पृथिव्यां भविता नरेषु ।
शीतोष्णवातातपकर्शिताङ्गो
न शेषमाजावसुहृत्सु कुर्यात् ॥ १६
प्राच्यां नृपानेकरथेन जित्वा
वृकोदरः सानुचरान्रणेषु ।
स्वस्त्यागमद्योऽतिरथस्तरस्वी
सोऽयं वने क्लिश्यति चीरवासाः ॥ १७
यो दन्तकूरे व्यजयन्नृदेवा-
न्समागतान्दाक्षिणात्यान्महीपान् ।
तं पश्यतेमं सहदेवमद्य
तपस्विनं तापसवेषरूपम् ॥ १८
यः पार्थिवानेकरथेन वीरो
दिशं प्रतीचीं प्रति युद्धशौण्डः ।

[अ]पि ) Ś1 K1 2 -राज्य (for राज्यात्)

**12** d) S सपश्यतीद हि (G2 नि ) कृत नृशस

**13** a) K3 सिंहोन्नतासान्, B2 3 व्यूढोत्तराशान्, D3 व्यूढोरसस्तान् (m as in text), T1 G1 2 M व्यूढातरासान्, T2 G3 4 व्यूढातरास्तान् D1 2 मूढातरास्मा निकृतिस्वभावो — b) K4 B Dc Dn D3-6 M om न Ś1 स, K1 2 न, T2 G2 3 M2 च (for स्म) Ś1 K1 3 4 M न, G2 च (for स) Dn3 श्रृणाति (see below) D1 2 भ्रातु सुताना स नृशसकर्ता ❀ Cn श्रृणाति हिनस्ति। श्रृणोतीति लेखकप्रमाद'। न श्रृणोतीति गौडपाठे तु । ❀ — c) B1 2 4 Dn D1 4-6 प्रास्था (for प्रस्था°) B3 प्रस्थापयामास (for यद्यत्स) S यत्र (for यत्स) K3 निशको, Dn स°, D5 भृश यो, T G1-3 विशको, G4 सशोको (for ह्य°) — d) Ś1 K1 3 4 D2 3 5 राज्य (for शस्त्रम्)

**14** a) T2 G3 4 सोय Ś1 K1 2 D1 पृतना समृद्धा' — b) S1 K D3 5 बाहुर् (for भुजो) B3 D2 वि, Dc [S]भि (for नि-) — c) Ś1 K1 [अ]पि, K2 D5 हि (for [ए]व) K3 D1 2 T1 G1 M च, T2 G2-4 तु (for हि)

**15** a) D1 2 °सार्ति°, T2 G2-4 °सार्द्धि° (for °साध्व°) B1 D1 2 T2 G3 3 तपस्वी (for तर°) — c) D1 2 क्लेशानिमान्संस्मरन्घोरतापो — d) D1 2 हन्यात्स वीर्याद् (for शेष न कुर्याद्) S1 K1 2 D3 5 निश्चयो (for निश्चित)

**16** a) K1 reads $16^{ab}$ after 17 S (except M1) वीर्ये च बले च D1 2 न चास्य कश्चिद्धि बलेन तुल्यो — b) B Dc Dn D4 6 सम पृथिव्यामपि विद्यतेन्य, D1 2 भवेत्पृथिव्यामथ वामरेषु — K4 om (hapl) $16^{c}$–$17^{b}$ — c) B Dc Dn D4 6 T G स शीत (for शीतोष्ण) S1 K3 B1 2 D4-6 °कर्षितागो — d) D1 2 नि- (for न) Dn1 [अ]सुहृत्स (for [अ]सुहृत्सु)

**17** K4 om $17^{ab}$ (cf v l 16) — a) Ś1 K1 Dn3 D1 4 T2 G3 प्राच्यान् (for प्राच्या) — After 17, K1 reads $16^{ab}$

**18** a) K2 B Dc Dn D4 6 सिंधुकूले, K3 4 D3 5 दत (D5 [S]नत)वक्रान्, D1 2 शूरवर्यो, T1 G1 M1 दत्तकूरे, T2 दडकूटे, G2 दतिकूटे, G3 4 दत्तकूटे (for दन्तकूरे) K3 4 D3 5 अजयत्, T1 G2 4 न्वज°, G1 [S]त्यज , M1 ह्यज° (for व्यज°) K3 4 D3 5 G1 समस्तान्, D1 2 T G2-4 M समेतान् (for नृदेवान्) — c) Ś1 K1-3 D5 पश्य मैन, K4 Dc तैन (for तेम) Ś1 उद्यत, K3 4 D1 2 वनस्थ (for अद्य) — d) B Dc Dn D4 6 G2 4 M2 तरम्विन S1 K1 °वेष रूप, T2 G2-4 °रूपवेष

**19** a) Ś1 K3 वीरान्, K1 जिग्याद्, K3 4 B D (except D3 5) जिग्ये (for वीरो) — b) D1 2 यद्धतूण (for युद्ध ) — c) Ś1 K D3 माद्रीसुतो (for सोऽय वने) — K3 पश्य

सोऽयं वने मूलफलेन जीव-
 श्चटी चरत्यद्य मलाचिताङ्गः ॥ १९
सत्रे समृद्धेऽतिरथस्य राज्ञो
 वेदीतलादुत्पतिता सुता या ।
सेयं वने वासमिमं सुदुःखं
 कथं सहत्यद्य सती सुखार्हा ॥ २०
त्रिवर्गमुख्यस्य समीरणस्य
 देवेश्वरस्याप्यथ वाश्विनोश्च ।
एषां सुराणां तनयाः कथं नु
 वने चरन्त्यल्पसुखाः सुखार्हाः ॥ २१
जिते हि धर्मस्य सुते सभार्ये
 सभ्रातृके सानुचरे निरस्ते ।
दुर्योधने चापि विवर्धमाने
 कथं न सीदत्यवनिः सशैला ॥ २२

इति श्रीमहाभारते आरण्यकपर्वणि एकोनविंशत्यधिकशततमोऽध्यायः ॥ ११९ ॥

# १२०

सात्यकिरुवाच ।
न राम कालः परिदेवनाय
 यदुत्तरं तत्र तदेव सर्वे ।
समाचरामो ह्यनतीतकालं
 युधिष्ठिरो यद्यपि नाह किंचित् ॥ १
ये नाथवन्तो हि भवन्ति लोके
 ते नात्मना कर्म समारभन्ते ।
तेषां तु कार्येषु भवन्ति नाथाः

---

मूलेन (for मूलफलेन) D6 S जिग्ये रणे त नकुल वनेस्मिन् (D5 नकुल त वनेषु) — d) Dn2 चलत्यद्य, D1 2 चरत्यत्र (for चरत्यद्य) S सपश्यतेम मलदिग्धगात्र — After 19, Ś1 ins

583* जिग्ये रणे त नकुल वनेषु
 सपश्यते मेऽद्य मन सुदीनम् ।

**20** b) K3 सुतेय, D1 2 सुमध्यमा (for सुता या) — c) B3 सुघोर (for सुदुःख) — d) K2-4 D3 5 वसत्यद्य (for सह ) B3 transp कथ and सती

**21** Ś1 damaged K2 D5 om (hapl) 21 — a) G1 तथैव वायोर् (for समी ) — b) D1 S तथा (for [अ]थ वा) — c) S (except G4) तेषा (for एषा) G3 4 वने (for नु) D1 2 एषा सुता दीर्घभुजा वनेस्मिन् — d) D1 2 कथं (for वने) T2 G2-4 चरत्यमी (for वने चरन्ति) Dn [S]-चरन् (!) (for चरन्ति) B Dc D4 6 अस्त°, Dn ह्यस्त (!) (for अल्प )

Colophon lost in Ś1 — *Major parvan* K1 2 Dn2 T G3-4 M1 आरण्य — *Sub parvan* Dc तीर्थयात्रा K3 4 B1 2 D1-3 (all om sub parvan name) mention only लोमशतीर्थयात्रा — *Adhy name* K1 2 4 रामवाक्य; B4 D5 बलदेववाक्य, Dc प्रभासे बलदेववाक्य, Dn3 प्रभासे यादवसगम — *Adhy no* (figures, words or both) Dn1 118, Dn2 119 (as in text), Dn3 S 120 (M2 122) D1 124 — *Śloka no* Dn1 ns 21, Dn2 D1 22

## 120

**1** Ś1 damaged — a) D1 2 परिदेवितस्य — b) K1 2 B2-4 Dn D4-6 त्वत्र (for तत्र) — After 1ab, D1 2 ins

584* कुर्वीमहे यच्च हित भवेत्तु
 राज्ञे ह्यस्यायाजमीढाय नित्यम् ।

— c) T G1 3 सम , G4 M स्वन (for ह्यन ) D1 2 मया च रामाद्य वृत स कालो

**2** Ś1 damaged — a) M ते (for ये) K2 Dn D2 4-6 [S]थ, B1 [S]त्र, B3 तु (for हि) — b) K D1-3 5 न ते स्वय (D3m ते नात्मना as in text) M ये (for ते) B1 3 चरति (for रभन्ते) — c) K1-3 D1-3 5 M तेषा (D3 5 येषा) समर्था चि(M हि)चरति नाथा° — d) K1 Dn2 D6 शिब्या , D1 2 3 (m as in text) शब्या° (for शैब्या ) ❀ Cn शिब्यादय इत्येव पाठ । शैब्यादय इति पाठे तु स्वार्थे ष्यञ् । ❀

शैब्यादयो राम यथा ययातेः ॥ २
येषां तथा राम समारभन्ते
कार्याणि नाथाः स्वमतेन लोके ।
ते नाथवन्तः पुरुषप्रवीरा
नानाथवत्कृच्छ्रमवाप्नुवन्ति ॥ ३
कस्मादयं रामजनार्दनौ च
प्रद्युम्नसाम्बौ च मया समेतौ ।
वसत्यरण्ये सह सोदरीयै-
स्त्रैलोक्यनाथानधिगम्य नाथान् ॥ ४
निर्यातु साध्वद्य दशार्हसेना
प्रभूतनानायुधचित्रवर्मा ।
यमक्षयं गच्छतु धार्तराष्ट्रः
सबान्धवो वृष्णिबलाभिभूतः ॥ ५
त्वं ह्येव कोपात्पृथिवीमपीमां
संवेष्टयेस्तिष्ठतु शार्ङ्गधन्वा ।
स धार्तराष्ट्रं जहि सानुबन्धं
वृत्रं यथा देवपतिर्महेन्द्रः ॥ ६
भ्राता च मे यश्च सखा गुरुश्च
जनार्दनस्यात्मसमश्च पार्थः ।
यदर्थमभ्युद्यतमुत्तमं त-
त्करोति कर्माग्र्यमपारणीयम् ॥ ७
तस्यास्त्रवर्षाण्यहमुत्तमास्त्रै-
र्विहत्य सर्वाणि रणेऽभिभूय ।
कायाच्छिरः सर्पविषाग्निकल्पैः
शरोत्तमैरुन्मथितास्मि राम ॥ ८
खड्गेन चाहं निशितेन संख्ये
कायाच्छिरस्तस्य बलात्प्रमथ्य ।
ततोऽस्य सर्वाननुगान्हनिष्ये
दुर्योधनं चापि कुरूंश्च सर्वान् ॥ ९
आत्तायुधं मामिह रौहिणेय

3 G4 om 3 — a) K3 4 B1 D1-3 M1 तेषा (for येषा) K4 °चरति, M1 °चरते (for °रभन्ते) — b) S1 समतेन, K3 सुमतेन, B4 स्वयमेव, D1 3 स्वबलेन (for स्वम°) T2 (before corr) समयेन लोका° (for स्वमतेन लोके)

4 a) G2 4 तस्माद् (for कस्माद्) K1 असौ, B1-3 Dc अमी, B4 Dn D4 6 इमौ, D3 इमे (for अय) — K3 om 4b-5a — b) K4 B D4 5 °शांबौ — c) K1 4 B1 3 M वसत्यरण्ये (as in text), D1 3 दीनोथ राजा, the rest वसत्यरण्ये — d) B1 3 4 Dn D1-4 6 G3 M2 अभि° (for अधि°) K1 B1 Dn D3m 4 6 पार्थो° (K1 °र्थे), B4 पार्थान् (for नाथान्)

5 K3 om 5a (cf v l 4) — a) D1 3 सा ह्यद्य, T G3 4 सा त्वद्य (for साध्वद्य) — b) Ś1 K4 D3 °नागायुध, D1 3 °पादा युधि, D5 °नागा युधि (for °नानायुध) S1 K1 2 Dn1 D5 -चित्रकर्मा ; M -चित्रवर्मिणी (for चित्रवर्मा)

6 a) K1 2 D1 3 त्वमेव, D5 त्व देव (for त्व ह्येव) — b) D1 3 वासुदेव° (for शार्ङ्ग°) — d) D1 3 सुरेंद्र°, S (T2 before corr) नरेंद्र (for महेन्द्र°)

7 a) S1 K1 2 [अ]पि (for first च) K3 B D (except D1-3 5) T1 G1 M स (for second च) — b) Dc [अ]द्य (for [आ]त्म) K4 -सख स, M1 -मसश्च (for ममश्च) D1 3 कृष्णस्य चात्मा मम चैव पार्थ — After 7ab B1 2 4 D (except D1-3 5) ins

585* यदर्थमैच्छन्मनुजा सुपुत्र
शिष्य गुरुश्चाप्रतिकूलवादम् ।
[(b) B1 Dn गुरु (for गुरुश्)]

— c) D1 3 T1 G1 M1 तदर्थम्, T2 G3 यदर्थं, G2 4 M2 तदर्थं (for यदर्थम्) Ś1 K1 3 4 अभ्युद्यमम् S1 K D1 च (for तत्) D1 3 एको हि यदद्य मन्ये, S एको हि (M2 [S]य) य उद्यमन्वै (M1 एकोभिसमुद्वहन्वै) (for अभ्युद्यतमुत्तम तत्) — d) G2 4 करोतु K3 कर्णस्तम्, D1 3 कर्णक्षम्, S कर्णोक्षम् (for कर्माग्र्यम्) S (except M2) अवारणीय

8 a) Ś1 K2 प्राप्या (for तस्या°) G1 °शस्त्राणि (for °वर्षाणि) — b) S1 K B2 4 D3 M1 नि° (for वि°) Ś1 K2 शस्त्राणि, D3 शत्रूश्च (for सर्वाणि) D1 3 विधूय (for ऽभिभूय) — c) Ś1 K2 तस्य (for सर्प)

9 a) T1 M सख्ये, T2 (before corr) G2 मघे (for सख्ये) — c) S1 K Dc D1-3 5 निहस्ये, G1 वधिष्ये (for हनि)

10 a) S युधि (for इह) — b) Ś1 K2 भोजा, K1 भूजा, K3 D1 3 भूपा, K4 चेमे, B Dc Dn D5 2 भैमा, S मर्त्ये (for भौमा as in D3 4 only) — c) Ś1 K1 3 निहन्मि ह्येक° (for निघ्नन्तमेक) G1 वीर°, G2 M1 °योध (for °योध°) — d) B1 4 Dc Dn2 अभिद्र, B3 3 Dn1 ns

पश्यन्तु भौमा युधि जातहर्षाः ।
निघ्नन्तमेकं कुरुयोधमुख्या-
न्काले महाकक्षमिवान्तकाग्निः ॥ १०
प्रद्युम्नमुक्तान्निशितान्न शक्ताः
सोढुं कृपद्रोणविकर्णकर्णाः ।
जानामि वीर्यं च तवात्मजस्य
कार्ष्णिर्भवत्येष यथा रणस्थः ॥ ११
साम्बः ससूतं सरथं भुजाभ्यां
दुःशासनं शास्तु बलात्प्रमथ्य ।
न विद्यते जाम्बवतीसुतस्य
रणेऽविपह्यं हि रणोत्कटस्य ॥ १२
एतेन बालेन हि शम्बरस्य
दैत्यस्य सैन्यं सहसा प्रणुन्नम् ।
वृत्तोरुरत्यायतपीनबाहु-
रेतेन संख्ये निहतोऽश्वचक्रः ।
को नाम साम्बस्य रणे मनुष्यो
गत्वान्तरं वै भुजयोर्धरेत ॥ १३
यथा प्रविश्यान्तरमन्तकस्य
काले मनुष्यो न विनिष्क्रमेत ।
तथा प्रविश्यान्तरमस्य संख्ये
को नाम जीवन्पुनराव्रजेत ॥ १४
द्रोणं च भीष्मं च महारथौ तौ
सुतैर्वृतं चाप्यथ सोमदत्तम् ।
सर्वाणि सैन्यानि च वासुदेवः
प्रधक्ष्यते सायकवह्निजालैः ॥ १५
किं नाम लोकेष्वविपह्यमस्ति

---

$D_{4\ 6}$ अग्नि (for काले) $Ś_1$ $K_{1\ 2}$ महान्कक्षम्, S महत्क क्षम् $K_3$ S अनल ($T_2$ $G_3$ लो) वै; $K_4$ अतराग्नि; B Dc Dn $D_{4\ 6}$ अतकाले, $D_{1-3}$ अतकाग्नि

**11** [a]) $Ś_1$ $K_{1\ 2\ 4}$ $D_{1-3}$ M विशिखान् (for निशितान्) — [b]) $Ś_1$ $K_{1\ 2}$ $D_5$ M द्रौणि (for द्रोण°) — [c]) $Ś_1$ $G_1$ जानाति, $B_2$ T $G_{3\ 4}$ °सि (for मि) $B_1$ तु, S (except $M_2$) हि (for च) $K_1$ $B_{2-4}$ Dn $D_{4\ 6}$ जयात्म, $K_4$ यदात्म, $B_1$ तवानु, $D_2$ $T_1$ तदात्म, $G_{1\ 2}$ $M_2$ मदात्म° (for तवात्म) — [d]) $K_2$ $Dn_1$ $n_2$ [ए]व (for [ए]ष) $Ś_1$ $K_{2\ 3}$ $D_5$ $T_1$ $G_1$ यथा ($K_3$ °दा) रथस्थ, $T_2$ $G_{2-4}$ रथातरस्थ (for यथा रणस्थ)

**12** [a]) $K_3$ साश्व, $B_{1\ 3\ 4}$ Dc $D_{4\ 6}$ शाल्व (for साम्ब) $Ś_1$ $K_{1\ 2}$ $D_{1\ 2}$ रथस्थ, $K_{3\ 4}$ $D_{3\ 5}$ रणस्थ (for भुजाभ्यां) — [b]) $Ś_1$ $K_{2\ 4}$ Dc $D_3$ शस्त्र, $D_{1\ 2}$ सास्त्र (for शास्तु) $D_{1\ 2}$ बल (for बलात) $Ś_1$ $K_{1\ 2\ 4}$ $D_{1-3}$ निहन्यात् (for प्रमथ्य) — [d]) $Ś_1$ K $D_{3\ 5}$ हि मदो($K_4$ °द्धो)त्कटस्य, $Dn_2$ $Dc_2$ $D_3$ हरिणोत्क

**13** [a]) $D_{1\ 2}$ एकेन येनाहवशोभिना सदा — [b]) $D_{1\ 2}$ (? gloss) शाल्वस्य (for दैत्यस्य) $D_{1\ 2}$ तरसा (for सहसा) $B_3$ (corrupt) प्रशस्त; $B_4$ प्रपन्न, $D_6$ प्रभग्न (for प्रणुन्नम्) — After 13[ab], T $G_{2-4}$ ins

586* हत स पापो युधि केवलेन
युद्धेऽद्वितीयो हरितुल्यरूप ।

— [c]) $Ś_1$ $K_{1\ 2\ 4}$ $B_1$ Dc $D_{3\ 5}$ M वृत्तोरुरप्यायत; $K_3$ वृत्तो भयप्यायत°; $D_{1\ 2}$ रुवक्षायत°, $T_2$ $G_3$ रुरप्यायत — [d]) $Ś_1$ K $B_1$ $D_{3\ 5}$ M एकेन (for एतेन) $T_{1\ 2}$ (after corr) $G_{1\ 3\ 4}$ M सखे, $T_2$ (before corr) $G_2$ सचे (for संख्ये) $S_1$ [अ]श्वचक्र, $B_3m$ $T_2$ (after corr) $G_3$ [अ]श्ववक्त्रः, $T_{1\ 2}$ (before corr) $G_{1\ 3\ 4}$ M च वक्र° (for [अ]श्वचक्रः) $D_{1\ 2}$ एकेन मग्नस्तरसा नृवीर — $D_2$ om 13[ef] — [e]) $K_4$ Dc शाल्वस्य B Dn $D_{4\ 6}$ महारथस्य (for रणे मनुष्यो) $D_1$ कार्ष्णि समासाद्य हि को विमुच्येद् — [f]) $D_1$ om 13[f] $Ś_1$ $K_{1\ 2}$ Dc $D_{3\ 5}$ ध्रियेत, $K_3$ भूयेत; $G_2$ M प्रमुच्येत् (for धरेत) B Dn $D_{3\ 4\ 6}$ रणे ($B_1$ °थे) समक्ष रथमभ्युदीयात् — After 13, S (except $G_4$ $M_1$) ins

587* यथैव यत्तस्य पुरंदरस्य
हरिध्वज स्यन्दनमास्थितस्य ।

**14** $Ś_1$ $K_2$ om 14[ab], $G_4$ om 14 — [b]) $D_4$ कालो मनुष्येण (for काले मनुष्यो न) $T_1$ नु (for ) $Dn_1$ विनिष्क्रमोऽस्य, $D_{1\ 2}$ नु विक्रमेत (for विनि°) — After 14[ab], $D_1$ ins

588* समाप्य वै तादृशीं योधलक्ष्मीं

— $K_3$ $D_2$ om 14[cd] — [c]) $Ś_1$ कथ, $K_4$ यथा (for तथा) $T_2$ (before corr) $G_2$ सचे, $T_2$ (after corr) $G_{1\ 3}$ M सखे — [d]) $B_{1\ 3\ 4}$ Dc Dn $D_{4\ 6}$ $T_1$ व्रजेय (for °व्रजेत)

**15** [a]) Dc भीष्म च द्रोण च (by transp) $D_{1\ 2}$ कृप च द्रौणिं (for महारथौ तौ) — [b]) $G_1$ वा° (for चा) $D_{1\ 2}$ $M_2$ हि, $T_1$ स (for [अ]थ) $G_2$ द्रौणिं च वीर सहसोमदत्त — [d]) T G वह्निनाजौ (for °वह्निजालैः)

**16** [a]) $B_4$ $G_4$ लोकेषु विषह्यम्, $D_4$ $G_1$ लोके ह्यविष

कृष्णस्य सर्वेषु सदैवतेषु ।
आत्तायुधस्योत्तमबाणपाणे-
श्चक्रायुधस्याप्रतिमस्य युद्धे ॥ १६
ततोऽनिरुद्धोऽप्यसिचर्मपाणि-
र्महीमिमां धार्तराष्ट्रैर्विसंज्ञैः ।
हृतोत्तमाङ्गैर्निहतैः करोतु
कीर्णां कुशैर्वेदिमिवाध्वरेषु ॥ १७
गदोल्मुकौ बाहुकभानुनीथाः
शूरश्च संख्ये निशठः कुमारः ।
रणोत्कटौ सारणचारुदेष्णौ
कुलोचितं विप्रथयन्तु कर्म ॥ १८
सवृष्णिभोजान्धकयोधमुख्या
समागता क्षत्रियशूरसेना ।
हत्वा रणे तान्धृतराष्ट्रपुत्रा-
ँल्लोके यशः स्फीतमुपाकरोतु ॥ १९
ततोऽभिमन्युः पृथिवीं प्रशास्तु
यावद्व्रतं धर्मभृतां वरिष्ठः ।
युधिष्ठिरः पारयते महात्मा
द्यूते यथोक्तं कुरुसत्तमेन ॥ २०
अस्मत्प्रमुक्तैर्विशिखैर्जितारि-
स्ततो महीं भोक्ष्यति धर्मराजः ।
निर्धार्तराष्ट्रां हतसूतपुत्रा-
मेतद्धि नः कृत्यतमं यशस्यम् ॥ २१

वासुदेव उवाच ।

असंशयं माधव सत्यमेत-
द्गृह्णीम ते वाक्यमदीनसत्त्व ।
स्वाभ्यां भुजाभ्यामजितां तु भूमिं
नेच्छेत्कुरूणामृषभः कथंचित् ॥ २२
न ह्येष कामान्न भयान्न लोभा-
द्युधिष्ठिरो जातु जह्यात्स्वधर्मम् ।
भीमार्जुनौ चातिरथौ यमौ वा
तथैव कृष्णा द्रुपदात्मजेयम् ॥ २३

---

ह्यम् — [b]) B Dc Dn $D_{4.6}$ सदेवकेषु (for सदै ) — $G_4$ om $16^{cd}$ — [d]) K $D_8$ सख्ये (for युद्धे)

**17** [a]) $K_{2.4}$ $D_{2.5}$ तथा (for ततो°) — [c]) B कृत्तो°, Dc $D_8$ कृतो° (for हृतो°) — [d]) $K_{1-3}$ $D_8$m तीर्णां ($D_8$ [orig ] तीक्ष्णा) (for कीर्णां) — After 17, S (except $G_4$) reads $19^{cd}$

**18** $T_2$ $G_{3.4}$ read $18^a$ after $18^d$ — [a]) $K_{3.4}$ B Dc T $G_{2.3}$ $M_2$ गदोल्मुका , $M_1$ °ल्मुक $K_3$ $M_2$ गावहु-, $K_4$ गाहव , Dc $M_1$ गावह-, $D_3$ $G_1$ गाविह , T $G_{2.3}$ शावह- (for बाहुक-) $K_3$ -भानुनाशा , $B_2$ Dc °नाथा , $D_5$ °नीपा $D_{1.2}$ गदोल्मुकौ माननीयौ च सख्ये — [b]) $D_{1.2}$ om $18^b$ $S_1$ $K_{1.2}$ शूराश्च, $T_2$ $G_3$ कुरूश्च T $G_{1.3}$ M सखे, $G_2$ सचे Ś$_1$ $K_{1.2}$ निहठ- (for निशठः) — [d]) $B_1$ Dc $D_{1.2}$ $M_1$ वै (for वि-) $D_{1.2}$ S (except $M_2$) लोके (for कर्म)

**19** $G_4$ om $19^{ab}$ — [a]) $K_{1.4}$ सा वृष्णिभोजाधक , $D_{1.2}$ सद्वृष्णिभोज्यधक , $G_1$ सवृष्णियौधाधक $K_1$ योध मुख्य , $K_{3.4}$ Dc $D_{1-4}$ M योधमुख्या — After $19^a$, $D_{1.2}$ ins

589* समाहित पृथिवीं साधु राजा ।
यशोभृता धर्मभृता वरिष्ट
युधिष्ठिर पालयता महात्मा ।

— [b]) $K_3$ $B_{2-4}$ Dc $D_{3.4}$ S ($G_4$ om ) समागता , $D_{1.2}$ सहाधकै° $B_2$ $D_{1.2}$ $T_2$ $G_3$ $M_1$ क्षत्रिया , Dn $D_{4.6}$ $T_1$ सात्वत (for क्षत्रिय ) $K_3$ Dc $D_3$ S ($G_4$ om ) -शूरसेना — S (except $G_4$) reads $19^{cd}$ after 17 — [c]) $T_2$ $G_{3.4}$ धृतराष्ट्रस्य पुत्रान् — [d]) Ś$_1$ $K_4$ अपाकरोतु $D_{1.2}$ लोके यशस्वी पुरुषप्रवीर — After 19, $Dn_2$ reads वासुदेव, followed by st 22

**20** [c]) $S_1$ K $B_1$ $D_8$ $T_2$ $G_{2-4}$ पालयते, $D_1$ पारयता, $D_2$ पालयता (for पारयते) — [d]) Ś$_1$ $K_{1.4}$ द्युते यथोक्त-, $D_{1.2}$ द्यूत यदुक्त

**21** [a]) $S_1$ damaged $K_{1.4}$ Dc $D_{1-4}$ $T_2$ $G_{2.3}$ $M_1$ प्रयुक्तैः, $M_2$ °विमुक्तैः (for °प्रमुक्तैः) — [d]) M लोके यश स्फीतमुपाकरोतु (=$19^d$) — After 21, $S_1$ $K_{1.2}$ ins an addl colophon (*adhy name* सात्यकिवाक्य)

**22** $T_1$ श्रीभगवान्, $G_1$ श्रीकृष्ण (for वासु° उ ) — [c]) $K_{1-3}$ $B_2$ Dc $D_6$ $T_2$ (before corr ) $G_3$ M द्वाभ्या, $B_4$ आ (for स्वा ) — [d]) Ś$_1$ $K_{1.2}$ Dc अधिप (for ऋषभ )

**23** [c]) $K_{1.3}$ $B_{3-4}$ Dn $D_{1.2.4.5}$ $M_1$ च (for वा)

उभौ हि युद्धेऽप्रतिमौ पृथिव्यां
वृकोदरश्चैव धनंजयश्च ।
कस्मान्न कृत्स्नां पृथिवीं प्रशासे-
न्माद्रीसुताभ्यां च पुरस्कृतोऽयम् ॥ २४
यदा तु पाञ्चालपतिर्महात्मा
सकेकयश्चेदिपतिर्वयं च ।
योत्स्याम विक्रम्य परांस्तदा वै
सुयोधनस्त्यक्ष्यति जीवलोकम् ॥ २५
युधिष्ठिर उवाच ।
नैतच्चित्रं माधव यद्ब्रवीषि
सत्यं तु मे रक्ष्यतमं न राज्यम् ।
कृष्णस्तु मां वेद यथावदेकः
कृष्णं च वेदाहमथो यथावत् ॥ २६
यदैव कालं पुरुषप्रवीरो
वेत्स्यत्ययं माधव विक्रमस्य ।
तदा रणे त्वं च शिनिप्रवीर
सुयोधनं जेष्यसि केशवश्च ॥ २७
प्रतिप्रयान्त्वद्य दशार्हवीरा
दृढोऽसि नाथैर्नरलोकनाथैः ।
धर्मेऽप्रमादं कुरुताप्रमेया
द्रष्टासि भूयः सुखिनः समेतान् ॥ २८
वैशंपायन उवाच ।
तेऽन्योन्यमामन्त्र्य तथाभिवाद्य
वृद्धान्परिष्वज्य शिशूंश्च सर्वान् ।
यदुप्रवीराः स्वगृहाणि जग्मू
राजापि तीर्थान्यनुसंचचार ॥ २९
विसृज्य कृष्णं त्वथ धर्मराजो
विदर्भराजोपचितां सुतीर्थाम् ।
सुतेन सोमेन विमिश्रितोदां
ततः पयोष्णीं प्रति स ह्युवास ॥ ३०

इति श्रीमहाभारते आरण्यकपर्वणि विंशत्यधिकशततमोऽध्यायः ॥ १२० ॥

---

**24** a) Ś1 K1 पृथिव्या विश्रुतौ (unmetrical!), K2 विश्रुतौ पृथिव्या, K4 D0 प्रथितौ पृथिव्या — c) Ś1 विशिष्यान्; K प्रशिष्यान् (K4 प्रशास्यान्); B1 नु शासेन् (for प्रशासेन्) — d) D1 2 M2 [ऽ]सौ (for ऽयम्)

**25** a) K3 D0 D1 2 पचालपति — b) Ś1 K1 D8 सकेकयैश्, K4 B1 D0 Dn1 n3 D3 4 6 G1 सकैकयश् — c) B (B3 corrupt) Dn D4 6 युध्येम, D0 योत्स्यामि (for योत्स्याम) Ś1 K1 2 D1 2 आक्रम्य (for विक्रम्य) B Dn D4 6 रणे समेता॰ (B2 ॰तान्) (for परांस्तदा वै) — d) B Dn D4 6 तदैव सर्वे रिपवो हि न स्यु॰

**26** a) B Dn D4 6 नेद (for नैतच्च्) S1 K1 2 D0 D3 5 चिरान् (for चित्र) D2 (? gloss) सात्यके (for माधव) — b) T G ॰मिद (for ॰तम) — c) K3 4 D8 5 एव (for एकः)

**27** a) T1 2 (before corr) G2 4 यदेव, G1 यैव (for दैव) D1 2 पुरुषोत्तमोसौ (for पुरुष ) — Ś1 K2 om (hapl) $27^{bc}$ — d) Ś1 K1 2 4 D2 जेष्यति (for ॰सि)

**28** b) K1 2 B D (except D1) T2 G3 दृढोसि (for दृढोऽसि) Ś1 नववीर॰, K D0 D5 नरवीर॰, D1–6 G1 M2 नरदेव॰ (for नरलोक॰) — c) K1 3 D1–4 T2 G2–4 प्रसाद, D6 प्रमाण (for ऽप्रमाद) Ś1 K3 T2 G3 [न]प्रमेयान् — d) Ś1 K1 2 द्रक्ष्यामि; K3 धक्ष्यामि (for द्रष्टासि) Ś1 K1–3 D8 सुखितान्; T2 G2–4 स्वजनै (for सुखिन ) D1 3 समस्तान् (for समेतान्)

**29** B D (except D8 5) G4 om the ref — a) Ś1 K D8 5 ततो (for तथा॰) — d) B2–4 Dn D4 6 ते चापि, D8 स चापि (for राजापि) B Dn D4 6 विचेरु (B1 ॰विवेश) (for ॰चचार) D1 2 राजापि सर्वैरभिवादितश्च

**30** a) B1 कृष्ण च स, T G वृष्णीनथ (T2 G3 4 ॰ननु) (for कृष्ण त्वथ) — b) Ś1 K1 2 D5 ॰पचितान् Ś1 K1 2 स तीर्थान्, K4 सुतीर्थे, D1 2 महात्मा; T1 स तीर्थां (for सुती॰) — After $30^{ab}$, K1 2 B D (except D1 2 5, D3 marg) T G ins

590* जगाम पुण्यां सरितं पयोष्णीं
सभ्रातृभृत्य॰ सह लोमशेन ।

[(L 1) T1 G2 4 सरिता — (L 2) ॰क सह वा, D0 ॰मिश्र सह, G1 भि सह वै (for ॰भृत्य सह) ]

— G4 om $30^{cd}$ — c) K1 D0 D5 विमिश्रितोय, K2 3 B Dn D4 6 विमिश्रतोया, T1 सम्भूमितोदा D1 2 महानदीं पुण्यतमा सुतोया — d) K3 B Dn D6 T G1 3 पय॰ (for तत॰) D1 2 अभित ससार (for प्रति स ह्यु॰) Ś1 D0 स

कृष्णस्य सर्वेषु सदैवतेषु ।
आत्तायुधस्योत्तमबाणपाणे-
श्चक्रायुधस्याप्रतिमस्य युद्धे ॥ १६
ततोऽनिरुद्धोऽप्यसिचर्मपाणि-
र्महीमिमां धार्तराष्ट्रैर्विसंज्ञैः ।
हृतोत्तमाङ्गैर्निहतैः करोतु
कीर्णां कुशैर्वेदिमिवाध्वरेषु ॥ १७
गदोल्मुकौ बाहुकभानुनीथाः
शूरश्च संख्ये निशठः कुमारः ।
रणोत्कटौ सारणचारुदेष्णौ
कुलोचितं विप्रथयन्तु कर्म ॥ १८
सवृष्णिभोजान्धकयोधमुख्या
समागता क्षत्रियशूरसेना ।
हत्वा रणे तान्धृतराष्ट्रपुत्रा-
ल्लोके यशः स्फीतमुपाकरोतु ॥ १९
ततोऽभिमन्युः पृथिवीं प्रशास्तु
यावद्व्रतं धर्मभृतां वरिष्ठः ।
युधिष्ठिरः पारयते महात्मा
द्यूते यथोक्तं कुरुसत्तमेन ॥ २०
अस्मत्प्रमुक्तैर्विशिखैर्जितारि-
स्ततो महीं भोक्ष्यति धर्मराजः ।
निर्धार्तराष्ट्रां हतसूतपुत्रा-
मेतद्धि नः कृत्यतमं यशस्यम् ॥ २१
वासुदेव उवाच ।
असंशयं माधव सत्यमेत-
द्गृह्णीम ते वाक्यमदीनसत्त्व ।
स्वाभ्यां भुजाभ्यामजितां तु भूमिं
नेच्छेत्कुरूणामृषभः कथंचित् ॥ २२
न ह्येष कामान्न भयान्न लोभा-
द्युधिष्ठिरो जातु जह्यात्स्वधर्मम् ।
भीमार्जुनौ चातिरथौ यमौ वा
तथैव कृष्णा द्रुपदात्मजेयम् ॥ २३

---

क्षम् — b) B Dc Dn $D_{4.6}$ सदेवकेषु (for सदै°) — $G_4$ om $16^{cd}$ — d) K $D_8$ सख्ये (for युद्धे)

**17** a) $K_{3.4}$ $D_{2.5}$ तथा° (for ततो°) — c) B कृत्तो°; Dc $D_3$ कृतो° (for हृतो°) — d) $K_{1-3}$ Dsm तीर्णा ($D_8$ [orig.] तीक्ष्णा) (for कीर्णां) — After 17, S (except $G_4$) reads $19^{cd}$

**18** $T_2$ $G_{3.4}$ read $18^a$ after $18^d$ — a) $K_{3.4}$ B Dc T $G_{2.3}$ $M_2$ गदोल्मुका, $M_1$ ल्मुक; $K_3$ $M_3$ गाबहु, $K_4$ गाहव-, Dc $M_1$ गावह-; $D_8$ $G_1$ गाविह-, T $G_{2.3}$ शावह- (for बाहुक-); $K_3$ -भानुनाशा°, $B_2$ Dc °नाथा°, $D_5$ °नीपा; $D_{1.2}$ गदोल्मुकौ माननीयौ च सख्ये — b) $D_{1.2}$ om $18^b$; $Ś_1$ $K_{1.2}$ शूराश्च, $T_2$ $G_3$ कुरूश्च; T $G_{1.3}$ M सखे, $G_2$ सघे; $S_1$ $K_{1.2}$ निहठ° (for निशठ°) — d) $B_1$ Dc $D_{1.2}$ $M_1$ वै (for वि°); $D_{1.2}$ S (except $M_2$) लोके (for कर्म)

**19** $G_4$ om $19^{ab}$ — a) $K_{1.4}$ सा वृष्णिभोजाधक°, $D_{1.2}$ सद्वृष्णिभोज्यधक°, $G_1$ सवृष्णियौधाधक; $K_1$ -योध मुख्य; $K_{3.4}$ Dc $D_{1-4}$ M योधमुख्या° — After $19^a$, $D_{1.2}$ ins:

589* समाहित° पृथिवीं साधु राजा ।
यशोभृता धर्मभृता वरिष्ठ°
युधिष्ठिर पालयता महात्मा ।

— b) $K_3$ $B_{2-4}$ Dc $D_{3.4}$ S ($G_4$ om) समागता°, $D_{1.2}$ सहाधकै; $B_2$ $D_{1.2}$ $T_2$ $G_3$ $M_1$ क्षत्रिया; Dn $D_{4.6}$ $T_1$ सात्वत- (for क्षत्रिय-); $K_3$ Dc $D_3$ S ($G_4$ om) -शूरसेना° — S (except $G_4$) reads $19^{cd}$ after 17 — c) $T_2$ $G_{3.4}$ धृतराष्ट्रस्य पुत्रान् — d) $Ś_1$ $K_4$ अपाकरोतु; $D_{1.2}$ लोके यशस्वी पुरुषप्रवीर° — After 19, $Dn_2$ reads वासुदेव, followed by st. 22

**20** c) $Ś_1$ K $B_1$ $D_8$ $T_2$ $G_{2-4}$ पालयते, $D_1$ पारयता, $D_2$ पालयता (for पारयते) — d) $Ś_1$ $K_{1.4}$ घृते यथोक्तं, $D_{1.2}$ घूत यदुक्त

**21** a) $S_1$ damaged; $K_{1.4}$ Dc $D_{1-4}$ $T_2$ $G_{2.3}$ $M_1$ प्रयुक्तैः, $M_2$ °विमुक्तैः (for °प्रमुक्तैः) — d) M लोके यशः स्फीतमुपाकरोतु ($=19^d$) — After 21, $S_1$ $K_{1.2}$ ins an addl. colophon (*adhy. name*: सात्यकिवाक्य)

**22** $T_1$ श्रीभगवान्; $G_1$ श्रीकृष्ण (for वासु° उ°) — c) $K_{1-3}$ $B_2$ Dc $D_5$ $T_2$ (before corr.) $G_2$ M द्राभ्या, $B_4$ आ (for स्वा°) — d) $S_1$ $K_{1.2}$ Dc अधिप (for ऋषभ)

**23** c) $K_{1.3}$ $B_{2-4}$ Dn $D_{1.2.4.6}$ $M_1$ च (for वा)

उभौ हि युद्धेऽप्रतिमौ पृथिव्यां
वृकोदरश्चैव धनंजयश्च ।
कस्मान्न कृत्स्नां पृथिवीं प्रशासे-
न्माद्रीसुताभ्यां च पुरस्कृतोऽयम् ॥ २४
यदा तु पाञ्चालपतिर्महात्मा
सकेकयश्चेदिपतिर्वयं च ।
योत्स्याम विक्रम्य परांस्तदा वै
सुयोधनस्त्यक्ष्यति जीवलोकम् ॥ २५

युधिष्ठिर उवाच ।

नैतच्चित्रं माधव यद्ब्रवीषि
सत्यं तु मे रक्ष्यतमं न राज्यम् ।
कृष्णस्तु मां वेद यथावदेकः
कृष्णं च वेदाहमथो यथावत् ॥ २६
यदैव कालं पुरुषप्रवीरो
वेत्स्यत्ययं माधव विक्रमस्य ।
तदा रणे त्वं च शिनिप्रवीर
सुयोधनं जेष्यसि केशवश्च ॥ २७
प्रतिप्रयान्त्वद्य दशार्हवीरा
दृढोऽसि नाथैर्नरलोकनाथैः ।
धर्मेऽप्रमादं कुरुताप्रमेया
द्रष्टासि भूयः सुखिनः समेतान् ॥ २८

वैशंपायन उवाच ।

तेऽन्योन्यमामन्त्र्य तथाभिवाद्य
वृद्धान्परिष्वज्य शिशूंश्च सर्वान् ।
यदुप्रवीराः स्वगृहाणि जग्मू
राजापि तीर्थान्यनुसंचचार ॥ २९
विसृज्य कृष्णं त्वथ धर्मराजो
विदर्भराजोपचितां सुतीर्थाम् ।
सुतेन सोमेन विमिश्रितोदां
ततः पयोष्णीं प्रति स ह्युवास ॥ ३०

इति श्रीमहाभारते आरण्यकपर्वणि विंशत्यधिकशततमोऽध्यायः ॥ १२० ॥

---

**24** $^{a}$) Ś$_1$ K$_1$ पृथिव्या विश्रुतौ (unmetrical!), K$_2$ विश्रुतौ पृथिव्या ; K$_4$ D$_0$ प्रथितौ पृथिव्या — $^{c}$) Ś$_1$ विशिष्यान्, K प्रशिष्यान् (K$_4$ प्रशास्यान्) ; B$_1$ तु शासेन् (for प्रशासेन्) — $^{d}$) D$_{1\ 2}$ M$_2$ [ऽ]सौ (for ऽयम्)

**25** $^{a}$) K$_3$ D$_0$ D$_{1\ 2}$ पचालपति° — $^{b}$) Ś$_1$ K$_1$ D$_5$ सकेकयैश्च, K$_4$ B$_1$ D$_0$ Dn$_1$ n$_3$ D$_{3\ 4\ 6}$ G$_1$ सकैकयश्च — $^{c}$) B (B$_3$ corrupt) Dn D$_{4\ 6}$ युध्येम, D$_0$ योत्स्यामि (for योत्स्याम) Ś$_1$ K$_{1\ 2}$ D$_{1\ 2}$ आक्रम्य (for विक्रम्य) B Dn D$_{4\ 6}$ रणे समेता (B$_2$ °तान्) (for परांस्तदा वै) — $^{d}$) B Dn D$_{4\ 6}$ तदैव सर्वे रिपवो हि न स्यु

**26** $^{a}$) B Dn D$_{4\ 6}$ नेद (for नैतच्च) Ś$_1$ K$_{1\ 2}$ D$_0$ D$_{3\ 5}$ चिरान् (for चित्र) D$_2$ (? gloss) सात्यके (for माधव) — $^{b}$) T G °मिद (for °तम) — $^{c}$) K$_{3\ 4}$ D$_{3\ 5}$ एव (for एक)

**27** $^{a}$) T$_{1\ 2}$ (before corr) G$_{2\ 4}$ यदेव ; G$_1$ °शैव (for दैव) D$_{1\ 2}$ पुरुषोत्तमोसौ (for पुरुष°) — Ś$_1$ K$_2$ om (hapl) 27$^{bc}$ — $^{d}$) Ś$_1$ K$_{1\ 2\ 4}$ D$_2$ जेष्यति (for °सि)

**28** $^{b}$) K$_{1\ 2}$ B D (except D$_1$) T$_2$ G$_3$ दृढोसि (for दृढोऽसि) Ś$_1$ नववीर°, K D$_0$ D$_5$ नरवीर°, D$_{1-6}$ G$_1$ M$_2$ नरदेव (for नरलोक°) — $^{c}$) K$_{1\ 3}$ D$_{1-4}$ T$_2$ G$_{2-4}$ प्रसाद, D$_5$ प्रमाण (for ऽप्रमाद) Ś$_1$ K$_2$ T$_2$ G$_3$ [अ]प्रमेयान् — $^{d}$) Ś$_1$ K$_{1\ 2}$ द्रक्ष्यामि, K$_3$ धक्ष्यामि (for द्रष्टासि) Ś$_1$ K$_{1-3}$ D$_3$ सुखितान्, T$_2$ G$_{3-4}$ स्वजनै (for सुखिन) D$_{1\ 2}$ समस्तान् (for समेतान्)

**29** B D (except D$_{3\ 5}$) G$_4$ om the ref — $^{a}$) Ś$_1$ K D$_{3\ 5}$ ततो (for तथा°) — $^{d}$) B$_{2-4}$ Dn D$_{4\ 6}$ ते चापि; D$_3$ स चापि (for राजापि) B Dn D$_{4\ 6}$ विचेरु (B$_1$ विवेश) (for °चचार) D$_{1\ 2}$ राजापि सर्वैरभिवादितश्च

**30** $^{a}$) B$_1$ कृष्णं च स, T G वृष्णीनथ (T$_2$ G$_{3\ 4}$ °नन्तु) (for कृष्णं त्वथ) — $^{b}$) Ś$_1$ K$_{1\ 2}$ D$_5$ °पचितान् Ś$_1$ K$_{1\ 2}$ स तीर्थान्; K$_4$ सुतीर्थे, D$_{1\ 2}$ महात्मा, T$_1$ स तीर्थां (for सुती°) — After 30$^{ab}$, K$_{1\ 2}$ B D (except D$_{1\ 2\ 5}$, D$_2$ marg) T G ins

590* जगाम पुण्यां सरितं पयोष्णीं
सभ्रातृभृत्यः सह लोमशेन ।

[(L 1) T$_1$ G$_{2\ 4}$ सरिता — (L 2) क सह वा, D$_0$ °मिश्र सह, G$_1$ मि सह वै (for °भृत्य सह)]

— G$_4$ om 30$^{cd}$ — $^{c}$) K$_1$ D$_0$ D$_5$ विमिश्रितोय, K$_{2\ 3}$ B Dn D$_{4\ 6}$ विमिश्रतोया ; T$_1$ सम्भूमितोदा D$_{1\ 2}$ महानदीं पुण्यतमां सुतोयां — $^{d}$) K$_3$ B Dn D$_3$ T G$_{1\ 3}$ पय° (for तत) D$_{1\ 2}$ अभित ससार (for प्रति स ह्यु) Ś$_1$ D$_0$ स

# १२१

लोमश उवाच ।
नृगेण यजमानेन सोमेनेह पुरंदरः ।
तर्पितः श्रूयते राजन्स तृप्तो मदमभ्यगात् ॥ १
इह देवैः सहेन्द्रैर्हि प्रजापतिभिरेव च ।
इष्टं बहुविधैर्यज्ञैर्महद्भिर्भूरिदक्षिणैः ॥ २
आमूर्तरयसश्चेह राजा वज्रधरं प्रभुम् ।
तर्पयामास सोमेन हयमेधेषु सप्तसु ॥ ३
तस्य सप्तसु यज्ञेषु सर्वमासीद्धिरण्मयम् ।
वानस्पत्यं च भौमं च यद् द्रव्यं नियतं मखे ॥ ४
तेष्वेव चास्य यज्ञेषु प्रयोगाः सप्त विश्रुताः ।
सप्तैकैकस्य यूपस्य चषालाश्चोपरि स्थिताः ॥ ५
तस्य स्म यूपान्यज्ञेषु भ्राजमानान्हिरण्मयान् ।
स्वयमुत्थापयामासुर्देवाः सेन्द्रा युधिष्ठिर ॥ ६
तेषु तस्य मखाग्र्येषु गयस्य पृथिवीपतेः ।
अमाद्यदिन्द्रः सोमेन दक्षिणाभिर्द्विजातयः ॥ ७
सिकता वा यथा लोके यथा वा दिवि तारकाः ।
यथा वा वर्षतो धारा असंख्येयाश्च केनचित् ॥ ८
तथैव तदसंख्येयं धनं यत्प्रददौ गयः ।

---

न्युवास, K1 B3 4 Dn D3-6 सोभ्यु°, K2 सो न्यु°, K3 पश्यु°, K4 मध्यु°, B1 T1 G1 सोभ्यु° (for स ह्यु°) — K1 2 B D (except D1 5, D3 marg) T G ins after 30 (G4, which om 30cd, ins after 590*)

591* द्विजातिमुख्यैर्मुदितैर्महात्मा
संस्तूयमानः स्तुतिभिर्वराभिः ।

[(L 1) K2 मुनिभिर्, T2 G3 विदितो, G2 मुदितो (for मुदितैर्) — (L 2) T G पुष्कलाभिः (for वराभिः) ]

Colophon om in B3 — *Major parvan* Ś1 K1 2 Dn2 D6 T G2-4 M1 आरण्य — *Sub parvan* B1 Dc तीर्थयात्रा K3 4 B2 Dn1 n3 D1 2 4-8 (all om sub-parvan name) mention only लोमशतीर्थयात्रा — *Adhy name* Ś1 K1 2 प्रभासतीर्थयात्रा, K1(addl) D6 वृष्णिगमन, K4 Dc B1 वृष्णिपाण्डव(B1 °यादव)संवाद, B4 कृष्णप्रयाण, D1-3 यादव(D3 वृष्णि)पाण्डवसमागम, D8 वृष्णिप्रत्यागमन — *Adhy no* (figures, words or both) Dn1 119, Dn2 120 (as in text), Dn3 S 121 (M3 123), D1 125 — *Śloka no* Dn D1 32

## 121

1 a) Ś1 D1 6 नृगेन, S (except M3) गयेन (for नृगेण) — d) K3 4 B D (except D1-3) S (except G4 M1) सुदम् (for मदम्), cf 7c

2 a) B Dn D4-6 च, D1 2 S तु (for हि) — d) D1 2 S बहुभिर् (for महद्भिर्)

3 a) Ś1 K1 Dc D6 अमूर्तरयसश्चेह, K4 आपूर्तरयमश्चेह (m अमूर्तिरयस पुत्र), D1 अमूर्तरयस चेह, D2 अमूर्तरयसा वेह, D3 अमूर्तरयसश्चैव, T G1-3 आधूर्तरजसश्चेह (G1 °श्चैव); M असूर्तरजसश्चेह — b) Dn D4 6 प्रभु°, S स्वयं (for प्रभुम्)

4 a) Ś1 K D3 5 सवेषु (for यज्ञे°) — d) Ś1 K3 4 D3 दीयते, K1 देयते (for नियतं) — After 4, N (except K3) ins

592* चषालयूपचमसा स्थाल्यः पात्र्यः स्रुचः स्रुवाः ।

[K1 पात्र, Dc पात्री (for पात्र्यः) K1 2 B1 3 4 D5 6 transp स्रुचः and स्रुवाः ]

5 b) T2 G2 3 मुनयः, M1 प्रयोगात् (for प्रयोगाः) — c) D5 T2 G1 3 4 M1 यज्ञस्य (for यूपस्य) — d) K1 2 चषाला हि, K3 D1-3 5 S (except G3 4) चषालेषु (for चषालाश्च) G4 M1 3 प्रतिष्ठिता (for [उ]परि स्थिताः)

6 a) K1 2 D1 2 यस्य स्म, K4 गमस्य, T2 G3 4 ते तस्य (for तस्य स्म) — d) T2 G3 4 सर्वे (for सेन्द्राः)

7 a) D3 प्रसस्त्रेषु, G1 महाश्रेष्ठ (for मखा°) Dc तस्य सर्वमखाग्र्येषु; D1 2 तस्य सर्वेषु यज्ञेषु — b) Ś1 K1 3 4 Dc D3 G2 M3 धरणीपते (G2 M3 °ते) — After 7, B D (except D1-3 5) ins

593* अप्रमख्यानानमभ्येयान्प्रत्यगृह्णन्द्विजातयः ।

[B1 5 प्रमस्त्यकालेसख्येयान्, B3 असंख्यानान, B4 असंख्य कान°, Dc प्रसख्याकालमसख्येय ]

8 a) Ś1 K1 2 G4 च, D1 2 वै (for वा) D1 2 गाग्यो (for लोके) — c) G2 च (for वा) K1 यथा वर्षा सुधाराश्च — d) K3 4 B Dc T2 G2 3 M1 स्म (for च)

सदस्येभ्यो महाराज तेषु यज्ञेषु सप्तसु ॥ ९
भवेत्संख्येयमेतद्वै यदेतत्परिकीर्तितम् ।
न सा शक्या तु संख्यातुं दक्षिणा दक्षिणावतः ॥ १०
हिरण्मयीभिर्गोभिश्च कृताभिर्विश्वकर्मणा ।
ब्राह्मणांस्तर्पयामास नानादिग्भ्यः समागतान् ॥ ११
अल्पावशेषा पृथिवी चैत्यैरासीन्महात्मनः ।
गयस्य यजमानस्य तत्र तत्र विशां पते ॥ १२
स लोकान्प्राप्तवानैन्द्रान्कर्मणा तेन भारत ।
सलोकतां तस्य गच्छेत्पयोष्ण्यां य उपस्पृशेत् ॥ १३
तस्मात्त्वमत्र राजेन्द्र भ्रातृभिः सहितोऽनघ ।
उपस्पृश्य महीपाल धूतपाप्मा भविष्यसि ॥ १४

वैशंपायन उवाच ।

स पयोष्ण्यां नरश्रेष्ठः स्नात्वा वै भ्रातृभिः सह ।
वैडूर्यपर्वतं चैव नर्मदां च महानदीम् ।
समाजगाम तेजस्वी भ्रातृभिः सहितोऽनघः ॥ १५
ततोऽस्य सर्वाण्याचख्यौ लोमशो भगवानृषिः ।
तीर्थानि रमणीयानि तत्र तत्र विशां पते ॥ १६
यथायोगं यथाप्रीति प्रययौ भ्रातृभिः सह ।
ददमानोऽसकृद्वित्तं ब्राह्मणेभ्यः सहस्रशः ॥ १७

लोमश उवाच ।

देवानामेति कौन्तेय तथा राज्ञां सलोकताम् ।
वैडूर्यपर्वतं दृष्ट्वा नर्मदामवतीर्य च ॥ १८
संधिरेष नरश्रेष्ठ त्रेताया द्वापरस्य च ।
एतमासाद्य कौन्तेय सर्वपापैः प्रमुच्यते ॥ १९
एष शर्यातियज्ञस्य देशस्तात प्रकाशते ।
साक्षाद्यत्रापिबत्सोममश्विभ्यां सह कौशिकः ॥ २०
चुकोप भार्गवश्चापि महेन्द्रस्य महातपाः ।
संस्तम्भयामास च तं वासवं च्यवनः प्रभुः ।

---

**10** $^{a}$) $K_{2\,3}$ $B_2$ Dn $D_{2-6}$ हि (for वै) — $^{c}$) $S_1$ $K_{1\,2\,4}$ $D_{1\,2}$ न तु शक्यास्तु ($K_4$ $D_{1\,2}$ क्या हि), $K_3$ B Dc Dn $D_{3-6}$ न तस्य शक्या (for न सा शक्या तु) $M_2$ च यज्ञेषु (for तु सख्यातु) — $^{d}$) $G_4$ दक्षिणा, $M_2$ सख्यातु (for दक्षिणा)

**11** $^{a}$) $K_3$ $D_{1-3}$ $_5$ तु, $K_4$ हि (for च) — $^{b}$) $K_3$ S स यज्ञेषु ($T_2$ $G_{2\,3}$ $M_2$ by transp यज्ञेषु स) विशां पते

**12** $^{a}$) $D_{1\,2}$ $M_1$ अल्पावकाशा पृ , $G_1$ अल्पया शेषया पृथ्वी — $^{b}$) $Ś_1$ $K_1$ चित्यैर्, $D_{1\,2}$ विप्रैर् (for चैत्यैर्) M चासीत् (for आसीन्) $D_{1\,2}$ समागतै , $T_2$ $G_{2\,3}$ M समाचिता, $G_4$ समावृत॰ (for महा )

**14** $^{a}$) $S_1$ $K_{1\,2}$ Dc $D_1$ $T_1$ $G_1$ अपि, $T_2$ $G_{2-4}$ अस्या (for अत्र) — $^{b}$) $K_3$ $B_{2-4}$ D (except $D_{1-3}$) [ऽ]च्युत, $T_2$ $G_{2\,3}$ नृप, $M_1$ [ऽ]प्युत (for ऽनघ) — $^{d}$) $Ś_1$ K $D_5$ धुतपाप्मा, $T_1$ पूत

**15** $^{a}$) $S_1$ $K_{1-3}$ $Dn_1$ S (except $G_1$) नरश्रेष्ठ — $^{c}$) B $G_4$ वैदूर्यं , $D_{1\,2}$ वैडूर्यं — After $15^{cd}$, S ins

594* उद्दिश्य पाण्डवश्रेष्ठ स प्रतस्थे महीपति ।
[$T_1$ प्रतस्थेय , $M_2$ (by transp ) प्रतस्थे स ]

— $G_4$ *om* $15^{ef}$ — $^{e}$) $Ś_1$ $K_{1\,2\,4}$ $D_3$ अवगाहत; $B_2$ (m as in text) Dn $D_{4\,6}$ समागमत; Dc स जगाम स, $D_{1\,2}$ विभ्राजमानस्; $G_2$ $M_1$ समानवेषैस्; $M_2$ समानवर्षैस् (for जगाम) — $^{f}$) $K_{3\,4}$ $B_{2\,4}$ Dc Dn $D_{3-6}$ M [ऽ]नघ, $D_{1\,2}$ ययौ (for ऽनघ )

**16** $^{a}$) B Dn $D_{4-6}$ तत्रास्य (for ततो॰) — $^{d}$) $K_4$ $T_1$ यानि (for the first तत्र) $K_1$ B Dn $D_{4\,6}$ पुण्यान्यायतनानि च ( =1 207 $4^{d}$, $14^{b}$, 210 $1^{b}$, etc )

**17** $^{c}$) $K_3$ B Dn $D_{4\,6}$ तत्र तत्र, S ददानो हि ($T_1$ ददौ सो हि) (for ददमानो) B Dn $D_{4\,6}$ [अ]ददद् (for ऽसकृद्)

**18** $G_1$ om $18^{ab}$ — $^{c}$) B $Dn_1$ वैदूर्यं , $D_{1\,2}$ वैहूर्यं (for वैडूर्यं )

**19** $^{a}$) $K_3$ $T_1$ $G_3$ $M_1$ सधिरेषा , $B_1$ सलिलेषु (for सधिरेष) — $^{b}$) $T_1$ $G_{1\,2}$ M त्रेतायां (for या) — $G_4$ om $19^{cd}$ — $^{c}$) $S_1$ $K_1$ Dc $M_1$ एताम्; $K_4$ Dn $D_5$ एनम्, $D_3$ (*sup lin* as in text) एवम्, $T_2$ (by corr ) एतद् (for एतम्)

**20** $^{a}$) $K_1$ शर्यातिवीर्यस्य, $K_{2\,4}$ $B_2$ सर्यातियज्ञस्य, $T_1$ M शर्य्याति , $G_2$ शयाति॰ — $^{b}$) $D_{1\,2}$ देशोय सप्रका॰ — $^{d}$) S (except $M_2$) वासव (for कौशिक )

**21** $^{a}$) $T_2$ $G_3$ चुक्रोध $Ś_1$ K $D_{3\,5}$ चैव, Dc तस्य (for चापि) — $^{b}$) S महेंद्राय — $G_1$ om $21^{ef}$ — $^{e}$) Dc नाम, $D_{1\,2}$ $T_2$ G ($G_1$ om ) अपि (for चापि) Dc $D_{1\,2}$ च (for स) — S reads $23^{ab}$ (with v l ) after 21, *repeating* it in its proper place

**23** S *repeats* $23^{ab}$ here, reading it with v l (for

सुकन्यां चापि भार्यां स राजपुत्रीमवाप्तवान् ॥ २१
युधिष्ठिर उवाच ।
कथं विष्टम्भितस्तेन भगवान्पाकशासनः ।
किमर्थं भार्गवश्चापि कोपं चक्रे महातपाः ॥ २२
नासत्यौ च कथं ब्रह्मन्कृतवान्सोमपीथिनौ ।
एतत्सर्वं यथावृत्तमाख्यातु भगवान्मम ॥ २३

इति श्रीमहाभारते आरण्यकपर्वणि एकविंशत्यधिकशततमोऽध्यायः ॥ १२१ ॥

# १२२

लोमश उवाच ।
भृगोर्महर्षेः पुत्रोऽभूच्च्यवनो नाम भार्गवः ।
समीपे सरसः सोऽस्य तपस्तेपे महाद्युतिः ॥ १
स्थाणुभूतो महातेजा वीरस्थानेन पाण्डव ।
अतिष्ठत्सुबहून्कालानेकदेशे विशां पते ॥ २
स वल्मीकोऽभवदृषिर्लताभिरभिसंवृतः ।
कालेन महता राजन्समाकीर्णः पिपीलिकैः ॥ ३
तथा स संवृतो धीमान्मृत्पिण्ड इव सर्वशः ।
तप्यति स्म तपो राजन्वल्मीकेन समावृतः ॥ ४
अथ दीर्घस्य कालस्य शर्यातिर्नाम पार्थिवः ।
आजगाम सरो रम्यं विहर्तुमिदमुत्तमम् ॥ ५
तस्य स्त्रीणां सहस्राणि चत्वार्यासन्परिग्रहः ।
एकैव च सुता शुभ्रा सुकन्या नाम भारत ॥ ६
सा सखीभिः परिवृता सर्वाभरणभूषिता ।
चङ्क्रम्यमाणा वल्मीकं भार्गवस्य समासदत् ॥ ७
सा चैव सुदती तत्र पश्यमाना मनोरमान् ।

---

the first time) after 21 — ᵃ) S (first time) महाभाग (for कथं ब्रह्मन्) — ᵇ) Ś1 सोमपीथिनौ ; K4 °पायिनौ, B °पीतिनौ

Colophon om in Ś1 K1 2 B4 — *Major parvan* Dn2 D6 T2 G2–4 M1 आरण्य — *Sub parvan* K3 4 D1–3 (all om sub parvan name) mention only लोमशतीर्थयात्रा (followed by सौकन्य in D3), B (B4 om) Dc Dn D4 6, likewise, only सौकन्य — *Adhy name* K3 4 D3 गययज्ञवर्णनं — *Adhy no* (figures, words or both) Dn1 120, Dn2 121 (as in text), Dn3 S 122 (M2 124), D1 126 — *Śloka no* Dn D1 24

## 122

1 ᵃ) B1 4 वै, D3 तु (for [अ]भूत्) — ᵇ) D2 om from नाम up to वीर° (in 2ᵇ) S1 K Dc D1 3 5 नामत°, B Dn D4 6 भारत (for भार्गव), cf 6ᵈ, and v l — ᶜ) S1 K1 2 B3 D3 5 सौम्य, B2 Dn D1 4 6 तस्य (for सोऽस्य) — ᵈ) S1 K महामुनि (for °द्युति°)

2 D2 om up to वीर (cf v l 1) — ᵇ) D1 3 तस्थिवान् (for पाण्डव) — ᶜ) K3 4 D1 2 T2 G1 3 M2 स बहून्कालान्, B सुचिरं कालम् Dn D4 6 अतिष्ठत चिरं कालम् — ᵈ) S1 K D5 मही (for विशां) M1 एकपादेन भारत

3 ᵇ) D1 3 वल्लीभिर् (for लताभिर्) K1 2 B3 4 Dn D4–6 इव, D1 बहु, T2 G3 चाभि (for अभि) — ᵈ) Some N MSS °लकैः (for °लिकैः)

4 T2 G3 om 4 — ᵃ) K1 सु, G1 [अ]पि, G4 च (for स) — ᵇ) S1 K D1–3 सर्वतः (K4 सवृत) (for सर्वशः) — ᶜ) K3 B3 Dn D4–6 G4 तप्यते K1 T1 ततो (for तपो) B D (except D3 5) G4 घोरं (for राजन्)

5 ᵇ) K3 4 D3 सर्यातिर्, S (except T2 G3) शर्यातिर् — ᶜ) D3 T1 G1 राजन् (for रम्यं)

6 ᶜ) Ś1 K1 3 4 तु, D1 3 हि (for च) M1 शुभा (for सुता) B D4 6 T G2–4 शुभ्रू, Dc Dn सुभ्रू, D1 3 तासां, D3 सिद्धा (for शुभ्रा) — ᵈ) S1 K Dc D3 5 नामतः, T1 G1 पार्थिव (for भारत); cf 1ᵇ, and v l

7 ᵇ) B Dn D4 6 दिव्या° — ᵈ) B1 T2 G2–4 भार्गवं सा, T1 भार्गवं च (for °वस्य) D1 3 ददर्श ह (for समासदत्)

8 ᵃ) Ś1 K3 B2–4 Dn1 Dc सुमतीं, K2 Dn2 D3 4 6 °मती (for °दती) Dn3 T1 G1 M2 सा वै वसुमतीं तत्र, D1 3 सा च कृष्णमतीसेव — ᵇ) K4 वीक्ष्यमाणा, B Dn

वनस्पतीन्विचिन्वन्ती विजहार सखीवृता ॥ ८
रूपेण वयसा चैव मदनेन मदेन च ।
बभञ्ज वनवृक्षाणां शाखाः परमपुष्पिताः ॥ ९
तां सखीरहितामेकामेकवस्त्रामलंकृताम् ।
ददर्श भार्गवो धीमांश्चरन्तीमिव विद्युतम् ॥ १०
तां पश्यमानो विजने स रेमे परमद्युतिः ।
क्षामकण्ठश्च ब्रह्मर्षिस्तपोबलसमन्वितः ।
तामाबभाषे कल्याणीं सा चास्य न शृणोति वै ॥ ११
ततः सुकन्या वल्मीके दृष्ट्वा भार्गवचक्षुषी ।
कौतूहलात्कण्टकेन बुद्धिमोहबलात्कृता ॥ १२
किं नु खल्विदमित्युक्त्वा निर्बिभेदास्य लोचने ।
अक्रुध्यत्स तया विद्धे नेत्रे परममन्युमान् ।
ततः शर्यातिसैन्यस्य शकृन्मूत्रं समावृणोत् ॥ १३
ततो रुद्धे शकृन्मूत्रे सैन्यमानाहदुःखितम् ।
तथागतमभिप्रेक्ष्य पर्यपृच्छत्स पार्थिवः ॥ १४
तपोनित्यस्य वृद्धस्य रोषणस्य विशेषतः ।
केनापकृतमद्येह भार्गवस्य महात्मनः ।
ज्ञातं वा यदि वाज्ञातं तद्दतं ब्रूत माचिरम् ॥ १५
तमूचुः सैनिकाः सर्वे न विद्मोऽपकृतं वयम् ।
सर्वोपायैर्यथाकामं भवांस्तदधिगच्छतु ॥ १६
ततः स पृथिवीपालः साम्ना चोग्रेण च स्वयम् ।
पर्यपृच्छत्सुहृद्वर्गं प्रत्यजानन्न चैव ते ॥ १७
आनाहार्तं ततो दृष्ट्वा तत्सैन्यमसुखार्दितम् ।
पितरं दुःखितं चापि सुकन्येदमथाब्रवीत् ॥ १८
मयाटन्त्येह वल्मीके दृष्टं सत्त्वमभिज्वलत् ।
खद्योतवदभिज्ञातं तन्मया विद्धमन्तिकात् ॥ १९
एतच्छ्रुत्वा तु शर्यातिर्वल्मीकं तूर्णमाद्रवत् ।
तत्रापश्यत्तपोवृद्धं वयोवृद्धं च भार्गवम् ॥ २०

---

$D_4$ $_6$ S पश्यती सु , $D_1$ $_2$ वनोद्देशे $Ś_1$ $K_3$ $B_1$ $_3$ $_4$ $D_{c1}$ Dn $D_5$ $T_1$ मनोरमा, $B_2$ $T_2$ G $M_2$ °हरा, $D_1$ $_2$ °रम ; $D_4$ $_6$ रमा — $^c$) $T_1$ $G_4$ वनस्पति $G_2$ $_4$ प्रविचिन्वती ; M प्रचिन्वाना

**9** $B_3$ om 9–11 — $^a$) $M_{1m}$ सुकन्या (for रूपेण) — $^b$) $Ś_1$ K $D_3$ $_5$ सुरापान , $B_1$ सुरूपेण ; Dc समोहेन ; $D_1$ $_2$ मधुपान (for मदनेन) $T_1$ $M_2$ दमेन ($M_2$ मदेन) मदनेन च

**10** $B_3$ om 10 (cf v l 9), $M_1$ om $10^c$–$11^d$ — $^d$) $G_4$ चलतीम् (for चरन्तीम्)

**11** $B_3$ om 11 (cf v l 9), $M_1$ om $11^{abcd}$ (cf v l 10) $K_3$ om $11^{cd}$ — $^c$) $K_4$ B Dc Dn $D_{3-6}$ विप्रर्षिस् (for ब्रह्मर्षिस्) $D_1$ $_2$ महर्षि कामसततस — $^e$) $Ś_1$ $K_2$ आभाषत, $K_4$ बभाषे च (for आबभाषे) — $^f$) $Ś_1$ $K_1$ $_2$ तस्य (for चास्य)

**13** $^c$) $D_1$ $_2$ $T_1$ $G_2$ सहसा (for स तया) $D_1$ नेत्रे ; T $G_2$ $_3$ $M_1$ विद्धो, $G_4$ विप्रो (for विद्धे) — $^d$) $D_1$ विद्धे (for नेत्रे) $T_1$ $G_1$ तथा नेत्रेतिमन्युमान् — $^e$) $K_4$ सर्याति°, $T_1$ $G_2$ M शय्याति ; $G_1$ शैर्याति — $^f$) $K_{2-4}$ B D (except $D_3$) $T_2$ $G_3$ M न्मूत्रे

**14** $^a$) $D_1$ $_2$ शकृन्मूत्रे ततो रुद्धे — $^b$) $K_4$ $M_1$ सैन्य मेत्याह दु खित, $B_2$ सैन्यमानाह दुष्कृत, Dc $D_1$ $_2$ $_4$ $_6$ T G $M_1$ सैन्यमासीत्सुदु खित — $^d$) $Ś_1$ $K_3$ $_4$ Dc $D_1$ $_3$ $M_2$ पर्यतप्यत, $K_1$ पृच्छश्च

**15** $^e$) $D_1$ $_2$ ज्ञानाद्वाप्यथ वाज्ञानात् — $^f$) $K_4$ $M_2$ तदिद, $B_1$ $_3$ तत्कृत, Dc Dn $D_3$ $_4$ तद् द्रुत (for तद्दत) $D_1$ $_2$ T G नानृत ($T_1$ $G_1$ $_2$ तद् द्रुत, $T_2$ $G_3$ $_4$ द्रुत वै) वद तानघा

**16** $^b$) $K_3$ $T_1$ $G_1$ $_2$ M विद्म° (for विद्मो°) $D_1$ $_2$ नानृत करवामहे — $^c$) $D_{c2}$ सर्वेपा वै (for सर्वोपायैर्) — $^d$) $T_1$ $G_1$ transp भवान् and तद् $Ś_1$ K Dc $D_3$ $_5$ स्तमधि , $G_4$ तदभि (for तदधि )

**17** $^a$) $D_1$ $_2$ ततस्तु स महीपाल — $^c$) $B_1$ प य (for पर्य ) $B_2$ $_4$ $G_1$ सुहृद्वर्गान् — $^d$) $B_2$ Dn $D_5$ $_6$ $G_1$ पर्य (for प्रत्य°)

**18** $^a$) $K_1$ अनाहार्तां, $D_1$ $_2$ परमार्तं, $T_1$ आनाय्यार्तं, $G_3$ $_4$ सा तदार्तं (for आनाहार्तं) $G_4$ तत सैन्य (for ततो दृष्ट्वा) — $S_1$ om $18^{bc}$ — $^b$) $G_4$ ततो दृष्ट्वा (for तत्सैन्यम्) — $^c$) B D (except $D_{1-3}$) दृष्ट्वा (for चापि) — $^d$) $D_1$ $_2$ (with hiatus) सुकन्या इदमब्रवीत

**19** $^a$) $Ś_1$ $K_1$ $_2$ मया किलेह ; $K_4$ मयाटव्ये हि, $D_1$ $_2$ मया भ्रमत्या, $D_3$ मयागत्येह, $G_2$ मयाटत्या च — $^b$) $Ś_1$ $K_1$ $G_1$ दृष्ट्वा (for दृष्ट) — $^c$) $S_1$ $K_1$ $_2$ $D_1$ $_2$ $_5$ खद्योतवनविज्ञानात्, $K_3$ $_4$ वद्वज्ञानात्, S °वदभि($M_1$ °वि )ज्ञाय

**20** $Ś_1$ om $20^{ab}$ — $^{ab}$) $B_2$ $_4$ $D_4$ $_6$ transp शर्याति° and वल्मीक $K_4$ $D_{c2}$ सर्यातिर्, S (except $T_2$ $G_3$) शय्या

तां मेधया वाचमथोज्जहार
यथा वाचमवचिन्वन्ति सन्तः ॥ २६
अग्निर्दहञ्जातवेदाः सतां गृहा-
न्विसर्जयंस्तेजसा न स्म धाक्षीत् ।
बालेषु पुत्रेषु कृपणं वदत्सु
तथा वाचमवचिन्वन्ति सन्तः ॥ २७
श्लेष्मातकी क्षीणवर्चाः शृणोषि
उताहो त्वां स्तुतयो मादयन्ति ।
हस्तीव त्वं जनक वितुद्यमानो
न मामिकां वाचमिमां शृणोषि ॥ २८

जनक उवाच ।

शृणोमि वाचं तव दिव्यरूपा-
ममानुषीं दिव्यरूपोऽसि साक्षात् ।
अजैषीर्यद्बन्दिनं त्वं विवादे
निसृष्ट एष तव कामोऽद्य बन्दी ॥ २९

अष्टावक्र उवाच ।

नानेन जीवता कश्चिदर्थो मे बन्दिना नृप ।
पिता यद्यस्य वरुणो मज्जयैनं जलाशये ॥ ३०

बन्द्युवाच ।

अहं पुत्रो वरुणस्योत राज्ञो
न मे भयं सलिले मज्जितस्य ।
इमं मुहूर्तं पितरं द्रक्ष्यतेऽय-
मष्टावक्रश्चिरनष्टं कहोडम् ॥ ३१

लोमश उवाच ।

ततस्ते पूजिता विप्रा वरुणेन महात्मना ।
उदतिष्ठन्त ते सर्वे जनकस्य समीपतः ॥ ३२

कहोड उवाच ।

इत्यर्थमिच्छन्ति सुताञ्जना जनक कर्मणा ।
यदहं नाशकं कर्तुं तत्पुत्रः कृतवान्मम ॥ ३३
उताबलस्य बलवानुत बालस्य पण्डितः ।
उत वाविदुषो विद्वान्पुत्रो जनक जायते ॥ ३४

बन्द्युवाच ।

शितेन ते परशुना स्वयमेवान्तको नृप ।
शिरांस्यपाहरत्वाजौ रिपूणां भद्रमस्तु ते ॥ ३५

---

(for ता) Ś$_1$ K$_3$ श्रेयसो, K$_{2.4}$ श्रेयसे (for मेधया) K D$_{1.2}$ अथो जहार, T$_1$ G$_1$ अथाजहार, G$_{2.4}$ असौ जहार (for अथोज्जहार) M$_1$ ते वै तथा वाचमथो उदाहरन् — $^d$) =(var.) 26$^d$ S$_1$ K$_1$ M$_1$ अविचिन्वति, T G अवभासति (for अवचि°)

**27** K$_2$ D$_5$ M om. (hapl.) 27 — $^a$) T G गृहान्वै (for सतां गृहान्) — $^b$) Ś$_1$ K$_{1.4}$ वित्रर्जयन्, D$_1$ त्रिवर्धयन्, T$_2$ G$_3$ विस्पर्धमान S$_1$ K$_1$ न, D$_3$ मा (for न) T G$_{1.3.4}$ [अ]प्यधाक्षीत्, G$_2$ व्यधा (for स्म धा) — $^c$) T$_1$ बाले पुत्रे (for बालेषु पुत्रेषु) T$_1$ G$_1$ ins. वै after कृपण — $^d$) Ś$_1$ K$_1$ D$_1$ अत्रि, T$_2$ G उप (G$_1$ अपि) (for अव)

**28** $^a$) K$_3$ D$_5$ T$_1$ G$_2$ श्लेष्मातक°, K$_4$ °ष्मातकि; Dc$_2$ °ष्मातकी, D$_{1-3}$ ष्मातक, T$_2$ G$_3$ °ष्मातकि°, G$_4$ °तकी, M °तक T$_2$ G$_3$ क्षीणवाचा Ś$_1$ K$_{1.2}$ श्रणोति, T$_1$ श्रणोमि — $^b$) S$_1$ K$_1$ M$_2$ त्वा (for त्वां) T$_2$ G$_3$ स्तुतये K$_3$ मावहति, K$_4$ B$_1$ Dc T$_1$ G$_1$ M$_3$ मोदयति, D$_6$ मादयतु, T$_2$ G$_{3-4}$ मोहयति — $^c$) K$_{2-4}$ Dn D$_{2.3.5}$ विनुद्यमानो, S तुद्यमानो (G$_2$ यत्तुद्य°) — $^d$) K$_{3.4}$ D$_{1-3}$ मामकीं, M चैव मे

**29** G$_4$ om. the ref. S$_1$ K$_2$ राजा — $^a$) S$_1$ K$_1$ तुल्यरूपाम्, K$_3$ T$_1$ G$_1$ M देवरूपाम्, T$_2$ G$_{2-4}$ विप्राग्र्य मुख्याम् (for दिव्यरूपाम्) — $^b$) K$_{3.4}$ Dc D$_{1.3}$ S देव° (for दिव्य°) — $^d$) T$_2$ G$_{1-3}$ M$_1$ विसृष्ट (for नि°) K$_1$ D$_2$ M एव (for एष) Ś$_1$ K$_{1-3}$ D$_5$ तव विप्राग्र्य, K$_4$ तव वाक्याद्य, B$_2$ Dc M तव कामेद्य, D$_{2.3}$ तव कामाद्धि; T$_2$ G$_{2-4}$ क्षतकामोद्य

**30** D$_3$ om. (hapl.) 30 — $^b$) Ś$_1$ K$_{1.2}$ वै (for मे) — $^c$) Ś$_1$ K$_1$ [ए]व (for [अ]स्य)

**31** $^b$) K$_2$ B Dn D$_{4-6}$ विद्यते (for सलिले) — $^c$) K$_4$ D$_1$ M द्रक्ष्यसे K$_4$ [ऽ]द्य, G$_1$ M त्वम् (for ऽयम्) — $^d$) K$_4$ चिरदृष्ट, T$_2$ G$_{2-4}$ चिरकाक्ष S कहोळ

**32** $^a$) Ś$_1$ K$_1$ सर्वे (for विप्रा) — $^c$) K$_{3.4}$ B$_4$ Dc D$_{1-3}$ S वै (for ते) B$_{1-3}$ Dn D$_{4-6}$ उदतिष्ठस्तत (B$_1$ D$_{4.6}$ °था, B$_{2.3}$ दा) सर्वे — $^d$) Ś$_1$ K$_2$ महात्मन, D$_{1.2}$ महीपते (for समी°)

**33** $^{ab}$) Ś$_1$ K$_{1.2}$ transp. सुतान् and जना° G$_1$ तथा (for जना) Dn$_1$ D$_6$ जनन (for जनक) K$_4$ जनक कर्मणाधिकान्

**35** Dn D$_{4.6}$ T G$_{1.3}$ M$_2$ om. the ref. — $^c$) [illegible] B$_3$ Dn$_3$ D$_{1.4.6}$ अपहरन्, K$_2$ B$_4$ Dn$_1$ n$_2$ D$_3$ G$_1$ (दोम्ना)

महदुक्थ्यं गीयते साम चाग्र्यं
सम्यक्सोमः पीयते चात्र सत्रे ।
शुचीन्भागान्प्रतिजगृहुश्च हृष्टाः
साक्षाद्देवा जनकस्येह यज्ञे ॥ ३६

लोमश उवाच ।
समुत्थितेष्वथ सर्वेषु राज-
न्विप्रेषु तेष्वधिकं सुप्रभेषु ।
अनुज्ञातो जनकेनाथ राज्ञा
विवेश तोयं सागरस्योत बन्दी ॥ ३७

अष्टावक्रः पितरं पूजयित्वा
संपूजितो ब्राह्मणैस्तैर्यथावत् ।
प्रत्याजगामाश्रममेव चाग्र्यं
जित्वा बन्दिं सहितो मातुलेन ॥ ३८

अत्र कौन्तेय सहितो भ्रातृभिस्त्वं
सुखोषितः सह विप्रैः प्रतीतः ।
पुण्यान्यन्यानि शुचिकर्मैकभक्ति-
र्मया सार्धं चरितास्याजमीढ ॥ ३९

इति श्रीमहाभारते आरण्यकपर्वणि चतुस्त्रिंशदधिकशततमोऽध्यायः ॥ १३४ ॥

---

हरन्, K3 D2 3 अपाहरत्, K4 B3 Dc T1 G3 4 M1 अपहरत्, M2 अपहरति K1 3 D1 2 स्वाजौ, D3 चाजौ (for [आ]जौ)

36 a) Ś1 K1 2 महदुक्त, K3 4 D3 दुक्थ, B Dn D4-6 दौक्थ्य (B3 °दौक्थ), Dc1 दौथ्य, Dc2 दौस्था, D2 महेंद्रोष्टथ, T2 (by corr) G3 महदौरथ्य, G1 ब्रह्मदुग्ध — c) K4 D1 भोगान्, M1 भारान् (for भागान्) Dc प्रतिजहुश्च, T1 अभिजगृहुश्च, T2 G3 उज्जगृहुश्चात्र, G2 4 जगृहुश्चात्र T G2-4 तुष्टा (for हृष्टा) B4 शुचींश्च भोगाञ्जगृहुश्च हृष्टा — d) B1-3 देव; M2 देवान् (for देवा) B2 3 Dn D4 6 [उ]त; D5 T1 [इ]व (for [इ]ह) K4 B1-3 D (except D1 2) राज्ञ°, G1 राज्ञे (for यज्ञे)

37 D1 T1 om the ref — a) Ś1 K1 Dc om अथ G1 धर्मेषु (for सर्वेषु) K4 D1-3 5 एव हि सर्वेषु समुत्थितेषु — b) K4 D1-3 5 राजन्विप्रेषु (for विप्रेषु तेषु) Ś1 K1 Dc om तेषु T G3 [अ]धिकप्रभेषु, G2 4 [अ]भ्यधिकप्रभेषु B1 स्वप्रमेषु, G1 सप्रभेषु — c) Dc जनकस्य D1 2 M1 [इ]ह, T1 G1 M2 [ए]व (for [अ]थ) — d) K3 4 B1 D1-3 5 M1 [अ]थ, B4 [इ]ति; Dc [इ]व, G1 [ए]व (for [उ]त)

38 c) Ś1 K1 2 D3 अभ्या (for प्रत्या) K3 4 Dc D1 2 आशु (for एव) S हृष्टो (for चाग्र्य) — d) B2 3 D (except D1-3 5) सौतिं (for बन्दिं) — After 38, K1 2 B D (except D1 2 5, D3 marg) ins

662* ततोऽष्टावक्र मातुरथान्तिके पिता
स्वमप्येना स्नानपाना नगाहे
सभ्रातृक सहभार्यो विशस्व ।

[(L 1) Dc [स]पि (for पिता) — (L 2) B1 गगा (for नदीं) Dc पिता ममगीं (for नदीं ममगा) — (L 3) Dc तथा ता (for तथा) — (L 5) B1 Dc सा (for च) — (L 6) B3 क्लिश्रिपेण (for पाद्धि) Dc वै (for हि) — (L 7) B Dc [ए]व (for [ए]ना) ]

39 a) Dc तत्र (for अत्र) — b) K3 सुखोचित; B2 स्नातोपित, D1 2 उपोषित, T1 सुखोषिते — c) K3 शुचिर्, M1 शुभकर्मा (for शुचिकर्मा) Ś1 K1 2 4 D1-3 5 शुचिकर्मा ततस्त्व, B1 पास्यसि पुण्यनद्या, T1 आशुकर्मैकभक्तिं, T2 G2-4 आशु कर्माणि कर्तुं, G1 आशुकर्मेह भक्तिः — d) T2 G2-4 सचरतु (for चरितासि) Ś1 K1 2 4 D1-3 5 चरस्व तीर्थान्यमितान्या(D5 °ण्यपराण्या)जमीढ — For 39[cd], B1 subst

662a* पुण्यान्यन्यानि पास्यसि ।
पुण्यनद्या सुतीर्थानि धुतपाप्मा गतक्लम ।
भावेन दृढभक्त्या च मया सार्धं चरिष्यसि ।

Colophon — *Major parvan* Ś1 K1 2 Dn2 T2 G2-4 M1 आरण्य — *Sub parvan* Dc D3 M तीर्थयात्रा, followed by अष्टावक्रीय K1 2 4 B2-4 Dn1 n3 D4 5 T G1 3 (all om sub parvan name) mention only अष्टावक्रीय (G1 वक्रोपाख्यान), K3 B1 D1 2 5, likewise, only लोमशतीर्थयात्रा, followed by अष्टावक्रीय To अष्टावक्रीय, K B1 3 4 Dc2 D1-3 T2 G1 3 M1 add समाप्त — *Adhy no* (figures, words or both) Dn1 133, Dn2 n3 134 (as in text), D1 141 S 136 (M2 138) — *Śloka no* Dn1 42, Dn2 n3 35

[5]

# १३५

लोमश उवाच।
एषा मधुविला राजन्समंगा संप्रकाशते।
एतत्कर्दमिलं नाम भरतस्याभिषेचनम् ॥ १
अलक्ष्म्या किल संयुक्तो वृत्रं हत्वा शचीपतिः।
आप्लुतः सर्वपापेभ्यः समंगायां व्यमुच्यत ॥ २
एतद्विनशनं कुक्षौ मैनाकस्य नरर्षभ।
अदितिर्यत्र पुत्रार्थं तदन्नमपचत्पुरा ॥ ३
एनं पर्वतराजानमारुह्य पुरुषर्षभ।
अयशस्यामसंशब्द्यामलक्ष्मीं व्यपनोत्स्यथ ॥ ४
एते कनखला राजन्नृषीणां दयिता नगाः।
एषा प्रकाशते गङ्गा युधिष्ठिर महानदी ॥ ५
सनत्कुमारो भगवानत्र सिद्धिमगात्पराम्।
आजमीढावगाह्यैनां सर्वपापैः प्रमोक्ष्यसे ॥ ६
अपां ह्रदं च पुण्याख्यं भृगुतुङ्गं च पर्वतम्।
तूष्णीं गङ्गां च कौन्तेय सामात्यः समुपस्पृश ॥ ७
आश्रमः स्थूलशिरसो रमणीयः प्रकाशते।
अत्र मानं च कौन्तेय क्रोधं चैव विवर्जय ॥ ८
एष रैभ्याश्रमः श्रीमान्पाण्डवेय प्रकाशते।
भारद्वाजो यत्र कविर्यवक्रीतो व्यनश्यत ॥ ९
युधिष्ठिर उवाच।
कथंयुक्तोऽभवदृषिर्भरद्वाजः प्रतापवान्।
किमर्थं च यवक्रीत ऋषिपुत्रो व्यनश्यत ॥ १०

## 135

1 a) D1 मधुश्रवा, T1 °लिहा, T2 G2 3 वहा, G4 °वना (for °विला) S नाम (for राजन्) — b) K4 समतात् (for समगा) Ś1 K1 2 D5 च (for स) — c) K1 G1 कर्दबिल, T1 कर्दबलिर्, T2 G2–4 मधुबिल, M1 कर्दविल

2 a) D1–3 ह्यत्र, D5 यत्र (for किल) — b) Ś1 K1 2 पुरदर°, B4 M1 शतक्रतु (for शची°) — d) K4 D2 T2 (before corr) G4 स गगाया (for सम°) Ś1 K1 2 व्ययुज्यत, D1 विमुच्यते; D2 च मुच्यते, S प्रमुच्यते

3 a) K1 D4 T1 2 (by corr) G3 विनाशन — c) S पुत्रार्थे — d) K3 तपश्चर्यां पुराचरत्, K4 B3 D3 तपस्तीव्र समा(K4 पुरा)चरत्, B1 Dc तप समचरत्पुरा, D1 2 तपस्ती व्रमुपाचरत्

4 a) Ś1 K1 2 D3–5 T1 M एत (for एन) D5 पर्वतमारुह्य, T1 G1 2 M पर्वतराजेंद्र — b) D1 राजान° (for आरुह्य) K3 D5 T G3 4 M1 भरतर्षभ, B Dc Dn D4 6 G1 भरतर्षभा°, D1 2 पुरुषर्षभा° — c) Ś1 K4 G2 अयशस्यम् K1 असशम्याम्, K4 अशब्द च, D3 असशिष्याम्, D5 असस्पृश्याम्, T1 असम्या च, T2 (after corr) G3 असशाद्याम् (T2 before corr अशास्य त्वम्), G1 M असक्षा च, G2 अधर्म्यां त्वम्, G4 अशास्या त्वम् (for असशब्द्याम्) — d) K4 व्यपनेष्यति, D1–3 व्यपनेष्यथ (D3 °सि), T1 G1 अपनोत्स्यथ, T2 G2–4 अपनोत्स्यसि, M1 अपनोत्यथ, M2 अपनेष्यथ

5 a) Ś1 K1 2 कनखले — b) T1 G1 गमिता, T2 G2–4 गदि° (for दयि°) — d) D1–3 5 S यशस्विनी (for महा°)

6 b) K1 2 Dc2 Dn3 D3 यत्र (for अत्र) B1 3 4 D (except D2 3) T2 G2–4 पुरा (for पराम्) — c) K3 T2 G1 3 M1 [ए]ता (for [ए]ना) — d) S (except T1 G1) विमोक्ष्यसे

7 b) T1 G1 4 M भृगुतुद — c) B1 Dn D4 6 उष्णी गगे, D5 उष्णीं गगा B4 राजेंद्र (for कौन्तेय) G1 तूष्णीं कौंतेय गगाया — d) T G सानुज° (T2 G3 °ग) (for सामात्य°) Ś1 K Dc D1 2 3 (m as in text) 5 सभ्रातृक उपस्पृश

8 Ś1 om (hapl.) 8c–9b — c) T1 2 (before corr) G1 3 4 अति (for अत्र) — d) K1 3 Dc2 D2 3 5 G1 4 M2 विसर्जय, T1 समुत्सृज

9 Ś1 om 9ab (cf v l 8) — After 9ab, D5 ins

663* नानापुष्पसमाकीर्णं फलपुष्पोपशोभित।
नानाविहगसंघुष्टस्तापसालय उत्तम।
रैभ्यस्यैष महाराज आश्रम पुण्यकर्मण।

— c) S transp यत्र and कवि — d) G1 3 [ऽ]प्यनश्यत (for व्यनश्यत)

10 a) B1 2 (both marg) 3 मृतो, G4 वृत्तो (for युक्तो) K1 बभूव (for ऽभवद्) K4 विप्रो (for ऋषिर्) — b) Ś1 K3 4 Dn3 D1–3 6 T2 G3 4 M भारद्वाज — d)

एतत्सर्वं यथावृत्तं श्रोतुमिच्छामि लोमश ।
कर्मभिर्देवकल्पानां कीर्त्यमानैर्भृशं रमे ॥ ११

लोमश उवाच ।

भरद्वाजश्च रैभ्यश्च सखायौ संबभूवतुः ।
तावूषतुरिहात्यन्तं प्रीयमाणौ वनान्तरे ॥ १२
रैभ्यस्य तु सुतावास्तामर्वावसुपरावसू ।
आसीद्यवक्रीः पुत्रस्तु भरद्वाजस्य भारत ॥ १३
रैभ्यो विद्वान्सहापत्यस्तपस्वी चेतरोऽभवत् ।
तयोश्चाप्यतुला प्रीतिर्बाल्यात्प्रभृति भारत ॥ १४
यवक्रीः पितरं दृष्ट्वा तपस्विनमसत्कृतम् ।
दृष्ट्वा च सत्कृतं विप्रै रैभ्यं पुत्रैः सहानघ ॥ १५
पर्यतप्यत तेजस्वी मन्युनाभिपरिप्लुतः ।
तपस्तेपे ततो घोरं वेदज्ञानाय पाण्डव ॥ १६
सुसमिद्धे महत्यग्नौ शरीरमुपतापयन् ।
जनयामास संतापमिन्द्रस्य सुमहातपाः ॥ १७
तत इन्द्रो यवक्रीतमुपगम्य युधिष्ठिर ।
अब्रवीत्कस्य हेतोस्त्वमास्थितस्तप उत्तमम् ॥ १८

यवक्रीरुवाच ।

द्विजानामनधीता वै वेदाः सुरगणार्चित ।
प्रतिभान्त्विति तप्येऽहमिदं परमकं तपः ॥ १९
स्वाध्यायार्थे समारम्भो ममायं पाकशासन ।
तपसा ज्ञातुमिच्छामि सर्वज्ञानानि कौशिक ॥ २०
कालेन महता वेदाः शक्या गुरुमुखाद्विभो ।
प्राप्तुं तस्मादयं यत्नः परमो मे समास्थितः ॥ २१

इन्द्र उवाच ।

अमार्ग एष विप्रर्षे येन त्वं यातुमिच्छसि ।
किं विघातेन ते विप्र गच्छाधीहि गुरोर्मुखात् ॥ २२

लोमश उवाच ।

एवमुक्त्वा गतः शक्रो यवक्रीरपि भारत ।
भूय एवाकरोद्यत्नं तपस्यमितविक्रम ॥ २३

---

$D_6$ $T_1$ ऋषे पुत्रो　$T_2 G_3$ हि, $G_2$ [ऽ]पि (for त्रि)　$B_{1\ 3\ 4}$ $D_n$ $D_{4\ 6}$ पुत्रोनश्यत वै मुने

**11** [b]) $B_{2-4}$ $D_n$ $D_{1\ 3\ 4-6}$ तत्वत (for लोमश)

**12** [a]) $Ś_1$ $D_{n3}$ $G_1$ $M_2$ भारद्वाजश्च — [b]) $Ś_1$ $K_{1\ 2}$ तौ, $K_3$ $D_{1-3}$ वै, $D_5$ द्वौ (for स-) — [c]) $Ś_1$ K $D_3$ [अ]न्योन्य (for [अ]त्यन्त) — [d]) B $D_n$ $D_{4\ 6}$ M अनतर; $T_2$ $G_{2-4}$ मनोहरौ (for वनान्तरे)

**13** [a]) $T_1$ $G_1$ द्वौ, $T_2$ $G_3$ च (for तु) — [c]) $T_2$ $G_{3\ 4}$ तथा (for आसीद्)　$B_1$ च, T $G_{1\ 3\ 4}$ वै (for तु) — [d]) $Ś_1$ $D_{1\ 2}$ $G_1$ $M_2$ भारद्वाजस्य

**14** $D_1$ om (hapl) 14 — [b]) $K_{3\ 4}$ $D_6$ $D_{2\ 3\ 5}$ नियतो, $G_1$ तापसो, M स्वितरो (for चेतरो)　$Ś_1$ $K_1$ तपस्वी नियतो भवेत्, $T_1$ तप कर्तुं समाद्रवत्, $T_2$ $G_{2-4}$ तप स्यभिरतोभवत् — [c]) $B_{2\ 4}$ $D_n$ $D_{4\ 6}$ कीर्तिर् (for प्रीतिर्) — [d]) S अभवद्भरतर्षभ

**15** [b]) $S_1$ $K_{1\ 2}$ $D_{1-3}$ $T_2$ $G_{2-4}$ तपस्विभिर् (for तप स्विनम्) — [d]) $D_{c2}$ सहानघ॰, $D_{1\ 6}$ T G नघ ($G_2$ ॰नुज); $M_2$ न्वय

**16** [c]) $K_1$ $G_{1\ 4}$ ततस् (for तपस्)　$Ś_1$ $K_{1\ 2}$ T $G_{1\ 3\ 4}$ $M_2$ तपो (for ततो)　$D_6$ ततोस्मान (for ततो घोर)　$G_2$ यवक्रीतस्तपस्तेपे

**17** [a]) $Ś_1$ $K_4$ सुसमृद्धे; $K_2$ B D (except $D_{1-3}$) $G_4$ स समिद्धे — [d]) $Ś_1$ $K_{1\ 2}$ च महात्मन, $T_1$ च महातपा (for सुमहा)

**18** [b]) $K_4$ $B_4$ $D_{1-3}$ $T_1$ $G_{1\ 4}$ उपागम्य　$Ś_1$ $K_{1\ 2}$ विशां पते (for युधि)

**19** $K_{3\ 4}$ B D $T_2$ $G_{1-3}$ $M_2$ यवक्रीत उ (S MSS om उ) — $B_3$ om (hapl) 19–21 and the ref in 22 — [c]) $Ś_1$ $K_{1\ 2}$ तस्यार्थम् (for तप्येऽहम्)

**20** $B_3$ om 20 (cf v l 19) — [a]) $Ś_1$ स्वाध्यायार्थी; $K_2$ $B_4$ T G र्थे (as in text), the rest ॰र्थं　$D_5$ तप सम्यक् (for समा) — [b]) $D_3$ [इ]द (for [अ]य)

**21** $B_3$ om 21 (cf v l 19) — [b]) $D_{1\ 2}$ $G_2$ प्रभो (for विभो) — [d]) $G_{1\ 2}$ M वै (for मे)

**22** $B_3$ om the ref (cf v l 19) — [a]) $D_{1\ 2}$ T $G_{1\ 3}$ ब्रह्मर्षे (for विप्र) — [b]) T G ज्ञातुम् (for यातुम्) — [c]) $T_2$ $G_{2-4}$ पापथेन (for विघा॰)　S विप्रर्षे (for ते विप्र) — [d]) $Ś_1$ K $B_2$ $D_6$ $D_{1-3}$ $T_1$ $G_1$ गच्छाधीष्व, $T_2$ (before corr) $G_4$ गच्छस्वेति

**23** $Ś_1$ $K_1$ om the ref — [a]) $Ś_1$ $K_{1\ 3}$ एवमुक्तस्तु शक्रेण — [b]) $Ś_1$ $K_{1\ 2}$ यवक्रीरिति; $B_1$ क्रीतोपि — [d]) $K_{3\ 4}$ $B_1$ $D_n$ $D_{4-6}$ विक्रम

**24** [b]) $Ś_1$ $M_1$ महातप; $K_2$ $B_{1-3}$ $D_n$ $D_{4-6}$ $T_2$ (by corr) $G_3$ महत्तप, $B_4$ महायशा — [d]) $B_4$ S देवराज-

# १३५

लोमश उवाच ।
एषा मधुविला राजन्समंगा संप्रकाशते ।
एतत्कर्दमिलं नाम भरतस्याभिषेचनम् ॥ १
अलक्ष्म्या किल संयुक्तो वृत्रं हत्वा शचीपतिः ।
आप्लुतः सर्वपापेभ्यः समंगायां व्यमुच्यत ॥ २
एतद्विनशनं कुक्षौ मैनाकस्य नरर्षभ ।
अदितिर्यत्र पुत्रार्थं तदन्नमपचत्पुरा ॥ ३
एनं पर्वतराजानमारुह्य पुरुषर्षभ ।
अयशस्यामसंशब्द्यामलक्ष्मीं व्यपनोत्स्यथ ॥ ४
एते कनखला राजन्नृषीणां दयिता नगाः ।
एषा प्रकाशते गङ्गा युधिष्ठिर महानदी ॥ ५
सनत्कुमारो भगवानत्र सिद्धिमगात्पराम् ।
आजमीढावगाह्यैनां सर्वपापैः प्रमोक्ष्यसे ॥ ६
अपां ह्रदं च पुण्याख्यं भृगुतुङ्गं च पर्वतम् ।
तूष्णीं गङ्गां च कौन्तेय सामात्यः समुपस्पृश ॥ ७
आश्रमः स्थूलशिरसो रमणीयः प्रकाशते ।
अत्र मानं च कौन्तेय क्रोधं चैव विवर्जय ॥ ८
एष रैभ्याश्रमः श्रीमान्पाण्डवेय प्रकाशते ।
भारद्वाजो यत्र कविर्यवक्रीतो व्यनश्यत ॥ ९
युधिष्ठिर उवाच ।
कथंयुक्तोऽभवदृषिर्भरद्वाजः प्रतापवान् ।
किमर्थं च यवक्रीत ऋषिपुत्रो व्यनश्यत ॥ १०

## 135

**1** $^{a}$) D1 मधुश्रवा, T1 °लिहा, T3 G2 3 °वहा; G4 °वना (for °विला) S नाम (for राजन्) — $^{b}$) K4 समसात् (for समगा) Ś1 K1 2 D5 च (for स ) — $^{c}$) K1 G1 कर्दबिल, T1 कर्दबल्लिर्, T2 G2–4 मधुविल, M1 कर्दविल

**2** $^{a}$) D1–3 ह्यत्र, D5 यत्र (for किल) — $^{b}$) Ś1 K1 2 पुरदर, B4 M1 शतक्रतु (for शची°) — $^{d}$) K4 D2 T2 (before corr ) G4 स गगाया (for सम°) Ś1 K1 2 व्ययुज्यत, D1 विमुच्यते, D2 च मुच्यते, S प्रमुच्यते

**3** $^{a}$) K1 D4 T1 2 (by corr ) G3 विनाशन — $^{c}$) S पुत्रार्थे — $^{d}$) K3 तपश्चर्यां पुराचरत्, K4 B3 D3 तपस्तीव्रं समा(K4 पुरा)चरत्, B1 Dc तप समचरत्पुरा, D1 2 तपसी समुपाचरत्

**4** $^{a}$) Ś1 K1 2 D3–5 T1 M एत (for एन) D5 पर्वतमारुह्य, T1 G1 2 M पर्वतराजेंद्र — $^{b}$) D1 राजान° (for आरुह्य) K3 D5 T G3 4 M1 भरतर्षभ; B Dc Dn D4 6 G1 भरतर्षभा°; D1 2 पुरुषर्षभा — $^{c}$) Ś1 K4 G3 अयशस्यम् K1 असशम्याम्, K4 अशब्द् च, D3 असशिष्याम्, D5 असस्पृश्याम्, T1 असम्या च, T2 (after corr ) G3 असशाख्याम् (T2 before corr अशस्य त्वम्), G1 M असह्या च, G2 अधर्म्यां त्वम्, G4 अशस्या त्वम् (for असशब्द्याम्) — $^{d}$) K4 व्यपनेष्यति, D1–3 व्यपनेष्यथ (D3 °सि), T1 G1 अपनोत्स्यथ, T2 G2–4 अपनोत्स्यसि; M1 अपनोत्यथ, M2 अपनेष्यथ

**5** $^{a}$) Ś1 K1 2 कनखले — $^{b}$) T1 G1 गमिता, T2 G2–4 गदि° (for दयि°) — $^{d}$) D1–3 5 S यशस्विनी (for महा°)

**6** $^{b}$) K1 2 Dc2 Dn3 D3 यत्र (for अत्र) B1 3 4 D (except D2 3) T2 G2–4 पुरा (for पराम्) — $^{c}$) K3 T2 G1 3 M1 [ए]ता (for [ए]नां) — $^{d}$) S (except T1 G1) विमोक्ष्यसे

**7** $^{b}$) T1 G1 4 M भृगुतुद — $^{c}$) B1 Dn D4 6 उष्णी गगे, D5 उष्णीं गगा B4 राजेंद्र (for कौन्तेय) G1 तूष्णीं कौंतेय गगाया — $^{d}$) T G सानुज° (T2 G3 °ग°) (for सामात्य ) Ś1 K Dc D1 2 3 (m as in text) 5 सभ्रातृक उपस्पृश

**8** S1 om (hapl ) 8$^{c}$–9$^{b}$ — $^{c}$) T1 2 (before corr ) G1 3 4 अति (for अत्र) — $^{d}$) K1 3 Dc2 D2 3 5 G1 4 M2 विसर्जय, T1 समुत्सृज

**9** Ś1 om 9$^{ab}$ (cf v l 8) — After 9$^{ab}$, D5 ins

663* नानापुष्पसमाकीर्णे फलपुष्पोपशोभित ।
नानाविहगसघुष्टस्तापसालय उत्तम ।
रैभ्यस्यैष महाराज आश्रम पुण्यकर्मण ।

— $^{c}$) S transp यत्र and कवि° — $^{d}$) G1 2 [ऽ]प्यनश्यत (for व्यनश्यत)

**10** $^{a}$) B1 2 (both marg ) 3 सूनो; G4 वृत्तो (for °युक्तो) K1 बभूव (for ऽभवद्) K4 विप्रो (for ऋषिर्) — $^{b}$) S1 K3 4 Dn3 D1–3 6 T2 G3 4 M भारद्वाज° —

एतत्सर्वं यथावृत्तं श्रोतुमिच्छामि लोमश ।
कर्मभिर्देवकल्पानां कीर्त्यमानैर्भृशं रमे ॥ ११

लोमश उवाच ।

भरद्वाजश्च रैभ्यश्च सखायौ संबभूवतुः ।
तावूषतुरिहात्यन्तं प्रीयमाणौ वनान्तरे ॥ १२
रैभ्यस्य तु सुतावास्तामर्वावसुपरावसू ।
आसीद्यवक्रीः पुत्रस्तु भरद्वाजस्य भारत ॥ १३
रैभ्यो विद्वान्सहापत्यस्तपस्वी चेतरोऽभवत् ।
तयोश्चाप्यतुला प्रीतिर्बाल्यात्प्रभृति भारत ॥ १४
यवक्रीः पितरं दृष्ट्वा तपस्विनमसत्कृतम् ।
दृष्ट्वा च सत्कृतं विप्रै रैभ्यं पुत्रैः सहानघ ॥ १५
पर्यतप्यत तेजस्वी मन्युनाभिपरिप्लुतः ।
तपस्तेपे ततो घोरं वेदज्ञानाय पाण्डव ॥ १६
सुसमिद्धे महत्यग्नौ शरीरमुपतापयन् ।
जनयामास संतापमिन्द्रस्य सुमहातपाः ॥ १७
तत इन्द्रो यवक्रीतमुपगम्य युधिष्ठिर ।
अब्रवीत्कस्य हेतोस्त्वमास्थितस्तप उत्तमम् ॥ १८

यवक्रीरुवाच ।

द्विजानामनधीता वै वेदाः सुरगणार्चित ।
प्रतिभान्त्विति तप्येऽहमिदं परमकं तपः ॥ १९
स्वाध्यायार्थे समारम्भो ममायं पाकशासन ।
तपसा ज्ञातुमिच्छामि सर्वज्ञानानि कौशिक ॥ २०
कालेन महता वेदाः शक्या गुरुमुखाद्विभो ।
प्राप्तुं तस्मादयं यत्नः परमो मे समास्थितः ॥ २१

इन्द्र उवाच ।

अमार्ग एष विप्रर्षे येन त्वं यातुमिच्छसि ।
किं विघातेन ते विप्र गच्छाधीहि गुरोर्मुखात् ॥ २२

लोमश उवाच ।

एवमुक्त्वा गतः शक्रो यवक्रीरपि भारत ।
भूय एवाकरोद्यत्नं तपस्यमितविक्रम ॥ २३

---

$D_5$ $T_1$ ऋषे पुत्रो $T_2$ $G_3$ हि, $G_3$ [ऽ]पि (for त्रि) $B_1$ 3 4 $D_n$ $D_4$ 6 पुत्रोनश्यत वै मुने

**11** b) $B_{2-4}$ $D_n$ $D_1$ 2 4–6 तत्वत (for लोमश)

**12** a) $Ś_1$ $D_{n3}$ $G_1$ $M_2$ भारद्वाजश्च — b) $Ś_1$ $K_1$ 2 तौ, $K_3$ $D_{1-3}$ वै, $D_5$ द्वौ (for स) — c) $Ś_1$ K $D_3$ [अ]-न्योन्य (for [अ]त्यन्त) — d) B $D_n$ $D_4$ 6 M अनतर; $T_2$ $G_{2-4}$ मनोहरौ (for वनान्तरे)

**13** a) $T_1$ $G_1$ द्वौ, $T_2$ $G_3$ च (for तु) — c) $T_2$ $G_3$ 4 तथा (for आसीद्) $B_1$ च, T $G_1$ 3 4 वै (for तु) — d) $Ś_1$ $D_1$ 2 $G_1$ $M_2$ भारद्वाजस्य

**14** $D_1$ om (hapl) 14 — b) $K_3$ 4 $D_5$ $D_2$ 3 5 नियतो, $G_1$ तापसो, M स्वितरो (for चेतरो) $Ś_1$ $K_1$ तपस्वी नियतो भवेत्; $T_1$ तप कर्तुं समाद्रवत्, $T_2$ $G_{2-4}$ तप स्यभिरतोभवत् — c) $B_2$ 4 $D_n$ $D_1$ 6 कीर्तिर् (for प्रीतिर्) — d) S अभवद्भरतर्षभ

**15** b) $S_1$ $K_1$ 2 $D_{1-3}$ $T_2$ $G_{2-4}$ तपस्विभिर् (for तपस्विनम्) — d) $D_{c2}$ सहानघ°; $D_1$ 6 T G नघ ($G_2$ °नुज); $M_2$ न्त्रय

**16** c) $K_1$ $G_1$ 4 ततस (for तपस्) $Ś_1$ $K_1$ 2 T $G_1$ 3 4 $M_2$ तपो (for ततो) $D_5$ ततोत्मान (for ततो घोर) $G_2$ यवक्रीतस्तपस्तेपे

**17** a) $S_1$ $K_4$ सुसमृद्धे; $K_2$ B D (except $D_{1-3}$) $G_4$ स समिद्धे — d) $Ś_1$ $K_1$ 2 च महात्मन, $T_1$ च महातपा (for सुमहा)

**18** b) $K_4$ $B_4$ $D_{1-3}$ $T_1$ $G_1$ 4 उपागम्य $S_1$ $K_1$ 2 विशा पते (for युधि°)

**19** $K_3$ 4 B D $T_2$ $G_{1-3}$ $M_3$ यवक्रीत उ° (S MSS om उ) — $B_3$ om (hapl) 19–21 and the ref in 22 — c) $Ś_1$ $K_1$ 2 तस्यार्थम् (for तप्यऽहम्)

**20** $B_3$ om 20 (cf v l 19) — a) $Ś_1$ स्वाध्यायार्थी; $K_2$ $B_4$ T G र्थे (as in text), the rest र्थं $D_5$ तप सम्यक् (for समा) — b) $D_5$ [इ]द (for [अ]य)

**21** $B_3$ om 21 (cf v l 19) — b) $D_1$ 2 $G_2$ प्रभो (for विभो) — d) $G_1$ 2 M वै (for मे)

**22** $B_3$ om the ref (cf v l 19) — a) $D_1$ 2 T $G_1$ 3 ब्रह्मर्षे (for विप्र) — b) T G ज्ञातुम् (for यातुम्) — c) $T_2$ $G_{2-4}$ वापथेन (for विघा°) S विप्रर्षे (for ते विप्र) — d) $Ś_1$ K $B_2$ $D_5$ $D_{1-3}$ $T_1$ $G_1$ गच्छाधीष्व, $T_2$ (before corr) $G_4$ गच्छस्वेति

**23** $S_1$ $K_1$ om the ref — a) $Ś_1$ $K_1$ 2 एवमुक्तस्तु शक्रेण — b) $S_1$ $K_1$ 2 यवक्रीरिति, $B_1$ °क्रीतोपि — d) $K_3$ 4 $B_1$ $D_n$ $D_{4-6}$ विक्रम°

**24** b) $Ś_1$ $M_1$ महातप, $K_2$ $B_{1-3}$ $D_n$ $D_{4-6}$ $T_2$ (by corr) $G_3$ महत्तप, $B_4$ महायशा — d) $B_4$ S देवराज-

घोरेण तपसा राजंस्तप्यमानो महातपाः ।
संतापयामास भृशं देवेन्द्रमिति नः श्रुतम् ॥ २४
तं तथा तप्यमानं तु तपस्तीव्रं महामुनिम् ।
उपेत्य बलभिद्देवो वारयामास वै पुनः ॥ २५
अशक्योऽर्थः समारब्धो नैतद्बुद्धिकृतं तव ।
प्रतिभास्यन्ति वै वेदास्तव चैव पितुश्च ते ॥ २६

यवक्रीरुवाच ।

न चैतदेवं क्रियते देवराज ममेप्सितम् ।
महता नियमेनाहं तप्स्ये घोरतरं तपः ॥ २७
समिद्धेऽग्नावुपकृत्याङ्गमङ्गं
होष्यामि वा मघवंस्तन्निबोध ।
यद्येतदेवं न करोषि कामं
ममेप्सितं देवराजेह सर्वम् ॥ २८

लोमश उवाच ।

निश्चयं तमभिज्ञाय मुनेस्तस्य महात्मनः ।
प्रतिवारणहेत्वर्थं बुद्ध्या संचिन्त्य बुद्धिमान् ॥ २९
तत इन्द्रोऽकरोद्रूपं ब्राह्मणस्य तपस्विनः ।
अनेकशतवर्षस्य दुर्बलस्य सयक्ष्मणः ॥ ३०
यवक्रीतस्य यत्तीर्थमुचितं शौचकर्मणि ।
भागीरथ्यां तत्र सेतुं वालुकाभिश्चकार सः ॥ ३१
यदास्य वदतो वाक्यं न स चक्रे द्विजोत्तमः ।
वालुकाभिस्ततः शक्रो गङ्गां समभिपूरयन् ॥ ३२
वालुकामुष्टिमनिशं भागीरथ्यां व्यसर्जयत् ।
सेतुमभ्यारभच्छक्रो यवक्रीतं निदर्शयन् ॥ ३३
तं ददर्श यवक्रीस्तु यत्नवन्तं निबन्धने ।
प्रहसंश्चाब्रवीद्वाक्यमिदं स मुनिपुंगवः ॥ ३४
किमिदं वर्तते ब्रह्मन्किं च ते ह चिकीर्षितम् ।
अतीव हि महान्यत्नः क्रियतेऽयं निरर्थकः ॥ ३५

इन्द्र उवाच ।

बन्धिष्ये सेतुना गङ्गां सुखः पन्था भविष्यति ।

---

मिति श्रुति

**25** [b]) $T_1$ समास्थिर्ति, $T_3$ $G_3$ $_4$ महाद्युति (for महा ) — [c]) A few S MSS बलभिद् — [d]) $T_2$ $G_{2-4}$ त (for वै) $B_4$ $T_1$ $_2$ (before corr ) $G_1$ $_2$ $_4$ M प्रभु (for पुन॰)

**26** [a]) $T_1$ $G_1$ अशक्यार्थं , $T_2$ (before corr ) $G_{2-4}$ अशक्येर्थें, $T_2$ (after corr ) अशक्यार्थें $D_c$ T $G_{2-4}$ समारभो — $T_1$ om 26[cd] — After 26, $B_2$ $D_c$ ins a colophon (cf v l 28)

**27** $G_4$ om the ref $K_3$ B D $T_2$ $G_3$ $M_2$ ॰यवक्रीत उ॰ (S MSS om उ॰) — [b]) S (except $G_4$) समीप्सित (for ममे॰) — [d]) $T_2$ $G_2$ $_3$ $M_1$ तप्ये $B_1$ $D_{n3}$ $D_1$ $_2$ $_{4-6}$ घोरतम

**28** [a]) $T_1$ $G_1$ अगमग निकृत्य, $T_2$ (before corr ) $G_3$ $_4$ अहमगाग्निकृत्य, $T_2$ (after corr ) $G_3$ अहमग निकृत्य, $M_1$ अथ चोत्कृत्य मॅग, $M_2$ उत्कृत्यागमग (for उपकृत्या ) — [c]) $S_1$ $K_1$ [ए]वमेतच्च, $K_2$ $T_2$ $G_2$ $_3$ [ए]वमेत, $G_4$ [ए]वमेव (for [ए]तदेव) — After 28, $B_4$ ins a colophon (cf v l 26)

**29** $T_1$ $M_2$ om the ref — [a]) $B_1$ $T_2$ $G_3$ अभिप्राय (for अभिज्ञाय) — [d]) $B_4$ निश्चित्य (for सचिन्त्य) $K_1$ $_2$ वीर्यवान् (for बुद्धि॰) $D_c$ न स चक्रे द्विजोत्तम (cf 32[b])

**30** [d]) $T_1$ $G_1$ $_2$ $_4$ सलक्षण (for सयक्ष्मण॰)

**31** [c]) Ś$_1$ $K_1$ भागीरथ्यास $B_3$ $T_1$ $G_1$ तत॰ (for तत्र) — [d]) $K_3$ $_4$ $D_c$ $D_{1-3}$ चकार ह, $B_4$ समाकरोत्, T G सुरेश्वर॰

**32** [b]) $S_1$ K $D_2$ $_3$ करोति, $B_4$ च कुर्याद् (for स चक्रे) — [c]) $S_1$ K $D_{1-3}$ तदा (for तत ) $T_2$ $G_3$ $_4$ चक्रे (for शक्रो) — [d]) $K_1$ $_2$ समनुपूरयन्, $K_4$ च समपूरयन्, $B_1$ $D_c$ $D_4$ $_6$ M समभिपूरयत्

**33** [b]) Ś$_1$ K $D_{1-3}$ समुत्सृजन् ($K_3$ $D_2$ ॰त्), $D_{n3}$ $T_1$ $G_1$ विसर्जयत् ($G_1$ ॰न्) — [c]) $K_3$ बधम्, $K_4$ $D_2$ $_3$ $T_1$ बद्धुम्, $D_c$ $D_1$ $G_1$ M बधुम् (for सेतुम्) Ś$_1$ $K_1$ समारभत् T G अभ्यागत ($T_1$ $G_1$ ॰त ) — [d]) $B_2$ $D_{c1}$ निदर्शयत्, $T_1$ न्यदर्शयेत्, $T_2$ G अ($G_1$ न्य)दर्शयत्

**34** [a]) $K_2$ $_3$ B D (except $D_1$ $_2$) $G_2$ यवक्रीतो (for ॰क्रीस्तु) — [b]) $T_1$ $G_1$ प्रयत्न त (for यत्नवन्त) — [d]) $D_1$ $_2$ एतत् (for इद) $B_4$ मुनिसत्तम

**35** Before 35, $K_4$ $D_2$ ins यवक्री उ , $D_1$ यवक्रीत उ॰ — [b]) $K_3$ $D_{1-3}$ $G_2$ $_4$ किं तवेह, $K_4$ $D_c$ किं च तेत्र, $D_5$ किंचित्तेत्र, $T_2$ $G_3$ किं तवेद (for किं च ते ह) — [d]) $T_1$ $G_1$ तन्, $T_2$ $G_3$ ह, $G_2$ $_4$ हि, $M_2$ यन् (for ऽय)

**36** $G_1$ $M_2$ om the ref Ś$_1$ शक्रः (for इन्द्र उ ) — [b]) $T_2$ G सुख (for सुख ) — [c]) $K_1$ $_2$ [ऽ]त्र, $G_1$ $_2$ [ऽ]य (for हि) Ś$_1$ K $D_c$ $D_{1-3}$ $_5$ $M_2$ सर्वेस् (for तात) — [d]) $D_{n2}$ $G_2$ रममाण॰, $M_2$ त्वरमाण

क्लिश्यते हि जनस्तात तरमाणः पुनः पुनः ॥ ३६

यवक्रीरुवाच ।

नायं शक्यस्त्वया बद्धुं महानोघः कथंचन ।
अशक्याद्विनिवर्तस्व शक्यमर्थं समारभ ॥ ३७

इन्द्र उवाच ।

यथैव भवता चेदं तपो वेदार्थमुद्यतम् ।
अशक्यं तद्वदस्माभिरयं भारः समुद्यतः ॥ ३८

यवक्रीरुवाच ।

यथा तव निरर्थोऽयमारम्भस्त्रिदशेश्वर ।
तथा यदि ममापीदं मन्यसे पाकशासन ॥ ३९
क्रियतां यद्भवेच्छक्यं मया सुरगणेश्वर ।
वरांश्च मे प्रयच्छान्यान्यैरन्यान्भवितास्म्यति ॥ ४०

लोमश उवाच ।

तस्मै प्रादाद्वरानिन्द्र उक्तवान्यान्महातपाः ।
प्रतिभास्यन्ति ते वेदाः पित्रा सह यथेप्सिताः ॥ ४१
यच्चान्यत्काङ्क्षसे कामं यवक्रीर्गम्यतामिति ।
स लब्धकामः पितरमुपेत्याथ ततोऽब्रवीत् ॥ ४२

इति श्रीमहाभारते आरण्यकपर्वणि पञ्चत्रिंशदधिकशततमोऽध्यायः ॥ १३५ ॥

# १३६

यवक्रीरुवाच ।

प्रतिभास्यन्ति वै वेदा मम तातस्य चोभयोः ।
अति चान्यान्भविष्यावो वरा लब्धास्तथा मया ॥ १

भरद्वाज उवाच ।

---

**37** $T_1$ om 37 $K_{2.3}$ B D $T_2$ G $M_2$ यवक्रीत उ° (S MSS om उ°) — [a]) Ś1 $K_{1-3}$ $D_{3.5}$ रोद्धु, $G_{1.2}$ M वधु (for बद्धु), cf 1 3 21 and v l — [b]) $T_2$ (before corr) $G_4$ मार्ग (for ओघ) B Dn $D_{4.6}$ तपोधन; $G_2$ प्रयत्नत° (for कथं) — [d]) Ś1 K $D_{1-3.5}$ कर्म, Dc कर्तुं (for अर्थं) K $B_4$ $D_{1-3.5}$ समाचर (for रभ)

**38** $T_1$ om the ref $K_4$ ब्राह्मण उ — [a]) T G $M_2$ यथैव तव तातेद (G4 तपो यथैव तातेद) — [b]) $G_4$ त्वया (for तपो) — [c]) S1 $K_{1-3}$ $D_{1-3}$ अशक्यस् — [d]) Ś1 $K_{1.2}$ आरम्भोय, $D_5$ पर भार $B_{1-3}$ Dn $D_{4.6}$ समाहित° (for समु°) $K_4$ गगासेतोश्च बधन

**39** $K_3$ $B_{1.3.4}$ $T_2$ $G_{2.3}$ $M_2$ यवक्रीत उ° (S MSS om उ°) — [c]) $T_2$ $G_{3.4}$ [ए]व हि (for यदि) $T_2$ $G_{2-4}$ ममारभ (for पीद)

**40** [a]) $D_{1.2}$ कृत्य च (for क्रियता) — [b]) Ś1 K $D_{1-3}$ अन्यत् ($K_3$ अन्य), B Dc Dn $D_{4-6}$ $T_1$ त्वया; $T_2$ $G_{3.4}$ मम (for मया) — [c]) $D_{1.2.3}$ (m as in text) प्रदीयता (for प्रयच्छान्यान्) — [d]) $D_3$ (marg *sec m*) यैरर्थैर्भविता स्मृति, S यैर्विद्वान्भवितास्म्य($M_2$ °ता °स्मि)ह

**41** [b]) S1 K Dc $D_{1-3.5}$ तपोधन° (Ś1 $K_3$ $D_{1.5}$ °न) (for महा°) — [d]) $D_1$ $G_{1.2}$ M यथेप्सित

**42** [a]) $B_4$ यान् (for यत्) $T_1$ अन्य, $G_4$ $M_1$ अन्यान् (for अन्यत्) S मन्यसे (for काङ्क्षसे) S1 K $D_{1-3.5}$ तात, $B_4$ कामान् (for कामं) — [b]) $Dn_2$ $n_3$ $D_{4.6}$ $T_2$ $G_{3.4}$ यवक्रिन् $G_{2.4}$ गृह्य (for गम्य) — [c]) S1 $K_1$ लब्धकाम स पितरम् — [d]) Ś1 $K_1$ समुपेत्य, $K_2$ Dn समेत्याथ, $K_3$ Dc $D_5$ अभ्युपेत्य, $K_4$ $B_{1m\ 2.3}$ $D_{4.6}$ अभ्येत्याथ; $B_1$ (orig) उपेत्य च, $D_{1-3}$ अभिगम्य (for उपेत्याथ) S1 K $B_{1-3}$ D [इ]दमब्रवीत्, $B_4$ $M_1$ वचो (for ततो)

Colophon om in $K_3$ B Dc Dn $D_{4.6}$ — *Major parvan* Ś1 $K_{1.2}$ $T_2$ $G_{3-4}$ $M_1$ आरण्य — *Sub parvan* Ś1 $T_1$ (both om sub parvan name) mention only यवक्रीत; $K_4$ $D_{1.5}$, likewise, only लोमशतीर्थयात्रा, followed by यवक्रीत ($D_1$ °क्रीतोपाख्यान), and $D_{2.3}$ $G_1$ only यवक्रीतोपाख्यान — *Adhy no* (figures, words or both) $D_1$ 142, S 137 ($M_2$ 139) — *Śloka no* $D_1$ 41

## 136

**1** $K_3$ B D S (except $T_1$ $G_1$ $M_1$) यवक्रीत उ (S MSS om उ°) — [b]) $K_2$ पित्रा सह यथेप्सिता° — [c]) Ś1 अतीवान्ये, $K_1$ अति चान्यद्; $B_2$ Dn $D_{3.4.6}$ $T_1$ अती-

दर्पस्ते भविता तात वराँल्लब्ध्वा यथेप्सितान् ।
स दर्पपूर्णः कृपणः क्षिप्रमेव विनश्यसि ॥ २
अत्राप्युदाहरन्तीमा गाथा देवैरुदाहृताः ।
ऋषिरासीत्पुरा पुत्र बालधिर्नाम वीर्यवान् ॥ ३
स पुत्रशोकादुद्विग्नस्तपस्तेपे सुदुश्चरम् ।
भवेन्मम सुतोऽमर्त्य इति तं लब्धवांश्च सः ॥ ४
तस्य प्रसादो देवैश्च कृतो न त्वमरैः समः ।
नामर्त्यो विद्यते मर्त्यो निमित्तायुर्भविष्यति ॥ ५
बालधिरुवाच ।
यथेमे पर्वताः शश्वत्तिष्ठन्ति सुरसत्तमाः ।
अक्षयास्तन्निमित्तं मे सुतस्यायुर्भवेदिति ॥ ६
भरद्वाज उवाच ।
तस्य पुत्रस्तदा जज्ञे मेधावी क्रोधनः सदा ।
स तच्छ्रुत्वाकरोद्दर्पमृषींश्चैवावमन्यत ॥ ७
विकुर्वाणो मुनीनां तु चरमाणो महीमिमाम् ।
आससाद महावीर्यं धनुषाक्षं मनीषिणम् ॥ ८
तस्यापचक्रे मेधावी तं शशाप स वीर्यवान् ।
भव भस्मेति चोक्तः स न भस्म समपद्यत ॥ ९
धनुषाक्षस्तु तं दृष्ट्वा मेधाविनमनामयम् ।
निमित्तमस्य महिषैर्भेदयामास वीर्यवान् ॥ १०
स निमित्ते विनष्टे तु ममार सहसा शिशुः ।
तं मृतं पुत्रमादाय विललाप ततः पिता ॥ ११
लालप्यमानं तं दृष्ट्वा मुनयः पुनरार्तवत् ।
ऊचुर्वेदोक्तया पूर्वं गाथया तन्निबोध मे ॥ १२
न दिष्टमर्थमत्येतुमीशो मर्त्यः कथंचन ।
महिषैर्भेदयामास धनुषाक्षो महीधरान् ॥ १३

---

घान्यान् K1 भविष्यति
**2** M2 om the ref Ś1 K D5 6 T2 G3 भारद्वाज उ° (T2 G3 om उ°) — c) D1 दर्पपूर्ण सुकृपण, T2 G2-4 दर्पपूर्णं कृपणक° — d) Ś1 प्रणश्यति, K1 2 प्रणश्यसि, K3 4 B D विनक्ष्यसि (D5 °ति), T G1 3 विनश्यति, G4 नशिष्यसि
**3** a) K4 B4 Dc D1 2 T G1 3 4 [इ]मा; G2 [इ]म (for [इ]मा) — b) K4 B4 Dc D1 2 T1 G1 गाथा, T2 G3 4 कथा (for गाथा) K4 B4 Dc D1 2 T G1 3 4 उदाहृता G2 इतिहास पुरातन — c) B1-3 Dn D4 6 मुनिर् (for ऋषिर्) S विप्र (T1 विद्वान्) (for पुत्र) — d) A few S MSS वालधिर् S विश्रुत° (for वीर्य°)
**4** b) B D (except D1 2) सुदुष्कर — d) B4 M तल् (for त) Dc2 T2 G3 4 इति लब्धवर(Dc2 °रा)श्च स, D2 इति कृत्वा ततप ह
**5** a) D1 2 तस्य प्रसादाद्, D5 लब्धप्रसादो B4 दैवस्य; Dn D4 6 वै देवै (for देवैश्च) — c) Ś1 K1 2 न मर्त्यो (for नामर्त्यो)
**6** S (mostly) वाल° (for बाल°) — d) Ś1 K1 एतस्यायुर्, T1 सुतस्तद्वद्, G1 ब्रह्मचर्यं (for सुतस्यायुर्) B1-3 Dn D4 6 भविष्यति, B4 S भवेद् ध्रुव
**7** S (except T1 G1) om the ref Ś1 D5 G1 भार° (for भर°) — a) T G2 3 तथा (for तदा) — b) Ś1 K1 3 Dn D3-6 G1 तदा, T1 तथा (for सदा) — c) M2 तु लब्ध्वा (for तच्छ्रुत्वा) T G M1 स तु लब्ध(T1 G2 दत्त)वरो दर्पाद् — d) T1 G1 M अत्य° (for अव°)
**8** a) B2 Dn D4 6 च (for तु) — b) B1-3 Dn D4 6 व्यचरत्स (for चरमाणो) — d) Ś1 K1 2 B2 3 Dc धनुषाख्य K4 D1 2 अमर्षण, B2 तपस्विन (for मनी°)
**9** b) K3 4 स मन्युमान्, D1-3 सुदुःखित, D5 च वीर्यवान् — c) K4 Dn2 D1-3 S (except G1 4 M2) सन् (for स)
**10** a) Ś1 K1 2 B2 3 Dc धनुषाख्यस् — M2 om (hapl) 10b–12a — After 10ab, T2 G2-4 ins

664* मुनिस्तत्कारणं ज्ञात्वा स्वयं महिषरूपधृक् ।
शृङ्गेणाद्रीनचलयत्ततोऽयं भस्मसादभूत् ।

— c) B1 T1 महर्षिर्, T2 G2-4 ब्रह्मर्षिर् (for महिषैर्) — d) T G सादयामास पर्वतान् (G1 वीर्यवान्)
**11** M2 om 11 (cf v l 10) — a) K3 4 D1-3 5 transp निमित्ते and विनष्टे — c) T2 G3 4 हत (for मृत)
**12** M2 om 12a (cf v l 10) — b) B Dn D4 6 परमार्तवत् (B1 पुनराद्रवन्), Dc2 पर्यवारयन्, D5 पुनराव्रजन्; G1 पुनरब्रुवन् — c) G1 सर्वे (for पूर्वं) B Dn D4 6 ऊचुर्वेदविद° सर्वे — d) B Dn D4 6 गाथा या, T G2-4 गाधया (for गाथ°) Ś1 K1 2 Dc त, K3 B Dn D1 4-6 ता (for तन्) Ś1 K1 2 निबोधत, G4 नियोधन
**13** a) B4 न दृष्ट, D2 तदेष्टम्, D5 निर्दिष्टम् (for न दिष्टम्) B4 मृत्युम् (for अर्थम्) Ś1 lacuna, K4 अभ्यनिक्रातुम् (for अर्थमत्येतुम्) B2 D1 2 4 5 अभ्येतुगत; अत्येतुम्) — c) T1 G2 4 महर्षिर् (for महिषैर्)

एवं लब्ध्वा वरान्बाला दर्पपूर्णास्तरस्विनः ।
क्षिप्रमेव विनश्यन्ति यथा न स्यात्तथा भवान् ॥ १४
एष रैभ्यो महावीर्यः पुत्रौ चास्य तथाविधौ ।
तं यथा पुत्र नाभ्येषि तथा कुर्यास्त्वतन्द्रितः ॥ १५
स हि क्रुद्धः समर्थस्त्वां पुत्र पीडयितुं रुषा ।
वैद्यश्चापि तपस्वी च कोपनश्च महानृषिः ॥ १६

यवक्रीरुवाच ।

एवं करिष्ये मा तापं तात कार्षीः कथंचन ।
यथा हि मे भवान्मान्यस्तथा रैभ्यः पिता मम ॥ १७

लोमश उवाच ।

उक्त्वा स पितरं श्लक्ष्णं यवक्रीरकुतोभयः ।
विप्रकुर्वनृषीनन्यानतुष्यत्परया मुदा ॥ १८

इति श्रीमहाभारते आरण्यकपर्वणि षट्त्रिंशदधिकशततमोऽध्यायः ॥ १३६ ॥

# १३७

लोमश उवाच ।

चङ्क्रम्यमाणः स तदा यवक्रीरकुतोभयः ।
जगाम माधवे मासि रैभ्याश्रमपदं प्रति ॥ १
स ददर्शाश्रमे पुण्ये पुष्पितद्रुमभूषिते ।
विचरन्तीं स्नुषां तस्य किंनरीमिव भारत ॥ २
यवक्रीस्तामुवाचेदमुपतिष्ठस्व मामिति ।
निर्लज्जो लज्जया युक्तां कामेन हृतचेतनः ॥ ३
सा तस्य शीलमाज्ञाय तस्माच्छापाच्च बिभ्यती ।

---

Ś$_1$ $K_{1.2}$ $B_3$ $Do_1$ धनुपाख्यो

**14** $^{a}$) $K_4$ $D_1$ M लब्धवरान्, $T_2$ $G_{2-4}$ लब्ध्वा वर $K_{3.4}$ $D_{1.2}$ $T_1$ $M_2$ बाल्याद्, $D_8$ मौढ्या (for बाला) — $^{b}$) $K_3$ $D_2$ दर्पपूर्णस् $B_{2-4}$ Dn $D_{4.6}$ $T_1$ $G_1$ तपस्विन — $^{c}$) $K_3$ $D_{2.3}$ हि नश्यति; $K_4$ हनिष्यति; $G_4$ नशिष्यति (for विन) — $^{d}$) $T_1$ $G_1$ नश्येत्, $T_2$ $G_{2-4}$ अन्ये न (for न स्यात्) Ś$_1$ K $D_8$ भव (for भवान्)

**15** $^{b}$) $K_4$ om च Ś$_1$ $K_{1.2}$ पुत्रश्चास्य तथाविध — $^{c}$) S तान् (for तं) $Dc_2$ $D_1$ नान्वेषि, $T_2$ (by corr) $G_3$ $M_2$ नाभ्यैषीस् — $^{d}$) $K_2$ अतन्द्रित, $K_3$ $D_2$ स्वतन्द्रित° (for त्व)

**16** $^{a}$) $S_1$ $G_1$ M त्वा, B Dn $D_{4.6}$ च (for त्वा) — $^{b}$) $K_3$ $D_{1-3}$ पुत्र (for पुत्र) $D_{2.3}$ तथा, $G_2$ क्षणात् (for रुषा) — $^{c}$) $K_{1.2}$ B Do Dn $D_{1.4.6}$ T G रैभ्यश्च; $D_2$ विदग्धश्, $D_5$ वेदवित् (for वैद्यश्च) $S_1$ K Do $D_{1.6}$ हि, $D_2$ च, $D_3$ [ए]व (for [अ]पि)

**17** $G_4$ om the ref $K_3$ B D $T_2$ $G_{2.3}$ $M_2$ यवक्रीत उ (S MSS om उ) — $^{d}$) Ś$_1$ K $G_2$ पितुर् (for पिता)

Colophon om in $D_5$, $D_6$ reads it in marg — *Major parvan* Ś$_1$ $K_{1.2}$ T $G_{2-4}$ $M_1$ आरण्य — *Sub parvan* $K_{1.2.4}$ $B_3$ Dc $D_{2.3}$ (all om sub parvan name) mention only यवक्रीत, $K_3$, likewise, only लोमशतीर्थयात्रा, followed by यावक्रीत, $B_{1.2.4}$, only यावक्रीत, Dn $D_4$ $T_1$ $G_1$, only यवक्रीय, and $D_1$, only लोमशतीर्थयात्रा, followed by यवक्रीतोपाख्यान — *Adhy no* (figures, words or both) Dn 135 ($Dn_1$ 134) $D_1$ 143, S 138 ($M_2$ 140) — *Śloka no* $Dn_1$ 57, $Dn_2$ 59, $Dn_3$ 60, $D_1$ 18

## 137

**1** $^{a}$) $K_3$ $D_{2.3}$ तु तदा, $B_3$ स यदा, $T_1$ स तथा, $T_2$ $G_{2-4}$ सतत — $^{b}$) $D_5$ यवक्रीतोकुतो — $^{c}$) $T_2$ $G_{2-4}$ मासे (for मासि)

**2** $^{a}$) $K_{3.4}$ B D M रम्ये (for पुण्ये) — $^{b}$) Ś$_1$ $K_2$ °भूमिके; $B_{3.4}$ $T_1$ $G_1$ °शोभिते — $^{c}$) $B_1$ (m as in text) दृष्ट्वा, $T_2$ (before corr) $G_4$ तत्र (for तस्य)

**3** $^{a}$) $D_5$ यवक्रीत (for यवक्रीस्ताम्) — $^{b}$) B D (except $D_{1-3.5}$) उपातिष्ठस्व $K_3$ मानिनि; $D_6$ $G_1$ भामिनि (for मामिति) — $^{d}$) Ś$_1$ $K_2$ [आ]हूतचेतन, $B_4$ $Do_1$ हत चेतन, $Dc_2$ $D_1$ हृतचेतस°

**4** $^{c}$) $K_2$ $D_{2.3}$ तेजस्विनी, $G_4$ तेजस्विनश् — $^{d}$) Ś$_1$ $K_{1.2}$ T G सा (for ह) — $G_1$ (which om $5^{a}$–$6^{a}$) ins after 4

(for 1 42
57

तेजस्वितां च रैभ्यस्य तथेत्युक्त्वा जगाम सा ॥ ४
तत एकान्तमुन्नीय मञ्जयामास भारत ।
आजगाम तदा रैभ्यः स्वमाश्रममरिंदम ॥ ५
रुदन्तीं च स्नुषां दृष्ट्वा भार्यामार्तां परावसोः ।
सान्त्वयञ्श्लक्ष्णया वाचा पर्यपृच्छद्युधिष्ठिर ॥ ६
सा तस्मै सर्वमाचष्ट यवक्रीभाषितं शुभा ।
प्रत्युक्तं च यवक्रीतं प्रेक्षापूर्वं तदात्मना ॥ ७
शृण्वानस्यैव रैभ्यस्य यवक्रीतविचेष्टितम् ।
दहन्निव तदा चेतः क्रोधः समभवन्महान् ॥ ८
स तदा मन्युनाविष्टस्तपस्वी भृशकोपनः ।
अवलुप्य जटामेकां जुहावाग्नौ सुसंस्कृते ॥ ९
ततः समभवन्नारी तस्या रूपेण संमिता ।
अवलुप्यापरां चाथ जुहावाग्नौ जटां पुनः ॥ १०
ततः समभवद्रक्षो घोराक्षं भीमदर्शनम् ।
अब्रूतां तौ तदा रैभ्यं किं कार्यं करवामहे ॥ ११
तावब्रवीदृषिः क्रुद्धो यवक्रीर्वध्यतामिति ।
जग्मतुस्तौ तथेत्युक्त्वा यवक्रीतजिघांसया ॥ १२
ततस्तं समुपास्थाय कृत्या सृष्टा महात्मना ।
कमण्डलुं जहारास्य मोहयित्वा तु भारत ॥ १३
उच्छिष्टं तु यवक्रीतमपकृष्टकमण्डलुम् ।
तत उद्यतशूलः स राक्षसः समुपाद्रवत् ॥ १४
तमापतन्तं संप्रेक्ष्य शूलहस्तं जिघांसया ।
यवक्रीः सहसोत्थाय प्राद्रवद्येन वै सरः ॥ १५
जलहीनं सरो दृष्ट्वा यवक्रीस्त्वरितः पुनः ।
जगाम सरितः सर्वास्ताश्चाप्यासन्विशोषिताः ॥ १६
स काल्यमानो घोरेण शूलहस्तेन रक्षसा ।

---

665* अथाश्रमपदं प्राप्य यवक्रीतेन याचिता ।
पतिव्रता यवक्रीत

**5** G1 om 5ᵃ–6ᵃ, G2 reads 5ᵃᵇ after 666* — ᵃ) K4 Dc1 D1 3 T2 G3 4 आनीय, B4 आसाद्य, Dc2 M1 आनाय्य, T1 आम्नाय (for उन्नीय) — ᵇ) K3 क्रीडयामास; B4 T1 लज्ज°, Dc D1 3 Cnp सज्ज°, T2 G3 4 M2 मर्द°, M1 धर्ष° — ᶜ) Ś1 K1 2 4 D5 T2 G2 3 ततो (for तदा) — ᵈ) Ś1 K D5 स्वमाश्रमपदं तथा

**6** G1 om 6ᵃ (cf v l 5) — ᵃ) K3 B2 3 Dc1 Dn1 D4–6 M2 रुदतीं च, B4 रोदमाना B3 T2 G3 4 M तु, D2 3 T1 ता (for च) T1 तदा (for स्नुषा)

**7** ᵇ) D5 G2 यवक्रीतस्य भाषितं — K3 om (hapl) from यवक्रीत in 7ᶜ up to 8ᵃ — ᵈ) K1 2 D5 प्रेक्ष्य पूर्वं K4 D2 3 T2 G3 4 यथात्मना, B Dc Dn D1 4 6 G1 2 M1 तथात्मना, D5 यतात्मन°; M2 महात्मन

**8** K3 om 8ᵃ (cf v l 7) — ᵃ) K4 D2 3 शृण्वतश्चैव, B4 शृण्वतस्तस्य, Dc D1 शृण्वानश्चैव, S तच्छ्रुत्वा तस्य — ᵇ) B Dn D4 6 M यवक्रेस्तद्वि(M2 °स्य)चेष्टितं (Dn1 ns °ष्टन), T G यवक्रीतस्य चेष्टितं

**9** ᵃ) Ś1 K B4 Dc D1–3 5 भृशं (for तदा) — ᵇ) Ś1 K1 2 B1–3 Dn D4–6 °स्वी कोपनो भृशं — ᶜ) K1 (by corr) B अवलु(B4 °लो)प्य, K2–4 D T2 (by corr) G3 अवलुञ्च्य (D3 °ञ्च्य), cf v l 10 — ᵈ) K2 Dn D4 सुसंस्कृतैः, K4 B4 D1–3 5 सुसंस्कृते

**10** ᶜ) K3 4 B2 4 D1 अवलुञ्च्य, B1 3 Dc Dn D2 4–6 T2 (by corr) G3 अवलुञ्च्य, D3 अवलुञ्ज्य (cf v l 9) S1 Dc D1 परा (for [अ]परां) Ś1 K1 2 B D2 चापि (for चाथ)

**11** ᵇ) Ś1 K1 2 भीमाक्ष घोरदर्शनं, B4 S दीप्तास्यं घोर° — ᶜ) D5 त, T2 G2–4 च (for तौ) — ᵈ) S1 K2 D5 करवामहै, K1 D5 °वहै, K3 B1 2 4 Dc1 Dn1 D3 T2 G2–4 M2 °वहे

**12** After 12, G2 ins

666* तत स्नुषाकृतीकृत्य यवक्रीतमुपागमत् ।
यवक्रीतोऽपि रैभ्यस्य स्नुषां मत्वा जगाम ताम् ।,

which is followed by 5ᵃᵇ।

**13** G1 om (hapl) 13ᵃ–15ᵇ — ᵃ) Ś1 K B1 Dc D1–3 5 T1 M1 सा (for त) Ś1 K1 2 4 B1 2 Dn3 D1 2 G2 समुपस्थाय, D3 तमुपा° — ᵈ) Ś1 K1 2 B1 [ह्]ह; B2–4 Dn D4 6 G4 [ह्]व (for तु)

**14** G1 om 14 (cf v l 13) — ᵇ) Dc D1 अपनीत; T1 अपहृत्य, M2 अपकृष्य — ᶜ) B4 M1 उद्यम्य शूलं, Dc D1 उद्यम्य शूलं°, T2 G (G1 om) उद्धृत°

**15** G1 om 15ᵃᵇ (cf v l 13) — ᵃ) Ś1 K1 2 समाव्रजत; K3 4 B2–4 D तमाद्रवत, T2 G (G1 om) समापतत — ᵇ) Ś1 K1 2 शूलपाणिं — ᵈ) Dc Dn2 D1 S (except M2) यत्र (for येन)

**16** ᵇ) S (except G4) त्वरित

**17** K1 om (hapl.) 17ᵃ–19ᵇ — ᶜ) B2 4 Dn1 अग्निहोत्रे — ᵈ) S1 K2 समुपाविशत्, B Dn D4 6 T2 (by

अग्निहोत्रं पितुर्भीतः सहसा समुपाद्रवत् ॥ १७
स वै प्रविशमानस्तु शूद्रेणान्धेन रक्षिणा ।
निगृहीतो बलाद्वारि सोऽव्यातिष्ठत पार्थिव ॥ १८
निगृहीतं तु शूद्रेण यवक्रीतं स राक्षसः ।
ताडयामास शूलेन स भिन्नहृदयोऽपतत् ॥ १९
यवक्रीतं स हत्वा तु राक्षसो रैभ्यमागमत् ।
अनुज्ञातस्तु रैभ्येण तया नार्या सहाचरत् ॥ २०

इति श्रीमहाभारते आरण्यकपर्वणि सप्तत्रिंशदधिकशततमोऽध्यायः ॥ १३७ ॥

## १३८

लोमश उवाच ।
भरद्वाजस्तु कौन्तेय कृत्वा स्वाध्यायमाह्निकम् ।
समित्कलापमादाय प्रविवेश स्वमाश्रमम् ॥ १
तं स्म दृष्ट्वा पुरा सर्वे प्रत्युत्तिष्ठन्ति पावकाः ।
न त्वेनमुपतिष्ठन्ति हतपुत्रं तदाग्नयः ॥ २
वैकृतं त्वग्निहोत्रे स लक्षयित्वा महातपाः ।
तमन्धं शूद्रमासीनं गृहपालमथाब्रवीत् ॥ ३
किं नु मे नाग्नयः शूद्र प्रतिनन्दन्ति दर्शनम् ।
त्वं चापि न यथापूर्वं कच्चित्क्षेममिहाश्रमे ॥ ४
कच्चिन्न रैभ्यं पुत्रो मे गतवानल्पचेतनः ।
एतदाचक्ष्व मे शीघ्रं न हि मे शुध्यते मनः ॥ ५
शूद्र उवाच ।
रैभ्यं गतो नूनमसौ सुतस्ते मन्दचेतनः ।
तथा हि निहतः शेते राक्षसेन बलीयसा ॥ ६

---

corr ) $G_3$ प्रविवेश ह

**18** $K_1$ om 18 (cf v l 17) — $^d$) Ś$_1$ $K_{3\,4}$ $D_{1-3}$ [ऽ]वतिष्ठत, $D_6$ [ऽ]प्यतिष्ठत, S [ऽ]तिष्ठत्तत्र $B_4$ वारित ; T G भारत (for पार्थिव)

**20** $^b$) $B_{1\,4}$ आगत (for आगमत्) — $^c$) $B_1$ $T_2$ $G_{2\,3}$ $M_2$ च (for तु) — $^d$) $D_6$ $T_1$ $M_1$ तथा (for तया) $B_1$ समाचरत्, $B_{2\,3}$ D (except $D_{1-3\,5}$) $T_2$ (by corr ) $G_3$ सहावसत्

Colophon — *Major parvan* Ś$_1$ $K_{1\,2}$ $Dn_2$ $D_6$ T $G_{2-4}$ $M_1$ आरण्य — *Sub parvan* Ś$_1$ $K_{1\,2\,4}$ $B_1$ $D_c$ $D_{2\,5}$ (all om sub parvan name) mention only यवक्रीत, $K_3$, likewise, only लोमशतीर्थयात्रा, followed by यावक्रीत, $B_{2\,3}$ $D_3$, only यावक्रीत; $B_4$, only यवक्रीयेतवध° (sic), Dn $D_{4\,6}$ $G_1$, only यवक्रीय, $D_1$, only लोमशतीर्थयात्रा (followed by यवक्रीतोपाख्यान); and $T_2$ $G_3$, only यवक्रीतवध — *Adhy no* (figures, words or both) Dn 136 ($Dn_1$ 135), $D_1$ 144, S 139 ($G_4$ 140, $M_2$ 141) — *Śloka no* Dn $D_1$ 20

### 138

**1** $^a$) Ś$_1$ $K_3$ $G_2$ $M_2$ भारद्वाजस् — $^c$) $K_3$ समित्कलशम्

**2** $^a$) S transp दृष्ट्वा and सर्वे — $^c$) $K_4$ न च, $D_3$ तथा (for न तु) Ś$_1$ $K_{1\,3}$ $D_{1\,5}$ $T_2$ $G_{2\,3}$ $M_2$ उपतिष्ठत, $D_2$ $T_1$ $G_4$ उदतिष्ठत, $D_3$ नोपतिष्ठति ; $G_1$ $M_1$ उदतिष्ठति — After 2, T G ins

667* पुत्रमृत्युजमाशौच भरद्वाजो न जज्ञिवान् ।
[ $G_1$ पुत्र पञ्चत्वमापन्न ]

**3** $^a$) Ś$_1$ $K_1$ चाग्निहोत्र (for त्वग्निहोत्रे)

**4** Before 4, $T_2$ $G_{2\,3}$ ins भरद्वाज — $^a$) $D_{1\,3}$ तु मे ; $T_2$ $G_{2-4}$ रिवमे (for नु मे)

**5** Ś$_1$ $K_{1\,2}$ om $5^{ab}$ — $^b$) $D_c$ मद° (for अल्प°) — $^c$) $D_c$ सर्वे (for शीघ्र) — $^d$) $K_{3\,4}$ $B_{1\,3}$ D (except $D_2$) शुध्यति मे (for मे शुध्यते)

**6** $^a$) $B_{2-4}$ $D_{c1}$ $Dn_1$ $n_3$ $D_{4\,6}$ $G_1$ यातो (for गतो) $B_{1-3}$ $D_c$ Dn $D_{4\,6}$ $G_1$ अय ; $D_3$ एष (for असौ) $M_1$ स तु रैभ्यो गतो नून — $^b$) $K_3$ $B_{1-3}$ D (except $D_{1-3\,5}$) पुत्रस्ते (for सुत°) — $^c$) $K_3$ $D_5$ यथा Ś$_1$ $K_{3\,4}$ $D_{1-3\,5}$ $M_1$ वि, $T_1$ [अ]भि (for हि)

**7** $^a$) Ś$_1$ $K_{1\,3}$ $D_{1\,2}$ परि° (for प्र°) $D_c$ तेनासौ ; $T_1$ $G_1$ सहसा — $^b$) $T_1$ $G_1$ तेनाथ शूलपाणिना — $^c$) $Dn_1$ $n_3$ S (except $G_2$ $M_2$) अभ्यगार $T_2$ $G_{3\,4}$ प्रजन् ; $G_{1\,2}$ प्रज (for प्रति) Ś$_1$ $K_{1\,2}$ तथा द्वार (for प्रति द्वारि) — $^d$) Ś$_1$ $K_{1\,2}$ शीघ्र (for दोर्भ्यां)

प्रकाल्यमानस्तेनायं शूलहस्तेन रक्षसा ।
अभ्यागारं प्रति द्वारि मया दोर्भ्यां निवारितः ॥ ७
ततः स निहतो ह्यत्र जलकामोऽशुचिर्ध्रुवम् ।
संभावितो हि तूर्णेन शूलहस्तेन रक्षसा ॥ ८

लोमश उवाच ।

भरद्वाजस्तु शूद्रस्य तच्छ्रुत्वा विप्रियं वचः ।
गतासुं पुत्रमादाय विललाप सुदुःखितः ॥ ९
ब्राह्मणानां किलार्थाय ननु त्वं तप्तवांस्तपः ।
द्विजानामनधीता वै वेदाः संप्रतिभान्त्विति ॥ १०
तथा कल्याणशीलस्त्वं ब्राह्मणेषु महात्मसु ।
अनागाः सर्वभूतेषु कर्कशत्वमुपेयिवान् ॥ ११
प्रतिषिद्धो मया तात रैभ्यावसथदर्शनात् ।
गतवानेव तं क्षुद्रं कालान्तकयमोपमम् ॥ १२
यः स जानन्महातेजा वृद्धस्यैकं ममात्मजम् ।
गतवानेव कोपस्य वशं परमदुर्मतिः ॥ १३
पुत्रशोकमनुप्राप्य एष रैभ्यस्य कर्मणा ।
त्यक्ष्यामि त्वामृते पुत्र प्राणानिष्टतमान्भुवि ॥ १४
यथाहं पुत्रशोकेन देहं त्यक्ष्यामि किल्बिषी ।
तथा ज्येष्ठः सुतो रैभ्यं हिंस्याच्छीघ्रमनागसम् ॥ १५
सुखिनो वै नरा येषां जात्या पुत्रो न विद्यते ।
ते पुत्रशोकमप्राप्य विचरन्ति यथासुखम् ॥ १६
ये तु पुत्रकृताच्छोकाद्भृशं व्याकुलचेतसः ।
शपन्तीष्टान्सखीनार्तास्तेभ्यः पापतरो नु कः ॥ १७
परासुश्च सुतो दृष्टः शप्तश्चेष्टः सखा मया ।
ईदृशीमापदं को नु द्वितीयोऽनुभविष्यति ॥ १८
विलप्यैवं बहुविधं भरद्वाजोऽदहत्सुतम् ।
सुसमिद्धं ततः पश्चात्प्रविवेश हुताशनम् ॥ १९

इति श्रीमहाभारते आरण्यकपर्वणि अष्टात्रिंशदधिकशततमोऽध्यायः ॥ १३८ ॥

---

**8** K1 2 om 8 — a) K3 सोत्र, B1 D6 चात्र, Dc शेते, T1 यत्र, M1 [S]प्यत्र (for ह्यत्र) S1 B3 4 Dn D4 6 M2 तत स वि(Ś1 स्स नि, B3 स्स वि)हताशोत्र, K4 ततो विनिहत सोत्र, B2 तत॰ स विहत शेते, D1–3 तत स्स प्रविशश्वत्र — c) S1 K3 4 D1–3 हत॰ स (D1 2 स्स) इति वै तूर्णं, B1 सभावितोतिवेगेन, B2 4 Dn D4 6 निहत॰ सोति वेगेन, B3 सभाजयति वेगेन, Dc निहत सेति वै तूर्णं, D5 हत स इह वै तूर्णीं, T1 G1 पातितो हि स तूर्णेन (G1 शूलेन), G4 सभावितो हि तूर्णं स, M1 °तोतितूर्णं वै

**9** N (except K4) om the ref — ab) Ś1 K1 D2 G1 M2 भारद्वाजस्त B3 4 च (for तु) B2 Dn D4 6 transp शूद्रस्य and तच्छ्रुत्वा Ś1 K1 2 तच्छ्रुत्वा, K3 4 Dc D1–3 5 शूद्राद्वै (for शूद्रस्य) Ś1 K1 2 शूद्राद्वै, D6 श्रुत्वा तद् (for तच्छ्रुत्वा) N M2 महत् (for वच )

**10** Before 10, K3 4 B D ins भरद्वाज उ° — a) T2 G3 4 हिता° (for किला ) — d) Ś1 K1 2 °भाति हि

**11** c) Dc अनाशा — d) Ś1 K1 2 4 B1m Dc D1–3 5 कथ मृत्युम् (for कर्कशत्वम्) K3 कथ मृत्युवश गत॰

**12** ab) Ś1 K प्रतिषिद्धोसि च मया मा गा रैभ्याश्रम प्रति (K3 4 सुत) — c) Ś1 K Dc D1–3 5 असि (for एव) B Dn D4 6 दृष्टु, M1 विप्र (for क्षुद्र)

**13** a) K4 Dc1 स , T2 G2 3 तु (for स) — d) Dc भृश (for वश)

**14** a) N (except Ś1) अनुप्रास — T1 om (hapl ) 14b–16c — c) Ś1 K1 3 D1 त्वद्दते, D3 त्वत्कृते, S (T1 om ) त्वा विना (for त्वामृते) — d) Dc इष्टतरान् Ś1 K Dc अह, D1–3 भृश, G1 इमान् (for भुवि )

**15** T1 om 15 (cf v l 14) — b) G2 [अ]किल्बिष; M2 [अ]किल्बिषी (for किल्बिषी) — c) K3 4 Dc D3 G2 ज्येष्ठसुतो — d) G2 4 हन्याच् (for हिंस्याच्)

**16** T1 om 16abc (cf v l 14) — a) Ś1 K D6 ते (for वै), and लोके (for येषा) — b) D3 G1 transp जात्या and पुत्रो S1 K D6 येषा (for जात्या) — c) K3 4 B D (except D1 2) ये (for ते)

**17** c) Ś1 K आसान् (for आर्ता॰) — d) Dc [S]त्र (for नु) T1 G1 किं (for क॰)

**18** a) D6 परासु च सुत दृष्ट्वा — c) B D (except D1–3 5) [S]त्र, G2 हि (for नु) — d) S [S]नुसहिष्यति

**19** Before 19, K1 3 B Dn D4 6 S (except G2) ins लोमश उ° (S MSS om उ°) — a) Ś1 K1 2 विलाप्यैव — b) A few MSS भार Ś1 K1 2 Dc2 महत् (for ऽदहत्)

Colophon — *Major parvan* Ś1 K1 2 Dn2 T G2–4

# १३९

लोमश उवाच ।

एतस्मिन्नेव काले तु बृहद्द्युम्नो महीपतिः ।
सत्रमास्ते महाभागो रैभ्ययाज्यः प्रतापवान् ॥ १
तेन रैभ्यस्य वै पुत्रावर्वावसुपरावसू ।
वृतौ सहायौ सत्रार्थे बृहद्द्युम्नेन धीमता ॥ २
तत्र तौ समनुज्ञातौ पित्रा कौन्तेय जग्मतुः ।
आश्रमे त्वभवद्रैभ्यो भार्या चैव परावसोः ॥ ३
अथावलोकको ऽगच्छद्गृहानेकः परावसुः ।
कृष्णाजिनेन संवीतं ददर्श पितरं वने ॥ ४
जघन्यरात्रे निद्रान्धः सावशेषे तमस्यपि ।
चरन्तं गहने ऽरण्ये मेने स पितरं मृगम् ॥ ५
मृगं तु मन्यमानेन पिता वै तेन हिंसितः ।
अकामयानेन तदा शरीरत्राणमिच्छता ॥ ६
स तस्य प्रेतकार्याणि कृत्वा सर्वाणि भारत ।
पुनरागम्य तत्सत्रमब्रवीद्भ्रातरं वचः ॥ ७
इदं कर्म न शक्तस्त्वं वोढुमेकः कथंचन ।
मया तु हिंसितस्तातो मन्यमानेन तं मृगम् ॥ ८
सो ऽस्मदर्थे व्रतं साधु चर त्वं ब्रह्महिंसनम् ।
समर्थो ह्यहमेकाकी कर्म कर्तुमिदं मुने ॥ ९

अर्वावसुरुवाच ।

करोतु वै भवान्सत्रं बृहद्द्युम्नस्य धीमतः ।
ब्रह्महत्यां चरिष्ये ऽहं त्वदर्थं नियतेन्द्रियः ॥ १०

---

$M_1$ आरण्य — *Sub parvan* $Ś_1 K_{1, 2}$ (all om sub parvan name) mention only रैभ्य, $K_3$ likewise, only लोमशतीर्थयात्रा, followed by यावक्रीत, $K_4 B_1 Dc D_5$, only यवक्रीत, $B_{2, 3}$, only यावक्रीत, $B_4 Dn D_{4, 6} T_1$ only यवक्रीय, $D_1$, only लोमशतीर्थयात्रा (followed by परावसूपाख्यान), $D_2$, only परावसूपाख्यान; $D_3$, only यवक्रीतोपाख्यान, and $G_1$, only यवक्रीसमाप्ति — *Adhy no* (figures words or both) Dn 137 ($Dn_1$ 136), $D_1$ 145, S 140 ($M_2$ 142) — *Śloka no* Dn $D_1$ 19

## 139

**1** $^{c}$) $B_{2-4}$ Dn $D_3m_{4-6}$ तेने (for आस्ते) $K_3 T_1 G_1$ M महाभौमो, $T_2$ (before corr) $G_{2, 4}$ महाभाग

**2** $^{c}$) $B_1 D_4$ पुत्रार्थं, $B_{2-4}$ Dn $D_{1, 6}$ सत्रार्थं, $M_2$ पुत्रार्थे (for सत्रार्थे)

**3** $^{c}$) $Ś_1 K_{1, 2}$ चाभवद्, $D_{1, 2}$ अभवद्; $D_3$ तु भवद् (for त्वभवद्) — $^{d}$) $D_{1-3, 5}$ चैका (for चैव)

**4** $^{b}$) $K_4$ भार्याम् (for गृहान्) T G एव (for एक) — $^{d}$) $Ś_1$ K $D_{1-3, 5}$ तत, $B_2$ मुने (for वने)

**5** $^{a}$) $K_4 D_{1, 2, 3}$ (by corr) $T_2$ (before corr) $G_{2, 4}$ जघान रात्रौ, $T_1 G_1$ जघन्यरात्रौ $B_2$ निद्रालु (for निद्रान्ध) — $^{b}$) $Ś_1 K_2$ [अ]थ, $K_1$ च (for [अ]पि) — $^{c}$) $Ś_1 K_{1, 2}$ पुण्ये (for ऽरण्ये)

**6** $T_1$ om (hapl) 6–8 — After 6, $G_1$ ins

668* तत समीपमासाद्य पितर दृष्टवान्हतम् ।
अज्ञानात्पितर हत्वा मृगबुद्ध्या परावसु ।
विलप्य बहुधा राजन्रैभ्यस्य च महात्मन ।

**7** $T_1$ om 7 (cf v l 6) — $^{a}$) $K_4$ हतस्य, $B_{2-4}$ Dn $D_{1-3}$ (by transp) तस्य स, $G_1$ स कृत्वा (for स तस्य) — $^{c}$) $S_1 K_1$ आगत्य $T_2$ (before corr) $G_2 M_3$ सर्वम् (for सत्रम्) — $^{d}$) $S_1 K_{1, 2}$ तत (for वच)

**8** $T_1$ om 8 (cf v l 6) — $^{c}$) B D (except $D_{1-3, 5}$) $T_2$ G च (for तु) — $^{d}$) $K_1 D_3$ S ($T_1$ om) वै (for त) $Ś_1 K_2$ मन्यमानो वने मृग, $K_{3, 4} D_{1, 2, 5}$ मन्यता तु वने मृग ($D_5$ by transp मृग वने)

**9** $^{a}$) $Ś_1 K_{1, 2, 4} D_{2, 3, 5}$ अर्थं (for अर्थे) $K_4 Dc_1$ भ्रातस्; B $Dc_2$ Dn $D_{4, 6}$ तात (for साधु) — $^{b}$) $Ś_1 K_{1, 2}$ ब्रह्महिंसक, $T_{1, 2}$ (m as in text) $G_{1, 3, 4}$ ब्रह्मरक्षणे — $^{c}$) B $Dc_1$ $Dn_1$ ns $D_{4, 6}$ [ऽ]पि, $Dc_2$ $Dn_2$ [ऽ]स्मि, $D_1$ न (for हि)

**10** $K_3$ और्व उ — $^{a}$) $K_{3, 4} D_{1-3, 5}$ [इ]द (for वै) — $^{c}$) B D (except $D_{1-3, 5}$) ब्रह्मवध्या, $G_1$ ब्रह्मचर्यं $Ś_1 K_{1, 2}$ चरिष्ये वै, $M_1$ चरिष्यामि — $^{d}$) $M_1$ यदर्थं $T_2 G_{2-4}$ त्वदर्थे निभृतेन्द्रिय — After 10, $Ś_1 K_{1, 2, 4} D_{1-3, 5}$ ins

669* सोऽगच्छद्वनमेकाग्रो ब्रह्महत्यामत चरन् ।;

while $G_2$ ins

लोमश उवाच ।

स तस्या ब्रह्महत्यायाः पारं गत्वा युधिष्ठिर ।
अर्वावसुस्तदा सत्रमाजगाम पुनर्मुनिः ॥ ११
ततः परावसुर्दृष्ट्वा भ्रातरं समुपस्थितम् ।
बृहद्द्युम्नमुवाचेदं वचनं परिषद्गतम् ॥ १२
एष ते ब्रह्महा यज्ञं मा द्रष्टुं प्रविशेदिति ।
ब्रह्महा प्रेक्षितेनापि पीडयेत्त्वां न संशयः ॥ १३
प्रेष्यैरुत्सार्यमाणस्तु राजन्नर्वावसुस्तदा ।
न मया ब्रह्महत्येयं कृतेत्याह पुनः पुनः ॥ १४
उच्यमानोऽसकृत्प्रेष्यैर्ब्रह्महन्निति भारत ।
नैव स प्रतिजानाति ब्रह्महत्यां स्वयं कृताम् ।
मम भ्रात्रा कृतमिदं मया तु परिरक्षितम् ॥ १५
प्रीतास्तस्याभवन्देवाः कर्मणार्वावसोर्नृप ।
तं ते प्रवरयामासुर्निरासुश्च परावसुम् ॥ १६
ततो देवा वरं तस्मै ददुरग्निपुरोगमाः ।
स चापि वरयामास पितुरुत्थानमात्मनः ॥ १७
अनागस्त्वं तथा भ्रातुः पितुश्चास्मरणं वधे ।
भरद्वाजस्य चोत्थानं यवक्रीतस्य चोभयोः ॥ १८
ततः प्रादुर्बभूवुस्ते सर्व एव युधिष्ठिर ।
अथाब्रवीद्यवक्रीतो देवानग्निपुरोगमान् ॥ १९
समधीतं मया ब्रह्म व्रतानि चरितानि च ।
कथं नु रैभ्यः शक्तो मामधीयानं तपस्विनम् ।

670* तच्छ्रुत्वार्वावसु पश्चात्प्रायश्चित्त विधाय च ।

**11** B3 om 11–13 Ś1 K D1–3 5 S (except T1 G1) om the ref — a) K3 4 D1–3 5 तदा, B (B3 om) Dn D4 6 T1 G1 4 तस्य, Dc यदा (for तस्या) B Dn D4 6 G4 ब्रह्मवध्याया

**12** B3 om 12 (cf v l 11) — d) D1 5 भ्रातर (for वचन) Ś1 K D1–3 5 T1 परिषद्गत°, B1 2 4m Dc Dn D4 6 T2 (by corr) G3 हर्षगद्गद (B4 [orig] परिसगत)

**13** B3 om 13 (cf v l 11) — a) K3 4 D1–3 वै (for ते) S सत्र (for यज्ञ) — b) S (by transp) द्रष्टु मा (T1 असौ न) — d) Ś1 K1 2 नात्र (for त्वा न) B2 4 Dn D4 6 असशय (for न सशय) — After 13, K3 B4 Dn D4 6 ins

671* लोमश उवाच ।
तच्छ्रुत्वैव तदा राजा प्रेष्यानाह स विद्पते ।

**14** K1 reads 14ab after 672* — b) S1 K3 राज्ञा ह्यर्वा

**15** D5 om 15ab — b) S (with hiatus!) ब्रह्महा (for ब्रह्महन्) — c) K1 4 नैवम्, K2 T2 G3 4 न वै, Dc नैष (for नैव) B1–3 Dc Dn D3 4 6 स्म (for स) Ś1 K2 3 स स्म प्रजानाति, K1 4 अस्मि प्रजानामि, D1 2 ता स प्रजानाति, D5 वाह प्रजानामि, S (except G3 M2) सम्प्रति जानाति — d) B1–3 Dn2 n3 D4 6 ब्रह्मवध्या — f) B D (except D1–3 5) T2 G3 स (B4 च) (for तु) Ś1 K3 4 D3 चरित व्रत; K1 2 B Dc Dn D1 2 4–6 T2 G3 परिमोक्षित, T1 कृतरक्षित, G4 परिमोक्षित, M2 परिरक्षितु; text as in G1 2 M1 — After 15, K1 2 B D (except D1–3 5) S (except M2) ins

672* स तथा प्रवदन्क्रोधात्तैश्च प्रेष्यै प्रभाषित ।
तूर्णीं जगाम ब्रह्मर्षिर्वनमेव महातपा ।
उग्र तप समास्थाय दिवाकरमथाश्रित ।
रहस्यवेद कृतवान्सूर्यस्य द्विजसत्तम ।
मूर्तिमास्त ददर्शाथ स्वयमग्रभुगव्यय ।

[(L 1) G2 प्राद्रवत् (for प्रवदन्) M1 आर्तस् (for क्रोधात्) B1 3 4 Dc T1 2 (before corr) G1 2 4 विप्रै (for प्रेष्यै) Dc स भाषित, T1 प्रवासित M1 विप्रैश्चैव विवासित — (L 2) B2 3 Dc G4 विप्र (for ब्रह्म°) — (L 4) T1 G2–4 M1 रहस्यमेव ]

— Thereafter K1 reads 14ab

**16** Before 16, N ins लोमश उ° — b) S1 K1 2 कर्मणा सह वासवा — c) Ś1 K D1–3 5 ततस्त व(Ś1 D1 वा)रयामासुर् — d) D2 3 निरस्तश्च, D5 T2 (by corr) G3 निरस्य च, G2 निरस्त च, G4 परासुश्च

**17** b) Dc S इन्द्र (for अग्नि°)

**18** a) Ś1 अनागास्त्व, Dc T1 अनागस B2 4 D (except D1–3 5) ततो (for तथा) — b) Ś1 K1 2 B4 om च — c) S1 K1 T1 G1 4 M2 भारद्वा — d) S1 K2–4 D1–3 5 चोजव (for चोभयो) — After 18, B D (except D1–3 5) T2 (marg sec m) G3 ins

673* प्रतिष्ठा चापि वेदस्य सौरस्य द्विजसत्तम ।
एवमस्त्विति त देवा प्रोचुश्चापि वरान्ददु ।
[(L 2) B1 3 Dc प्रीता° (for प्रोचु°)]

**20** a) Ś1 K D1–3 5 समधीता मया वेदा — T1 om

तथायुक्तेन विधिना निहन्तुममरोत्तमाः ॥ २०

देवा ऊचुः ।

मैवं कृथा यवक्रीत यथा वदसि वै मुने ।
ऋते गुरुमधीता हि सुखं वेदास्त्वया पुरा ॥ २१
अनेन तु गुरून्दुःखात्तोपयित्वा स्वकर्मणा ।
कालेन महता क्लेशाद्ब्रह्माधिगतमुत्तमम् ॥ २२

लोमश उवाच ।

यवक्रीतमथोक्त्वैवं देवाः साग्निपुरोगमाः ।
संजीवयित्वा तान्सर्वान्पुनर्जग्मुस्त्रिविष्टपम् ॥ २३
आश्रमस्तस्य पुण्योऽयं सदापुष्पफलद्रुमः ।
अत्रोष्य राजशार्दूल सर्वपापैः प्रमोक्ष्यसे ॥ २४

इति श्रीमहाभारते आरण्यकपर्वणि एकोनचत्वारिंशदधिकशततमोऽध्यायः ॥ १३९ ॥

## १४०

लोमश उवाच ।

उशीरबीजं मैनाकं गिरिं श्वेतं च भारत ।
समतीतोऽसि कौन्तेय कालशैलं च पार्थिव ॥ १
एषा गङ्गा सप्तविधा राजते भरतर्षभ ।
स्थानं विरजसं रम्यं यत्राग्निर्नित्यमिध्यते ॥ २
एतद्वै मानुषेणाद्य न शक्यं द्रष्टुमप्युत ।

---

20ᶜ–22ᵇ — ᶜ) K₁ ₃ ₄ D₁ ₃ ₅ तु, B Dn D₄ ₆ M₁ च (for तु)

**21** T₁ om 21 (cf v l 20) — ᵃ) S₁ K₁ वेद (for कृथा) — ᶜ) S (T₁ om) विना (for ऋते) — ᵈ) T₂ G₁₋₄ स्वय (for सुख)

**22** T₁ om 22ᵃᵇ (cf v l 20) — ᵃ) Ś₁ K Dc D₁₋₃ गुरु पूर्वं, D₅ गुरून्पूर्वं, M₁ गुरु दु खात् — ᵇ) B₁₋₃ Dn D₄ ₆ [आ]श्य, D₅ T₂ G₂₋₄ सु (for स्व) — ᵈ) K₁ °प्रासम् (for गतम्)

**23** ᵃ) Ś₁ K₁₋₆ D₁₋₃ ₅ [इ]द (for [ए]त्र) — ᵇ) Cf 19ᵈ B₁ Dn D₄ ₆ सेंद्र, B₂ ₃ शक्र, B₄ साग्नि; D₃ अग्नि, D₅ तेग्नि (for साग्नि) — ᵈ) B₁ ₂ ₄ त्रिपिष्टप — After 23, T G ins

674* ततो वै स यवक्रीतो ब्रह्मचर्यं चचार ह ।
अष्टौ दश च वर्षाणि त्रिंशत च युधिष्ठिर ।

[(L 2) T₁ अष्टा (for अष्टौ) G₁ अष्टौ दशसहस्राणि T₁ त्रिशत ]

**24** ᵇ) T₁ G₁ सदाफलयुतद्रुम — ᵈ) B₁ सर्वपापात्, B₂ Dn D₄ ₆ सर्व पाप, B₃ सर्वपाप; B₄ सर्व पापै K₄ प्रमुच्यसे, B₁₋₃ Dn D₄ ₆ M₂ प्रमोक्ष्यसि, G₄ विमोक्ष्यसे

Colophon — *Major parvan* Ś₁ K₁ ₂ T G₃₋₄ M₁ आरण्य — *Sub parvan* Ś₁ K₁ ₂ ₄ B₁ ₄ Dn₁ n₃ D₅ T₂ G₂ ₃ M (all om sub parvan name) mention only यवक्रीत, K₃, likewise, only लोमशतीर्थयात्रा, followed by यावक्रीत, B₂ ₃ Dc, only यावक्रीत, Dn₂, only यवक्रीतीय, D₁, only लोमशतीर्थयात्रा (followed by यवक्रीतोपाख्यान), D₂ ₃, only यवक्रीतोपाख्यान, D₄, only यावक्रीय; and D₆, only यवक्रीय To the above details, all MSS except T₁ G₁ ₄ add समाप्त — *Adhy name* T G₁ ₃ अर्वावसुवरलाभ — *Adhy no* (figures, words or both) Dn 138 (Dn₁ 137), D₁ 146, S 141 (M₂ 143) — *Śloka no* Dn 28 (Dn₃ 29), D₁ 25

## 140

**1** D₄ M₂ om the ref — ᶜ) Ś₁ K₂ स प्रतीतोस्मि; B₃ ₄ समतीतोस्मि, T₁ G₁ ₂ ₄ M समतीता स्म (G₄ °स्तु) — ᵈ) Cf 675* Ś₁ K₁ ₂ भारत, M₁ पर्वत (for पार्थिव) T G कैलास चापि पर्वत

**2** T₁ om (hapl) 2ᵃ–4ᵇ — ᵇ) Ś₁ K₁ ₂ भ्राजते (for रा°) — ᶜ) S₁ K₂ एतद् (for स्थान) Ś₁ K₂ B₁ Dc M₁ विरजसो, K₃ ₄ D₁₋₃ G₄ M₂ °सा K₃ ₄ B₁₋₃ D T₂ पुण्य (for रम्य)

**3** T₁ om 3 (cf v l 2) — ᵃ) Ś₁ K₁ ₂ [इ]ह (for [अ]द्य) — ᵇ) D₅ transp शक्य and द्रष्टु Ś₁ K Dc D₁₋₃ ₅ उत्तम, B Dn D₄ ₆ अद्भुत, T₂ G₂ M₂ अच्युत (for अप्युत) — After 3, B D (except D₂ ₃ ₅) ins

675* एतद्दृश्यति देवानामाक्रीड चरणाङ्कितम् ।
अतिक्रान्तोऽसि कौन्तेय कालशैल च पर्वतम् ।

समाधिं कुरुताव्यग्रास्तीर्थान्येतानि द्रक्ष्यथ ॥ ३
श्वेतं गिरिं प्रवेक्ष्यामो मन्दरं चैव पर्वतम् ।
यत्र माणिचरो यक्षः कुबेरश्चापि यक्षराट् ॥ ४
अष्टाशीतिसहस्राणि गन्धर्वाः शीघ्रचारिणः ।
तथा किंपुरुषा राजन्यक्षाश्चैव चतुर्गुणाः ॥ ५
अनेकरूपसंस्थाना नानाप्रहरणाश्च ते ।
यक्षेन्द्रं मनुजश्रेष्ठ माणिभद्रमुपासते ॥ ६
तेषामृद्धिरतीवाग्र्या गतौ वायुसमाश्च ते ।
स्थानात्प्रच्यावयेयुर्ये देवराजमपि ध्रुवम् ॥ ७
तैस्तात बलिभिर्गुप्ता यातुधानैश्च रक्षिताः ।
दुर्गमाः पर्वताः पार्थ समाधिं परमं कुरु ॥ ८
कुबेरसचिवाश्चान्ये रौद्रा मैत्राश्च राक्षसाः ।
तैः समेष्याम कौन्तेय यत्तो विक्रमणे भव ॥ ९
कैलासः पर्वतो राजन्षड्योजनशतान्युत ।
यत्र देवाः समायान्ति विशाला यत्र भारत ॥ १०
असंख्येयास्तु कौन्तेय यक्षराक्षसकिंनराः ।
नागाः सुपर्णा गन्धर्वाः कुबेरसदनं प्रति ॥ ११
तान्विगाहस्व पार्थाद्य तपसा च दमेन च ।
रक्ष्यमाणो मया राजन्भीमसेनबलेन च ॥ १२
स्वस्ति ते वरुणो राजा यमश्च समितिंजयः ।
गङ्गा च यमुना चैव पर्वतश्च दधातु ते ॥ १३

इन्द्रस्य जाम्बूनदपर्वताग्रे
शृणोमि घोषं तव देवि गङ्गे ।
गोपाययेमं सुभगे गिरिभ्यः
सर्वाजमीढापचितं नरेन्द्रम् ।
भवस्व शर्म प्रविविक्षतोऽस्य

[ (L 1) $B_1$ $Dn_1$ द्रक्ष्यसि — (L 2) Cf $1^d$ $B_3$ अतीव तम (for अतिक्रान्तोऽसि), and महागिरिं (for च पर्वतम्) ]

**4** $T_1$ om $4^{ab}$ (cf v l 2) — $^c$) Ś$_1$ $K_{1\ 2}$ $D_1$ मणिचरो, $K_4$ B Dc Dn $D_{2-6}$ $T_2$ $G_{3\ 4}$ माणिवरो — $^d$) B D (except $D_{1-3\ 5}$) चैव (for चापि)

**5** $^b$) $B_{1-3}$ Dc Dn $D_{4\ 6}$ गधर्वा शीघ्रगामिन, $B_4$ M °र्वा श्री($B_4$ स्त्री)विहारिण°, $D_{1-3}$ T G °र्वाणा विहारिणा — $^c$) Ś$_1$ $K_{1\ 2}$ चैव (for राजन्)

**6** $^b$) Ś$_1$ $K_{1\ 2}$ तथा (for च ते) — $^c$) $K_3$ $D_5$ $T_1$ $G_1$ M यक्षेंद्रा, Dc यक्ष त M पुरुषव्याघ्र ($M_2$ °श्रेष्ठ) — $^d$) Ś$_1$ $K_{1\ 2}$ $D_{1\ 3}$ मणिभद्रम्

**7** $^a$) Ś$_1$ $K_2$ B Dn $D_{4-6}$ [अ]त्र ($B_2$ [अ]थ), $K_1$ Dc [अ]न्या, $K_{3\ 4}$ $D_{1-3}$ $M_2$ [अ]न्यान्, $M_1$ [अ]न्य (for [अ]ग्र्या) — $^b$) M जवे (for गतौ) $D_{1-3}$ कुबेरेण समाश्च ते — $^c$) Ś$_1$ K Dc $D_{1-3\ 5}$ हि, M च (for ये)

**8** $^a$) $T_2$ $G_{3\ 4}$ बहु (for बलि°) — $^d$) Ś$_1$ $K_{2\ 3}$ $D_{1\ 2}$ $G_{3\ 4}$ परमा, $B_4$ उत्तम (for परम) $K_4$ $D_{3\ 5}$ स समाधिं परा कुरु

**9** $^b$) Ś$_1$ $K_2$ भारत (for राक्षसा°) — $^c$) Dc समेष्यामि, $D_{1-3\ 5}$ ष्यसि — $^d$) B Dc Dn $D_{4\ 6}$ सयतो विक्रमे भव ($Dn_1$ $n_2$ विक्रमेण च), $M_1$ युक्तो विक्रमणो भव

**10** $^a$) Some N MSS कैलाश° — $^b$) $B_{1-3}$ $D_3$ °शतोच्छ्रित, $B_4$ Dn $D_{4\ 6}$ $G_1$ समुच्छ्रित°; Dc गतोच्छ्रित°, $D_{1\ 2}$ $T_2$ $G_{2-4}$ °शतायत°, $T_1$ गुणान्वित°, $M_1$ °शतान्वित°

**11** $^d$) Dc $T_2$ $G_{2-4}$ कुबेरभवन

**12** $^a$) Ś$_1$ $K_1$ त (for तान्) $B_2$ S कौंतेय (for पार्थाद्य) — $^b$) S नियमेन (for च दमेन) — $^c$) $D_{1\ 2}$ महाराज (for मया राजन्) — $^d$) $B_1$ (m as in text) भीमार्जुनबलेन च, $T_1$ $G_1$ °सेनेन भारत

**13** $^a$) $G_1$ इन्द्रश्च (for स्वस्ति ते) $T_1$ इन्द्र कुबेरो वरुणो — $^b$) Ś$_1$ K पितृभि सह, $D_{1\ 3}$ $G_2$ $M_2$ समितिंजय — $^d$) $T_1$ $G_1$ सर्वे स्वस्ति ($G_1$ काल) दिशतु ते, $T_2$ $G_{2-4}$ $M_1$ पर्वताश्च दिशतु ($M_1$ तथैव) ते — After 13, $K_{1\ 2}$ B D (except $D_{1-3\ 5}$) ins

676* मरुतश्च सहाश्विभ्या सरितश्च सरासि च ।
स्वस्ति देवासुरेभ्यश्च वसुभ्यश्च महाद्युते ।

[ (L 2) $B_1$ Dc विशा पते (for महा ) ]

**14** $^a$) B Dn $D_{4\ 6}$ °नदपर्वताद्रे — $^c$) $K_{3\ 4}$ $B_1$ $D_{1-3}$ गोपायेम स्व, S गोपायैन स्व (for गोपाययेम) $K_4$ [ऽ]सुरेभ्य, $T_2$ $G_{2-4}$ रिपुभ्य (for गिरिभ्य ) — $^d$) Ś$_1$ K $B_4$ $Dn_1$ $D_6$ $G_1$ सर्वाजमीढोपचित ($K_3$ °तिं), $D_{1\ 2}$ सदाजमीढ प्रथित, T $G_{2\ 3}$ सर्वाजमीढापचितिं ($G_3$ °तिर्) — $^e$) $K_3$ B Dc Dn $D_{4-6}$ ददस्व, $D_3$ T G भज° (for भव ) Dc S धर्मं ($M_1$ धर्मात्) (for शर्म) Dc परिवेक्षतो — After 14, N $M_1$ ins

677* उक्त्वा तथा सागरगा म विप्रो
यत्तो भवस्वेति शशास पार्थम् ।

[ (L 1) Ś$_1$ $K_1$ तदा, $M_1$ यथा $K_1$ गां सविता (for सागरगा) — (L 2) Ś$_1$ $K_{1\ 2}$ शशस ]

शैलानिमाञ्शैलसुते नृपस्य ॥ १४

युधिष्ठिर उवाच ।

अपूर्वोऽयं संभ्रमो लोमशस्य
कृष्णां सर्वे रक्षत मा प्रमादम् ।
देशो ह्ययं दुर्गतमो मतोऽस्य
तस्मात्परं शौचमिहाचरध्वम् ॥ १५

वैशंपायन उवाच ।

ततोऽब्रवीद्भीममुदारवीर्यं
कृष्णां यत्तः पालय भीमसेन ।
शून्येऽर्जुनेऽसंनिहिते च तात
त्वमेव कृष्णां भजसेऽसुखेषु ॥ १६
ततो महात्मा यमजौ समेत्य
मूर्धन्युपाघ्राय विमृज्य गात्रे ।
उवाच तौ बाष्पकलं स राजा
मा भैष्टमागच्छतमप्रमत्तौ ॥ १७

इति श्रीमहाभारते आरण्यकपर्वणि चत्वारिंशदधिकशततमोऽध्यायः ॥ १४० ॥

# १४१

युधिष्ठिर उवाच ।

अन्तर्हितानि भूतानि रक्षांसि बलवन्ति च ।
अग्निना तपसा चैव शक्यं गन्तुं वृकोदर ॥ १
संनिवर्तय कौन्तेय क्षुत्पिपासे बलान्वयात् ।
ततो बलं च दाक्ष्यं च संश्रयस्व कुरूद्वह ॥ २
ऋषेस्त्वया श्रुतं वाक्यं कैलासं पर्वतं प्रति ।
बुद्ध्या प्रपश्य कौन्तेय कथं कृष्णा गमिष्यति ॥ ३
अथ वा सहदेवेन धौम्येन च सहाभिभो ।

— Thereafter Ś1 K1 2 ins a colophon — On the other hand, S ins after 14 (M1, after 677*)

678* शिवप्रदा सर्वसरित्प्रधाने
सभ्रातृकस्येह युधिष्ठिरस्य ।

**15** G1 4 om the ref — b) B Dn1 D4-6 ins च after कृष्णा T1 G1 2 4 प्रमाद — c) Ś1 K Dc2 D1-3 5 दुर्गमो वै (for दुर्गतमो)

**16** Ś1 K1 T1 G1 M2 om the ref — c) Ś1 K1 2 4 D1-3 गते (for शून्ये) — d) Ś1 K3 D2 3 कृष्णा (for कृष्णां) K2 B D (except D1-3) T2 (by corr) G3 त्वामेव कृष्णा भजते भयेषु

**17** a) B Dn D4 6 सयमौ (for यमजौ) — b) G3 M2 विमृश्य Ś1 K B1 3 D1-3 5 T1 G1 नेत्रे, G2 गात्रैं — c) T2 (before corr) G4 तान् (for तौ) T2 G3 4 हि (for स) — d) K4 B2 Dc मा भष्टमागच्छतमा(K4 चा)प्रमत्तौ; D5 मा भैष्टमागच्छतमप्रमाद, T1 G1 2 4 M मा भैष्ट चागच्छत चाप्रमत्ता (T1 समाप्रमादा; G3 4 °तमाप्रमत्ता), T2 (before corr) मा भैष्ट चागच्छतमप्रमत्तौ

Colophon om in D5, Ś1 K1 2 read it after st 14 of this adhy, B1 reads it in marg — *Major parvan* Ś1 K1 2 T G2-4 M1 आरण्य — *Sub parvan* K4 B1 3 4 Dc Dn2 D5 तीर्थयात्रा K3 B2 D1 2 (all om sub parvan name) mention only लोमशतीर्थयात्रा — *Adhy name* K B4 D1-3 गन्धमादनप्रवेश, T1 कैलासगिरिप्रवेश, M2 मन्दरगिरिप्रवेश — *Adhy no* (figures, words or both) K1 Dn2 139, Dn1 n3 138, D1 147, S 142 (G4 140 [as in text], M2 144) — *Śloka no* Dn 20, D1 18

## 141

**1** b) K4 प्रभवति (for बल ) B2 3 Dn D4 6 यक्ष्यति महाति च

**2** a) K1 3 Dc D1-3 सनिवर्तस्व, T1 G1 °धापय — b) Ś1 K1 2 G1 क्षुत्पिपास(sic)बलान्वयात्, K3 4 B D T2 G3 5 °से बलाश्रयात् — c) K3 4 D1-3 5 तपो (for ततो) — d) B Dn D4 6 वृकोदर (for कुरू )

**3** a) Ś1 K D1-3 5 श्रुत त्व(D1 2 म)या लोमशस्य — D2 om 3c-4b — c) T1 प्रविश्य; M2 प्रपत

**4** D2 om 4ab (cf v l 3) — b) D1 [ए]व (for च) B1 4 Dc महात्मना, B2 3 4m Dn D4 6 सम विभो; D5

सूदैः पौरोगवैश्चैव सर्वैश्च परिचारकैः ॥ ४
रथैरश्वैश्च ये चान्ये विप्राः क्लेशासहाः पथि ।
सर्वैस्त्वं सहितो भीम निवर्तस्वायतेक्षण ॥ ५
त्रयो वयं गमिष्यामो लघ्वाहारा यतव्रताः ।
अहं च नकुलश्चैव लोमशश्च महातपाः ॥ ६
ममागमनमाकाङ्क्षन्गङ्गाद्वारे समाहितः ।
वसेह द्रौपदीं रक्षन्यावदागमनं मम ॥ ७

भीम उवाच ।

राजपुत्री श्रमेणार्ता दुःखार्ता चैव भारत ।
व्रजत्येव हि कल्याणी श्वेतवाहदिदृक्षया ॥ ८
तव चाप्यरतिस्तीव्रा वर्धते तमपश्यतः ।
किं पुनः सहदेवं च मां च कृष्णां च भारत ॥ ९
रथाः कामं निवर्तन्तां सर्वे च परिचारकाः ।
सूदाः पौरोगवाश्चैव मन्यते यत्र नो भवान् ॥ १०
न ह्यहं हातुमिच्छामि भवन्तमिह कर्हिचित् ।
शैलेऽस्मिन्राक्षसाकीर्णे दुर्गेषु विषमेषु च ॥ ११
इयं चापि महाभागा राजपुत्री यतव्रता ।
त्वामृते पुरुषव्याघ्र नोत्सहेद्विनिवर्तितुम् ॥ १२
तथैव सहदेवोऽयं सततं त्वामनुव्रतः ।
न जातु विनिवर्तेत मतज्ञो ह्यहमस्य वै ॥ १३
अपि चात्र महाराज सव्यसाचिदिदृक्षया ।
सर्वे लालसभूताः स्म तस्माद्यास्यामहे सह ॥ १४
यद्यशक्यो रथैर्गन्तुं शैलोऽयं बहुकन्दरः ।
पद्भिरेव गमिष्यामो मा राजन्विमना भव ॥ १५
अहं वहिष्ये पाञ्चालीं यत्र यत्र न शक्ष्यति ।
इति मे वर्तते बुद्धिर्मा राजन्विमना भव ॥ १६
सुकुमारौ तथा वीरौ माद्रीनन्दिकरावुभौ ।
दुर्गे संतारयिष्यामि यद्यशक्तौ भविष्यतः ॥ १७

---

सहैव भो, D$_5$ तथा विभो (for सहा°) Ś$_1$ K$_{1,2}$ T$_1$ धौम्येन सहिता प्र(T$_1$ भि)भो, G$_3$ धौम्येन सह कृष्णया — $^c$) Cf 10$^c$, 28$^c$ K$_4$ D$_{1,2}$ सूदै° (as in text), the rest सूतै° — Ś$_1$ om (hapl) 4$^d$–6$^c$

**5** Ś$_1$ om 5 (cf v l 4) — $^{cd}$) K$_{3,4}$ एतैस् (for सर्वैस्) K$_4$ तु, M$_3$ ता (for त्व) S वीर (for भीम) Dc D$_{1,2,3,5}$ (the latter two marg as in text) निवर्तं सहितै° (D$_{1,2}$ °त) सर्वैर्यावद्वयमिहागता

**6** Ś$_1$ om 6$^{abc}$ (cf v l 4) — $^b$) T$_2$ G$_{2-4}$ घृत° (for यत°)

**7** $^a$) Ś$_1$ K$_{1,3,4}$ समा (for ममा) — $^c$) T$_1$ वसेस्तु, G$_1$ °स्व (for °ह) K$_{3,4}$ रक्ष (for रक्षन्) — $^d$) K$_3$ D$_2$ चा(D$_2$ आ)गमनान्

**8** Ś$_1$ K$_1$ G$_1$ भीमसेन उ° (Ś$_1$ G$_1$ om उ°) — $^d$) Ś$_1$ K D$_{1-3,5}$ °वाहनकाङ्क्षया — After 8, M$_1$ ins

679* अपश्यन्तीह त वीरमेवमेषा सुदुःखिता ।
किं पुनर्नकुल त्वा च त च वीर धनजयम् ।

**9** $^b$) B Dc$_1$ Dn D$_{3,4,6}$ T$_2$ G$_{2-4}$ M$_2$ वर्तते, D$_5$ पर्व°, T$_1$ G$_1$ विद्य° (for वर्ध°) — After 9$^{ab}$, N ins

680* गुडाकेश महात्मान सग्रामेष्वपलायिनम् ।

— T$_1$ G$_1$ om 9$^{cd}$

**10** $^a$) K$_1$ B$_{2-4}$ Dc Dn D$_{4,6}$ T$_2$ (after corr) G$_3$ द्विजा, D$_{1,2}$ यथा, T$_2$ (before corr) तथा (for रथा) Dc$_2$ Dn$_3$ M$_2$ कामान्, T$_2$ (before corr) G$_{2,4}$ कथ (for काम) — $^c$) Cf 4$^a$, 28$^c$ K$_{1-3}$ B Dn D$_{4-6}$ S सूता (for सूदा°) Cf 4 4 2$^c$, 4$^d$ — $^d$) T$_2$ G$_{3,4}$ मन्यते M$_1$ यदि (for यत्र) M$_2$ वै (for नो) S$_1$ K Dc D$_{1-3,5}$ यत्र वै (D$_{1,2}$ °था वा, D$_5$ त्र वा) मन्यते भवान्, B Dn D$_{4,6}$ य च मन्येत नो भवान्

**11** $^c$) T$_1$ G$_1$ राक्षसै° कीर्णे (for राक्षसा°)

**12** $^a$) Ś$_1$ K$_{1-3}$ D$_{1-3,5}$ पाचाली च (for इय चापि) T$_2$ G$_{2-4}$ महाराज — $^b$) B$_{2-4}$ Dn D$_{4,6}$ G$_{1,2}$ पति (for यत°) — $^c$) K$_{3,4}$ D$_{1,2,5}$ त्वदृते; S त्वा विना — $^d$) D$_5$ नोत्सहेद्वै निवर्तितु, S नोत्सहेत निव

**13** $^d$) B D (except D$_{1-3,5}$) T$_2$ G$_3$ मनोज्ञो (for मतज्ञो) T G [ऽ]स्मि (for हि) T$_{1,2}$ (before corr) G अस्य (for अस्य) M$_2$ मनो ह्यस्य विषीदति

**14** $^a$) Dc महाभागा — $^d$) T G$_{2-4}$ वय (for सह)

**15** $^d$) =16$^d$ M$_1$ हि भू°, M$_2$ [अ]भिभू (for भव) T$_2$ G$_{2-4}$ तस्मात्किं भविता भय

**16** S$_1$ K$_{1,2}$ D$_{1,5}$ om (hapl) 16 — $^a$) T$_1$ रक्षामि, T$_2$ (before corr) G$_4$ M वक्ष्यामि; G$_{1,2}$ रक्ष्यामि (for वहिष्ये) — $^b$) K$_3$ शक्ष्यते, Dc T$_{1,2}$ (before corr) G$_{1,4}$ शक्यते — $^d$) =15$^d$ M$_1$ हि भू°, M$_2$ [अ]भिभू (for भव)

**17** $^a$) T$_2$ G$_{2-4}$ महावीर्यौ (for तथा वीरौ) — $^b$)

युधिष्ठिर उवाच ।

एवं ते भाषमाणस्य बलं भीमाभिवर्धताम् ।
यस्त्वमुत्सहसे वोढुं द्रौपदीं विपुलेऽध्वनि ॥ १८
यमजौ चापि भद्रं ते नैतदन्यत्र विद्यते ।
बलं च ते यशश्चैव धर्मः कीर्तिश्च वर्धताम् ॥ १९
यस्त्वमुत्सहसे नेतुं भ्रातरौ सह कृष्णया ।
मा ते ग्लानिर्महाबाहो मा च तेऽस्तु पराभवः ॥ २०

वैशंपायन उवाच ।

ततः कृष्णाब्रवीद्वाक्यं प्रहसन्ती मनोरमा ।
गमिष्यामि न संतापः कार्यो मां प्रति भारत ॥ २१

लोमश उवाच ।

तपसा शक्यते गन्तुं पर्वतो गन्धमादनः ।
तपसा चैव कौन्तेय सर्वे योक्ष्यामहे वयम् ॥ २२
नकुलः सहदेवश्च भीमसेनश्च पार्थिव ।
अहं च त्वं च कौन्तेय द्रक्ष्यामः श्वेतवाहनम् ॥ २३

वैशंपायन उवाच ।

एवं संभाषमाणास्ते सुबाहोर्विषयं महत् ।
ददृशुर्मुदिता राजन्प्रभूतगजवाजिमत् ॥ २४
किराततङ्गणाकीर्णं कुणिन्दशतसंकुलम् ।
हिमवत्यमरैर्जुष्टं बह्वाश्चर्यसमाकुलम् ॥ २५
सुबाहुश्चापि तान्दृष्ट्वा पूजया प्रत्यगृह्णत ।
विषयान्ते कुणिन्दानामीश्वरः प्रीतिपूर्वकम् ॥ २६
तत्र ते पूजितास्तेन सर्व एव सुखोषिताः ।
प्रतस्थुर्विमले सूर्ये हिमवन्तं गिरिं प्रति ॥ २७
इन्द्रसेनमुखांश्चैव भृत्यान्पौरोगवांस्तथा ।
सूदांश्च परिबर्हं च द्रौपद्याः सर्वशो नृप ॥ २८

---

K₃ ₅ M₁ माद्रीनंदकरौ, D₅ ममानंद॰, T G माद्र्यानंद॰ B₄ S (except G₁ ₂) [द्व]मौ (for [ड]भौ) — ᵈ) B₁ ₃ Dn D₄ ₆ T₂ G₃ यत्रा (for यद्य॰)

**18** ᵃ) Cf 20ᵃ K₃ B Dn D₄₋₆ T₂ G₃ यत् (for यस्) B₄m D₁₋₃ नेतु (for वोढु) — ᵈ) D₆ पाचालीं (for द्रौपदीं) Ś₁ K₃ ₄ विषमे (for विपुले) B₂ Dn D₄ ₆ पाचालीं च यशस्विनीं; B₃ द्रौपदीं विपुलेक्षणा, B₄m भ्रातरौ सह कृष्णया; D₅ द्रौपदीं विषमेष्वपि

**19** ᵇ) Ś₁ K D₁ ₃ ₅ अन्यस्य (for अन्यत्र) Ś₁ K₃ वर्धते (for विद्य॰) — ᶜ) B₃ ₄ Dn D₄ ₆ तव (for च ते)

**20** ᵃ) Cf 18ᵃ B Dn D₄ ₆ G₁ यत् (for यस्) Ś₁ K₁ ₂ B₃ वोढु (for नेतु) — ᵇ) K₃ द्रौपदीं विपुलेऽध्वनि (=18ᵈ), D₁ ₂ भ्रातरौ कृष्णया सह — ᵈ) M₂ परिश्रम (for परा॰)

**21** ᵇ) Ś₁ K Dc D₁₋₃ ₅ मनोरम, B₄ मनोहरा — ᶜ) T₁ G₁ सदेह (for ॰ताप॰)

**22** ᵇ) Ś₁ K₁ ₂ D₁ ₂ पर्वते ॰मादने, B Dc Dn D₃₋₆ पर्वत ॰मादन — B₃ om 22ᶜ–25ᵇ

**23** B₃ om 23 (cf v l 22) — ᵇ) S पाण्डव (for पार्थिव)

**24** B₃ om 24 (cf v l 22) K₄ G₃ ₄ om the ref — ᵇ) Ś₁ K D₁₋₃ ₅ सुबाहोर्नगरं, B Dn D₄ ₆ सुबाहु विषय॰ — ᶜ) T₁ विविशुर्, G₁ प्रासाश्च (for ददृशुर्)

**25** B₃ om 25ᵃᵇ (cf v l 22) — ᵃ) K₁ ₂ B₁ D₅ किराततक(B₁ ॰ङ्ग)णाकीर्णं, K₄ किराततगणसंकीर्णं, D₁ ₂ T G₂₋₄ M₂ त किराततगणा(G₄ ॰दाता)कीर्णं, G₁ M₁ तत्किरात गणा॰ — ᵇ) Ś₁ K₃ B₁ Dc कुलिंद॰, K₁ ₂ B₂ ₄ Dn D₃₋₆ पुलिंद (for कुणिन्द॰) — D₃ M₁ om (hapl) 25ᶜᵈ — ᶜ) Ś₁ K₁ ₂ हिमवत्यचले जुष्टं, D₁ ₂ ₄ ॰वत्परमैर्जुष्टं, G₁ ॰वत्त्रिदशैर्जुष्टं — ᵈ) G₃ समन्वितं

**26** ᵇ) Dc प्रत्यपूजयत, B₃ D₂ ₃ प्रत्यगृह्णत D₁ पूजयामास भारत — ᶜ) Ś₁ K₂ ₃ B₁ ₃ Dc Dn D₃₋₆ G₄ कुलिंदाना, K₁ B₂ ₄ T₂ (by corr) G₃ पुलिंदाना M₂ वमश्वमिति चोवाच

**27** ᵃ) B₂₋₄ D (except D₁₋₃ ₅) M₂ ततस् (for तत्र)

**28** ᵃ) B₁₋₃ Dn D₄ ₆ M₂ चापि (for चैव) — ᶜ) Cf 4ᶜ, 10ᶜ Ś₁ K₁₋₃ T₂ G₂ ₃ M₂ सूतांश्च (for सूदांश्च) Ś₁ K₂ B₃ पारिबर्हं, K₄ D₁₋₃ परिचारान्; B₁ ₄ Dc Dn D₄₋₆ T₁ G₄ पा(B₁ Dc₂ D₄ T₁ प)रिबर्हान् — ᵈ) Ś₁ सहसो (for सर्वशो) M₂ तथा (for नृप) T G M₁ द्रौपद्या सर्वमेव हि (T₁ G₁ च)

**29** ᵃ) M₂ रथान् (for राज॰) Ś₁ K₂ B Dc Dn D₄ ₅ कुलिंदाधिपते, K₁ D₃ पुलिंदा॰; D₆ कुलिंदनृपते॰ — ᶜ) Ś₁ K₁ ₂ महावीरा

**30** G₄ om 30 — ᵇ) B₁ ₃ कृष्णामादाय पाण्डवा॰ — ᶜ) T₁ ₂ (before corr) G₁ ₂ तस्मिन्देशे (for तस्माद्देशात्) K₂ ₃ Dc₂ D₁₋₃ ₅ समहृष्टा

Colophon — *Major parvan* Ś₁ K₁ Dn₂ T G₂₋₄ M₁ आरण्य — *Sub parvan* D₂ ₃ M₂ तीर्थयात्रा

राज्ञः कुणिन्दाधिपतेः परिदाय महारथाः ।
पद्भिरेव महावीर्या ययुः कौरवनन्दनाः ॥ २९
ते शनैः प्राद्रवन्सर्वे कृष्णया सह पाण्डवाः ।
तस्माद्देशात्सुसंहृष्टा द्रष्टुकामा धनंजयम् ॥ ३०

इति श्रीमहाभारते आरण्यकपर्वणि एकचत्वारिंशदधिकशततमोऽध्यायः ॥ १४१ ॥

# १४२

युधिष्ठिर उवाच ।
भीमसेन यमौ चोभौ पाञ्चालि च निबोधत ।
नास्ति भूतस्य नाशो वै पश्यतास्मान्वनेचरान् ॥ १
दुर्बलाः क्लेशिताः स्मेति यद्ब्रवीथेतरेतरम् ।
अशक्येऽपि व्रजामेति धनंजयदिदृक्षया ॥ २
तन्मे दहति गात्राणि तूलराशिमिवानलः ।
यच्च वीरं न पश्यामि धनंजयमुपान्तिके ॥ ३
तस्य दर्शनतृष्णं मां सानुजं वनमास्थितम् ।
याज्ञसेन्याः परामर्शः स च वीर दहत्युत ॥ ४
नकुलात्पूर्वजं पार्थं न पश्याम्यमितौजसम् ।
अजेयमुग्रधन्वानं तेन तप्ये वृकोदर ॥ ५
तीर्थानि चैव रम्याणि वनानि च सरांसि च ।
चरामि सह युष्माभिस्तस्य दर्शनकाङ्क्षया ॥ ६
पञ्च वर्षाण्यहं वीरं सत्यसंधं धनंजयम् ।
यन्न पश्यामि बीभत्सुं तेन तप्ये वृकोदर ॥ ७
तं वै श्यामं गुडाकेशं सिंहविक्रान्तगामिनम् ।
न पश्यामि महाबाहुं तेन तप्ये वृकोदर ॥ ८
कृतास्त्रं निपुणं युद्धे प्रतिमानं धनुष्मताम् ।

---

(followed by गधमादनप्रवेश in D2 3) K1 D1 5 (all om sub-parvan name) mention only लोमशतीर्थयात्रा, followed by गन्धमादनप्रवेश, and K3 4 B Dc Dn1 n3 D4 6, likewise, only गधमादनप्रवेश — *Adhy name* T2 G3 परिवर्हनिवर्तन — *Adhy no* (figures, words or both) K1 Dn3 M1 140, Dn1 n3 139, D1 148, T G 143, M2 145 — *Śloka no* Dn1 D1 29, Dn2 n3 30

## 142

**1** B3 om $1^{ab}$ — $^{a}$) S (except M2) चैव (for चोभौ) — $^{b}$) Ś1 K1 2 निबोध मे — $^{c}$) T2 G3 4 दु खस्य (for भूत°)

**2** $^{a}$) S1 K3 D1-3 5 दुर्बले° (for ला°) Ś1 K1 2 स्मेह (for स्मेति) — $^{b}$) K1 B1m 2 Dn2 D4 6 T2 (after corr) G3 यद्ब्रु(B2 °ब्रू)वामे, K3 D1-3 5 यद्ब्रूम ह, K4 गच्छाम ह, Dn1 यद्ब्रहामे°, Dn3 यद्ब्रजामे, T1 2 (before corr) G4 यद्ब्रवीते (for यद्ब्रवीथे°) Ś1 K2 यद्ब्रूया योग मात्मन, B1 3 4 Dc यद्ब्रूतान्योन्यमात्मना — $^{c}$) K4 अश क्येस्मिन्, G1 अशक्योपि Ś1 K2 G4 व्रजामि, K1 3 4 B D व्रजाम (for व्रजाम) K1 3 4 Dc D2 3 [अ]त्र, B Dn D1 4 6 यत्, D5 [अ]त्र (for [इ]ति) — $^{d}$) B4 °दिदृक्षव

**3** $^{d}$) B1-3 Dn D4 6 उपातिकात् B3 फाल्गुन तमि हागत

**4** $^{a}$) Ś1 K2 D1 2 °तृष्णार्तं, K1 तृष्णात, K3 4 तृष्णा मा, B2 °तृष्ण वै, B3 °दृष्ट मा, D3 °तुष्टया मा S तस्यादर्श नतप्त मा — $^{b}$) Ś1 K1 2 D1 सानुजो, and आस्थित B3 T2 G2-4 आश्रित (for आस्थितम्) — $^{d}$) T1 G1 ह (for च) T1 G1 वीरा, G2 वीरान (for वीर) D5 [अ]दहत्पुरा (for °त्युत) D1 2 तेन तप्ये वृकोदर (= $5^{d}$)

**5** $^{a}$) T2 G2-4 बाल (for पार्थं) — $^{b}$) Ś1 K B4 D1-3 5 M2 श्वेताश्वम् (for न पश्यामि) — $^{c}$) S1 K1-3 D1-3 5 यच्च पश्यामि बीभत्सु; K4 न व पश्यामि त येन — $5^{d}=7^{d}$

**6** G2 M2 om (hapl ) 6-7 K3 D2 3 transp 6 and 7 — $^{a}$) T1 तत्तीर्थान्याचरिष्यामि, T2 G1 3 4 M1 तीर्थानि च चरिष्यामि

**7** G2 M2 om 7 (cf v l 6) K3 D2 3 transp 6 and 7 — $^{b}$) S1 K मत्तमातगगामिन — $7^{d}=5^{d}$

**8** K2 D5 G4 M2 om (hapl ) 8, K4 D2 G1 2 M1 om (hapl ) 8-9

**9** K4 D3 G1 2 M1 om 9 (cf v l 8) — $^{c}$) K1 B4 D3 नरश्रेष्ठ, K2 B1-3 Dn D4-6 कुरुश्रेष्ठ (K2 Dn1 n3 D4 °ष्ठ), K3 धनु श्रेष्ठ

न पश्यामि नरश्रेष्ठ तेन तप्ये वृकोदर ॥ ९
चरन्तमरिसंघेषु काल क्रुद्धमिवान्तकम् ।
प्रभिन्नमिव मातङ्गं सिंहस्कन्धं धनंजयम् ॥ १०
यः स शक्रादनवरो वीर्येण द्रविणेन च ।
यमयोः पूर्वजः पार्थः श्वेताश्वोऽमितविक्रमः ॥ ११
दुःखेन महताविष्टः स्वकृतेनानिवर्तिना ।
अजेयमुग्रधन्वानं तं न पश्यामि फल्गुनम् ॥ १२
सततं यः क्षमाशीलः क्षिप्यमाणोऽप्यणीयसा ।
ऋजुमार्गप्रपन्नस्य शर्मदाताभयस्य च ॥ १३
स तु जिह्मप्रवृत्तस्य माययाभिजिघांसतः ।
अपि वज्रधरस्यापि भवेत्कालविषोपमः ॥ १४
शत्रोरपि प्रपन्नस्य सोऽनृशंसः प्रतापवान् ।
दाताभयस्य बीभत्सुरमितात्मा महाबलः ॥ १५
सर्वेषामाश्रयोऽस्माकं रणेऽरीणां प्रमर्दिता ।
आहर्ता सर्वरत्नानां सर्वेषां नः सुखावहः ॥ १६
रत्नानि यस्य वीर्येण दिव्यान्यासन्पुरा मम ।
बहूनि बहुजातानि यानि प्राप्तः सुयोधनः ॥ १७
यस्य बाहुबलाद्वीर सभा चासीत्पुरा मम ।
सर्वरत्नमयी ख्याता त्रिषु लोकेषु पाण्डव ॥ १८
वासुदेवसमं वीर्ये कार्तवीर्यसमं युधि ।
अजेयमजितं युद्धे तं न पश्यामि फल्गुनम् ॥ १९
संकर्षणं महावीर्यं त्वां च भीमापराजितम् ।
अनुजातः स वीर्येण वासुदेवं च शत्रुहा ॥ २०
यस्य बाहुबले तुल्यः प्रभावे च पुरंदरः ।
जवे वायुर्मुखे सोमः क्रोधे मृत्युः सनातनः ॥ २१
ते वयं तं नरव्याघ्रं सर्वे वीर दिदृक्षवः ।

---

**10** b) B2-4 D (except Dc) काले (for काल) S क्रुद्ध कालमिवानघ — G3 om 10cd

**11** a) Dn2 D3 om स D5 तु (for स) S °वमो (for वरो) — b) K4 S च बलेन, Dc2 विनयेन (for द्रवि°) — After 11, S (except M3) ins

681* नारायणसमो युद्धे सत्यसंधो दृढव्रत ।
त ममापश्यतो भीम न शान्तिर्हृदयस्य वै ।

[(L 2) M1 अपश्यतोऽद्य त (for त ममापश्यतो) T1 G1 M1 मे (for वै)]

**12** b) K1 [अ]नवर्तिन, K4 G1[अ]नुवर्तिना; D1 [अ]भिवर्तिना, D3 T1 [अ]तिवर्तिना, M1 निवर्तिना (for [अ]निवर्तिना) B Dc Dn D4 6 M1 त न पश्यामि फा(M1 फ)ल्गुन; G3 चिंतयामि दिवानिशं — S (except M1) om 12cd — d) D1 2 न त (by transp) Ś1 K1 फल्गुण, K3 4 D1-3 फाल्गुन (for फ) B Dc Dn D4-6 तेन तप्ये वृकोदर (= 7d, 8d 9d)

**13** a) T1 G1 2 च, T2 G3 4 तु (for य) — c) T G ऋजुरार्त (T1 तं); M1 रार्ति (for मार्ग) B4 M2 प्रवृत्तस्य (for प्रपन्नस्य) — K4 om (hapl) 13d–15a — d) Ś1 K (K4 om) Dc Dn3 D1-3 5 भयेषु (for [अ]भयस्य) K3 Dc D3 य°, B4 T1 G1 M2 वै, D5 स (for च)

**14** K4 om 14 (cf v l 13), Ś1 K1 2 om (hapl) 14b–15a — b) T2 G3 4 [अ]प, G2 [अ]पि, M1 वि (for [अ]भि) T2 G2 3 जिघासक — c) K3 Dc D1-3 5 [आ]जौ, T2 G2-4 [अ]थ (for the second [अ]पि)

**15** S1 K1 2 4 om 15a (cf v l 13, 14) — a) K3 B1 D1-3 5 T1 G1 M सुरैर्, T2 G2-4 अरेर् (for शत्रोर्) K3 अभ्यपिप, D5 अप्यभिप° (for अपि प्रप°) — b) Ś1 K1 2 स्वा(Ś1 स्व)नृशस्य, K3 स्वानृशस्यात्, K4 नृशसस्य, Dc योनृशस — d) T G अदीनात्मा (for अमितात्मा)

**16** G4 om 16ab — a) Ś1 K B3 Dc D1-3 सश्रयो; D5 मश्रये (for आश्रयो)

**17** ab) S1 सर्वाणि (for रत्नानि) K1 2 transp रत्नानि and दिव्यानि Ś1 रत्नानि, Dn2 दिग्भ्यश्च, T G3 4 दीप्तानि (for दिव्यानि) — c) B2-4 D (except D3) G1 4 बहुजातीनि — d) Ś1 K प्राप (for प्राप्त)

**19** G4 om 19ab — c) B Dn D4 6 अमित (for अजित) — d) D3 M न त (by transp) N (except Ś1 K1 2 B1) फाल्गुन

**20** c) K4 B D (except D3 5) M2 अनुयात K3 B D (except D1 2 5) G1 M2 स्व, K4 तु (for स) T2 G3 अनुजातस्य वीर्येण

**21** B3 om 21ab — a) T G3 4 M2 तस्य, G2 ना° (for य°) — b) S1 B1 2 Dc D1-3 5 M2 स्वभावे (for प्र) Ś1 K1 2 D1-3 5 वा (for च)

**22** a) T1 G1 वय चैते (for ते वय त) K1 ते; B1 हि; Dc तु (for त) — b) B1 3 Dc D5 T2 G1 3 4 M वीर, D3 वीरा (for वीर) D1 2 G2 दिदृक्षया — c) Ś1 प्रवेक्ष्यावो, B1 T1 G1 4 क्ष्याम

प्रवेक्ष्यामो महाबाहो पर्वतं गन्धमादनम् ॥ २२
विशाला बदरी यत्र नरनारायणाश्रमः ।
तं सदाध्युषितं यक्षैर्द्रक्ष्यामो गिरिमुत्तमम् ॥ २३
कुबेरनलिनीं रम्यां राक्षसैरभिरक्षिताम् ।
पद्भिरेव गमिष्यामस्तप्यमाना महत्तपः ॥ २४
नातप्ततपसा शक्यो देशो गन्तुं वृकोदर ।
न नृशंसेन लुब्धेन नाप्रशान्तेन भारत ॥ २५
तत्र सर्वे गमिष्यामो भीमार्जुनपदैषिणः ।
सायुधा बद्धनिस्त्रिंशाः सह विप्रैर्महाव्रतैः ॥ २६
मक्षिकान्मशकान्दंशान्व्याघ्रान्सिंहान्सरीसृपान् ।
प्राप्नोत्यनियतः पार्थ नियतस्तान्न पश्यति ॥ २७
ते वयं नियतात्मानः पर्वतं गन्धमादनम् ।
प्रवेक्ष्यामो मिताहारा धनंजयदिदृक्षवः ॥ २८

इति श्रीमहाभारते आरण्यकपर्वणि द्विचत्वारिंशदधिकशततमोऽध्यायः ॥ १४२ ॥

# १४३

वैशंपायन उवाच ।
ते शूरास्ततधन्वानस्तूणवन्तः समार्गणाः ।
बद्धगोधाङ्गुलित्राणाः खड्गवन्तोऽमितौजसः ॥ १
परिगृह्य द्विजश्रेष्ठाञ्श्रेष्ठाः सर्वधनुष्मताम् ।
पाञ्चालीसहिता राजन्प्रययुर्गन्धमादनम् ॥ २
सरांसि सरितश्चैव पर्वतांश्च वनानि च ।

---

**23** $^{ab}$) T2 G1 3 विशालबदरी Ś1 K D1–3 5 M1 यत्र (for नर, K3 D3 om [hapl] one यत्र) — $^{d}$) Ś1 K1 3 D5 द्रक्ष्यामि
**24** $^{b}$) Dn D4–6 अभिसेविता, G अभिसवृता — $^{c}$) Ś1 K1 2 पद्भ्यायाम् (for पद्भिर्), and ष्यामि (for °ष्यामस्) — $^{d}$) S1 K1 2 Dc तप्यमानो
**25** $^{ab}$) K3 4 B Dc Dn D3–6 T1 M न स (Dc2 Dn D4 6 च) यानवता, D1 2 न मया भवता, G1 मनसा भवता (for नातप्त°) Ś1 K1 2 शक्य (for शक्यो) M1 transp शक्यो and गन्तु Ś1 K1 2 देश गतु, B1–3 Dn D4 6 गतु देशो (by transp) Dc कथचन (for वृको°) — $^{c}$) G4 नृशसेन च लु
**26** $^{a}$) M तत° (for तत्र) — $^{b}$) B1–3 D (except D1–3 5) °गवे° (for °पदै°) — G4 om 26$^{cd}$ — $^{d}$) B2–4 Dn D4 6 साधं (for सह) S1 K B4 D1–3 5 M2 महात्मभि (for °व्रतै)
**27** $^{a}$) K3 4 B D (except D1–3 5) मक्षिका (for °कान्) S1 K2 पक्षिकान्दशान्, B Dn D4 6 दशमशकान् (for मशकान्दशान्) — $^{b}$) Ś1 K2 D1 2 सिंहव्याघ्रान्; K1 4 Dn D4 6 सिंहान्व्याघ्रान् (by transp), K3 सिंहा न्व्याघ्र, B4 Dc D5 सिंहव्याघ्र°, D3 ऋक्षान्व्याघ्रान् — $^{d}$) Ś1 K2 नियमस् (for नियतस्) T1 G4 तन् (for तान्) T1 निधावति (for न पश्यति)

**28** $^{a}$) S1 K1 प्रयतात्मान°, T1 G4 M1 सयता°; G1 सहिता°, G2 सशिता° — $^{d}$) K Dn1 D1–3 T1 G1 °दिदृक्षया

Colophon — *Major parvan* S1 K1 2 T G2–4 M1 आरण्य — *Sub parvan* K3 4 B D T2 G3 (all om sub parvan name) mention only गधमादनप्रवेश (D1 लोमशतीर्थयात्रा, followed by गधमादनप्रवेश; D5 T2 G3 गधमादन) — *Adhy no* (figures, words or both) Dn 140 (Dn3 141), D1 149, S 144 (M2 146) — *Śloka no* Dn D1 28

☞ After adhy 142, B D (except D1–3) ins an addl adhy given in App I (No 16)

## 143

**1** $^{a}$) K3 4 D4 S (except G4 M2) वीरा°, D5 शूल (for शूरा°) Dn3 बद्धधन्वान, D5 वरध, T1 पाडवा राजन्; T2 G2–4 सज्जध°, G1 समवर्तत, M आत्तध° (for ततध°) — $^{b}$) T1 M तुणा°, T2 G2–4 तूणी° (for तूण°)
**2** After 2$^{a}$, D3 reads 4$^{b}$–5$^{c}$ for the first time, *repeating* the lines in their proper place — $^{b}$) Dn1 n3 ज्येष्ठा° (for श्रेष्ठा) — D5 om 2$^{cd}$
**3** T1 om 3$^{c}$–4$^{f}$ G4 om 3$^{ef}$ — $^{e}$) T2 G (G4

वृक्षांश्च बहुलच्छायान्ददृशुर्गिरिमूर्धनि ।
नित्यपुष्पफलान्देशान्देवर्षिगणसेवितान् ॥ ३
आत्मन्यात्मानमाधाय वीरा मूलफलाशनाः ।
चेरुरुच्चावचाकारान्देशान्विषमसंकटान् ।
पश्यन्तो मृगजातानि बहूनि विविधानि च ॥ ४
ऋषिसिद्धामरयुतं गन्धर्वाप्सरसां प्रियम् ।
विविशुस्ते महात्मानः किंनराचरितं गिरिम् ॥ ५
प्रविशत्स्वथ वीरेषु पर्वतं गन्धमादनम् ।
चण्डवातं महद्वर्षं प्रादुरासीद्विशां पते ॥ ६
ततो रेणुः समुद्भूतः सपत्रबहुलो महान् ।
पृथिवीं चान्तरिक्षं च द्यां चैव तमसावृणोत् ॥ ७
न स्म प्रज्ञायते किंचिदावृते व्योम्नि रेणुना ।
न चापि शेकुस्ते कर्तुमन्योन्यस्याभिभाषणम् ॥ ८
न चापश्यन्त तेऽन्योन्यं तमसा हतचक्षुषः ।
आकृष्यमाणा वातेन साश्मचूर्णेन भारत ॥ ९
द्रुमाणां वातभग्नानां पतता भूतले भृशम् ।
अन्येषां च महीजानां शब्दः समभवन्महान् ॥ १०
द्यौः स्वित्पतति किं भूमौ दीर्यन्ते पर्वता नु किम् ।
इति ते मेनिरे सर्वे पवनेन विमोहिताः ॥ ११
ते यथानन्तरान्वृक्षान्वल्मीकान्विषमाणि च ।
पाणिभिः परिमार्गन्तो भीता वायोर्निलिलियिरे ॥ १२
ततः कार्मुकमुद्यम्य भीमसेनो महाबलः ।
कृष्णामादाय संगत्या तस्थावाश्रित्य पादपम् ॥ १३
धर्मराजश्च धौम्यश्च निलिल्याते महावने ।
अग्निहोत्राण्युपादाय सहदेवस्तु पर्वते ॥ १४
नकुलो ब्राह्मणाश्चान्ये लोमशश्च महातपाः ।
वृक्षानासाद्य संत्रस्तास्तत्र तत्र निलिल्यिरे ॥ १५
मन्दीभूते च पवने तस्मिन्रजसि शाम्यति ।
महद्भिः पृषतैस्तूर्णं वर्षमभ्याजगाम ह ॥ १६
ततोऽश्मसहिता धाराः संवृण्वन्त्यः समन्ततः ।

---

om ) दिव्य ( for नित्य ) Dc T2 G2 3 फलोपेतान् ( for °फलान्देशान् ) — f ) Ś1 K1 2 देवगधर्व°

**4** T1 om 4 (cf v l 3) — b ) Ś1 K1 2 D (except D1-3) °शिन ( for शना ) — d ) Ś1 K1 2 D1 2 त्रिपथ ( for विषम ) B1 (m as in text) 3 S (T1 om ) °कटकान् ( for सङ्कटान् ) — e ) D1 2 4 6 मृगजातीनि, D3 °यूथानि, D5 °जालानि — f ) M त्रिविधानि बहूनि च

**5** d ) T2 G3 शिर, G4 शुभ ( for गिरिम् ) Ś1 K D1-3 5 हिमवत महागिरिं

**6** a ) K3 च; D1 [अ]पि; T1 G1 [ए]व ( for [अ]थ ) — c ) K4 T1 G1 महावर्षं — d ) Ś1 K1 मही ( for विशा )

**7** a ) Ś1 G2 M समुद्भूत° — c ) B2-4 चातरीक्ष, T2 G3 4 अतरिक्ष (om च) — d ) T1 दिशश्च ( for द्या चैव ) B Dc Dn D4 6 T2 G3 सहसा ( for तमसा ) Ś1 K D3 5 दिशश्चैव समावृणोत्

**8** a ) T1 स , G2 च, G4 तस् ( for स्म ) — c ) B4 D (except D1-3 5) तस् ( for ते ) — d ) Dc अन्योन्य प्रति; T G3 अन्योन्यस्यापि ( for स्याभि )

**9** a ) K3 B Dn D4-6 [अ]पश्यस्ततो , K4 Dc [अ]पश्यश्च ते ( for [अ]पश्यन्त ते ) S (except M2) न चान्योन्यमपश्यत ( T1 G1 त ) — b ) B D (except D1 2) [आ]वृत° ( for हत ) — c ) Ś1 K1 3 4 आक्रम्यमाणा; D1 प्रसृष ; D2 प्रमृष्य , D3 प्रसृज्य — d ) D5 G1 M2 साश्मपूर्णेन

**10** b ) N (except D3) M2 [ऽ]निश ( for भृशम् )

**11** a ) B1 किं पतता ( for पतति किं ) B2-4 D (except D1-3 5) M भूमिर् ( for भूमौ ) — b ) B2 Dn D4 6 T2 G3 दीर्यंते पर्वतो Ś1 K D5 ध्रुव, M1 च किं ( for नु किम् ) — d ) B D4 6 [अ]भि , Dn [अ]पि ( for वि )

**12** a ) D5 तद् ( for ते ) K3 B Dc D6 पथा ( for यथा° )

**13** a ) B Dc1 Dn D4 6 आदाय ( for उद्यम्य ) — c ) T2 G3 4 आगम्य ( for आदाय ) B D (except D1-3) G4 सगम्य; T2 G2 3 M2 त्य ( for त्या ) — d ) Dn2 n3 तथा चाश्रित्य ( for तस्थावा° ) Ś1 K1 2 पादपान्

**14** b ) Ś1 K1 2 B4 त्रिलिल्याते — d ) B1 2 M2 च ( for तु ) Dn D4 6 पर्वत

**15** c ) D2 3 आश्रित्य ( for आसाद्य ) M1 सत्रासात् ( for सत्रस्तास् ) — d ) Ś1 K1 2 वि° ( for नि )

**16** a ) K3 4 B4 D (except D1-3) तु , B2 [ऽ]थ ( for च ) — c ) T2 G2-4 M1 पूर्गं ( for तूर्णं ) B Dn D4 6 महद्भिर्जलधारौघै ( B1 °धाराभि ) — After 16, Ś1 K Dn D3 5 ins

682* भृश चटचटाशब्दो वज्राणा क्षिप्यतामिव ।
ततस्ता चञ्चलाभासश्चेरुरभ्रे च विद्युत ।

प्रपेतुरनिशं तत्र शीघ्रवातसमीरिताः ॥ १७

ततः सागरगा आपः कीर्यमाणाः समन्ततः ।
प्रादुरासन्सकलुषाः फेनवत्यो विशां पते ॥ १८

वहन्त्यो वारि बहुलं फेनोडुपपरिप्लुतम् ।
परिसस्रुर्महाशब्दाः प्रकर्षन्त्यो महीरुहान् ॥ १९

तस्मिन्नुपरते वर्षे वाते च समतां गते ।
गते ह्यम्भसि निम्नानि प्रादुर्भूते दिवाकरे ॥ २०

निर्जग्मुस्ते शनैः सर्वे समाजग्मुश्च भारत ।
प्रतस्थुश्च पुनर्वीराः पर्वतं गन्धमादनम् ॥ २१

इति श्रीमहाभारते आरण्यकपर्वणि त्रिचत्वारिंशदधिकशततमोऽध्यायः ॥ १४३ ॥

# १४४

वैशंपायन उवाच ।

ततः प्रयातमात्रेषु पाण्डवेषु महात्मसु ।
पद्भ्यामनुचिता गन्तुं द्रौपदी समुपाविशत् ॥ १

श्रान्ता दुःखपरीता च वातवर्षेण तेन च ।
सौकुमार्याच्च पाञ्चाली संमुमोह यशस्विनी ॥ २

सा पात्यमाना मोहेन बाहुभ्यामसितेक्षणा ।
वृत्ताभ्यामनुरूपाभ्यामूरू समवलम्बत ॥ ३

आलम्बमाना सहितावूरू गजकरोपमौ ।
पपात सहसा भूमौ वेपन्ती कदली यथा ॥ ४

तां पतन्तीं वरारोहां सज्जमानां लतामिव ।
नकुलः समभिद्रुत्य परिजग्राह वीर्यवान् ॥ ५

नकुल उवाच ।

---

[ (L 1) $K_1$ क्षपितामिव, $K_4$ $D_8$ पतता° ]

**17** $G_4$ om (hapl) $17^c$–$18^b$ — $^c$) $D_2$ $G_3$ नि- (for प्र) $T_1$ $G_1$ अशनीस (for अनिश) $Ś_1$ K $D_0$ $D_{2, 3, 5}$ राजन् (for तत्र) — $^d$) $S_1$ K $D_0$ $D_{2, 3, 5}$ तीव्र-वात°, $T_2$ $G_3$ दीर्घवायु°, $G_2$ खरवायु°

**18** $G_4$ om $18^{ab}$ (cf v l 17) — $^a$) $K_4$ $D_{01}$ Dn $D_{4, 6}$ तत्र (for तत) $T_2$ $G_{2, 3}$ ह्याप (for आप°) $Ś_1$ $K_{1, 2}$ ततस्ता° सागरा ह्याप, $G_1$ सतता सागरा ह्याप — $^b$) $Ś_1$ $K_{1-3}$ $D_5$ M किर° (for कीर्य) — $^c$) $D_{4, 6}$ सुकलुषा ; $G_1$ सकलमाषा°

**19** $^a$) $Ś_1$ $K_{1, 2}$ विपुल (for बहुल) — $^b$) $K_1$ फेनोत्तप, $D_1$ फेनोद्रुम, $T_1$ फेनोडुश्च, $G_1$ $M_2$ फेनोडु च $Ś_1$ $K_{1, 2}$ परिष्कृत, $T_1$ परिच्छद (for परिप्लुतम्) — $^c$) $T_1$ परिवव्रुर्, $G_2$ °पूर्णा $K_4$ $G_3$ महानद्य°, $D_0$ °तेजा° — $^d$) S महाद्रुमान् (for मही°)

**20** $^a$) $S_1$ $K_1$ B Dn $D_{4, 6}$ $M_2$ शब्दे (for वर्षे) — $^c$) $K_{1, 3}$ गर्भे (for °ते) $Ś_1$ K $B_2$ $D_0$ $D_{1, 2, 5}$ गतेंभसि च (for गते °म्भसि) $D_3$ S व्यपयाते च पानीये

**21** $^a$) $B_2$ तत° (for शनै°) $D_3$ S सम्रा(D3 $T_1$ $M_1$ °प्र)ह(T2 $G_{3, 4}$ °प)श्यत ते सर्वे — $^c$) B Dn $D_{4, 6}$ प्रत-स्थिरे ($B_2$ °स्थुस्ते) $K_4$ महावीरा $T_2$ $G_{2-4}$ प्रतस्थुर्मुदिता ($G_2$ °स्थु° सहिता) वीरा — $^d$) S महिता ($G_3$ मुदिता) (for पर्वत)

Colophon — *Major parvan* $Ś_1$ $K_{1, 2}$ $Dn_2$ T $G_{2-4}$ आरण्य — *Sub parvan* $K_{3, 4}$ B $D_0$ $Dn_1$ $n_2$ $D_{1-5}$ $T_2$ $G_3$ $M_1$ (all om sub parvan name) mention only गंधमादनप्रवेश ($D_{1, 5}$ लोमशतीर्थयात्रा, followed by गंधमादनप्रवेश) — *Adhy no* (figures, words or both) Dn 142 ($Dn_2$ 143 as in text), $D_1$ 150, S 145 ($M_2$ 147) — *Śloka no* Dn 23, $D_1$ 22

## 144

**1** $^a$) $D_2$ °मात्रेण, $D_3$ मात्रे तु (for मात्रेषु) $K_1$ B $D_0$ Dn $D_{4, 6}$ क्रोशमात्रं प्रयातेषु, T G तत प्रयाता मार्गेषु — $1^b$=1 132 $1^b$, 157 $1^b$, 198 $25^b$, 205 $4^b$ 4 28 $5^b$, etc

**2** $^b$) $S_1$ K $D_0$ $D_{1-3, 5}$ चा(K1 म)र्दिता (for तेन च) — $^c$) $D_0$ हि (for च) $T_1$ पाचाली तु वरारोहा — $^d$) $B_1$ T $G_{1-3}$ सा (for सं) B D (except $D_{1-3, 5}$) तप° (for यश°)

**3** $^a$) $K_4$ पीड्यमाना, Dn $D_4$ कप°

**4** $^a$) $T_2$ $G_{3, 4}$ सा भीता (for सहितौ) — $^b$) $G_2$ करि (for गज°)

**5** $^b$) $K_{1, 2}$ B D (except $D_{1-3}$) $T_2$ $G_{2-4}$ भज्य° (B1

राजन्पाञ्चालराजस्य सुतेयमसितेक्षणा ।
श्रान्ता निपतिता भूमौ तामवेक्षस्व भारत ॥ ६
अदुःखार्हा परं दुःखं प्राप्तेयं मृदुगामिनी ।
आश्वासय महाराज तामिमां श्रमकर्शिताम् ॥ ७

वैशंपायन उवाच ।

राजा तु वचनात्तस्य भृशं दुःखसमन्वितः ।
भीमश्च सहदेवश्च सहसा समुपाद्रवन् ॥ ८
तामवेक्ष्य तु कौन्तेयो विवर्णवदनां कृशाम् ।
अङ्कमानीय धर्मात्मा पर्यदेवयदातुरः ॥ ९
कथं वेश्मसु गुप्तेषु स्वास्तीर्णशयनोचिता ।
शेते निपतिता भूमौ सुखार्हा वरवर्णिनी ॥ १०
सुकुमारौ कथं पादौ मुखं च कमलप्रभम् ।
मत्कृतेऽद्य वरार्हायाः श्यामतां समुपागतम् ॥ ११
किमिदं द्यूतकामेन मया कृतमबुद्धिना ।
आदाय कृष्णां चरता वने मृगगणायुते ॥ १२
सुखं प्राप्स्यति पाञ्चाली पाण्डवान्प्राप्य वै पतीन् ।
इति द्रुपदराजेन पित्रा दत्तायतेक्षणा ॥ १३
तत्सर्वमनवाप्यैव श्रमशोकाद्धि कर्शिता ।
शेते निपतिता भूमौ पापस्य मम कर्मभिः ॥ १४
तथा लालप्यमाने तु धर्मराजे युधिष्ठिरे ।
धौम्यप्रभृतयः सर्वे तत्राजग्मुर्द्विजोत्तमाः ॥ १५
ते समाश्वासयामासुराशीर्भिश्चाप्यपूजयन् ।
रक्षोघ्नांश्च तथा मन्त्राञ्जेपुश्चक्रुश्च ते क्रियाः ॥ १६
पठ्यमानेषु मन्त्रेषु शान्त्यर्थं परमर्षिभिः ।
स्पृश्यमाना करैः शीतैः पाण्डवैश्च मुहुर्मुहुः ॥ १७
सेव्यमाना च शीतेन जलमिश्रेण वायुना ।
पाञ्चाली सुखमासाद्य लेभे चेतः शनैः शनैः ॥ १८
परिगृह्य च तां दीनां कृष्णामजिनसंस्तरे ।
तदा विश्रामयामासुर्लब्धसंज्ञां तपस्विनीम् ॥ १९
तस्या यमौ रक्ततलौ पादौ पूजितलक्षणौ ।

सुख (for सज्ज) — After 5, Ś1 ins a colophon

6 [a]) K3 4 B Dn D4-6 पचाल° (for पाञ्चाल°)

7 [b]) Ś1 K D2 3 5 अनु (for मृदु°) — [c]) T1 बाहो (for राज) — [d]) Ś1 K Dc D1 3 स्वमिमा S1 K1-3 B1 3 4 D (except D1-5) श्रमकर्षिता

8 K3 G4 om the ref — [b]) Ś1 K1 2 शोक (for दुःख) — [d]) S1 K1 2 गमन् (for द्रवन्)

9 [b]) Dc M1 विपण्ण (for विवर्ण) D1 M1 भृशं (for कृशाम्) — [c]) K3 4 D1-3 आदाय, T1 G1 आरोप्य (for आनीय)

10 Before 10, B D (except D2 3 5) S (except G4) ins युधिष्ठिर उ (resp युधिष्ठिर) — [c]) =14[c] B2 4 Dn D4 6 transp शेते and भूमौ

11 [d]) K1 2 D1-3 गमत् (for °गतम्)

12 K1 om 12[c]-13[d] — [c]) Ś1 K2 चरामि कृष्णामादाय — [d]) B कुले (for युते)

13 K1 om 13 (cf v l 12) — [a]) B4 Dn1 n2 M2 प्राप्स्यसि (for ति) N (K1 om) कल्याणी (B4 Dn1 n2 णि) (for पाञ्चाली) — [b]) Ś1 K (K1 om) Dc D1-3 5 प्राप्य पाण्डुसुतान् पतीन् — [d]) Ś1 K2 3 Dc D5 सुता (for पित्रा)

14 [a]) Dc अनवद्या (for अनवाप्य) K2 3 B1 D5 T2 G2 3 [ए]व, K4 B2-4 Dc Dn D1-4 6 G4 M [इ]व (for [ए]व) — [b]) Ś1 K2 °शोकसु, K1 4 शोकाच, K3 B D शोकाध्व; T2 G2 3 °शोकाद्धि, G4 °शोकवि, M1 °शोकाभि, M2 शोकार्ति (for °शोकाद्धि) Ś1 K1-3 B1-3 Dc Dn3 °कर्षिता — 14[c]=10[c] — G1 om 14[c]-16[b] — [d]) K3 Dc D1-3 5 S (G1 om) मम पापस्य (by transp) Ś1 K Dc D1-3 5 M2 कर्मणा (for कर्मभि)

15 G1 om 15 (cf v l 14) Before 15, B D (except D2 3 5) S (except G4, G1 om) ins वैशं° उ (resp वैशं°) — [b]) T1 राजपुत्रे (for धर्मे) — [d]) D5 T1 समा° (for तत्रा) Ś1 K1 2 महर्षय° (for द्विजो)

16 G1 om 16[ab] (cf v l 14), D2 om 16-17 — [a]) Ś1 K D1 3 5 याश्चक्रु. (for °यामासु) — [b]) Ś1 चाशीर्भिश्च (for आशीर्भिश्च) D3 [अ]भि (for [अ]पि) S1 [अ]योज (for [अ]पूज) Dc आशीर्वादैः सुमङ्गलैः — [c]) Ś1 K2 3 D1 3 5 ततो (for तथा) — [d]) K4 Dc तथा, D3 च वै, S च ता (for च ते) Ś1 K1-3 D5 जेपुश्च नियतेन्द्रिया°

17 D2 om 17 (cf v l 16) — [b]) T2 G M शान्त्यर्थे T1 ब्राह्मणैश्च महर्षिभि — [d]) Ś1 पाण्डवास्ते, K D1 3 5 °वै सा (for वैश्च)

19 [c]) K1 B D (except D1-3 5) पार्थ्या (for तदा)

कराभ्यां किणजाताभ्यां शनकैः संववाहतुः ॥ २०
पर्याश्वासयदप्येनां धर्मराजो युधिष्ठिरः ।
उवाच च कुरुश्रेष्ठो भीमसेनमिदं वचः ॥ २१
बहवः पर्वता भीम विषमा हिमदुर्गमाः ।
तेषु कृष्णा महाबाहो कथं नु विचरिष्यति ॥ २२

भीमसेन उवाच ।

त्वां राजन्राजपुत्रीं च यमौ च पुरुषर्षभौ ।
स्वयं नेष्यामि राजेन्द्र मा विषादे मनः कृथाः ॥ २३
अथ वासौ मया जातो विहगो मद्बलोपमः ।
वहेदनघ सर्वान्नो वचनात्ते घटोत्कचः ॥ २४

वैशंपायन उवाच ।

अनुज्ञातो धर्मराज्ञा पुत्रं सस्मार राक्षसम् ।
घटोत्कचश्च धर्मात्मा स्मृतमात्रः पितुस्तदा ।
कृताञ्जलिरुपातिष्ठदभिवाद्याथ पाण्डवान् ॥ २५
ब्राह्मणांश्च महाबाहुः स च तैरभिनन्दितः ।
उवाच भीमसेनं स पितरं सत्यविक्रमः ॥ २६
स्मृतोऽसि भवता शीघ्रं शुश्रूषुरहमागतः ।
आज्ञापय महाबाहो सर्वं कर्तास्म्यसंशयम् ।
तच्छ्रुत्वा भीमसेनस्तु राक्षसं परिषस्वजे ॥ २७

इति श्रीमहाभारते आरण्यकपर्वणि चतुश्चत्वारिंशदधिकशततमोऽध्यायः ॥ १४४ ॥

# १४५

युधिष्ठिर उवाच ।

धर्मज्ञो बलवाञ्शूरः सद्यो राक्षसपुंगवः ।
भक्तोऽस्मानौरसः पुत्रो भीम गृह्णातु मातरम् ॥ १
तव भीम बलेनाहमतिभीमपराक्रम ।

---

— $^{d}$) Ś1 K D3 5 मन° (for तप°)

**20** $^{b}$) S पादौ परपुरंजयौ — $^{c}$) Ś1 K1 2 किणविद्धाभ्यां, K3 D1–3 5 °बद्धाभ्यां, S (except M2) °युक्ताभ्यां

**22** $^{b}$) S हि सुदु° (for हिमदु°) — $^{c}$) Ś1 K Dc D1–3 5 °भागा (K4 Dc D5 °भाग) (for बाहो)

**23** $^{b}$) Ś1 K2 भरतर्षभ, K1 भरतर्षभौ ; Dn D3 पुरुषर्षभ

**24** $^{a}$) T2 G3 4 यो (for [अ]सौ) B Dn D4 6 हैडिंब(D6 °डि)श्च महावीर्यो — $^{b}$) K3 B1 Dn3 D4 विहगो G2 राक्षसो ह्यचलोपम — $^{c}$) D1 2 प्रवहेदथ (for वहेदनघ) — After 24, B4 ins

683* एतच्छ्रुत्वा तु वचनं भीमसेनस्य धर्मराट् ।
भीमं संपूजयस्तुष्ट एवमस्त्वित्यभाषत ।

**25** D2 om 25–27, S om 25$^{ab}$, and reads 25$^{c}$–27$^{f}$ after 3 145 3 — $^{a}$) S1 K Dc D1–3 5 सोनु° (for अनु°) — $^{c}$) B Dc Dn D4 6 तु (for च) — $^{d}$) Ś1 K D1 5 G4 पितॄन् (for पितु ) K4 Dc D5 S तथा (for तदा) — $^{f}$) Ś1 K D1 3 5 च (for [अ]थ)

**26** D2 om 26 For sequence of S (which om 26$^{ab}$) cf v l 25 — $^{b}$) S1 K1 2 स एतैश्चाभि° — $^{c}$) S1 K1 2 4 च (for स) — $^{d}$) S1 K1 2 D1 3 भीमविक्रम°, K3 4 B Dc Dn D4–6 भीमविक्रम (for सत्य°)

**27** D2 om 27 For sequence of S cf v l 25 D1 S om 27$^{ab}$ — $^{a}$) Ś1 K D3 5 [S]हं, Dc [S]सि (for [S]स्मि) — $^{b}$) S1 K D3 5 सहसा समुपागत

Colophon om in S1 K1–3 D3–5 — *Major parvan* Dn2 T G2 3 M1 आरण्य, D6 वन (!) — *Sub parvan* K4 B Dc Dn1 n3 D1 2 4 6 (all om sub parvan name) mention only गन्धमादनप्रवेश (D1 लोमशतीर्थयात्रा, followed by गन्धमादनप्रवेश), T2 G3, likewise, only गन्धमादन — *Adhy no* (figures, words or both) Dn 143 (Dn3 144 as in text), D1 151, S 146 (M2 148) — *Śloka no* Dn D1 28

## 145

**1** $^{b}$) K1 2 सभ्यो, K3 4 B D M सत्यो (for सद्यो) — $^{d}$) K4 D1–3 S नेतुमर्हति (D2 5 °सि) (for भीम गृह्णातु) Dn मा चिर (for मातरम्) !

**2** $^{a}$) B D (except D1–3 5) बाहु (for भीम) S (except M2) सुते (for बले°) Ś1 [अ]यम् (for [अ]हम्) — $^{b}$) T G1 2 M1 नीतो, G3 हृतो, G4 भीतो (for अति )

अक्षतः सह पाञ्चाल्या गच्छेयं गन्धमादनम् ॥ २

वैशंपायन उवाच ।

भ्रातुर्वचनमाज्ञाय भीमसेनो घटोत्कचम् ।
आदिदेश नरव्याघ्रस्तनयं शत्रुकर्शनम् ॥ ३

हैडिम्बेय परिश्रान्ता तव मातापराजिता ।
त्वं च कामगमस्तात बलवान्वह तां खग ॥ ४

स्कन्धमारोप्य भद्रं ते मध्येऽस्माकं विहायसा ।
गच्छ नीचिकया गत्या यथा चैना न पीडयेः ॥ ५

घटोत्कच उवाच ।

धर्मराजं च धौम्यं च राजपुत्रीं यमौ तथा ।
एकोऽप्यहमलं वोढुं किमुताद्य सहायवान् ॥ ६

वैशंपायन उवाच ।

एवमुक्त्वा ततः कृष्णामुवाह स घटोत्कचः ।
पाण्डूनां मध्यगो वीरः पाण्डवानपि चापरे ॥ ७

लोमशः सिद्धमार्गेण जगामानुपमद्युतिः ।
स्वेनैवात्मप्रभावेन द्वितीय इव भास्करः ॥ ८

ब्राह्मणांश्चापि तान्सर्वान्समुपादाय राक्षसाः ।
नियोगाद्राक्षसेन्द्रस्य जग्मुर्भीमपराक्रमाः ॥ ९

एवं सुरमणीयानि वनान्युपवनानि च ।
आलोकयन्तस्ते जग्मुर्विशालां बदरीं प्रति ॥ १०

ते त्वाशुगतिभिर्वीरा राक्षसैस्तैर्महाबलैः ।
उह्यमाना ययुः शीघ्रं महदध्वानमल्पवत् ॥ ११

देशान्म्लेच्छगणाकीर्णान्नानारत्नाकरायुतान् ।
ददृशुर्गिरिपादांश्च नानाधातुसमाचितान् ॥ १२

---

Ś1 K1 3 वीर्य॰ (for भीम)

3 D1 2 T2 G3 4 M2 om the ref — cd) B कर्षण (B8 ॰कर्शन) (for ॰कर्शनम्) Ś1 K D3 5 उवाच श्लक्ष्णया वाचा सान्त्वपूर्वमिद वच, D1 2 चिंतयामास त प्राप्तमित्युवाच वृकोदर॰, S चिंतयामास बलवान्महाभीमपराक्रम (T2 G3 ॰म) [T2 G3 as in D1 2 also (v l ॰या ममनु for ॰यामास त)] — After 3 (transposed), S reads 3 144 25c–27f, cf v l 3 144 25

4 Before 4, B4 D (except D5) ins भीमसेन उ॰ — ab) K3 B1 3 Dc D6 T1 G1 2 हैडिंबेय K3 4 D6 तपस्विनी; B Dc M2 [अ]पराजित (for [अ]पराजिता) Ś1 K1 2 हैडिंब तव मातेय (Ś1 बेय तव माता) परिश्रान्ता तपस्विनी — c) K4 ॰गतस्, D1 2 गतिस् (for ॰गमस्) — d) Ś1 K1 3 वहता वर, K4 D2 3 वह मातर, D1 मातर वह (for वह ता खग) Dc2 T2 G2 3 खग॰ (for खग)

5 a) Ś1 K D5 जननीं; T1 ता मध्ये, G1 ता वीर (for भद्र ते) — b) T1 अस्माक च (for मध्येऽस्माक) — c) K3 नैचिकया; K4 नाधि; B4 नीच, T2 G2–4 नीचतया — d) K4 D3 पीडयेत् (for ये)

6 a) T2 G3–4 त्वा चापि धर्मराज च — b) Dc पुत्रौ (for पुत्रीं) B Dn D4 6 कृष्णा च यमजौ तथा; G4 यमौ चापि महाबल — c) Ś1 K1 2 4 D1 2 हि (for ऽपि) Dc [ए]नामह (for [अ]हमल) T1 सोढु (for वोढु) — After 6, B D (except D1–3 5) ins

684* अन्ये च शतशः शूरा विहगाः कामरूपिण ।
सर्वान्वो ब्राह्मणै सार्धं वक्ष्यन्ति सहितानघ ।

On the other hand, T G ins after 6

685* मन्द मन्द गमिष्यामि वहन्द्रुपदनन्दिनीम् ।

7 Ś1 K1–3 Dn D1–6 om the ref — c) K4 मध्यतो, B3 D5 मो (for गो) K3 Dc1 Dn2 n3 वीर — d) Ś1 K2 D1 2 चापरान्, K3 कचरे (sic), D5 चात्रे (for चापरे)

8 a) D1 2 स तथा (for लोमश) — c) T G तेनैव (for स्वे) Ś1 K D1–3 5 [अ]ति, B Dn D4 6 T2 G3 स, Dc [अ]भि (for [आ]त्म) A few MSS प्रभावेण — d) B3 पावक॰ (for भास्कर)

9 a) Ś1 K1 3 om च — b) D1 2 G1 उपादायाथ (for समुपादाय) — c) K3 4 Dc निदेशाद्राक्ष॰

10 b) Ś1 K D1–3 5 वनानि च सरासि च, Dc वनानि सरितासि च (sic) — c) G1 transp ते and जग्मु — d) S अनु (for प्रति)

11 a) Ś1 K1 2 वीरै; Dc वीर (for वीरा) — b) Ś1 K1 2 ते; K3 4 Dc D1–3 5 सु (for तैर्) Ś1 K1–3 B Dn D2–6 T1 ॰जवै, K4 भुजै॰ (for ॰बलै) — d) Ś1 K Dc D1–3 5 दीर्घम॰ (for महद॰)

12 a) B Dn D4 6 ॰जना, D1 ॰समा॰, G4 ॰करा॰ (for गणा) — b) T1 G1 नानारत्नगणायुतान् (T1 कुलान्) — D3 om 12cd — c) Ś1 K Dc D1 2 5 दुर्गांश्च, G1 धातूंश्च (for ॰पादांश्च) — d) Ś1 K2 समायुतान्, Dn2 D1 2 समन्वितान् — D2 ins after 12 D3 (which om 12cd) ins after 12ab

686* आसेवितान्किंपुरुषैर्गन्धर्वैश्च समन्ततः ।

विद्याधरगणाकीर्णान्युतान्वानरकिंनरैः ।
तथा किंपुरुषैश्चैव गन्धर्वैश्च समन्ततः ॥ १३
नदीजालसमाकीर्णान्नानापक्षिरुताकुलान् ।
नानाविधैर्मृगैर्जुष्टान्वानरैश्चोपशोभितान् ॥ १४
ते व्यतीत्य बहून्देशानुत्तरांश्च कुरूनपि ।
ददृशुर्विविधाश्चर्यं कैलासं पर्वतोत्तमम् ॥ १५
तस्याभ्याशे तु ददृशुर्नरनारायणाश्रमम् ।
उपेतं पादपैर्दिव्यैः सदापुष्पफलोपगैः ॥ १६
ददृशुस्तां च बदरीं वृत्तस्कन्धां मनोरमाम् ।
स्निग्धामविरलच्छायां श्रिया परमया युताम् ॥ १७
पत्रैः स्निग्धैरविरलैरुपेतां मृदुभिः शुभाम् ।
विशालशाखां विस्तीर्णामतिद्युतिसमन्विताम् ॥ १८
फलैरुपचितैर्दिव्यैराचितां स्वादुभिर्भृशम् ।
मधुस्रवैः सदा दिव्यां महर्षिगणसेविताम् ।
मदप्रमुदितैर्नित्यं नानाद्विजगणैर्युताम् ॥ १९
अदंशमशके देशे बहुमूलफलोदके ।

[ Cf 13^cd ]

**13** G4 om 13 S (G4 om) transp 13^ab and 13^cd — ^a) Dn D4 6 °समा° (for °गणा°) S (G4 om) विद्याधरैराचरितान् (M1 °रै समाकीर्णान्) — D6 reads 13^b–14^c in marg *sec m* — ^b) T1 G1 4 युक्तान्, G3 यक्ष- (for युतान्) M1 चामरैश्च निषेवितान् — ^c) S (G4 om) आसेवितान्किंपुरुषैर् — With 13^cd, cf 686* — ^d) Ś1 K D1 2 5 ततस्तत (for समन्तत॰) — After 13, B Dc Dn D4 6 S (G4 om line 1, T1 om line 2) ins

687* समरैश्चमरैश्चैव वानरै रुरुभिस्तथा ।
वराहैर्गवयैश्चैव महिषैश्च समावृतान् ।

[(L 1) Dn D4 6 मयूरै°, M1 सुमनै° (for समरै°) S (G4 om) चापि हरिणै (G1 हरिभी) (for चैव वानरै) Dc वारणै (for वानरै) G1 रुरुभि शनकैस्तदा (for the posterior half) — (L 2) S (T1 om) चापि (for चैव) T2 G3 ऋक्षैश्चापि, G1 वृकैश्चापि, G2 M पृषतैश्च, G4 वृक्षैश्चापि (for महिषैश्च) G1 M °चितान् (for °वृतान्) ]

— G4 cont

688* नानाविधैर्मृगैरन्यैरुपेतान्सौम्यदर्शनै॰ ।

**14** T1 om 14^a–15^b D6 reads 14^abc in marg *sec m* (cf v l 13) T2 G1–3 M transp 14^ab and 14^cd — ^a) Ś1 K1 2 नदीजलसमाकीर्णा, K4 T2 G M2 नदीशतसमाकीर्णान्, B4 नदीजल , D1 2 नदाजल°, D3 विद्याधरगणा° — ^b) Ś1 K1 2 °समाकुला, Dc °रुतान्बहून्, Dn D4 6 M2 °युतान्बहून्, T2 G चारणैश्च निषेवितान्, M1 युतान्वानरकिंनरै॰ — G4 om 14^cd — ^c) S1 B4 Dn D1 2 5 °विध (for विधैर्) Ś1 K1 2 जुष्टा, K3 घुष्टान, S (T1 G4 om) चान्यैर् (for जुष्टान्) — ^d) K3 चामरै°; K4 D1–3 चारणै , B1 2 4 वारणै°, S (T1 G4 om) उपेतान्सौम्यदर्शनै॰ — After 14, B Dc Dn D4 6 S (except T1) ins

689* समदैश्चापि विहगै पादपैरन्वितास्तथा ।

[ S (except T1) सदामदैश्च (for समदैश्चापि) Dc अर्चितान्, G1 2 4 M आवृतान् (for अन्वितान्) ]

**15** ^a) K4 Dc D1 2 6 S स्वतीत्य, B Dn D4 6 [S]वतीर्य (for व्यतीत्य) — ^b) D2 प्रति, T1 तथा (for अपि) Ś1 K D3 5 उत्तमाद्रि(K4 D5 °मधि)समाद्र(D3 °यु)तान् — ^d) K4 D2 4 6 कैलाश Ś1 K1 2 पर्वत गधमादन

**16** ^a) K2–4 B2–4 Dc D1–3 5 तस्याभ्यासे Dc[S]थ, S (except G2) च (for तु) — ^c) K4 भूपित (for उपेत) D3 रम्यै (for दिव्यै) — ^d) Ś1 K1 2 °फलान्वितै , K4 Dc °फलोपमै°, T2 G3 °फलोदकै°

**17** D2 om (hapl) from -रलच्छाया (in 17^c) up to °शाखा वि (in 18^c) — ^c) S रम्यस्निग्धघनच्छाया — K3 om 17^d–18^a — ^d) Ś1 K (K3 om) Dc D1 3 5 नानाद्विज(K3 पक्षि)गणा(D5 °णैर्)युता (K1 °वृता)

**18** K3 om 18^a, D2 om up to °शाखा वि (cf v l 17), S1 K3 D5 om (hapl) 18–19 — ^b) K1 उपेत्य (for उपेता) K4 D1 3 S (for G1 see below) शुभै , B4 कृता (for शुभाम्) G1 निरतरफलै शुभै°

**19** Ś1 K3 D5 om 19 (cf v l 18), G4 om 19^abcd — ^a) K4 B1 2 Dc D1–3 उपचिता (for उपचितैर्) K4 B3 Dc D1–3 S (G4 om) हृद्यैर्, B1 कृत्स्नैर् (for दिव्यैर्) — ^b) K4 D1–3 अमृत (for आचिता) B4 वृता (for भृशम्) B1 अमृतास्वादसमितै , B3 आचिता स्वादुसमितै , Dc अमृतस्वादुसनिभै° — ^c) K4 Dc D1 2 4 मधुश्रवै°, T2 G2 3 °स्रावै° K1 4 D1–3 S (except G1 G4 om) दिव्यैर् (for दिव्या) — K1 om 19^ef — ^e) K4 D1–3 सदा (for मद) M1 नृत्य (for नित्य) B1 4 Dc मुनिभिर्मु(B1 °नां)दितैर्नित्य, B3 सेविता मुनिभिर्नित्य — ^f) D1 2 G1 M1 °गणायुता

**20** ^a) T1 सदश (for अदश°) — ^b) Ś1 K Dc D1–3 5 बहुपुष्प , K3 बहुमूलफलोपमे, Dc °फलोपगे; T2

नीलशाद्वलसंछन्ने देवगन्धर्वसेविते ॥ २०
सुसमीकृतभूभागे स्वभावविहिते शुभे ।
जातां हिममृदुस्पर्शे देशेऽपहतकण्टके ॥ २१
तामुपेत्य महात्मानः सह तैर्ब्राह्मणर्षभैः ।
अवतेरुस्ततः सर्वे राक्षसस्कन्धतः शनैः ॥ २२
ततस्तमाश्रमं पुण्यं नरनारायणाश्रितम् ।
ददृशुः पाण्डवा राजन्सहिता द्विजपुंगवैः ॥ २३
तमसा रहितं पुण्यमनामृष्टं रवेः करैः ।
क्षुत्तृट्शीतोष्णदोषैश्च वर्जितं शोकनाशनम् ॥ २४
महर्षिगणसंबाधं ब्राह्म्या लक्ष्म्या समन्वितम् ।
दुष्प्रवेशं महाराज नरैर्धर्मबहिष्कृतैः ॥ २५
बलिहोमार्चितं दिव्यं सुसंमृष्टानुलेपनम् ।
दिव्यपुष्पोपहारैश्च सर्वतोऽभिविराजितम् ॥ २६
विशालैरग्निशरणैः स्रुग्भाण्डैराचितं शुभैः ।
महद्भिस्तोयकलशैः कठिनैश्चोपशोभितम् ।
शरण्यं सर्वभूतानां ब्रह्मघोषनिनादितम् ॥ २७
दिव्यमाश्रयणीयं तमाश्रमं श्रमनाशनम् ।
श्रिया युतमनिर्देश्यं देवचर्योपशोभितम् ॥ २८
फलमूलाशनैर्दान्तैश्चीरकृष्णाजिनाम्बरैः ।
सूर्यवैश्वानरसमैस्तपसा भावितात्मभिः ॥ २९
महर्षिभिर्मोक्षपरैर्यतिभिर्नियतेन्द्रियैः ।
ब्रह्मभूतैर्महाभागैरुपेतं ब्रह्मवादिभिः ॥ ३०

---

$G_{2-4}$ M °फले शुभे $T_1$ $G_1$ समे च सजले ($G_1$ विषमे) शुभे — $D_3$ om (hapl) $20^c$–$21^d$ — $^c$) $K_3$ Dc $Dn_3$ $D_1$ S (except $T_1$ $G_4$) शाड्वल° — $^d$) $K_4$ महर्षिगण°

**21** $D_3$ om 21 (cf v l 20) — $^a$) Ś1 $K_{2-4}$ $B_1$ Dc $D_{1\,2\,5}$ °सकाशे, S सु($T_1$ ते, $G_1$ $M_2$ सा)भूमिभागे विशदे — $^b$) Ś1 K Dc $D_{1\,2\,5}$ विमले, $G_1$ °विशदे (for विहिते) — $G_4$ om $21^{cd}$ — $^c$) Ś1 $K_{1\,2}$ जित (sic), $K_3$ $D_5$ $M_2$ जाता, Dc जाती ; $T_1$ जात (for जाता) $K_3$ $Dc_2$ $D_{1\,2\,5}$ S ($G_4$ om) मृदुहिम° (by transp) — $^d$) $M_1$ दिव्ये (for देशे) Ś1 $K_{1\,3\,4}$ B Dc $D_2$ [ऽ]पहृत° ; S ($G_4$ om) विह($M_2$ विग)त° (for ऽपहत°)

**22** $^a$) $K_{1\,2}$ तम् (for ताम्) $G_1$ समेत्य (for उपेत्य) — $^b$) $K_3$ $T_1$ $G_{1\,2}$ सहितैर्, $G_4$ सहिता (for सह तैर्) Dc ब्राह्मणर्षिभि , $D_{1\,2}$ °णै सह, $D_2$ °णैस्तत — Ś1 om $22^c$–$37^b$ — $^d$) $B_1$ Dc रक्षस्या स्कधत , S रक्ष स्कधगता°

**23** Ś1 om 23 (cf v l 22) — $^a$) $K_{1\,3\,4}$ B Dn $D_{1\,4-6}$ रम्य (for पुण्य) — $^b$) $K_1$ $T_1$ °श्रम, $B_3$ °जित ; Dc $D_{1\,2\,5}$ $G_{1\,2}$ M °चित, $D_5$ °न्वित — $K_{1\,2}$ om $23^c$–$37^d$ — $^d$) $K_3$ सहितैर्, $K_4$ Dc $D_{1-3\,5}$ सह तैर् (for सहिता) $K_{3\,4}$ $D_{1-3\,5}$ ब्राह्मणर्षभै , Dc ब्राह्मणर्षिभि , S विप्रपुगवै°

**24** Ś1 $K_{1-3}$ $D_5$ om 24 (for Ś1 $K_{1\,2}$ cf v l 22, 23) — $^a$) $K_4$ $D_3$ रम्यम् ; $D_2$ दिव्यम् (for पुण्यम्) — $^b$) $K_4$ Dc $D_{1-3}$ अनास्पृष्ट, S नातिस्पृ($T_1$ °स)ष्ट (for अनामृष्ट) — $^c$) S (except $M_1$) °शोकैश्च

**25** Ś1 $K_{1-3}$ $D_5$ om 25 (cf v l 22–24) — $^a$) $D_2$ (after corr) °सघुष्ट — $^b$) $D_2$ $T_2$ $G_3$ समावृत, $T_1$ समाकुल (for सम ) — $B_3$ om $25^c$–$27^f$ — $^c$) $K_4$ $D_{1\,2}$ $M_2$ दुष्प्रवेश्य — $^d$) $T_2$ $G_{2\,3}$ जनर्, $G_2$ द्विजैर् (for नरैर्) T $G_{2-4}$ धर्म° (for धर्म )

**26** Ś1 $K_{1-3}$ $B_3$ $D_5$ om 26 (cf v l 22–25), $G_4$ om $26^{ab}$ — $^a$) T $G_3$ °न्वित (for °चित) B ($B_3$ om) Dc पुण्य (for दिव्य) — $^c$) $M_2$ दिव्य पुष्पविहारैश्च

**27** Ś1 $K_{1-3}$ $B_3$ $D_5$ om 27 (cf v l 22–25), $G_4$ om $27^{abcd}$ — $^a$) $K_4$ $D_{1-3}$ $T_1$ $G_{1\,2}$ M विमलैश्चा($G_2$ °र)ग्नि — $^b$) $K_4$ स्रग्भाण्डैश्च, $G_2$ स्रुग्गधैश्च $K_4$ $B_1$ Dc $D_{1-3}$ $T_2$ $G_3$ चार्चित ; $G_2$ M चाचित (for आचित) — $^c$) $D_1$ समिद्भिस् (for महद्भिस्) — $^d$) $Dc_2$ काचनै° (for कठिनै°) — After $27^{cd}$, $K_4$ $D_{1\,2}$ read 29–$30^{cd}$ — $D_5$ om $27^e$–$29^b$ — $^f$) M °विना (for °निना°)

**28** Ś1 $K_{1-3}$ $D_{2\,5}$ om 28 (cf v l 22–24, 27) — $^a$) T $G_{1\,3\,4}$ च रमणीय (for आश्रयणीय) $G_1$ च, $G_{2\,3}$ (before corr) $_4$ तद् (for तम्) — $G_4$ om $28^{cd}$ — $^c$) $K_4$ $D_{1\,2}$ S ($G_4$ om) युक्तम् (for युतम्) — $^d$) Ś1 $D_{1\,2}$ M त (M ते) वदर्योप , T $G_{1\,3}$ देवदर्शोप° ; $G_2$ देवदेशोप

**29** Ś1 $K_{1-3}$ $D_{3\,5}$ om 29 (cf v l 22–24, 27) $K_4$ $D_{1\,2}$ read 29–$30^{cd}$ after $27^{cd}$ — $^b$) $B_4$ Dn $D_{4\,6}$ चारु° (for चीर°) — $^d$) $K_4$ $B_2$ $D_{1\,2}$ तापसैर् (for तपसा)

**30** Ś1 $K_{1-3}$ $D_5$ om 30 (cf v l 22–24), $G_4$ om $30^{ab}$ — $^a$) $K_4$ $B_1$ $D_{1-3}$ S ($G_4$ om) महर्षि° (for महर्षि°) $K_4$ $D_{1\,2}$ S ($G_4$ om) तपोवृद्धैर् (for मोक्षपरैर्) — $^b$) $K_4$ $D_{1\,2}$ यतिभिर्नियतात्मभि — $D_3$ om $30^{cd}$ $K_4$ $D_{1\,2}$ read $30^{cd}$ after 29, and *repeat* it here (with v l as in 30)

**31** Ś1 $K_{1-3}$ $D_5$ om.

फुल्लपद्मविचित्राणि पुष्पितानि वनानि च ।
मत्तवारणयूथानि पङ्कक्लिन्नानि भारत ।
वर्षतामिव मेघानां वृन्दानि ददृशे तदा ॥ १९
हरिणैश्चञ्चलापाङ्गैर्हरिणीसहितैर्वने ।
सशष्पकवलैः श्रीमान्पथि दृष्टो द्रुतं ययौ ॥ २०
महिषैश्च वराहैश्च शार्दूलैश्च निषेवितम् ।
व्यपेतभीर्गिरिं शौर्याद्भीमसेनो व्यगाहत ॥ २१
कुसुमानतशाखैश्च ताम्रपल्लवकोमलैः ।
याच्यमान इवारण्ये द्रुमैर्मारुतकम्पितैः ॥ २२
कृतपद्माञ्जलिपुटा मत्तषट्पदसेविताः ।
प्रियतीर्थवना मार्गे पद्मिनीः समतिक्रमन् ॥ २३
सज्जमानमनोदृष्टिः फुल्लेषु गिरिसानुषु ।
द्रौपदीवाक्यपाथेयो भीमः शीघ्रतर ययौ ॥ २४
परिवृत्तेऽहनि ततः प्रकीर्णहरिणे वने ।
काञ्चनैर्विमलैः पद्मैर्ददर्श विपुलां नदीम् ॥ २५
मत्तकारण्डवयुतां चक्रवाकोपशोभिताम् ।
रचितामिव तस्याद्रेर्मालां विमलपङ्कजाम् ॥ २६
तस्यां नद्यां महासत्त्वः सौगन्धिकवनं महत् ।
अपश्यत्प्रीतिजननं बालार्कसदृशद्युति ॥ २७
तद्दृष्ट्वा लब्धकामः स मनसा पाण्डुनन्दनः ।
वनवासपरिक्लिष्टां जगाम मनसा प्रियाम् ॥ २८

इति श्रीमहाभारते आरण्यकपर्वणि पञ्चाशदधिकशततमोऽध्यायः ॥ १५० ॥

(for °वने°)

**19** Ś1 Dn3 om 19ab (cf v l 18) — a) B Dn1 n2 D4 6 G4 फुल्लद्रुम° (B4 फलपत्र°), D5 वल्गुपद्म°, M फुल्लपत्र° (see below) — After 19a, K1–3 B1 Dc Dn1 n2 D1–3 5 ins

754* सरासि सरितस्तथा ।
नानाकुसुमचित्राणि
[(L 2) Dc फुल्लद्रुमविचित्राणि ]

— b) B3 D4 6 सरासि सरितस्तथा (= line 1 of 754*) — After 19ab, B3–4 ins

755* फुल्लपद्मविचित्राणि सरासि सरितस्तथा ।
[Prior half=19a, posterior half=line 1 of 754* ]

— On the other hand S ins after 19ab

756* नानाविहगजुष्टानि पश्यति स्म समन्तत ।

— d) Ś1 K D1–3 मदक्लिन्नानि (K4 पकलिप्तानि)

**20** G4 om 20a–21b — a) B Dn D4 6 M चपला (for चञ्चला°) — b) Ś1 तदा, B D (except D1 3 5) वन (for वने) — d) B D (except D3 5) दृष्ट्वा (for दृष्टो)

**21** G4 om 21ab (cf v l 20) — b) T1 चैव सेवितान् (for च निषे°) — c) T1 गिरे° श्रगान् (for गिरिं शौर्याद्)

**22** a) K3 Dc D1–3 5 M1 °नतशाखाग्रैस, K4 °नत गधैश्च, Dn D4 6 °नतगधैश्च, M2 वायुनानत° — c) Ś1 K वीज्य°, T G2–4 छाद्य° (for याच्य ) — d) Ś1 K1–3 Dc D1–3 द्रुमैर्वातवि(Ś1 °प्र)क°

**23** c) K3 T3 G3 °मना (for °वना) — d) S सो-(T1 वा)तिचक्रमे (for सम°)

**24** B D (except D1–3) read this stanza after 3 146 37, *repeating* it here — a) K1 3 B Dn3 n3 D5 मज्ज° (B4 सद्य°) (for सज्ज ) — d) S (except T1 M1) भीमो भीमपराक्रम° (epic tag)

**25** a) S (except T1) विनि (for परि°) K4 हनुमति, T2 G2–4 [S]हनि पुन° (for ऽहनि तत ) — b) K4 प्रवृत्त , B4 Dc3 प्रकीर्णे (for प्रकीर्ण ) — c) S (except T2 G3) विपुलै° (for विमलै )

**26** a) K4 B D (except D1–3 5) हस (for मत्त ) — c) T1 रुचिता°, T2 G2–4 आचिता (for रचिता°) — d) Ś1 D5 अम्लान , K3 T G विपुल , B4 वितत° (for विमल°)

**27** c) T1 परमप्रीतो (for प्रीति°) — d) MSS °द्युतिं, °द्युति also

**28** a) K4 ता, some MSS त (for तद्) Ś1 K1 3 तु, G3 सन् (for स) — b) K D1–3 5 सुमना , B4 सहसा (for मनसा)

Colophon — *Major parvan* Ś1 K1 3 Dn3 T G2–4 M1 आरण्य, D5 वन (!) — *Sub parvan* K4 D2 T2 G3 (all om sub parvan name) mention only गधमादनप्रवेश (followed by कदलीखड in D2) B4 Dc Dn G1, likewise only सौगधिकाहरण, D1 3 only लोमशतीर्थयात्रा (followed by गधमादनप्रवेश and कदलीखड in D1, and कदलीखड in D3), and D5 only पुष्पाभिहरण — *Adhy name* K1 3 D2 3 5 हनुमद्भीम(K1 °द्भीमसेन)समागम

# १५१

वैशंपायन उवाच ।
स गत्वा नलिनीं रम्यां राक्षसैरभिरक्षिताम् ।
कैलासशिखरे रम्ये ददर्श शुभकानने ॥ १
कुबेरभवनाभ्याशे जातां पर्वतनिर्झरे ।
सुरम्यां विपुलच्छायां नानाद्रुमलतावृताम् ॥ २
हरिताम्बुजसंछन्नां दिव्यां कनकपुष्कराम् ।
पवित्रभूतां लोकस्य शुभामद्भुतदर्शनाम् ॥ ३
तत्रामृतरसं शीतं लघु कुन्तीसुतः शुभम् ।
ददर्श विमलं तोयं शिवं बहु च पाण्डवः ॥ ४
तां तु पुष्करिणीं रम्यां पद्मसौगन्धिकायुताम् ।
जातरूपमयैः पद्मैश्छन्नां परमगन्धिभिः ॥ ५
वैडूर्यवरनालैश्च बहुचित्रैर्मनोहरैः ।
हंसकारण्डवोद्धूतैः सृजद्भिरमलं रजः ॥ ६
आक्रीडं यक्षराजस्य कुबेरस्य महात्मनः ।
गन्धर्वैरप्सरोभिश्च देवैश्च परमार्चिताम् ॥ ७
सेवितामृषिभिर्दिव्यां यक्षैः किंपुरुषैस्तथा ।
राक्षसैः किंनरैश्चैव गुप्तां वैश्रवणेन च ॥ ८
तां च दृष्ट्वैव कौन्तेयो भीमसेनो महाबलः ।
बभूव परमप्रीतो दिव्यं संप्रेक्ष्य तत्सरः ॥ ९
तच्च क्रोधवशा नाम राक्षसा राजशासनात् ।

---

(followed by समाप्त ); B1 3 4 Dc Dn D4 6 हनू( MSS नु also )मद्विसर्जन, B2 हनुमद्भीमसवाद , D1 हनुमद्भीम समागमनसमाप्ति ; T2 G1 3 सौगंधिकदर्शन, M2 हनूमद्गमन — *Adhy no* (figures, words or both) Dn 151 (Dn3 152), D1 158, S 153 (M2 155) — *Śloka no* Dn1 n3 12, Dn3 13, D1 32, D6 84

## 151

**1** a) T1 राजन् (for रम्या) — b) Dc2 अभिनंदिता; T1 उपसेवि , T2 G3 4 परिरक्षि°, G2 परिवारि (for अभिरक्षि ) — c) Some MSS कैलाश N (except K4) शिखराभ्यासे (Ś1 K1 Dn D4 6 शे) — d) Ś1 K1-3 B D शुभकानना (Dn3 as in text, D2 °न) — After 1, Ś1 K1 2 D1-3 5 ins

757* नीलशाद्वलपर्यन्ता चित्रद्रुमपरिच्छदाम् ।
[ K1 2 ध्वज (for °द्रुम°) ]

**2** a) Ś1 K1 2 सदना°; B4 Dn3 D1 2 G4 °भुवना° Many MSS भ्यासे — b) Cf 3 152 10b Dn2 n3 D2 निर्झरैः, T1 निर्झरा — d) B2 4 Dn D4 6 T1 G1 कुला, B3 D1 T2 G3 4 युता

**3** S1 om (hapl ) 3a–5b — After 3ab, B (B1 marg ) D (except D1-3 5) ins

758* नानापक्षिगणाकीर्णां सूपतीर्थामकर्दमाम् ।
अतीव रम्या सुजला जाता पर्वतसानुषु ।
[ (L 1) B2 मृगा , Dn D6 जना° (for गणा°) ]

— c) B2 Dn D4 6 विचित्र° (for पवित्र°)

**4** Ś1 om 4 (of v l 3) — a) K4 S °सम शीत (T1 °समस्पर्शं) — b) T1 शीत, G1 लब्ध्वा (for लघु) Dc सुख, T1 शिव (for शुभम्) — c) K2-4 S (except T1) विपुल (for विमल) — d) B2 Dn D4 6 पिबन् (for शिव) K4 B1-3 Dn D1 2 4 6 च बहु (by transp )

**5** Ś1 om 5ab (cf v l 3) — b) K1-3 B Dc Dn D1 2 4 6 दिव्य (for पद्म ) K1 2 B Dn D4 6 सौगधिकावृता (B4 °सौगधिकोत्पला); D5 सौगधिकैर्युता K4 सौगधिकवनायुता

**6** a) Ś1 K1-3 Dc D1-3 5 °मणि°, T1 °वन°; G1 °मय° (for °वर°) — b) Ś1 B1-3 Dn D4-6 T1 G1 M2 रमै° (for °हरै°) — c) B Dc Dn D1 4 6 °वोद्भूतै (B2 °वैधूतै°); D5 °वोद्गीतै — d) T1 वमद्भिर् (for सृजद्भिर्)

**7** a) N G1 राज (K4 देव ) (for यक्ष°) — d) K4 T2 G M परिवारिता (G1 °त), B1 4 D1-3 परमा( B1 म) र्चित

**8** G4 om 8ab — a) B1-3 D (except D1-3) T1 दिव्यैर्, G1 दिव्य (for दिव्या) B4 सेवित मुनिभिर्दिव्य — c) B2 3 Dn D1-4 6 चापि (for चैव) — d) D3 तु (for च) T1 वै वरुणेन हि

**9** a) Dc तद्धि (for ता च) D3 5 [प्]व दृष्ट्वा (by transp ) T1 दृष्ट्वा च B4 ता दृष्ट्वैव च कौं — d) T1 वै (for तत्) Ś1 K2 3 दिव्या समप्रेक्ष्य पद्मिनीं, K4 T2 G M दिव्य प्रेक्ष्य सरो महत् (G1 सरोरुह)

**10** a) Ś1 G1 2 4 ता च; K1-3 T1 M ता स; K4 (m

63

रक्षन्ति शतसाहस्राश्चित्रायुधपरिच्छदाः ॥ १०
ते तु दृष्ट्वैव कौन्तेयमजिनैः परिवारितम् ।
रुक्माङ्गदधरं वीरं भीमं भीमपराक्रमम् ॥ ११
सायुधं बद्धनिस्त्रिंशमशङ्कितमरिंदमम् ।
पुष्करेप्सुमुपायान्तमन्योन्यमभिचुक्रुशुः ॥ १२
अयं पुरुषशार्दूलः सायुधोऽजिनसंवृतः ।
यच्चिकीर्षुरिह प्राप्तस्तत्संप्रष्टुमिहार्हथ ॥ १३
ततः सर्वे महाबाहुं समासाद्य वृकोदरम् ।
तेजोयुक्तमपृच्छन्त कस्त्वमाख्यातुमर्हसि ॥ १४
मुनिवेषधरश्चासि चीरवासाश्च लक्ष्यसे ।
यदर्थमसि संप्राप्तस्तदाचक्ष्व महाद्युते ॥ १५

इति श्रीमहाभारते आरण्यकपर्वणि एकपञ्चाशदधिकशततमोऽध्यायः ॥ १५१ ॥

# १५२

भीम उवाच ।
पाण्डवो भीमसेनोऽहं धर्मपुत्रादनन्तरः ।
विशालां बदरीं प्राप्तो भ्रातृभिः सह राक्षसाः ॥ १
अपश्यत्तत्र पाञ्चाली सौगन्धिकमनुत्तमम् ।
अनिलोढमितो नूनं सा बहूनि परीप्सति ॥ २
तस्या मामनवद्याङ्ग्या धर्मपत्न्याः प्रिये स्थितम् ।
पुष्पाहारमिह प्राप्तं निबोधत निशाचराः ॥ ३
राक्षसा ऊचुः ।
आक्रीडोऽयं कुबेरस्य दयितः पुरुषर्षभ ।
नेह शक्यं मनुष्येण विहर्तुं मर्त्यधर्मिणा ॥ ४
देवर्षयस्तथा यक्षा देवाश्चात्र वृकोदर ।
आमन्त्र्य यक्षप्रवरं पिबन्ति विहरन्ति च ।

as in text) तास्तु, B₃ तत, B₄ ते स्म, D₂ तत्तु (for तच्च) T₁ कोप° (for क्रोध°) — c) Ś₁ K₁₋₃ D₆ दश° (for शत°)
**11** b) N (except K₄ B₃) M₂ प्रतिवासित (for परि°)
**12** c) Ś₁ K₁ ₂ पुष्करार्थम् (for °रेप्सुम्) Ś₁ K₁ ₂ उपायातम्, S त(T₁ M अ)थायातम्
**13** a) K₄ S कोय वै पुरुषव्याघ्र — c) Ś₁ इहायातस्, S अनुप्राप्तस् (for इह प्राप्तस्) — d) K₄ (m as in text) तदिक्षप्रमनुचिन्त्यताः; S (except T₂ G₃) तत्कार्यं प्रष्टुमर्हथ
**15** a) Ś₁ K₁ ₂ B₁₋₃ मुनिवे(K₁ °वें)शं B Dn D₄ ₆ T₂ G₃ चैव (for चासि) — b) B D (except D₁₋₃ ₅) T₂ G₃ सायुधश्चैव ल° — c) Ś₁ B Dn D₁₋₃ G₁ ₄ अभि, K₄ D₅ इह, Dc अपि (for असि) — d) K₃ महीपते, B₃ ₄ Dn D₄ ₆ महामते (for द्युते)

Colophon om in Ś₁ K₁₋₃ — *Major parvan* T₂ G₂₋₄ M₁ आरण्य — *Sub parvan* K₄ B₁ Dc D₅ M₁ (all om sub parvan name) mention only गधमादन प्रवेश (followed by सौगंधिकाहरण in Dc), B₂₋₄ Dn D₄ ₆ G₁, likewise, only सौगंधिकाहरण, D₁ ₂, only लोमशतीर्थयात्रा (followed by गधमादनप्रवेश and पुष्पाभिहरण), D₃, only पुष्पाभिहरण, and finally T₂ G₃, only गधमादन — *Adhy name* M₁ सरोदर्शन — *Adhy no* (figures, words or both) Dn 152 (Dn₃ 153), D₁ 159, S 154 (M₂ 158) — *Śloka no* Dn D₁ 16

## 152

**1** b) Ś₁ B₁₋₃ D (except D₁₋₃ ₅) °राजा (for °पुत्रा) — c) T₂ G प्राप्त (for प्राप्तो) — d) K₄ T₂ G M₂ मा (K₄ M₂ तन्) निबोधत रा
**2** T₁ om (? hapl) 2–3 — c) G₁ ₄ अनिलेनोढ° (G₄ °त्थ)मेतानि; G₂ अनिलोत्थमितो नीत — d) M₂ सा बभूव परीप्सती
**3** T₁ om 3 (of v l 2) — a) T₂ G₂ ₃ ममा (for माम°) K₄ स तस्या मानवद्याग्या (sic) — b) K₄ G₂ ₄ प्रियेप्सित — c) D₂ G₂ ₄ M₂ पुष्पहारम् (G₄ °हेतोर्) अनुप्राप्त, T₂ G₃ पुष्पार्थमिह संप्राप्त
**4** d) Ś₁ K₁ ₂ B₃ Dn D₂ ₄ ₆ G₄ मर्त्यधर्मणा
**5** b) Ś₁ K₁₋₃ मनुष्याश्च, T G₃ ₄ देवताश्च (for देवाश्चात्र) — d) K₁₋₃ T G च हरति; B Dc₂ D₅ च रमति; Dc₁ Dn D₄ ₆ रमयति (for विह°) — f) M देवदानवगुह्यका — After 5 S ins

गन्धर्वाप्सरसश्चैव विहरन्त्यत्र पाण्डव ॥ ५
अन्यायेनेह यः कश्चिदवमन्य धनेश्वरम् ।
विहर्तुमिच्छेद्दुर्वृत्तः स विनश्येदसंशयम् ॥ ६
तमनादृत्य पद्मानि जिहीर्षसि बलादितः ।
धर्मराजस्य चात्मानं ब्रवीषि भ्रातरं कथम् ॥ ७
भीम उवाच ।
राक्षसास्तं न पश्यामि धनेश्वरमिहान्तिके ।
दृष्ट्वापि च महाराजं नाहं याचितुमुत्सहे ॥ ८
न हि याचन्ति राजान एष धर्मः सनातनः ।
न चाहं हातुमिच्छामि क्षात्रधर्मं कथंचन ॥ ९
इयं च नलिनी रम्या जाता पर्वतनिर्झरे ।
नेयं भवनमासाद्य कुबेरस्य महात्मनः ॥ १०
तुल्या हि सर्वभूतानामियं वैश्रवणस्य च ।
एवंगतेषु द्रव्येषु कः कं याचितुमर्हति ॥ ११
वैशंपायन उवाच ।
इत्युक्त्वा राक्षसान्सर्वान्भीमसेनो व्यगाहत ।
ततः स राक्षसैर्वाचा प्रतिषिद्धः प्रतापवान् ।
मा मैवमिति सक्रोधैर्भर्त्सयद्भिः समन्ततः ॥ १२
कदर्थीकृत्य तु स तान्राक्षसान्भीमविक्रमः ।
व्यगाहत महातेजास्ते तं सर्वे न्यवारयन् ॥ १३
गृह्णीत बध्नीत निकृन्ततेमं
पचाम खादाम च भीमसेनम् ।
क्रुद्धा ब्रुवन्तोऽनुययुर्द्रुतं ते
शस्त्राणि चोद्यम्य विवृत्तनेत्राः ॥ १४

---

759* यक्षाधिपस्यानुमते कुबेरस्य महात्मन ।

6 $^{a}$) T2 G2. 4 न॰ (for य ) — $^{b}$) B4 अवगम्य, S ॰मत्य — $^{d}$) B2. 3 Dn D1. 4. 6 न संशय॰ (for असंशयम्)

7 Ś1 om 7 — $^{a}$) D8 T G1. 3 M1 त्वम् (for तम्) K4 असान्नाहत्य प — $^{b}$) K3 बिलाचित॰, K4 T2 G3. 4 बलादिव; B3 Dn2 n3 D4. 6 हृत, T1 G1. 2 विह (for दित॰) — After 7, K4 ins

760* तेषां तु वचनं श्रुत्वा वार्यमाणोऽपि पाण्डव ।;

while B (B1 marg ) D (except D1–3. 6) ins

761* आमन्त्र्य यक्षराज वै तत पिब हरस्व च ।
नातोऽन्यथा त्वया शक्यं किंचित्पुष्करमीक्षितुम् ।

[(L 1) B2 राजान (for राज वै) — (L 2) B3 नष्टो, B4 ततो (for नातो) ]

8 $^{b}$) Ś1 K1–3 Dc D1–3. 6 उपा॰ (for इहा ) — $^{c}$) K4 अदृष्ट्वा (for दृष्ट्वापि) Ś1 K1–3 D1–3. 5 स (for च) Ś1 महात्मान; K4 धनेशं हि (for महाराजं) — $^{d}$) K4 क वै (for नाहं)

9 $^{b}$) = 1. 113. 13$^{d}$. 4. 50. 7$^{d}$, etc D1–3 होष (for एष) K4 B4 S transp एष and धर्मं — $^{d}$) K Dc Dn T G क्षत्र ; D4 M1 क्षात्र (for क्षात्र ) D3 सनातन (for कथं )

10 $^{ab}$) Cf 3. 151. 2$^{b}$ K4 M transp रम्या and जाता — $^{c}$) K4 कथं हि भवता सम्यक्

11 $^{b}$) T2 G2–4 यथा (for इय)

12 K4 T1 M om the ref — $^{b}$) B Dc1 [ऽ]त्यमर्षण ; Dc2 [ऽ]प्यमर्षण , Dn D4. 6 ह्यमर्षण॰ (for व्यगाहत) — After 12$^{ab}$, B D (except D1–3. 6) ins

762* व्यगाहत महाबाहुर्नलिनीं तां महाबल॰ ।
[B4 व्यवगाहन् (for व्यगाहत) ]

On the other hand, S ins after 12$^{ab}$

763* तां तु पुष्करिणीं वीर प्रभिन्न इव कुञ्जर ।

— $^{e}$) Ś1 K1. 2 सक्रोध, K4 D1 G4 सक्रुद्धैर् (for सक्रोधैर्) — $^{f}$) M2 प्रतापवान् (for समन्तत )

13 $^{a}$) K1. 2 तृणीकृत्वै(K3 त्वे)व , K4 अवमन्य स (for कदर्थी ) K4 B4 D1. 2 तान्सर्वान्, T1 M2 (by transp ) स तु तान् — $^{c}$) K4 अलोडयन्, B1. 4 Dn1 D4. 6 M प्रा (B1 Dn1 प्र)गाहत (for व्यगा॰) — $^{d}$) K4 तथा, D1. 2 त ते; T1 तत॰ (for ते त) — For 13, Ś1 subst

764* बलाज्जग्राह पद्मानि रक्षसां पश्यतां तदा ।
ते त न मम्हुर्वीरा गृह्णन्त कमलोत्तमान् ।,

followed by an addl colophon — After 13, K1. 2 ins

765* अगणय्य स तान्सर्वान्भीमसेन प्रतापवान् ।
पद्मान्यगृह्णात्सहसा पौरुषे स्वे व्यवस्थित॰ ।,

followed by 764* (with the addl colophon )

14 Before 14, Ś1 K1. 2 ins वैश॰ — $^{a}$) K4 विकर्षैतैन; B Dn D4. 6 T2 G2 M2 विक(B4 निव)र्ततेम (or ॰तैन); Dc निकृत्त चैन; T1 विकृत्त नेत्र, G3. 4 विकृत्त (G4 ॰त्य) चैन (for निकृन्ततेमं) Some MSS [ए]न (for [इ]म) — $^{b}$) T2 G3. 4 M2 पिबाम (for पचाम) K4 पराङ्मुख वावृत भीम॰ — $^{c}$) B Dn D1. 6 [अ]भि(B4 न्व)ययुर्, D3 न्यपतन् (for ऽनुययुर्) Ś1 K1. 2 द्रुत त, K4 D3 तदानीं — $^{d}$) D5

गन्धर्वाप्सरसश्चैव विहरन्त्यत्र पाण्डव ॥ ५
अन्यायेनेह यः कश्चिदवमन्य धनेश्वरम् ।
विहर्तुमिच्छेद्दुर्वृत्तः स विनश्येदसंशयम् ॥ ६
तमनादृत्य पद्मानि जिहीर्षसि बलादितः ।
धर्मराजस्य चात्मानं ब्रवीषि भ्रातरं कथम् ॥ ७

भीम उवाच ।

राक्षसास्तं न पश्यामि धनेश्वरमिहान्तिके ।
दृष्ट्वापि च महाराजं नाहं याचितुमुत्सहे ॥ ८
न हि याचन्ति राजान एष धर्मः सनातनः ।
न चाहं हातुमिच्छामि क्षात्रधर्मं कथंचन ॥ ९
इयं च नलिनी रम्या जाता पर्वतनिर्झरे ।
नेयं भवनमासाद्य कुबेरस्य महात्मनः ॥ १०
तुल्या हि सर्वभूतानामियं वैश्रवणस्य च ।
एवंगतेषु द्रव्येषु कः कं याचितुमर्हति ॥ ११

वैशंपायन उवाच ।

इत्युक्त्वा राक्षसान्सर्वान्भीमसेनो व्यगाहत ।
ततः स राक्षसैर्वाचा प्रतिषिद्धः प्रतापवान् ।
मा मैवमिति सक्रोधैर्भर्त्सयद्भिः समन्ततः ॥ १२
कदर्थीकृत्य तु स तान्राक्षसान्भीमविक्रमः ।
व्यगाहत महातेजास्ते तं सर्वे न्यवारयन् ॥ १३

गृह्णीत बध्नीत निकृन्ततेमं
पचाम खादाम च भीमसेनम् ।
क्रुद्धा ब्रुवन्तोऽनुययुर्द्रुतं ते
शस्त्राणि चोद्यम्य विवृत्तनेत्राः ॥ १४

---

759* यक्षाधिपस्यानुमते कुबेरस्य महात्मन ।

6 $^{a}$) T₂ G₃ ₄ न (for य) — $^{b}$) B₄ अवगम्य, S मत्य — $^{d}$) B₂ ₃ Dn D₁ ₄ ₆ न सशय (for असशयम्)

7 Ś₁ om 7 — $^{a}$) D₈ T G₁ ₃ M₁ त्वम् (for तम्) K₄ अस्माश्चादृत्य प — $^{b}$) K₃ विलोचित, K₄ T₂ G₃ ₄ बलादिव, B₃ Dn₂ n₃ D₄ ₆ °हत ; T₁ G₁ ₂ °दिह (for दित) — After 7, K₄ ins

760* तेषा तु वचन श्रुत्वा वार्यमाणोऽपि पाण्डव ।,

while B (B₁ marg) D (except D₁₋₃ ₅) ins

761* आमन्त्र्य यक्षराज वै तत पिब हरस्व च ।
नातोऽन्यथा त्वया शक्य किंचित्पुष्करमीक्षितुम् ।

[(L 1) B₃ °राजान (for राज वै) — (L 2) B₃ नष्टे, B₄ ततो (for नातो)]

8 $^{b}$) Ś₁ K₁₋₃ Dc D₁₋₃ ₅ उपा° (for दृष्टा) — $^{c}$) K₄ अदृष्ट्वा (for दृष्ट्वापि) Ś₁ K₁₋₃ D₁₋₃ ₅ त (for च) Ś₁ महात्मान, K₄ धनेश हि (for महाराज) — $^{d}$) K₄ क वै (for नाह)

9 $^{b}$) = 1 113 13$^{d}$ 4 50 7$^{d}$ etc D₁₋₃ ह्येष (for एष) K₄ B₄ S transp एष and धर्म — $^{d}$) K Dc Dn T G क्षत्र, D₄ M₁ क्षात्र (for क्षात्र) D₈ सनातन (for कथ)

10 $^{ab}$) Cf 3 151 2$^{b}$ K₄ M transp रम्या and जाता — $^{c}$) K₄ कथ हि भवता सम्यक्

11 $^{b}$) T₂ G₂₋₄ यथा (for इय)

12 K₄ T₁ M om the ref — $^{b}$) B Dc₁ [S]त्यमर्षण ; Dc₂ [S]प्यमर्षण ; Dn D₄ ₆ ह्यमर्षण (for व्यगाहत)

— After 12$^{ab}$, B D (except D₁₋₃ ₅) ins

762* व्यगाहत महाबाहुर्नलिनीं ता महाबल ।
[B₄ व्यवगाहन् (for व्यगाहत)]

On the other hand, S ins after 12$^{ab}$

763* ता तु पुष्करिणीं वीर प्रभिन्न इव कुञ्जर ।

— $^{e}$) Ś₁ K₁ ₂ सक्रोध, K₄ D₁ G₄ सक्रुद्धैर् (for सक्रोधैर्) — $^{f}$) M₂ प्रतापवान् (for समन्तत)

13 $^{a}$) K₁ ₂ तृणीकृत्वै(K₂ त्ये)व, K₄ अवमन्य स (for कदर्थी) K₄ B₄ D₁ ₂ तान्सर्वान् ; T₁ M₂ (by transp) स तु तान् — $^{c}$) K₄ अलोडयन्, B₁ ₄ Dn₁ D₄ ₆ M प्रा- (B₁ Dn₁ प्र)गाहत (for व्यगा°) — $^{d}$) K₄ तथा, D₁ ₄ ते वै ; T₁ तत (for ते त) — [illegible]

ततः स गुर्वीं यमदण्डकल्पां
महागदां काञ्चनपट्टनद्धाम् ।
प्रगृह्य तानभ्यपतत्तरस्वी
ततोऽब्रवीत्तिष्ठत तिष्ठतेति ॥ १५

ते तं तदा तोमरपट्टिशाद्यै-
र्व्याविध्य शस्त्रैः सहसाभिपेतुः ।
जिघांसवः क्रोधवशाः सुभीमा
भीमं समन्तात्परिवव्रुरुग्राः ॥ १६

वातेन कुन्त्यां बलवान्स जातः
शूरस्तरस्वी द्विषतां निहन्ता ।
सत्ये च धर्मे च रतः सदैव
पराक्रमे शत्रुभिरप्रधृष्यः ॥ १७

तेषां स मार्गान्विविधान्महात्मा
निहत्य शस्त्राणि च शात्रवाणाम् ।
यथाप्रवीरान्निजघान वीरः
परःशतान्पुष्करिणीसमीपे ॥ १८

ते तस्य वीर्यं च बलं च दृष्ट्वा
विद्याबलं बाहुबलं तथैव ।
अशक्नुवन्तः सहिताः समन्ता-
द्धतप्रवीराः सहसा निवृत्ताः ॥ १९

विदीर्यमाणास्तत एव तूर्ण-
माकाशमास्थाय विमूढसंज्ञाः ।
कैलासशृङ्गाण्यभिदुद्रुवुस्ते
भीमार्दिताः क्रोधवशाः प्रभग्नाः ॥ २०

स शक्रवद्दानवदैत्यसंघा-
न्विक्रम्य जित्वा च रणेऽरिसंघान् ।
विगाह्य तां पुष्करिणीं जितारिः
कामाय जग्राह ततोऽम्बुजानि ॥ २१

ततः स पीत्वामृतकल्पमम्भो
भूयो बभूवोत्तमवीर्यतेजाः ।
उत्पाट्य जग्राह ततोऽम्बुजानि
सौगन्धिकान्युत्तमगन्धवन्ति ॥ २२

---

उद्यम्य शस्त्राणि (for शस्त्राणि चोद्यम्य)

**15** [b]) $K_3$ $T_2$ G °बद्धा (for °नद्धाम्) — [c]) $K_4$ $B_4$ ताम् (for तान्) $B_4$ S (except $T_1$) °गमत् (for °पतत्) $K_4$ महारथो (for तरस्वी) — [d]) $K_4$ धुन्वन्गदा (for ततोऽब्रवीत्)

**16** [a]) $K_4$ भूपास् (for ते त) $D_6$ ततो, $G_{2,4}$ तथा (for तदा) $Ś_1$ K $B_1$ $Dc_2$ $D_{1-3,5}$ पट्टिश($K_{1-3}$ °स)तोमराद्यैर् ($K_4$ °रादीन्), S तोमरपट्टसाद्यैर् — [b]) $K_{1-3}$ $B_{2-4}$ $Dn_1$ $n_3$ $D_{3-6}$ $T_1$ $G_1$ व्याविद्ध, $K_4$ $D_{1,2}$ आविद्ध (for व्याविध्य) $K_4$ सर्वैं (for शस्त्रैः) $K_{1,2}$ [अ]भ्यपेतु; $K_{3,4}$ $B_{1-3}$ Dn $D_{1-6}$ निपेतु (for [अ]भिपेतु) — [c]) $Ś_1$ $K_{1,2}$ $G_2$ तु (for सु)

**17** [a]) $K_3$ $Dn_1$ $D_{1,2,5}$ $T_1$ $G_2$ $M_2$ सु (for स) — $G_4$ om $17^{cd}$ — [c]) $K_3$ Dc $D_5$ क्षात्रे (for सत्ये), and निरत (for च रत°) $D_6$ स (for the first च) $B_2$ तरस्वी, $B_3$ $Dn_1$ $n_3$ स चैव (for सदैव)

**18** [b]) $K_{1,2}$ विहति, B Dn $D_{4,6}$ वि($B_4$ नि)हन्य, $T_1$ निगृह्य (for निहत्य) ❀ Cn वा ल्यपि इत्यनुनासिकालोपपक्ष इद रूपम् । ❀ — After $18^{ab}$, $K_1$ reads 20 — [c]) $S_1$ $K_2$ Dc $D_{1-3}$ °प्रवीर, $K_1$ °प्रवीरा, $G_1$ °प्रकाश (for °प्रवीरान्) $K_4$ सतत जघान (for निजघान वीर) $K_{1-3}$ B D (except $D_{1,2,5}$) भीम (for वीर) — [d]) $S_1$ $K_{2,3}$ $B_4$ $D_{3,5}$ $G_1$ M पर शतान्, $K_1$ परा शता, $K_4$ परिभ्रमन्, $B_{1-3}$ Dc Dn $D_{4,6}$ $G_4$ पर शत, $D_{1,2}$ पर:शत

**19** [c]) $K_4$ $D_5$ सहसा, $B_{1,2}$ Dc S (except $T_1$) सहितु; Dn $D_{1,4,6}$ त (for °ता) $K_4$ विसोढु, $B_4$ समेता; $G_1$ समर्था (for समन्ताद्) — [d]) $Ś_1$ द्रुत, $K_1$ Dn $D_{1,4,6}$ द्रुत (for हत) Dc प्रवीरै (for -प्रवीरा) $K_4$ भैम बल भीमबलापि सत

**20** $K_1$ reads 20 after $18^{ab}$ — [a]) $Ś_1$ $K_3$ Dc $Dn_1$ $n_3$ $D_{1,2}$ $M_2$ विदार्य°, $K_1$ विशीर्य, $K_2$ विस्तीर्य, $B_4$ निवार्य, $T_2$ $G_{2-4}$ विकीर्य $B_1$ Dn $D_{4,6}$ हतुम् (for तूर्णम्) — [b]) $B_4$ मार्गं समाहाय (for आकाशमास्थाय) — [c]) Some MSS कैलाश°

**21** [d]) $K_4$ S काम स, $D_5$ कामाद्य (for य) $K_4$ महोत्पलानि (for ततोऽम्बु) — After 21, $Ś_1$ $K_{1,2}$ ins an addl colophon followed by वैश उ

**22** $B_4$ om from 22 up to st 23 of the next adhy $D_2$ om (hapl) $22^{abc}$ — [c]) $Ś_1$ B ($B_4$ om) D (except $D_5$ ; $D_2$ om) $T_1$ च सो, $K_2$ स घा° (for ततो) $K_4$ महाभुज (for ऽम्बुजानि)

**23** $B_4$ om 23 (cf v.l 22) — [b]) $D_3$ भीमबलाश्च

ततस्तु ते क्रोधवशाः समेत्य
धनेश्वरं भीमबलप्रणुन्नाः ।
भीमस्य वीर्यं च बलं च संख्ये
यथावदाचख्युरतीव दीनाः ॥ २३
तेषां वचस्तत्तु निशम्य देवः
प्रहस्य रक्षांसि ततोऽभ्युवाच ।
गृह्णातु भीमो जलजानि कामं
कृष्णानिमित्तं विदितं ममैतत् ॥ २४
ततोऽभ्यनुज्ञाय धनेश्वरं ते
जग्मुः कुरूणां प्रवर विरोषाः ।
भीमं च तस्यां ददृशुर्नलिन्यां
यथोपजोषं विहरन्तमेकम् ॥ २५

इति श्रीमहाभारते आरण्यकपर्वणि द्विपञ्चाशदधिकशततमोऽध्यायः ॥ १५२ ॥

## १५३

वैशंपायन उवाच ।
ततस्तानि महार्हाणि दिव्यानि भरतर्षभ ।
बहूनि बहुरूपाणि विरजांसि समाददे ॥ १
ततो वायुर्महाञ्शीघ्रो नीचैः शर्करकर्षणः ।
प्रादुरासीत्खरस्पर्शः संग्राममभिचोदयन् ॥ २
पपात महती चोल्का सनिर्घाता महाप्रभा ।
निष्प्रभश्चाभवत्सूर्यश्छन्नरश्मिस्तमोवृतः ॥ ३
निर्घातश्चाभवद्भीमो भीमे विक्रममास्थिते ।
चचाल पृथिवी चापि पांसुवर्षं पपात च ॥ ४
सलोहिता दिशश्चासन्खरवाचो मृगद्विजाः ।

---

— c) Ś1 K1–3 Dc D1–3 5 कार्यं (for वीर्यं) T2 G3 M1 सखे (for सख्ये) — d) S1 D3 यथातथा°, D1 यथा तदा° (for यथावदा) K1 2 B (B4 om) Dn D4 6 भीता (for दीना) K4 सर्वं समाचख्यु (sic) सुदीनरूपा
**24** B4 om 24 (cf v l 22) — ab) K4 निशम्य तेषा वचनं महात्मा धनेश्वरः क्रोधवशानुवाच — c) K3 B (B4 om) D (except D3 5) G4 कामात् (for कामं)
**25** B4 om 25 (cf v l 22) — a) B (B4 om) D (except D1–3 5) T1 M1 ज्ञाप्य (for ज्ञाय) — b) G4 सरोषा (for वि ) — c) K4 भीमोपि (for भीमं च) D1 2 ततस्ते (for च तस्या) K4 च पुनर् (for ददृशुर्) M1 तस्याशु ते सददृशु° — d) K4 विजह्रार वीरं (for विहरन्तमे )

Colophon om in B4 — *Major parvan* Ś1 K1 2 T G2–4 M1 आरण्य — *Sub parvan* K1–3 D3 4 (all om sub parvan name) mention only पुष्पाभिहरण; K4 D2 likewise, only गंधमादनप्रवेश (followed by पुष्पाभिहरण in D2), B (B4 om) Dc Dn D4 6 G1, only सौगंधिकाहरण, and finally D1, only लोमशतीर्थयात्रा (followed by गंधमादनप्रवेश and पुष्पाभिहरण) — *Adhy name* T2 G3 क्रोधवशयुद्ध — *Adhy no* (figures, words or both) Dn 153 (Dn3 154), D1 160 S 155 (M3 157) — *Śloka no* Dn 27, D1 26

## 153

**1** B4 om 1–23 (cf v l 3 152 22) Ś1 om 1bc — b) K1 2 D1 पुष्पाणि (for दिव्यानि) K1–3 D1–3 5 पुरुषर्षभ (K3 D1 °भ), T1 M भरतर्षभ — After 1, Dc2 ins
765* एतस्मिन्नन्तरे राजन्युधिष्ठिरसमीपतः ।
**2** B4 om 2 (cf v l 1) — a) T2 G4 जगत् (for महान्) — b) Ś1 B3 G2 4 °वर्षण, K4 वर्षिभिः; M2 कर्षणात् (for °कर्षण ) M1 युधिष्ठिरस्समीपत (cf 765*) — c) K1 Dn3 वरस्पर्श ; K4 खररव°; B1 सुखस्पर्श , D6 पर°, G1 कर — d) K1 3 °दर्शयन्, K4 Dc2 D1 नोदयन्; D3 °तो नदन्, T2 G °रोचयन्
**3** B4 om 3 (cf v l 1) — b) B3 Dn D4 6 T2 G3 भया, Dc °प्रजा (for प्रभा) — Ś1 om 3d–4a
**4** Ś1 om 4a (cf v l 3) — a) Dc Dn3 T2 G2 3 M निर्घाताश्चाभवन्भीमा — d) Ś1 पुष्पवृष्टि, K1–3 Dc D1–3 5 T1 पांशुवृष्टि, K4 B (B4 om) D4 पांशुवर्षं Ś1 G1 4 ह (for च)
**5** B4 om 5 (cf v l 1) — a) Ś1 K1 2 D3 लोहिताश्च; T1 तिरोहिता (for सलोहिता) Ś1 K1 2 M1 सर्वा (for चासन्) — b) T2 G3 4 मृगास्तथा (for मृगद्विजा) — d) =4 31 5b K1 2 B (B4 om) D (except

तमोवृतमभूत्सर्वं न प्रज्ञायत किंचन ॥ ५
तदद्भुतमभिप्रेक्ष्य धर्मपुत्रो युधिष्ठिरः ।
उवाच वदतां श्रेष्ठः कोऽस्मानभिभविष्यति ॥ ६
सज्जीभवत भद्रं वः पाण्डवा युद्धदुर्मदाः ।
यथारूपाणि पश्यामि स्वभ्यग्रो नः पराक्रमः ॥ ७
एवमुक्त्वा ततो राजा वीक्षांचक्रे समन्ततः ।
अपश्यमानो भीमं च धर्मराजो युधिष्ठिरः ॥ ८
तत्र कृष्णां यमौ चैव समीपस्थानरिंदमः ।
पप्रच्छ भ्रातरं भीमं भीमकर्माणमाहवे ॥ ९
कच्चिन्न भीमः पाञ्चालि किंचित्कृत्यं चिकीर्षति ।
कृतवानपि वा वीरः साहसं साहसप्रियः ॥ १०
इमे ह्यकस्मादुत्पाता महासमरदर्शिनः ।
दर्शयन्तो भयं तीव्रं प्रादुर्भूताः समन्ततः ॥ ११
तं तथा वादिनं कृष्णा प्रत्युवाच मनस्विनी ।
प्रिया प्रियं चिकीर्षन्ती महिषी चारुहासिनी ॥ १२
यत्तत्सौगन्धिकं राजन्नाहृतं मातरिश्वना ।
तन्मया भीमसेनस्य प्रीतयाद्योपपादितम् ॥ १३
अपि चोक्तो मया वीरो यदि पश्येद्बहून्यपि ।
तानि सर्वाण्युपादाय शीघ्रमागम्यतामिति ॥ १४
स तु नूनं महाबाहुः प्रियार्थं मम पाण्डवः ।
प्रागुदीचीं दिशं राजंस्तान्याहर्तुमितो गतः ॥ १५
उक्तस्त्वेवं तया राजा यमाविदमथाब्रवीत् ।
गच्छाम सहितास्तूर्णं येन यातो वृकोदरः ॥ १६
वहन्तु राक्षसा विप्रान्यथाश्रान्तान्यथाकृशान् ।
त्वमप्यमरसंकाश वह कृष्णां घटोत्कच ॥ १७
व्यक्तं दूरमितो भीमः प्रविष्ट इति मे मतिः ।
चिरं च तस्य कालोऽयं स च वायुसमो जवे ॥ १८
तरस्वी वैनतेयस्य सदृशो भुवि लङ्घने ।
उत्पतेदपि चाकाशं निपतेच्च यथेच्छकम् ॥ १९
तमन्वियाम भवतां प्रभावाद्रजनीचराः ।

---

$D_{2\ 3}$) प्राज्ञा° (for प्रज्ञा°) — *After* 5, B ($B_4$ om) D (except $D_{1\ 2\ 5}$, $D_3$ marg *sec m*) ins
766* अन्ये च बहवो भीमा उत्पातास्तत्र जज्ञिरे ।

**6** $B_4$ om 6 (cf v l 1) — [b]) Ś$_1$ $K_{1-3}$ Do $D_{1-3}$ $T_1$ $G_4$ °राजो (for °पुत्रो), cf v l 8

**7** $B_4$ om 7 (cf v l 1) — [c]) $T_2$ $G_3$ °रूप न, $G_4$ °रूपा न (for °रूपाणि) — [d]) $K_{1\ 2}$ सुत्रासो, $K_{3\ 4m}$ $D_{1-3\ 5}$ स्वभ्यासो ($D_5$ °से), Do प्रत्यग्रो, $D_4$ स्वाभ्यग्रो; $T_1$ $G_{1\ 2}$ $M_1$ सुव्यक्तो, $T_2$ $G_{3\ 4}$ $M_2$ सुव्यग्रो $K_4$ तथा नि (sic) परमो जय°

**8** $B_4$ om 8 (cf v l 1) — [c]) $K_4$ $B_1$ $T_2$ त, $B_{2\ 3}$ Dn $D_{4\ 6}$ तु (for च) — [d]) $B_{2\ 3}$ D (except $D_{1-3\ 5}$) $G_4$ °पुत्रो (for राजो), cf v l 6 Ś$_1$ $K_{1\ 2}$ प्रोवाचेद वचस्तदा

**9** $B_4$ om 9 (cf v l 1) — [a]) B ($B_4$ om) D (except $D_{1-3\ 5}$) T $G_{3\ 4}$ तस°, $G_1$ यत्र (for तत्र) $K_4$ B ($B_4$ om) Dn $D_{4\ 6}$ चापि (for चैव) — [b]) $K_4$ B ($B_4$ om) Do Dn $D_{4\ 6}$ समीपस्थावरिंदम, $D_3$ धर्मराजो युधिष्ठिर (=8[d]) — [cd]) $K_2$ $T_1$ $G_{2\ 4}$ M वीर (for भीम) $K_4$ अपृच्छद्भीमकर्माण भ्रातर भीममाहवे

**10** $B_4$ om 10 (cf v l 1) — [a]) $K_1$ $D_5$ किंचिन्, $K_4$ कश्चिन् (for कच्चिन्) $B_{1\ 3}$ $M_1$ नु, $Dn_1$ $n_2$ $D_6$ क (for न) $K_4$ भीमो नु (for न भीम) — [b]) Ś$_1$ कच्चित्, $K_{1\ 2}$ कश्चित्, $T_2$ $G_{2\ 3}$ किं च (for किंचित्) $K_4$ $M_1$ किंचित्कार्यं, $T_1$ (by transp) कृत्य किंचिच

**11** $B_4$ om 11 (cf v l 1) — [b]) B ($B_4$ om) Dn $D_{1\ 4\ 6}$ $T_1$ °दर्शना, $T_2$ G M °शसिन — [c]) Ś$_1$ घोर (for तीव्र)

**12** $B_4$ om 12 (cf v l 1) — [b]) $K_{1\ 2\ 4}$ $D_{1\ 2}$ S यश° (for मन°)

**14** $B_4$ om 14 (cf v l 1) — [a]) $K_3$ $Do_2$ $D_5$ $T_1$ M वीर (for वीरो) — [b]) $K_3$ B ($B_4$ om) $Dn_1$ $n_2$ $D_{4\ 6}$ G $M_1$ पश्येर्; some MSS पश्ये (for पश्येद्) — [c]) T G च (for [उ]प)

**16** $B_4$ om 16 (cf v l 1) — [a]) Ś$_1$ चैव (for त्वेव) Do राजन् (for राजा) — [c]) $K_{1-3}$ $D_{2\ 3}$ गच्छाम $K_{1\ 2}$ सहसा, $D_2$ त्वरितास् (for सहितास्)

**17** $B_4$ om 17 (cf v l 1) — [a]) $K_4$ T G $M_2$ मुख्यान् ($T_2$ $G_{2\ 3}$ $M_2$ °ख्या) (for विप्रान्)

**18** $B_4$ om 18 (cf v l 1) — [c]) Ś$_1$ K Do $D_{1-3\ 5}$ गतस्य (for च तस्य)

**19** $B_4$ om 19 (cf v l 1), $G_4$ om 19[ab] — [b]) $K_{1\ 2}$ तुल्यो भुवि विलघने — [c]) $M_2$ चाकाशे — [d]) Ś$_1$ K $D_{3\ 5}$ निष्पतेच्च ($K_3$ नि पतेत) (for निपतेच्च) $B_3$ यथेपुक°

पुरा स नापराध्नोति सिद्धानां ब्रह्मवादिनाम् ॥ २०
तथेत्युक्त्वा तु ते सर्वे हैडिम्बप्रमुखास्तदा ।
उद्देशज्ञाः कुबेरस्य नलिन्या भरतर्षभ ॥ २१
आदाय पाण्डवांश्चैव तांश्च विप्राननेकशः ।
लोमशेनैव सहिताः प्रययुः प्रीतमानसाः ॥ २२
ते गत्वा सहिताः सर्वे ददृशुस्तत्र कानने ।
प्रफुल्लपङ्कजवतीं नलिनीं सुमनोहराम् ॥ २३
तं च भीमं महात्मानं तस्यास्तीरे व्यवस्थितम् ।
ददृशुर्निहतांश्चैव यक्षान्सुविपुलेक्षणान् ॥ २४
उद्यम्य च गदां दोर्भ्यां नदीतीरे व्यवस्थितम् ।
प्रजासंक्षेपसमये दण्डहस्तमिवान्तकम् ॥ २५
तं दृष्ट्वा धर्मराजस्तु परिष्वज्य पुनः पुनः ।
उवाच श्लक्ष्णया वाचा कौन्तेय किमिदं कृतम् ॥ २६
साहसं बत भद्रं ते देवानामपि चाप्रियम् ।
पुनरेवं न कर्तव्यं मम चेदिच्छसि प्रियम् ॥ २७
अनुशास्य च कौन्तेयं पद्मानि प्रतिगृह्य च ।
तस्यामेव नलिन्यां ते विजह्रुरमरोपमाः ॥ २८
एतस्मिन्नेव काले तु प्रगृहीतशिलायुधाः ।
प्रादुरासन्महाकायास्तस्योद्यानस्य रक्षिणः ॥ २९
ते दृष्ट्वा धर्मराजानं देवर्षिं चापि लोमशम् ।
नकुलं सहदेवं च तथान्यान्ब्राह्मणर्षभान् ।
विनयेनानताः सर्वे प्रणिपेतुश्च भारत ॥ ३०

---

T G₃ यथोच° (for यथेच्छ )

**20** B₄ om 20 (cf v l 1) — a) Ś₁ K₁ ₃ D₁ ₂ ₅ M₃ तमन्वयाम (K₃ °मो), K₄ वय प्रयामो (for तमन्वियाम) — b) Ś₁ प्रसादाद्, T₁ प्रतापाद् (for प्रभावाद्) — c) K₄ S (except T₁) [अ]तो (for स) K₄ नोपगच्छेत, D₁ ₂ नापराध्येत (for °राध्नोति) — d) K₃ गिरिवासिना (for ब्रह्म )

**21** B₄ om 21 (cf v l 1) — b) K₃ D₁ ₂ ₅ हैडब S₁ K₁ ₂ Dc तत , B₃ T₂ G₃ तथा (for तदा) K₄ हिडिंबाद्या निशाचरा — d) K₄ च नृपोत्तम, S पुरुषर्षभ (for भरत°)

**22** B₄ om 22 (cf v l 1) — c) K₄ सर्वान्; T₂ G₂₋₄ चापि (for चैव) — d) K₃ D₁₋₃ ₅ क्रमशस्तदा (for प्रीत°)

**23** B₄ om 23 (of v l 1), K₄ om 23ab — a) Ś₁ K (K₄ om ) D₁₋₃ ₅ त्वरिता (for सहिता ) B (B₄ om ) Dc Dn D₄ ₆ ते सर्वे त्वरिता गत्वा — b) N (K₄ B₁ om ) शुभ (for तत्र) Ś₁ K (K₄ om ) B (B₄ om ) Dc Dn₁ D₁ ₃ ₄ ₆ कानना, Dn₂ n₃ D₂ ₅ कानन (for कानने) — c) N (B₄ om ) पद्मसौगन्धिकवतीं (K₄ प्रोत्फुल्ल पकजवना ) — d) K₁ ₄ B₁ ₃ D (except D₁₋₃ ₅) T₁ °रमा (for °हराम्)

**24** B₄ resumes — b) Ś₁ K₁₋₃ D₂ ₃ ₅ तरस्विन; B Dc Dn D₄ मनस्विन, D₁ तपस्विन (for व्यव ) — Dc om 24cd — d) Dc G₁ राक्षसान् (for यक्षान्सु ) K₃ तु, B Dn D₄ च (for सु ) — B (B₁ ₄ reading line 1 after line 3) Dc Dn D₄ ins after 24

767* भिन्नकायाक्षिबाहूरून्सचूर्णितशिरोधरान् ।
त च भीम महात्मान तस्यास्तीरे व्यवस्थितम् ।
सक्रोध स्तब्धनयन सदष्टदशनच्छदम् ।
[ (L 2)=24ab ]

**25** Dc transp 25ab and 25cd — a) T₁ उद्यम्य (for उद्यम्य) S [अ]थ (for च ) — b) B₄ नदीकूले, M₃ नद्यास्तीरे K₄ विभ्रयान महाबल, B₁ ₃ Dn D₄ G₄ नदी तीरेप्ववस्थित — d) K₄ S °पाणिम् (for °हस्तम्)

**26** b) K₄ [इ]दमब्रवीत्; S [अ]थ पाडव (for पुन पुन ) — c) K₄ भ्रातर (for उवाच ) — d) K₄ किमिद कृतवानसि

**27** a) K₄ वद, Dc तव, D₁ ₂ बल, D₄ च न (for बत ) — b) B₁₋₃ Dn D₄ ₆ अथ (for अपि) D₁ ₂ ₄ ₆ वा° (for चा°) — B₂ om 27cd

**28** a) B Dn D₄ ₆ °शिष्य तु (B₁ ₂ ₄ स); D₁₋₃ शास्य स, T₁ °यास्यसि, G₄ शास च, M₁ शास्यति (for °शास्य च) — b) K₃ B Dn D₄₋₆ परि° (for प्रति°) — c) B₁ ₃ ₄ Dn D₄ ₆ T₂ G₁ ₃ तु (for ते)

**29** b) K₄ प्रतिगृह्य शरासना — After 29, K₄ ins

768* उच्चुक्रुशुश्च तेऽन्योन्य राक्षसा भीमदर्शना ।
राक्षसे वै कुबेरस्य नलिनीं वनचारिण ।
सभ्रान्तमनस सर्व व्याकुलेनान्तरात्मभि ।
उपतस्थुर्महात्मान धर्मपुत्र युधिष्ठिरम् ।

**30** a) K₄ दृष्ट्वा च (for ते दृष्ट्वा) S (except T₁ G₁) °राज च (for °राजान) — b) B D (except D₁₋₃ ₅) महर्षिं (for देव ) T G चैव (for चापि) — c) K₄ B Dn D₁ ₃ ₄ ₆ G₁ नता (for [आ]नता ) K₃ विनये भ्यागता° सर्वे — f) B₂ ₃ Dn₃ D₅ °पत्य (for °पेतुश्च)

**31** b) Ś₁ K₂ ₄ शशसु , K₁ B₄ प्रणेमु , T₁ G₁ ₂ M

सान्त्विता धर्मराजेन प्रसेदुः क्षणदाचराः ।
विदिताश्च कुबेरस्य ततस्ते नरपुंगवाः ।
ऊषुर्नातिचिरं कालं रममाणाः कुरूद्वहाः ॥ ३१

इति श्रीमहाभारते आरण्यकपर्वणि त्रिपञ्चाशदधिकशततमोऽध्यायः ॥ १५३ ॥ समाप्तं तीर्थयात्रापर्व ॥

## १५४

वैशंपायन उवाच ।
ततस्तान्परिविश्वस्तान्वसतस्तत्र पाण्डवान् ।
गतेषु तेषु रक्षःसु भीमसेनात्मजेऽपि च ॥ १
रहितान्भीमसेनेन कदाचित्तान्यदृच्छया ।
जहार धर्मराजानं यमौ कृष्णां च राक्षसः ॥ २
ब्राह्मणो मन्त्रकुशलः सर्वास्त्रेष्वस्त्रवित्तमः ।
इति ब्रुवन्पाण्डवेयान्पर्युपास्ते स नित्यदा ॥ ३
परीक्षमाणः पार्थानां कलापानि धनूंषि च ।
अन्तरं समभिप्रेप्सुर्नाम्ना ख्यातो जटासुरः ॥ ४
स भीमसेने निष्क्रान्ते मृगयार्थमरिंदमे ।

---

प्रशेमु (for प्रसेदु॰) K3 D5 च क्षपा॰ (for क्षणदा॰) — c) B2 वेदिता॰ K3 G2 ते, D1 2 तु (for च) — d) B Dn D4 6 तत्र (for ततस्) Ś1 K1-3 Dc D1-3 5 पुरुषर्षभा, K4 B Dn D4 6 कुरुपुंगवा॰ (for नर॰) — f) K4 ततस्तत॰, B1 D3 S महारथा (for कुरू॰) — After 31, B D (except D5) S (except G4 M2) ins

769* प्रतीक्षमाणा बीभत्सु गन्धमादनसानुषु ।

Colophon — *Major parvan* Ś1 K1 2 T2 G2-4 M1 आरण्य, D6 वन (!) — *Sub parvan* B1 तीर्थयात्रा, followed by पुष्पाभिहरण K1 2 4 B4 D3 (all om sub-parvan name) mention only पुष्पाभिहरण; K3 D2 5, likewise, only लोमशतीर्थयात्रा (followed by पुष्पाभिहरण), B2 3 Dn D4 6 M1, only सौगंधिकाहरण, Dc D1, only लोमशतीर्थयात्रा (followed by गंधमादनप्रवेश and सौगंधिका[D1 पुष्पाभि]हरण), and finally T2 G3, only गंधमादन To पुष्पाभिहरण or सौगंधिकाहरण, MSS (mostly) add समाप्त — *Adhy no* (figures, words or both) Dn 154 (Dn3 155), D1 161, S 156 (M2 158) — *Śloka no* Dn 34, D1 33

☞ After adhy 153, B D (except D1-3 5) S ins an adhy which is given in App I (No 17)

### 154

**1** After $1^{ab}$, B D (except D5) ins

770* पर्वतेन्द्रे द्विजैः सार्धं पार्थागमनकाङ्क्षया ।

— Ś1 K1-3 D1 2 5 ins after 1 D3, after $2^{ab}$

771* आजगाम तदा रक्षो नाम्ना ख्यातो जटासुरः ।

**2** K3 D1 2 5 read $2^{ab}$ after $5^{ab}$ — D1 2 om $2^{cd}$ — Ś1 K1-3 D2 5 read $2^{cd}$ after 5 — c) K4 धर्मराज च, S धर्मराज वै (for धर्मराजान) — After 2, G1 ins

772* जनमेजयः ।
ब्रह्मन्कथं धर्मराज यमौ कृष्णा च राक्षसः ।
जगाम कुत्र भीमश्च गतो राक्षसकण्टकः ।
वक्तुमर्हसि विप्राग्र्य वृत्तमेतन्ममानघ ।

**3** Before 3, G1 ins वैश॰ — b) K4 [अ]हमस्मि ब्रह्मवित्तम, B1-3 Dn D4 6 सर्वशास्त्रविदुत्तमः — After $3^{ab}$, Ś1 K1-3 D1-3 5 ins

773* जामदग्न्यस्य शिष्योऽहं रामस्याक्लिष्टकर्मणः ।

**4** a) K1 3 B4 Dc Dn3 परीक्ष्यमाणः; Dn1 n2 S (except T2 G2 3) परीप्समानः Cf $32^{b}$ — b) S कलापांश्च (for ॰पानि) — c) K1 2 च समप्रेप्सुर्; B2-4 Dn D4 6 सपरिप्रेप्सुर्, D1 2 समनुप्रेप्सुर् — After $4^{c}$, N (except K3 4 D5) ins

774* द्रौपद्या हरणं प्रति ।
दुष्टात्मा पापबुद्धिः स

— d) K3 D1-3 5 राक्षसोऽथ, B4 समाख्यातो — After 4, B D (except D1-3 5) ins

775* पोषणं तस्य राजेन्द्र चक्रे पाण्डवनन्दनः ।
बुबुधे न च तं पापं भस्मच्छन्नमिवानलम् ।

**5** a) B1-3 T G2-4 भीमसेने च (B1-3 वि) निष्क्राते — b) Dn D4 6 T2 G1 3 अरिंदम T1 मृगया यात्यरिंदमे — After $5^{ab}$, K3 D1 2 5 read $2^{ab}$ On the other hand, B D (except D1-3 5) ins after $5^{ab}$

अन्यद्रूपं समास्थाय विकृतं भैरवं महत् ॥ ५
गृहीत्वा सर्वशस्त्राणि द्रौपदीं परिगृह्य च ।
प्रातिष्ठत स दुष्टात्मा त्रीन्गृहीत्वा च पाण्डवान् ॥ ६
सहदेवस्तु यत्नेन ततोऽपक्रम्य पाण्डवः ।
आक्रन्दद्भीमसेनं वै येन यातो महाबलः ॥ ७
तमब्रवीद्धर्मराजो ह्रियमाणो युधिष्ठिरः ।
धर्मस्ते हीयते मूढ न चैनं समवेक्षसे ॥ ८
येऽन्ये केचिन्मनुष्येषु तिर्यग्योनिगता अपि ।
गन्धर्वयक्षरक्षांसि वयांसि पशवस्तथा ।
मनुष्यानुपजीवन्ति ततस्त्वमुपजीवसि ॥ ९
समृद्ध्या ह्यस्य लोकस्य लोको युष्माकमृध्यते ।
इमं च लोकं शोचन्तमनुशोचन्ति देवताः ।
पूज्यमानाश्च वर्धन्ते हव्यकव्यैर्यथाविधि ॥ १०
वयं राष्ट्रस्य गोप्तारो रक्षितारश्च राक्षस ।
राष्ट्रस्यारक्ष्यमाणस्य कुतो भूतिः कुतः सुखम् ॥ ११
न च राजावमन्तव्यो रक्षसा जात्वनागसि ।
अणुरप्यपचारश्च नास्त्यस्माकं नराशन ॥ १२
द्रोग्धव्यं न च मित्रेषु न विश्वस्तेषु कर्हिचित् ।
येषां चान्नानि भुञ्जीत यत्र च स्यात्प्रतिश्रयः ॥ १३
स त्वं प्रतिश्रयेऽस्माकं पूज्यमानः सुखोषितः ।
भुक्त्वा चान्नानि दुष्प्रज्ञ कथमस्माञ्जिहीर्षसि ॥ १४
एवमेव वृथाचारो वृथावृद्धो वृथामतिः ।

776* घटोत्कचं सानुचरं दृष्ट्वा विप्रद्रुतं दिशः ।
लोमशप्रभृतींस्तांस्तु महर्षींश्च समाहितान् ।
स्नातुं विनिर्गतान्दृष्ट्वा पुष्पार्थं च तपोधनान् ।

— $^c$) B$_{2-4}$ Dn D$_{4, 6}$ रूपमन्यत् (by transp) — After 5, Ś$_1$ K$_{1-3}$ D$_{2, 3}$ read 2$^{cd}$

6 $^c$) T G सु° (for स) — $^d$) Ś$_1$ K$_3$ तान्गृहीत्वा, T$_1$ भ्रातृभिस्तान्, M भ्रातृन्हृत्वा Ś$_1$ K$_{1, 3}$ स (for च) K$_4$ गृहीत्वा सर्वपाण्डवान् — After 6, Do ins 777*

7 Ś$_1$ K$_1$ om 7$^{ab}$ — B Dn D$_{4, 6}$ ins after 7$^{ab}$ Do after 6

777* विक्रम्य कौशिकं खड्गं मोक्षयित्वा मह रिपोः ।
[ B$_{1, 4}$ Do विभ्राम्य ]

— $^c$) K$_{1, 3, 4}$ B$_4$ D$_1$ T$_2$ G$_3$ आ(K$_3$ अ)क्रन्दन् — $^d$) B$_1$ Do भये जाते (for येन यातो) K$_4$ S वृकोदर°; Do महाबल

8 $^c$) T$_1$ हीयते, G$_{2, 4}$ हिं° (for ही) — $^d$) B$_1$ चैन, B$_{3, 3}$ Dn D$_{1, 4, 6}$ तत्र (for चैन) Ś$_1$ K$_1$ अभिवीक्ष्यसे; T G$_{3, 4}$ समुपेक्षसे

9 $^a$) K$_3$ किंचिन्, B$_{2-4}$ Dn D$_{4, 6}$ कश्चिन् (for केचिन्) — $^b$) K$_4$ G$_1$ M$_2$ गणा°; B Dn D$_{4, 6}$ च ये (B$_4$ नरा°); M$_1$ सदा (for अपि) Ś$_1$ K$_{1-3}$ Do D$_{1-3, 5}$ तिर्यग्योनिगतेष्वपि (Ś$_1$ K$_{1, 3}$ °षु च) — After 9$^{ab}$, B Do (om line 1) Dn D$_{4, 6}$ ins

778* धर्मं ते समवेक्षन्ते रक्षांसि च विशेषतः ।
धर्मस्य राक्षसा मूलं धर्मं ते विदुरुत्तमम् ।
एतत्परीक्ष्य सर्वं त्वं समये स्थातुमर्हसि ।
देवाश्च ऋषयः सिद्धाः पितरश्चापि राक्षसाः ।

— $^c$) K$_4$ B Dn D$_{4, 6}$ G$_1$ M गन्धर्वोरग° — $^d$) Ś$_1$ K$_{1, 3}$ दुष्टानि (for वयांसि) — After 9$^{cd}$, B D (except D$_{2, 3, 5}$) ins

779* तिर्यग्योनिगताश्चैव अपि कीटपिपीलिकाः ।

— $^e$) K$_4$ B$_{1-3}$ Dn D$_{1, 3, 4, 6}$ T$_1$ M$_2$ अपि, B$_4$ D$_5$ अनु (for उप)

10 $^a$) B$_4$ Do$_2$ समृद्धा; T$_1$ G$_{2, 4}$ °द्ध°, T$_2$ G$_3$ °द्धौ B$_3$ Dn$_2$ G$_1$ यस्य, B$_4$ तस्य (for ह्यस्य) Ś$_1$ K$_1$ समृध्या यस्य लोकेषु, K$_4$ द्वेष्टा सर्वस्य लोकस्य — $^b$) Ś$_1$ G$_4$ M$_1$ लोके Ś$_1$ K$_{2, 3}$ Do D$_5$ एधते, K$_1$ एध्यते, K$_4$ ऊध्यते, B Dn$_2$ D$_{1, 3, 6}$ ऋध्यति, Dn$_1$ n$_3$ D$_{4, 6}$ Cnp ऋच्छति; T$_1$ हृष्यते (for ऋध्यते) G$_2$ लोके युष्माभिरिष्यते — $^c$) Ś$_1$ K$_{1, 2}$ D$_{1, 3}$ तु (for च) K$_{1, 3}$ शोचति K$_4$ S शोचन्तमन्वि(T$_2$ G$_3$ न्तमभि)म लोकं

12 $^a$) K$_4$ तु (for च) Ś$_1$ K$_{1-3}$ Do D$_{1-3, 5}$ राजानो नावमन्तव्या, M$_2$ न तु राजाभिहन्तव्यो — $^b$) Ś$_1$ K Do D$_{1-3}$ अनागस (for अनागसि) D$_5$ राक्षसाना त्वनागस — $^c$) D$_5$ उपचारस्य; T$_2$ G उपकारस्य (for अपचा°) K$_4$ स्वजनस्योपचाराय — $^d$) T$_1$ च राक्षस (for नराशन) — After 12, B D (except D$_{1-3}$) ins

780* विघसाशान्यथाशक्त्या कुर्महे देवतादिषु ।
गुरूंश्च ब्राह्मणांश्चैव प्रमाणप्रवणाः सदा ।

13 $^a$) D$_3$ मर्त्येषु; M$_1$ विप्रे° (for मित्रे°) — $^b$) Ś$_1$ K$_{1, 3}$ transp न and विश्व° T$_2$ G$_{3, 4}$ विनष्टेषु (for विश्व°) Ś$_1$ कस्यचित्, K$_3$ कथचन

14 $^a$) Ś$_1$ त्वं च, D$_{1, 2}$ सत्व (for स त्व) Ś$_1$ D$_3$ T$_1$ G$_{2, 4}$ प्रतिश्रयो°

15 $^c$) B$_1$ Dn D$_6$ च (for त्व) — $^d$) Ś$_1$ K$_{1-3}$ Do D$_{1-3, 5}$ वृथैव न, T$_2$ G प्राधान्येन (G$_4$ धृधान्येन) (for

वृथामरणमर्हस्त्वं वृथाद्य न भविष्यसि ॥ १५
अथ चेद्दुष्टबुद्धिस्त्वं सर्वैर्धर्मैर्विवर्जितः ।
प्रदाय शस्त्राण्यस्माकं युद्धेन द्रौपदीं हर ॥ १६
अथ चेत्त्वमविज्ञाय इदं कर्म करिष्यसि ।
अधर्मं चाप्यकीर्तिं च लोके प्राप्स्यसि केवलम् ॥ १७
एतामद्य परामृश्य स्त्रियं राक्षस मानुषीम् ।
विषमेतत्समालोड्य कुम्भेन प्राशितं त्वया ॥ १८
ततो युधिष्ठिरस्तस्य भारिकः समपद्यत ।
स तु भाराभिभूतात्मा न तथा शीघ्रगोऽभवत् ॥ १९
अथाब्रवीद्द्रौपदीं च नकुलं च युधिष्ठिरः ।
मा भैष्ट राक्षसान्मूढाद्गतिरस्य मया हृता ॥ २०
नातिदूरे महाबाहुर्भविता पवनात्मजः ।
अस्मिन्मुहूर्ते संप्राप्ते न भविष्यति राक्षसः ॥ २१
सहदेवस्तु तं दृष्ट्वा राक्षसं मूढचेतसम् ।
उवाच वचनं राजन्कुन्तीपुत्रं युधिष्ठिरम् ॥ २२
राजन्किं नाम तत्कृत्यं क्षत्रियस्यास्त्यतोऽधिकम् ।
यद्युद्धेऽभिमुखः प्राणांस्त्यजेच्छत्रूञ्जयेत वा ॥ २३
एष चास्मान्वयं चैनं युध्यमानाः परंतप ।
सूदयेम महाबाहो देशकालो ह्ययं नृप ॥ २४
क्षत्रधर्मस्य संप्राप्तः कालः सत्यपराक्रम ।
जयन्तः पात्यमाना वा प्राप्तुमर्हाम सद्गतिम् ॥ २५
राक्षसे जीवमानेऽद्य रविरस्तमियाद्यदि ।
नाहं ब्रूयां पुनर्जातु क्षत्रियोऽस्मीति भारत ॥ २६
भो भो राक्षस तिष्ठस्व सहदेवोऽस्मि पाण्डवः ।
हत्वा वा मां नयस्वैनान्हतो वाद्येह स्वप्स्यसि ॥ २७
तथैव तस्मिन्ब्रुवति भीमसेनो यदृच्छया ।
प्रादृश्यत महाबाहुः सवज्र इव वासवः ॥ २८
सोऽपश्यद्भ्रातरौ तत्र द्रौपदीं च यशस्विनीम् ।

वृथाद्य न )

**16** $^a$) $B_3$ यथा, $T_2$ $G_{2-4}$ अपि (for अथ) — $^b$) $S_1$ $K_{1\,2}$ $D_{3\,5}$ सर्वधर्म , $K_3$ Dc $D_{1\,2}$ सर्वधर्मैर् — $^c$) $K_4$ $M_2$ शस्त्रम्

**17** $^a$) $K_1$ $D_{1-3}$ $G_{2\,4}$ अवज्ञाय, B Dc Dn $D_{4\,6}$ अविज्ञानाद्, $T_1$ न विज्ञाय, $G_1$ एवमज्ञाय (hypermetric), $M_2$ अभिज्ञाय $S_1$ $K_2$ अथ त्वमेवम( $K_2$ °व स )ज्ञाय — $^b$) $Ś_1$ हीद कर्म, $D_{1-3}$ [अ]धर्ममेव

**18** $^a$) $T_1$ एनाम् $B_4$ अपि (for अद्य) Some MSS परामृष्य — $^d$) $K_4$ पिबसि त्व नराधम

**19** $^b$) $Ś_1$ $K_{1\,2\,4}$ भारक°; B D (except $D_{1-3\,5}$) गुरुक°, $M_2$ भारिक — $^c$) $Ś_1$ $K_{1\,2}$ ततो (for स तु) S भाराभि( $T_1$ °रिक )भूतत्वान्

**20** $^a$) $Ś_1$ $K_{1-3}$ Dc $D_{1-3\,5}$ ततो (for अथा ) $B_4$ धर्मराजो, S स नकुल ( for द्रौपदीं च) — $^b$) S द्रौपदीं (for नकुल) $B_4$ द्रौपदीं नकुल तथा — $^c$) $Ś_1$ $K_{1\,2}$ र ($S_1$ रा)क्षसो दुष्टाद्, $K_3$ रक्षसो मूढाद्, $K_4$ राक्षसे मूढे, $D_{1-3}$ $T_2$ G M राक्षसो मूढो ($G_1$ राक्षसान्मूढो), $D_5$ रक्षसान्मूढाद् — $^d$) $S_1$ $K_{2\,4}$ $Dc_2$ मया हृता, $K_3$ $B_4$ $D_{1-3}$ हृता मया, $D_5$ हृता मया (by transp )

**21** $^a$) $T_1$ यावन्नायाति वेगेन — $T_2$ $G_3$ om (hapl ) $21^b$–$24^c$ — $^b$) $Ś_1$ $K_{1-3}$ $D_{1-3\,5}$ मारुता° (for पवना°) — $^c$) $K_4$ $B_3$ Dc $G_1$ तस्मिन्, $T_1$ सोस्मिन्

**22** $T_2$ $G_3$ om 22 (cf v l 21) — $^b$) B D (except $D_{1-3\,5}$) $G_4$ मूढचेतन

**23** $T_2$ $G_3$ om 23 (cf v l 21) — $^a$) $B_4$ Dn $D_{4\,6}$ सत्कृत्य, Dc यत्कृत्य — $^b$) $K_4$ $G_{2\,4}$ ततो (for [अ]स्त्यतो) — $^c$) $D_{1\,2}$ $T_1$ $G_4$ °मुख (for °मुख ) — $^d$) B $Dn_1$ $n_2$ $D_{1\,2\,4-6}$ $G_4$ शत्रु

**24** $T_2$ $G_3$ om $24^{abc}$ (cf v l 21) — $^a$) $Ś_1$ $D_4$ $G_{2\,4}$ $M_2$ वा° (for चा°) $D_5$ जयेष्व् (for वय) $Ś_1$ $B_1$ $G_{2\,4}$m वैन (for चैन) — After $24^{ab}$, $K_{1\,2}$ read $25^{cd}$

**25** $^b$) S (except $G_1$) तूर्णं (for काल°) $K_{1\,3\,4}$ B Dc $Dn_3$ $D_{1-3}$ $G_1$ सत्यपराक्रम° — $K_{1\,2}$ read $25^{cd}$ after $24^{ab}$ — $^c$) $Ś_1$ $K_4$ युध्य , $K_{1-3}$ $B_4$ Dc $D_{1-3\,5}$ वध्य (for पात्य°)

**26** $^a$) $K_4$ S तु (for ऽद्य)

**27** $^a$) $K_3$ Dc $D_{2\,3}$ तिष्ठ त्व (for तिष्ठस्व) — $^c$) $K_{1\,2}$ $Dn_1$ $D_3$ S (except $M_1$) मा (for मा) $K_{2\,4}$ B D $G_1$ [ए]ना (for [ए]नान्) — $^d$) $T_1$ हतो वाद्य भविष्यसि, $T_2$ G हतो वा स्वप्स्यसीह वै

**28** $^a$) $B_{1-3}$ Dn $D_{4\,6}$ तदा ब्रुवति माद्रेये — $^c$) $Ś_1$ $K_1$ $B_4$ Dc $D_{1-3}$ अदृश्यत, $K_{2-4}$ $B_{1\,3}$ प्रत्यदृश्यन्, $D_5$ अप श्यत $B_4$ गदाहस्त° (for महा°) $B_2$ Dn $D_{4\,6}$ प्रत्यदृश्य द्गदाहस्त°

क्षितिस्थं सहदेवं च क्षिपन्तं राक्षसं तदा ॥ २९
मार्गाच्च राक्षसं मूढं कालोपहतचेतसम् ।
भ्रमन्तं तत्र तत्रैव दैवेन विनिवारितम् ॥ ३०
आवृंस्तान्ह्रियतो दृष्ट्वा द्रौपदीं च महाबलः ।
क्रोधमाहारयद्भीमो राक्षसं चेदमब्रवीत् ॥ ३१
विज्ञातोऽसि मया पूर्वं चेष्टञ्शस्त्रपरीक्षणे ।
आस्था तु त्वयि मे नास्ति यतोऽसि न हतस्तदा ।
ब्रह्मरूपप्रतिच्छन्नो न नो वदसि चाप्रियम् ॥ ३२
प्रियेषु चरमाणं त्वां न चैवाप्रियकारिणम् ।
अतिथिं ब्रह्मरूपं च कथं हन्यामनागसम् ।
राक्षसं मन्यमानोऽपि यो हन्यान्नरकं व्रजेत् ॥ ३३
अपक्वस्य च कालेन वधस्तव न विद्यते ।
नूनमद्यासि संपक्वो यथा ते मतिरीदृशी ।
दत्ता कृष्णापहरणे कालेनाद्भुतकर्मणा ॥ ३४
बडिशोऽयं त्वया ग्रस्तः कालसूत्रेण लम्बितः ।
मत्स्योऽम्भसीव स्यूतास्यः कथं मेऽद्य गमिष्यसि ॥ ३५
यं चासि प्रस्थितो देशं मनः पूर्वं गतं च ते ।
न तं गन्तासि गन्तासि मार्गं बकहिडिम्बयोः ॥ ३६
एवमुक्तस्तु भीमेन राक्षसः कालचोदितः ।
भीत उत्सृज्य तान्सर्वान्युद्धाय समुपस्थितः ॥ ३७
अब्रवीच्च पुनर्भीमं रोषात्प्रस्फुरिताधरः ।
न मे मूढा दिशः पाप त्वदर्थं मे विलम्बनम् ॥ ३८
श्रुता मे राक्षसा ये ये त्वया विनिहता रणे ।
तेषामद्य करिष्यामि तवास्रेणोदकक्रियाम् ॥ ३९
एवमुक्तस्ततो भीमः सृक्किणी परिसंलिहन् ।
स्मयमान इव क्रोधात्साक्षात्कालान्तकोपमः ।

---

**30** $^{a}$) $Ś_1$ स्थित च, $T_1$ $G_{2.4}$ अगाध, $G_1$ पथा च (for मार्गाच्च) $B_{2-4}$ $Dn_1$ $n_3$ $D_{4.6}$ $T_2$ $G_3$ रक्ष॰ स (for राक्षस) — $^{b}$) $K_3$ $B_{2-4}$ $D_{1-3}$ ॰चेतन — $^{d}$) $K_4$ S परिमोहित (for विनि॰) $B_1$ Dc सहदेवेन वारित, $D_5$ दैवेनोपनिपीडित

**31** $^{a}$) $B_4$ ह्रियतो दृश्य तान्भ्रातॄन्, $D_{1-3}$ भ्रातॄनपहृता न्दृष्ट्वा, T G $M_1$ हृतान्सदृश्य तान्भ्रातॄन् ($M_1$ by transp भ्रातॄस्तान्), $M_2$ ह्रियतो वीक्ष्य तान्भ्रातॄन्

**32** $^{b}$) $Ś_1$ चेष्ट ; $B_1$ Dc $D_{4.6}$ पाप, $B_{2-4}$ Dn पाप॰ ; $D_3$ चेष्टा॰, $T_1$ श्रेष्ठ (for चेष्टन्)

**33** $^{a}$) T G प्रिये च ($G_2$ ण) (for षु) $K_4$ च चरत ; $B_{1.2}$ Dn $D_{4.6}$ T G रममाण (for चर॰) — $^{b}$) $Ś_1$ $K_2$ न च वाप्रि ; $K_1$ न च विप्रि — $^{c}$) $Ś_1$ $K_2$ प्रिय॰ (for ब्रह्म॰) $K_4$ S ब्रह्मरूपेण वि(T $G_{1-3}$ पि)हित — $^{d}$) S नैव (for कथ॰) — $^{e}$) $S_1$ $D_{2.5}$ हन्य॰, $K_4$ $B_{1-3}$ Dc Dn $D_{4.6}$ $M_2$ जान॰ (for मन्य॰) — $^{f}$) $Ś_1$ $K_{1-3}$ Dc $D_3$ निरय (for नरक) $D_{1.2}$ हन्यात्स निरय व्रजेत्

**34** $^{a}$) $Ś_1$ $K_{1.2}$ $D_5$ तु (for च) — $^{b}$) $Ś_1$ $K_{1-3}$ Dc $D_{1-3.5}$ जतोर्, $K_4$ $B_4$ $T_2$ $G_3$ $M_2$ तस्य (for तव) — $^{c}$) $K_3$ $M_1$ अस्यद्य, $K_4$ $T_1$ स्वमद्य ; $D_{1-3}$ अद्य सु ; $M_2$ अस्याद्य (for अद्यासि) $Ś_1$ नून वेत्स्यस्यपक्व त्वा ; $K_{1.2}$ नून जानामि त्वा ($K_2$ त्वा) पक्व, $T_2$ $G_{3.4}$ नूनमद्यास्यसपक्वो — $^{f}$) $T_2$ $G_{2-4}$ पक्व॰ (for दत्ता) — After 34 S ins

781* सोऽपि काल समासाद्य तथाद्य न भविष्यसि ।
[$T_1$ यदि, $G_1$ स वि॰, M स त्व (for सोऽपि)]

**35** $^{b}$) $K_2$ कालरूपेण सवित॰, $K_4$ ॰सूत्रेण यन्त्रित ; $D_5$ ग्रस्तेन लम्भित॰ — $^{c}$) $Ś_1$ $K_2$ सस्यूत, $T_1$ $G_4$ सूत्रस्थ॰ ; $G_{1.2}$ $M_2$ सूत्रस्थ (for स्यूतास्य) $K_4$ मत्स्योभिपन्नो दुर्बुद्धे (m मत्स्योंभसीव प्रोतास्य) — $^{d}$) B D (except $D_{1-3.5}$) $T_2$ $G_{3.4}$ $M_1$ अद्य (for मेऽद्य) B Dn $D_{1.2.4.6}$ $T_1$ भविष्यसि

**36** $G_4$ om $36^{ab}$ — $^{a}$) $K_2$ Dc $D_{1.3}$ य चापि, S ($G_4$ om) यतोसि — $^{b}$) $D_5$ मनसा यद् (for मन पूर्वं) $Ś_1$ $K_{1.2}$ पूर्वं तर ; $K_3$ Dc $Dn_3$ $D_2$ पूर्वगत, $M_2$ पूर्वं गतश्र् — $^{c}$) $K_4$ (m as in text) मार्गं त्व (for the *second* गन्तासि) — $^{d}$) A few MSS हिडम्ब

**37** $^{b}$) $K_4$ $Dc_2$ $D_{1.3.5}$ कालनोदित $T_1$ सहसैव स राक्षस — $^{c}$) $D_1$ $G_{2.4}$ भीमम्, $T_1$ तत, $T_2$ $G_3$ भीम (for भीत) $Ś_1$ $K_{1.2}$ transp तान् and सर्वान् — $^{d}$) $B_4$ $D_5$ समवस्थित॰

**38** $^{a}$) $K_3$ $B_4$ Dc $D_{1.2}$ तदा (for पुनर्) — $^{c}$) $S_1$ K $D_{1-3.5}$ पार्थ ; $T_1$ सर्वास् (for पाप) — $^{d}$) B D (except $D_1$) विलम्बित $K_4$ ह्यविज्ञाता महावने

**39** $Dn_2$ om 39 — $^{d}$) $Ś_1$ $K_{1-3}$ रुधिरेण तवोदक

**40** $^{a}$) S (except $G_4$ $M_2$) तदा (for ततो) — $^{b}$) = 4 20 $34^{f}$ $Ś_1$ $K_2$ $Dc_1$ $Dn_2$ $D_{2.3.5.6}$ $T_1$ $G_2$ सृक्किणी, $K_3$ सृक्किणी, $B_1$ $D_4$ $G_1$ $M_2$ सृक्कणी, $B_2$ सृक्कणी ; $Dc_2$ सृविणी, $M_1$ स्रक्कणी $K_4$ $Dc_2$ $T_2$ G परिलेलिहन् — $D_5$ om $40^{c}$–$41^{b}$ — After $40^{cd}$, S ins

782* ब्रुवन्वै तिष्ठ तिष्ठेति क्रोधसंरक्तलोचन ।

— $^{c}$) $S_1$ $K_{1-3}$ $D_{1-3}$ बाहुसमर्दम् $Ś_1$ $K_{1.2}$ Dc [प्रे]च्छन् ; $K_2$ $B_2$ Dn $D_{4.6}$ [प्रे]क्षन् (for [इ]च्छन्)

बाहुसंरम्भमेवेच्छन्नभिदुद्राव राक्षसम् ॥ ४०
राक्षसोऽपि तदा भीमं युद्धार्थिनमवस्थितम् ।
अभिदुद्राव संरब्धो बलो वज्रधरं यथा ॥ ४१
वर्तमाने तदा ताभ्यां बाहुयुद्धे सुदारुणे ।
माद्रीपुत्रावभिक्रुद्धावुभावप्यभ्यधावताम् ॥ ४२
न्यवारयत्तौ प्रहसन्कुन्तीपुत्रो वृकोदरः ।
शक्तोऽहं राक्षसस्येति प्रेक्षध्वमिति चाब्रवीत् ॥ ४३
आत्मना भ्रातृभिश्चाहं धर्मेण सुकृतेन च ।
इष्टेन च शपे राजन्सूदयिष्यामि राक्षसम् ॥ ४४
इत्येवमुक्त्वा तौ वीरौ स्पर्धमानौ परस्परम् ।
बाहुभिः समसज्जेतामुभौ रक्षोवृकोदरौ ॥ ४५
तयोरासीत्संप्रहारः क्रुद्धयोर्भीमरक्षसोः ।
अमृष्यमाणयोः संख्ये देवदानवयोरिव ॥ ४६

आरुज्यारुज्य तौ वृक्षानन्योन्यमभिजघ्नतुः ।
जीमूताविव घर्मान्ते विनदन्तौ महाबलौ ॥ ४७
बभञ्जतुर्महावृक्षानूरुभिर्बलिनां वरौ ।
अन्योन्येनाभिसंरब्धौ परस्परजयैषिणौ ॥ ४८
तद्वृक्षयुद्धमभवन्महीरुहविनाशनम् ।
वालिसुग्रीवयोर्भ्रात्रोः पुरेव कपिसिंहयोः ॥ ४९
आविध्याविध्य तौ वृक्षान्मुहूर्तमितरेतरम् ।
ताडयामासतुरुभौ विनदन्तौ मुहुर्मुहुः ॥ ५०
तस्मिन्देशे यदा वृक्षाः सर्वे एव निपातिताः ।
पुञ्जीकृताश्च शतशः परस्परवधेप्सया ॥ ५१
तदा शिलाः समादाय मुहूर्तमिव भारत ।
महाभ्रैरिव शैलेन्द्रौ युयुधाते महाबलौ ॥ ५२
उग्राभिरुग्ररूपाभिर्बृहतीभिः परस्परम् ।

---

**41** $D_5$ om $41^{ab}$ (cf v l 40) — $^{b}$) $D_{1-3}$ $T_1$ उप° (for अव°) — After $41^{ab}$, N (except $K_4$ $D_5$) ins

783* मुहुर्मुहुर्व्याददान सृक्किणी परिसलिहन् ।

[$Ś_1$ धृनदश्वादमनकृत, $K_{1-3}$ Dc $D_{1-3}$ व्यायच्छ(Dc °दित्स) मानोप्यसकृत Posterior half = $40^{b}$ MSS सृक्किणी, सृकिणी, सृक्कणी, etc ]

— $^{c}$) $D_3$ S सक्रुद्धो (for सरब्धो) $K_4$ तत समभवत्क्षुब्ध, $B_4$ अभ्यद्रवत्सुसरब्धो — $^{d}$) $K_2$ B Dn $D_{4\ 6}$ बलिर् — After 41, $T_2$ G ins

784* भीमसेनोऽप्यवष्टब्धो नियुद्धायाभवस्थित ।
राक्षसोऽपि च विस्रब्धो बाहुयुद्धमकाङ्क्षत ।

**42** $^{a}$) $S_1$ $K_{1\ 2}$ तथा, $K_4$ S (except $T_1$) तयो , $D_5$ तत (for तदा) $K_4$ एव, $D_5$ दोर्भ्यां, S राजन् (for ताभ्या) — $^{c}$) $D_3$ माद्रीसुताव् $Ś_1$ $K_{1\ 2}$ $B_{2\ 3}$ Dn $D_{1\ 4\ 6}$ $G_4$ अति , $B_4$ $D_{3\ 5}$ $T_2$ $G_{1\ 2}$ अपि (for अभि-) — $^{d}$) $Ś_1$ $K_{1-3}$ अतिक स्त्वभ्य°, $B_4$ त्वरितावभ्य°, Dc अतिक सम°; $D_{2\ 5}$ $G_1$ उभावप्यभि°, $G_2$ उभावभ्यत्र°

**44** $^{a}$) B Dn $D_{4\ 6}$ [ए]व (for [अ]हं) — $^{d}$) $K_{1\ 2}$ मर्द° (for सूद°)

**45** $^{b}$) $T_2$ $G_{3\ 4}$ वर्ध° (for स्पर्ध ) $T_1$ विनिवार्य वृकोदर° — $^{c}$) $B_{1-3}$ Dn $D_{4\ 6}$ बाहुभ्या $T_1$ समपद्येताम् — $^{d}$) $K_3$ $D_{1\ 2}$ उभौ भीमनिशाचरौ, $K_4$ $G_4$ उभौ राक्षसपाण्डवौ

**46** $^{c}$) $T_1$ $G_{2\ 4}$ सधे, M सखे — $^{d}$) $K_4$ $B_4$ S शक्रशवरयोरिव

**47** $^{ab}$) $K_3$ $B_{1\ 4}$ $D_2$ आरुह्यारुह्य $B_{1\ 4}$ वृक्षौ $K_4$ S तौ वीरौ समभिक्रुद्धावन्योन्य पर्य(T₁ °न्य परि, $M_2$ °न्यमभि)धावता — $^{c}$) $B_{1-3}$ Dn $D_{4\ 6}$ गर्जन्तौ (for घर्मान्ते) — $^{d}$) $K_{1\ 3}$ $B_{1-3}$ Dn $D_{4\ 6}$ निनदन्तौ, $K_4$ $D_{1-3\ 5}$ विनर्दन्तौ $Ś_1$ $K_{1\ 2}$ महारथौ, $K_4$ Dc °रवान्, $D_{1-3}$ °रवौ

**48** $^{a}$) $G_1$ वृक्षौ (for वृक्षान्) — $^{b}$) $Ś_1$ च परस्पर, $K_{1-3}$ Dc $D_{1-3\ 5}$ च ($D_{1\ 2}$ सु ) महाबलौ, $T_2$ $G_{2-4}$ M बलिनावुभौ $G_1$ उत्तमौ फलिताबुभौ — $^{c}$) $Ś_1$ K Dc $D_{1-3\ 5}$ $G_{1\ 4}$ अन्योन्यम् (for अन्योन्येन) $K_4$ $D_3$ $T_1$ $G_1$ अभिसक्रुद्धौ — $^{d}$) N (except $Ś_1$ $K_4$) M °वधैषिणौ

**49** $49^{ab}$ = 1 151 $16^{ab}$ — $^{d}$) $Ś_1$ $K_{1-3}$ $D_{1\ 2}$ पुरेव कपिमुख्ययो , B Dc Dn $D_{4\ 6}$ पुरा स्त्रीकाङ्क्षिणोर्यथा; $D_{3\ 5}$ यथा श्रीकाङ्क्षिण पुरा

**50** $^{d}$) $D_{1-3}$ विनर्दन्तौ $Ś_1$ परस्पर (for मुहु )

**51** $^{c}$) $B_{2\ 3}$ Dc Dn $D_2$ मुजीकृता , $D_5$ मुजीभूता , $T_2$ G पूगीकृता° ($G_2$ पुजीभूता°), $M_2$ चूर्णीकृता $T_2$ $G_{2\ 3}$ बहुश , $G_4$ बहव (for शतश )

**52** $^{a}$) B D (except $D_{2\ 3\ 5}$) तत , $G_4$ तथा (for तदा) — $^{d}$) $S_1$ $D_5$ परस्पर (for महा ), cf v l 53

**53** $^{a}$) $Ś_1$ गदाभिर्, $K_3$ B D (except $D_{1-3\ 5}$) शिलाभिर् (for उग्राभिर्) — $^{b}$) $Ś_1$ महाबलौ (for पर°), cf v l 52 — $G_4$ om $53^{cd}$ — $^{d}$) $Ś_1$ $K_{1-3}$ Dc $D_{1-3\ 5}$ अभिजघ्नतुरुत्कटै° ($K_3$ $D_{2\ 3}$ त्कटौ, Dc °त्कर्णै ; $D_1$ त्कट)

वज्रैरिव महावेगैराजघ्नतुरमर्षणौ ॥ ५३
अभिहत्य च भूयस्तावन्योन्यं बलदर्पितौ ।
भुजाभ्यां परिगृह्याथ चकर्षाते गजाविव ॥ ५४
मुष्टिभिश्च महाघोरैरन्योन्यमभिपेततुः ।
तयोश्चटचटाशब्दो बभूव सुमहात्मनोः ॥ ५५
ततः संहृत्य मुष्टिं तु पञ्चशीर्षमिवोरगम् ।
वेगेनाभ्यहनद्भीमो राक्षसस्य शिरोधराम् ॥ ५६
ततः श्रान्तं तु तद्रक्षो भीमसेनभुजाहतम् ।
सुपरिश्रान्तमालक्ष्य भीमसेनोऽभ्यवर्तत ॥ ५७
तत एनं महाबाहुर्बाहुभ्याममरोपमः ।
समुत्क्षिप्य बलाद्भीमो निष्पिपेष महीतले ॥ ५८
तस्य गात्राणि सर्वाणि चूर्णयामास पाण्डवः ।
अरत्निना चाभिहत्य शिरः कायादपाहरत् ॥ ५९
संदष्टोष्ठं विवृत्ताक्षं फलं वृन्तादिव च्युतम् ।
जटासुरस्य तु शिरो भीमसेनबलाद्धृतम् ।
पपात रुधिरादिग्धं संदष्टदशनच्छदम् ॥ ६०
तं निहत्य महेष्वासो युधिष्ठिरमुपागमत् ।
स्तूयमानो द्विजाग्र्यैस्तैर्मरुद्भिरिव वासवः ॥ ६१

इति श्रीमहाभारते आरण्यकपर्वणि चतुःपञ्चाशदधिकशततमोऽध्यायः ॥ १५४ ॥ समाप्तं जटासुरवधपर्व ॥

---

**54** a) Ś1 K1-3 अभिपत्य; B1-3 Dc Dn D4 6 अभिद्रुत्य; D1 2 अपसृत्य — b) N (except K4 D5) T1 G4 अन्योन्य — d) Ś1 K1 2 Dc D1-3 5 चकृषाते, K4 विकर्षतौ D5 परस्पर (for गजा)

**55** a) Ś1 K1-3 Dc D1-3 5 महावेगैर्, G1 घातैर् (for °घोरैर्) — b) B1-3 Dc Dn D1 2 4 6 अन्योन्यमभिजघ्नतु, D3 अभिजघ्नतुरुत्कटौ — c) Dc ततश्च (for तयोश्च) B1-3 Dn D4 6 तत (B1 °यो) कटकटाशब्दो — d) Ś1 K1 2 च (for सु-)

**56** a) K1 2 D1 2 5 सहत्य; G4 वर्त्य, M2 °भृत्य K1 2 D1 2 च; M2 स (for तु)

**57** a) A few MSS शात (for श्रान्त) — b) Ś1 K1 2 भुजार्दित — c) Ś1 B4 D8 आलोक्य (for आलक्ष्य) — d) Ś1 K3 ऽभ्यवर्तत, K1 2 Dc D5 ऽभ्यवर्धत (for ऽभ्यवर्तत)

**58** a) K3 D1 2 स्वेन (for एन) K2 महाबाहो, T2 G2 4 महाबाहु — b) T1 अतर्को° (for अमरो°) — d) B1 Dn विनिष्पिष्य; D4 6 विनिष्पेष (निष्पि°) — After 58, S (except G1) ins

785* तत सपीड्य बलवद्भुजाभ्या क्रोधमूर्छित ।

**59** c) Ś1 K1 2 अरत्रिणा K3 चाभिहत°, K4 हनत्, D3 हत्य, T G3 M2 चापहत्य, G4 चापहृत्य D6 खड्ग चाथ समुद्धृत्य

**60** D5 T2 G3 om 60c-61b — a) N (except D3) सदष्टौष्ठ — b) Ś1 K3 4 B1 4 Dn D4 M1 वृक्षाद् (for वृन्ताद्) — G4 om 60cd — c) G1 3 शीर्ष तु (for तु शिरो) — d) D1 2 मयात् (for °बलात्) Ś1 K B Dn D4 6 हत, D2 हुत, M2 वश (for हृत) Dc बलाहत, G2 °भुजाहत, M1 °बलोद्धृत

**61** D5 T2 G3 om 61ab (cf v 1 60) — M1 (which om 61b) ins after 61a

786* दानवेन्द्रमिवेश्वर ।
बभूव पुरुषव्याघ्र प्रहृष्ट इव पाण्डव ।
ततो युधिष्ठिरो राजा धौम्य कृष्णा यमौ तथा ।
भीमसेनमुपायान्त ददृशुस्ते च पाण्डवम् ।
उपसहृत्य धौम्य च पाण्डवं च युधिष्ठिरम् ।
पर्यष्वजत दुर्धर्षो यमौ चापि वृकोदर ।
हत जटासुर दृष्ट्वा पाञ्चाली भीममच्युतम् ।
मुदित पूजयामास पौलोमीव पुरंदरम् ।
सपूजित * * सद्भिर्ब्राह्मणानभिवाद्य च ।
जितारिर्मुदितो भीमो बभूव भरतर्षभ ।

— c) Ś1 B Dn D1 4-6 तु, T1 च (for तैर्) G4 द्विजमुख्यै स्तूयमान

Colophon — *Major parvan* Ś1 K1 2 T2 G2-4 M1 आरण्य, D6 वन (!) — *Sub parvan* N T2 G1-3 जटासुरवध (preceded erroneously by तीर्थयात्रा in K3, गधमादन in Dc, लोमशतीर्थयात्रा and गधमादनप्रवेश in D1 लोमशतीर्थयात्रा in D2, and गधमादनप्रवेश in T2 G2) M1 (om sub parvan name) mentions only गधमादनप्रवेश — *Adhy no* (figures, words or both) Dn 156 (Dn2 157), D1 162, S 158 (M2 160) — *Śloka no* Dn1 71, Dn2 72, Dn3 73, D1 67

END OF ĀRAṆYAKA PARVAN, PART 1